असाविति परः स्वः परसजातीयः । नो णीवन् मनौ चानन्त्यौ णी । कुर्व्वन्ति । रङ्गः । म । गन्ता । न । शर् किता अन्ते तात् कः । झयि किम् ? गम्यः ।

**( ११२ ) स्कृसोम् वर्तते । [ १।१।१३।१३। ]** म्नादेशे सिरि च परे पूर्वस्य स्वः अं स्यात्, सों वा । पूर्वः स्वानुस्वारः सानुनासिको वा स्यादित्यर्थः । संस्कर्ता । सँस्स्कर्ता । तांस्व । ताँश्च । नृं पातु । नृँ ᳲपातु ॥१३॥

**[ शलि म्मुकोऽलिद्धलि तौ ह्यमीति**
**सम्राट् पि नृद्वा न्श्छवमि प्रशान्नो ।**
**पुंस्खय्यु लुक्च स्सुटि सम्प्रसुप्यो -**
**र्वोह्लो र रो लुच्यरि रुः सजूः सोः ॥१।१।१४॥ ]**

**शलीत्यादि ।**

**( ११३ ) शलि । [ १।१।१४।१। ]** णीमनो अनन्त्यस्य अं स्याच्छलि । बृंहणम् । गंस्यते। पयांसि । अन्ते, तानस्य ।

**( ११४ ) म्मुकोऽलिद्धलि तौ । [ १।१।१४।२। ]** मः पदान्तस्थस्य, मुक आगमस्य च तौ स्तः, अं परसजातीयसों च, अलिति हलि परे । त्वंकः । त्वङ्कः । त्वं पच । त्वम्पच । संयन्ता । संय्यन्ता । संवत्सरः । संव्वत्सरः । तं लोकम् । म, तंल्लोकम् । मुक् । चंक्रम्यते । चङ्क्रम्यते । यंयम्यते । यंय्यम्यते । अलिति किम् ? किन्विति । परस्वः किम् ? रंरम्यते । अन्ते असन्धाविति किम् ? गर्द्धाम्ना ।

**( ११५ ) ह्यमीति । [ १।१।१४।३। ]** मोन्तः सोपरतरस्वः स्यात्, अं वा हात् परो यम् । किंय् ह्यः । किं ह्यः । किंह्वलयति । किंव्ह्वलयति । किंह्लादयति । किंल्ह्लादयति । किंह्नुते । किंन्ह्नुते । अं वा । स्वः किम् ? किं ह्रस्वैः ।

**( ११६ ) सम्राट् । [ १।१।१४।४। ]** समो मो निपात्यते राजतौ क्विबन्ते । सम्राट् । सम्राजौ ।

**( ११७ ) पि नृद्वा । [ १।१।१४।५। ]** पि परे नृन् कार्यी डिदन्तार्थो रिः स्याद् वा । नृः पाहि । नृन्पाहि । नृन् किम् ? नृन्कः ।

**( ११८ ) न्श्छवमि प्रशान्नो । [ १।१।१४।६। ]** नोन्तस्थः स् स्याच्छवि अम्परे, परतो न न् प्रशान् । तांश्छ्य । तांस्तर । छवि किम् ? तान्कान् । अमि किम् ? भवान्त्सरुकः । अप्रशान् किम् ? प्रशाञ्चिनोति । अन्तस्थः किम् ? भवन्तः । त्वन्तर ।

**( ११९ ) पुंस्खय्यु । [ १।१।१४।७। ]** पुमो म्स् स्यात् खयि अम्परे परतः । पुंस्कामा। पुंस्त्वम् । पुंश्च्युतिः । पुंम्म किम् ? संचिता । खय्यु किम् ? पुंसादः । अमि किम् ? पुंक्षीरम् ।

**( १२० ) लुक् च स्सुटि सम्म् [ १।१।१४।८। ]** समो सुस् स्यात्, लुक् च स्सुटि सम्म् परे । संस्स्कर्ता । संस्कर्ता । स्सुटीति द्विः सकारः किम् ? समस्करोत् ।

**(१२१) रसुप्यः** । [१।१।१४।९।] र् रेफः पदान्तस्थोऽसुपि अः इति विसर्जनीयः स्यात् । गीः । धूः । परत्वात् प्राद् दीर्घः । सुपि, वार्भिः ।

**(१२२) रु** । [१।१।१४।१०।] रुः अत् स्यात् । वृक्षः ।

**(१२३) अह्नो रः** । [१।१।१४।११।] अह्नोऽन्तोऽन्ते रुः स्यात् । दीर्घाहः कालः । अहः । अहोभिः । अपदान्ते, अहनी ।

**(१२४) रो लुच्यरि** । [१।१।१४।१२।] अह्नोऽन्तो ते वर्तमानो रः स्याल्लुचि लुक्शब्देन प्रत्ययलोपे सति परस्याशीत्य स्यात् संवत्वाद् असि परे अरि रेफवर्जे । स्वरूपरात्रिरथन्तरेष्वित्यन्ये । अहरधीते । अर्हदर्दत्ते । दीर्घाहम् । असि, अहर्वान् । लुचि किम् ? हे दीर्घाहो निदाघ । अरि किम् ? अहो रूपम् । अहो रसः । अहा रस इत्यन्ये । रोर्बाधकत्वेन तत्कार्याण्यपि बाधते । रुः सजूः सोः । अजुषोन्तस्य सस्य च पदान्तस्थस्य रुः स्यात् । सह जुषतीति सजूः । सजूर्भ्याम् । कः पयोभ्याम् । अनन्ते, सजुषौ पयसी । पुंस्कामा ॥१४॥

**[अघोभगोभोर्वशि गिद्य वाचि**
**य्वोल्पप्रयत्नश्च तथोञि अत्तोऽ- ।**
**द्धष्युद्धलीत् त्सादनवृत्ति वृत्ते**
**र्वाह्नांपतिष्वो रशि श्छव्यशर्षु ॥१।१।१५॥]**

**अघो इत्यादि** ।

**(१२५) अघोभगोभोर्वशि गित्** । [१।१।१५।१।] अः अवर्ण अघो भगो भो एतेभ्यो रुः, अभेदात् तद्विसर्गः अशि परे गित् स्यात् । गविशिष्ट इत् गिदसन्ध्यर्थम् । ता हन्ति । अघो याहि । परो य्वोऽत्र सम्बध्यते, सोऽशि गित् स्यात् । वृक्ष हसति । रुः किम् ? स्वर्याति । एतेभ्यः किम् ? गीरत्र । अशि किम् ? कः खे । अघोः खम् ।

**(१२६) य वाचि** । [१।१।१५।२।] एतेभ्यो रु विसर्गो यः यः स्याद् वाऽनच्, अचि परे । कयिह । क इह । कायिह । का इह । अघोयिह । अघो इह । रोः किम् ? स्वरिह । अशीत्यतो वार्थसिद्धौ वोत्तरार्थः ।

**(१२७) य्वोऽल्पप्रयत्नश्च** । [१।१।१५।३।] य् च व् अश्यनच्कार्यी अचि परे । एतेभ्योऽल्पप्रयत्नश्च गिच्च वा स्यात्, तस्य तद्विधानात् तत्तश्च वा । वृक्ष इह । वृक्षयिह । वृक्षवत् । वृक्षअत् । वृक्षायिह । वृक्षा इह । वृक्षाविह । त आहुः । तयाहुः । तस्मा इदम् । तस्मायिदम् । उः । अघोयिह । अघो इह । एवं भगो, भोः ।

**(१२८) तथोञि** । [१।१।१५।४।] य्वः कार्यी उकारादसंभवाद् वर्णात्पर उञि परेऽल्पप्रयत्नादिर्वा स्यात् । वृक्ष वु करोति । वृक्षवु । वृक्ष उ । तस्मायु । तस्मा उ । उञीति पृथक् किम् ? यवाचीत्यच्कार्यं मा भूत् । स उ । अघो उ ।

**(१२९) अत्तोऽद्धष्युत्** । [१।१।१५।५।] तस् छंदोऽर्थम् । अतः अकारात् परो रु विसर्गो अति हषि च परे उत् स्यात् । कोऽयम् । पयोभ्याम् । अद्धषि किम् ? क इह । कः

खे । अतः किम् ? ता अत्र । रुः किम् ? पुनरत्र ।

**(१३०) हलीत् त्सादनवृत्ति । [१।१।१५।६।]** तादेशात् सात् परो रु विसर्गो हलि परे इत् स्यात्, नञो वृत्तेरभावोऽनवृत्ति, तत्र चेत् स स्यात् । एष स हतः । परम स पक्ता । अनवृत्ति किम् ? असौ गतः । तादेशः किम् ? वत्सः कः । एष कः । स कः । स्यः कर्ता, नात्र, व्यवधानात् ।

**(१३१) वृत्ते । [१।१।१५।७।]** तादेशसात् परो रुः इत् स्यात्, वृत्तविषये पादपूरणे । अहल्यपि । प्राकोपि यः प्राक् च यकाविनार्थं सोऽथैव दुर्दान्तकृतान्तदंष्ट्रः ।

**(१३२) र्वाह्नांपतिष्वः । [१।१।१५।८।]** अहरादीनां अः कार्यी पत्यादिषु परेषु रो वा स्यात् । अहर्पतिः । गीर्प्पतिः । धूर्प्पतिः । अर्यौ वा । [रेफाभावे], प्रचेता राजः । प्रचेतो राजः । उषर्बुधः । आकृतिगणौ । अः इत्यापादम् ।

**(१३३) रंशि । [१।१।१५।९।]** अः कार्यी र स्याद् अशि परे । विभुर्गतः । प्रातरत्र । पुनर्याता । पुना रो नित्यार्थः ।

**(१३४) श्छव्यशर्षु । [१।१।१५।१०।]** अः स स्याच्छवि अशर्परे परतः । कश्छादयति । कस्तरति । अशर्परे किम् ? असेः त्सरुः कः । अशर् आपादम् ॥१५॥

**वा शरि लुक्खरि कौष्क च पौ≍पं सुच्सि निरामिसुसः प्लुततस्त्योः ।**
**सुप्ति नमः पुरसोस्तु समासेऽधः शिरसोऽप्यपदात्तु पदेऽतः ॥१।१।१६॥**

दोधकम् । [**वा शरीत्यादि**]

**(१३५) वा शरि । [१।१।१६।१।]** अः स् स्याद् वा शरि अशर्परे परतः । कश्शेते । कः शेते । कष्षण्डे । कः षण्डे । कस्साधुः । कः साधुः । सर्प्पिष्षु ।

**(१३६) लुक् खरि । [१।१।१६।२।]** खर्परे शरि अः लुग्वा स्यात् । वृक्षा स्थातारः । वृक्षास्स्थातारः । खरित्यापादम् ।

**(१३७) कौ ≍क च पौ ≍पम् । [१।१।१६।३।]** अः ≍ कः स्याद् वा अशर्परे खरि कौ परे, तथा पौ ≍प वा । कस्करोति । कः करोति । [क≍करोति ।] खे च । [कः खनति । क≍खनति । पौ च । कः पचति ।] क≍पचति । फे च । [कः फलति । क≍फलति ।] खरि किम् ? को गतः । अशर्परे किम् ? वासः क्षौमम् । अद्भिः प्सातम् । कुप्वोरापादम् ।

**(१३८) सुच् सि । [१।१।१६।४।]** सुच्प्रत्ययस्तद्विसर्जनीयो वा सि स्याद् वा, तत्तु कुप्वोः । द्विष्करोति । द्विः करोति । खे च, द्विष्पचति । [द्विः पचति । द्वि≍पचति ।] फे च, [द्विष्खनति ।] सुच् किम् ? ततः कृतम् । अशर्परे किम् ? द्विःप्साति। खरि किम् ? द्विर्गतः । कुप्वोः किम् ? त्रिश्छादयति । सिरित्यापादम् ।

**(१३९) निराम् । [१।१।१६।५।]** निरादेः सिः स्यान्नित्यं पार्थक्यात् तत्कुप्वोः । निष्कृतम् । निष्पीतम् । चतुष्कपालम् । चतुष्पात्रम् । [दुष्कृतम् । दुष्पीतम् । बहिष्कृतम् ।

बहिष्पीतम् । प्रादुष्कृतम् । प्रादुष्पीतम् । आविष्कृतम् । आविष्पीतम् ।] अनब्जप् च गणद्वयार्थम्।

निरादि भाविक्राद्यर्थम् ।

निश्चतर्दुबहिःप्रादुराविषां च गणो गणः ।
कृकृमिकंसकर्णीषु कुम्भपात्रकुशासु च ॥

**(१४०) इसुसः । [१।१।१६।६।]** सु, ततः प्लुतात् पर इसुसः सम्बन्धी अः तत्कुप्वोः सि स्यात् । सर्पिष्कुम्भः । दुष्पुरुषः ।

**(१४१) त्योः सुप् ति । [१।१।१६।७।]** त्योः इत्याकाराद् उकाराच्च परः अः सिः स्यात्, सुप् ति सुपो विहिते तादौ प्रत्यये । सर्पिष्ट्वम् । सर्पिष्टा । धनुष्ट्वम् । धनुष्टा । चतुष्टयम् । चतुष्टा । प्लुतानुवृत्तेः, सर्पि३ष्टरम् । ह्रस्वात् किम् ? गीस्त्वं धूता । सुपः किम् ? भिन्द्युस्तराम् । विहिते किम् ? सप्पिस्तरति ।

**(१४२) नमस्पुरसोस्तु समासे । [१।१।१६।८।]** समासे अः सिः स्यात् तत्कुप्वोः । नमस्करोति । नमस्कृत्य । पुरस्करोति । पुरस्कृत्य । असमासे, नमः करोति । अप्रतिपदोक्तत्वान्न कृत्। नमः खङ्गः ।

**(१४३) अधः शिरसोऽप्यपदात् तु पदेऽतः । [१।१।१६।९।]** एतयोः समासे वर्तमानयोरपदात् परयोः अः सिः स्यात्, पदे शब्दे परे । अधस्पदम् । शिरस्पदम् । मयूरव्यंसकादित्वात् समासः । अपदात् किम् । परमशिरः । परमपदम् । पदे किम् ? शिरः खण्डम् । अत इत्युत्तरार्थः ॥१६॥

**क्राद्ये ऽचादेरिसुसो वाकाङ्क्षाया तु नाक्रियैकार्थे ।**
**स्वादौ काम्ये रोर्वा तिरसः कस्कादि पादोऽयम् ॥१।१।१७॥ आर्या ।**

**[क्राद्येऽचादेरिति ।]**

**(१४४) क्राद्येऽचादेः । [१।१।१७।१।]** क्राद्ये कृकमीत्यादौ परेऽपदात् परस्याचादेः वृत्तावतः परः सि स्यात् । अयस्कारः । अयस्कामः । एवम् अयस्कंसः । अयस्कुशा । अयस्कर्णी । अयस्कुम्भः । अयस्पात्रम् । अतः किम् ? गीःकारः । अचादेः किम्? स्वःकारः । पदात्, परमायःकारः । अचादेरापादम् । निरादौ क्रादिरुक्तः ।

चादिरुच्यते । अत्र स्यात् पंचपादवृत्तचतुष्टयं चानुष्टुप्चतुष्टयम् ।

चाऽऽतङ्कन्तनुं नह सस्वादे एवं क्तपात् कुवित् ।
चेदथ यत्र युक्तं वा पूषदे एवाऽधस्तथा ।
स्म स्वयन्नेच्चण् हंतमा ॥१॥

[वा, आतङ्कम्, तनुम्, नह, कुवित्, चेत्, अथ, यत्र, युक्तम्, पूषदे, अधस्, स्म, स्वयम्, नेत्, चण्, हंत, मा ॥१॥]

क्तणुकि स्वधास्मिन् यावद्यत्रौ किंवषडौ
माकिर्नञ् यत्तत् पुरा तावदहो उताहो भो नो
इहा याद्यस्तु यत्तवा व्वो स्वाहेति दिष्ट्या मद्गु
तैलवं त्वै श्रेयसेऽह्वाय दारु नहि जातु वौषट् ॥२॥

हाहा देहेऽद्धा धिक् की मडारार्म
स्त्रीमाहोस्विदंगोऽव ह कु म्नु ।

वेट् वाट् यत्कूहि मन्येऽसि वनाऽह
सत्यं हे भो तु ह है ननु वै नुकं स्यात् ॥३॥

एत गो औ किल हि मुधर्ते अवेव द्रु मोपांशु विहायसाऽलम् ।
है हाऽनुषक्तैष विदस्ति नोचेदुच्चैरयेऽरे पटदन्यदारात् ॥४॥

[मुधा, ऋते, अव, इव । मा, उपांशु । अनुषक्, तैष,, विद्, अस्ति, नोचेत्, उच्चैर्, अये, अरे, पटत्, अन्यद्, आरात् ॥४॥]

अडे हिकं स्वस्तिविनाशनानातूर्ष्णी मनागीषदं वस्विरं ज्योक् ।
कंसं बहिस्स्मासि मृषा स्वयं वत्सा यद्यमृधक् श्वस्समयान्तरा स्वर् ॥५॥

[अड, इ । वसु, इरम् । बहिस्, स्म, असि । स्वयम्, वत्सा, यदि, अम्, ऋधक्, श्वस् ॥५॥]

प्रातरन्तः पुनः पृथग् युगपत् सुकतरट्सनैः ।
नक्तं हेतोर्दिवारात्रौ संपात्कच्चिन्मिथो मिथु ॥६॥

सार्धं सह समं साकं सनोऽभीक्ष्णं हिरुग् मिथो ।
आर्यहलं सनन्मिथ्या दोषा जोषं सनात्तिरः ॥७॥

प्रावाटुस्तिषयाऽम्तुम्नाः क्त्वाद्यापाद्याः सुजादयः ।
अव्ययीभाव इत्येष वादिः **प्रादि**रिहोच्यते ॥८॥

प्र पराऽपानु सं चाव निर्दुर्व्याङधि न्याद्यपि ।
अति सूदभि प्रत्यत्र पर्युपा मन्ये मरुच्छदौत् ॥९॥

चादिषु पूरणार्थं नास्ति । प्रादिषु व चात्रान्येऽप्रादयः । अष्टमानुष्टुभि अम् तुम् क्त्वा एतत्प्रत्यान्ताः । भोजनं भोजं याति । भोक्तुं पचतितराम् । भुक्त्वा याति । डार्वी । ऊचीवष रुरीत्याद्यसंख्ये[य]मत्र ।

**सुजादय**श्चामी ।

सुकृत्वसातसाहिच् एनद् हस् धा स्तात् पुरस्तात् प्रभृतिस्तथा ।
शस् त्रब्वा र्हि षै एधा च वसुधाति त्रा साति च्विडाचिच्चिनाप्रत्ययान्ताः ॥१०॥

**(१४५) इसुसः । [१।१।१७।२।]** इसुस्प्रत्ययान्तस्याचादेः अः सि स्यात् तत्कुप्वोः । सर्पिष्कुण्डम् । सर्पिष्पात्रम् । पदात्, परमसर्पिः कुण्डम् । वृत्तौ किम् ? सर्पिः करोति ।

**(१४६) वाऽऽकाङ्क्षायाम् । [१।१।१७।३।]** अयमः सिः वा स्यात् तात्कुप्वोः कार्यिनिमित्तयोराकाङ्क्षायां सत्याम् । परमसर्पिष्करोति । यजुष्पिबति । भिन्द्युः [कुम्भम्, भिन्द्यु]ष्कुम्भम् । अः इति वा त्वाकाङ्क्षायां किम् ? तिष्ठतु सर्पिः पिब त्वमुदकम् ।

**(१४७) नाक्रियैकार्थे । [१।१।१७।४।]** अयमः सिः न स्यात् तत्कुप्वोः, अक्रियैकार्थे क्रियापदवर्जिते एकार्थे पदे परे, पूर्वपरयोः समानाधिकरण्ये, आकाङ्क्षायां सत्याम् । सर्पिः कालकम् । धनुः प्रगुणम् । अक्रियापदे किम् ? सर्पिष्पीयते । सर्पिः पीयते । एकार्थे किम् ? सर्पिष्कुम्भे । सर्पिः कुम्भे । धनुष्पाणौ । धनुः पाणौ । अः इति वा ।

**(१४८) स्वादौ । [१।१।१७।५।]** प्रत्यये परे अचादेरः सिः स्यात् तत्कुप्वोः । अयस्कल्पम् । धूष्पाशा । कुरुतस्कल्पम् । भिन्द्युष्पाशम् । अचादेः प्रातःकल्पम् ।

**(१४९) काम्ये रोः । [१।१।१७।६।]** अचादे रोः रः सि स्यात्, काम्ये परे । अयस्काम्यति । सर्पिष्काम्यति । अचादेः किम् ? उच्चैः काम्यति । रोः किम् ? गीष्कामिति । स्वादौ किम् ? तैः काम्यति ।

**(१५०) वा तिरसः । [१।१।१७।७।]** अस्यवृत्तावः सिर्वा स्यात् कुप्वोः । तिरस्करोति । तिरःकरोति । तिरस्कृत्य । तिरःकृत्य । अवृत्तौ, तिरःकृत्वा । नाप्रतिपदोक्ते । उच्चारिततिर<sup></sup>पाणिः ।

**(१५१) कस्कादि । [१।१।१७।८।]** कृ, तस्यादेशो निपात्यते वा । पुनरष्टगासौ ।

कस्कः कांस्कान् भ्रातुष्पुत्रः सद्यस्कालो मेघस्पिण्डः ।
साद्यस्कोऽयस्काण्डः कान्तः कर्ण्णः सद्यस्क्री टे भास्कुः ॥१।१॥

शुनस्कर्णस्तमस्काण्डः स्युः सर्पिष्कुण्डिका पदात् ।
यजुष्पात्रं बहिष्पूलं धनुष्कपालमीदृशाः ॥१।२॥

कस्का तु नादेशत्वास्पदं च । सद्यस्क्रयणां क्रीः तत्र भवः साद्यस्कुः । अयसः काण्ड्यादौ, अयस्काण्डः अयस्कान्तः अयष्कर्णः । टे परे, भास्कुः । भास्कर इत्यर्थः । स्युश्चत्वारः पदात् परे पूर्वेणापदात् सिद्धा इसुस इति । परमसर्पिष्कुण्डिका । [परमबहिष्पूलम् । परमधनुष्कपालम् । परमयजुष्पात्रम् ।] एकीयमतं पारायणिका आहुः । भाष्ये वृत्तौ च 'नित्यं समासेऽनुत्तरपदस्थस्य' [पा० अ० ८।३।४५] इत्यत्र परमसर्पिष्कुण्डिका इत्येव प्रत्युदाह्रियते । तन्मते नास्यापाठः । आकृतिगणत्वादाद्यैः । तथा चौरोऽत्र तस्कर इत्यादि च । द्वयोः प्रामाण्यादिह विकल्पः **॥१।१।१७॥ पादोऽयम् ॥**

**॥ इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे प्रथमाध्याये प्रथमः पादः ॥**

—— • ——

## [ ॥ अथ द्वितीयः पादः ॥ ]

**ह्रस्वो नपोऽतोऽस्त्रितरादितः स्वं लुक् स्वित्ववेकोऽचिस उक्तपुंस्कः ।**
**वाप्यस्थिसक्थ्यक्षिदधेरनिष्टः र्नुम्सुप्यचः शौ रुल आदि वार्लः ॥१।२।१॥ वृत्तम् ।**

(१) **ह्रस्वो नपः [१।२।१।१।]** नपुंसकलिङ्गस्यान्तोऽर्थादज्झस्वः स्यात् । सोमपम् । अतिरि ।

नपः किम् ? ग्रामणीः । नपुंसकलिङ्गमाह ।
सप्ताधिका विंशतिरत्र २७, पुंसि षट् च, स्त्रियां पञ्च तु वृत्तभेदः ।
नाम नपुंसकलिङ्गमिदं लस्तुत्वतनत्तहलोरुरयं द्वयच् ।
र्मं च गृहे र्जरतं च तमो द्वास्तालुरणार्धनपूर्हृदयं भम् ॥१॥

रं च तनोर्दलखामृतदुःखमांसहिमं मुखशम्मघ विड् भी ।
पुण्य बिलौषधवस्त्रजलास्त्रदारुधनुश्शिखराजिरपिच्छम् ॥२॥

हलोदराणां फलपुष्पलोहमण्डनोद्भिजव्यञ्जनजात्यपत्यतो-
काणां क्रियाचादिविशेषचार्थदैक्ये द्वित्रिपात्रादि च चादितः पथः ॥३॥

ङस्त्येतदादित्व उपक्रमोपज्ञे नाम्नि कन्था यदुशीनरेषु ।
छाया बहूनां च सभा च सङ्घे राजर्थरक्षः सदृशां गृहे तैः ॥४॥

स्वाङ्गे सुहृन्न्यायदलेषु धर्मे मित्रेऽथ साराधमु कर्मभावे- ।
ऽणादिः समूहे च कृदच्च भावे भक्तास्पदात्तं यवसं पुरीतत् ॥५॥

कुहकचिबुके लिङ्गं बीजं ललाटविटे पिटं
कणिशबडिशे शीर्षाक्ष्यण्डं कुटुम्बसमीपदम् ।
सबुशपलिशे रूपं तल्पं कुसीदमृणं गुदं
क्रकचशरणे शिल्पं पृष्ठं कुकुन्दरचामरे ॥६॥

कारणकारकलोष्टकरोटं साहसकुङ्कुमकित्वनिरुक्तम् ।
अक्षरमन्तरमूषरदैवतबाहु च जानु कसेरु च वैरम् ॥७॥

सिध्मेध्मकुर्पोडुपयुग्मगुल्मश्राद्धं गृहस्थूणशरोर्णरत्नम् ।
चिह्नान्तरीपोक्थबिसार्धटाहः पात्रोल्मुकाभ्रं कुलिशं कलत्रम् ॥८॥

लोकायतालीढभगेङ्गुदाङ्गं स्फारं शफं गह्वरबाष्पशष्पम् ।
शालूकवृन्दं पदराजसूयं सूक्तं प्रियं तुम्बरुवाजपेयम् ॥९॥

कान्तारतीरे शिशिरं करीरं शृङ्गाङ्गदूरारिभाण्डसक्थि ।
क्षूणोष्णपीठं शवगन्धमादने चैकपुण्यात् सुदिनादहं स्यात् ॥१०॥

किसलयजगच्च भुवनं त्रिविष्टपं कशिपुपञ्जरं कलभम् ।
प्रातिपदिकं कुटीरं यकृदप्यव्यक्तलिङ्गोक्तौ ॥११॥

सङ्ख्येयसङ्ख्यैकपराशताद् यद् आदन्द्विगुर्डस्तिसुरा निशाच्छा- ।
या शालसेनानगरार्चिषौ त्विश् अर्धर्चवारासनमन्धकारः ॥१२॥

ओदनचन्दनशृङ्गविधानाः तालखलीनमठासनपानाः ।
स्तेनविमानयुगन्धरसूत्राः गोमयपत्रपवित्रकषायाः ॥१३॥

मालकपुस्तकमस्तकनिष्काः मोदकमञ्चकशाटकशूकाः ।
मूषिकतण्डककर्पटशुल्काः क्ष्वेडितपातकभूषणकूटाः ॥१४॥

अर्बुदलोहितयौवनवृत्ता आश्रमसंक्रमसङ्गमबिम्बाः ।
देहसुवर्णवसन्तपलालाः कुण्डलतैलतमालमृणालाः ॥१५॥

मङ्गलशम्बलशालकरीषाः तोरणतोमरपार्श्वशरावाः ।
कर्षदृढामिषमूलसहस्राः माषबलोपलविक्रमशीलाः ॥१६॥

चरकचषकौ खण्डं मुण्डं तडागकरण्डकौ
निकटकपटौ कुण्डं काण्डं विहारनडायुताः ।

पुलिननलिनौ षण्डं दण्डं शरीरतृणव्रणाः
शरकशयनौ गूथं यूथं चषालमलौ तलः ॥१७॥

शकलचमसौ मुस्तं बुस्तं शतव्रतदेवताः
चरणकवचौ हस्तं पुस्तं दिनश्च कमण्डलुः ।
समयकवियौ दीपं द्वीपं पिनाकतटव्रजाः
करकशकरौ नेत्रं मूलं रसांशनखव्रणाः ॥१८॥

ऐरावतप्रयुतसान्ववतंसजृम्भाः कर्पासबाणभुवनाङ्कुशकाशकोशाः ।
वल्मीकशाकवरपारविटङ्कतङ्काः अङ्गारताण्डवकिरीटकपालवालाः ॥१९॥

पूर्वप्रवालशतमानकबन्धतीर्थाः गाण्डीवगेहमलयाम्बुजजन्तुसूर्याः ।
कार्षापणाव्ययवितानसपल्लवापराह्णोपवासफलकोत्पलवारबाणाः ॥२०॥

पिण्याककल्कमधुपङ्कवितङ्ककुञ्जाः निर्यासकुक्कुटविडङ्गखलाभिधानाः ।
केदारकंसभवनाढववक्त्रछत्रानीकाः निदाघघृतसेचकयूषमेषाः ॥२१॥

शेखरखण्डलदाडिममध्याः कर्कशताडनकुट्टिमराष्ट्राः ।
द्वीपिनवल्कलमण्डपवप्रा अङ्कुशवास्तु च कुञ्जरभावौ ॥२२॥

कुतपो विटपो निगडो रजतः ककुदो महिमा वलयो निधनम् ।
तिमिरं मुशलं कमलं कललं समरं कुमुदं कुसुमं पलितम् ॥२३॥

प्रग्रीवपात्रीवपुसीरपिष्टौ अर्चस्कचक्रौ कुणपोऽप्यरण्यम् ।
अष्टापदः स्थाणु च पुच्छकूर्चौ उद्योगमुद्यानशरौ च नीडः ॥२४॥

शैलद्यूतौ शौचं कुष्ठं पूलस्थानौ शल्यं कुल्यम् ।
प्रेमप्रेषौ मौनं मानं कर्मस्नेहो लोमन् ब्रह्मन् ॥२५॥

मुष्काकाशौ क्षेमं क्षीरं शङ्खः पद्मः स्यादम्भोजे ।
भूतःप्रेते पक्ष्मार्मौ च शङ्कु पाशः पिण्डः सत्त्वम् ॥२६॥

उद्यमपटहप्रतिसरमरककमठसैन्धवो लवणे ।
कण्टकमूलकपटलाः कन्दरमुकुलोऽस्त्री मण्डलं रित्प् नप् ॥२७॥

पुंस्यत्स्नुदब्धणघणकोकिकान्तः कूपाब्धिपुष्यासिनदाब्दकोष्ठाः ।
स्वर्वज्रदन्तच्छिदिचक्रिरश्मि धान्यक्रतोः प्राण्यगदैत्यराट्सु ॥२८॥

वर्णार्चिषर्मासमरुद्ध्वनार्तो भेदस्य रात्रोऽपि नृपार्थनाभ्य- ।
प्योस्वातसङ्केतपुताश्च पोतः पाण्यङ्घ्रिदत्यञ्जलिराशिमौलिः ॥२९॥

वृष्णिगिरी वलिदुन्दुभिनाक्षो रालि जनाभिजनावमतिर्वा ।
नायनहायनसस्तनफेनाः शैवलपुद्गलगोलपटोलाः ॥३०॥

कीलकपोलगरास्तरलश्च फालनलौ सृमलावटतूला ।
पाङ्गमृदङ्गगरुद्धरिदात्मा भूपुरहारकपालनिकाय्याः ॥३१॥

ग्रन्थिः पिचण्डः कलिकुक्षिकेलिकल्लोलकालाः विभवार्थरैस्वीः ।
गर्तोत्तरासङ्गछदाश्च मर्मन् आच्छादने वेम मकरन्दकुन्दौ ॥३२॥

उच्चारवेधः प्रसवाश्च संवत् नाडीव्रणो यानयुगश्चवाकः ।
श्लेष्मोष्मवेश्माश्म च पाप्मयक्ष्माः लाजासुदाराः गृहवल्वजाश्च ।
वस्त्रे दशा सर्कु च वर्ध्रमेढ्रौ पुंस्त्र स्त्रियां तिस्त्रथ नप् न नस्त्री ॥३३॥

गाथा ॥ पुंलिंगम् ॥

लिङ्गं स्त्रियां योनिमतां तथोड्यान् शिष्टेद्द्रुनौदीधितिलिड्दरद्धल् ।
जात्याजिभाः पूरुदुकाकुरज्जुकुस्वायुछर्दिस्तनुबन्धुविट्याः ।
शरज्जलौकः सुमनोप्सराः द्यौः वर्षाः समा ऽऽपः सिकताश्च गाथाः ॥३४॥

शत्यादियोन्यादिमरीचिपाटलिश्रोण्यूर्मितुट्यो मषियष्टिशाल्मलि ।
ककन्धुमत्यस्तिथिबस्तिमुष्टयोऽरणीषुधीष्टस्तरणिश्च कम्बलः ॥३५॥

शल्लकमल्लकवृश्चिकशाटाः बाहुवराटकपुत्रसृपाटाः ।
कन्दरजाटलिदंशकलम्बाः मन्वशनिकुटस्वातिकिटाश्च ।
रेणुमुनीर्पिटकोऽहि कुट्श्चि शिल्पचतुर्द्विपदाभ्यभिधानम् ॥३६॥ गाथा ॥

मृत्युर्घटः कण्डुविभीतकौ तटः भल्लातकश्चामलको हरीतकः ।
पात्रं कपाटोदरमण्डलौ पुरः वटोऽवटः स्यात् कलशः पटो मठः ।
पुटो विषाणो नखरोऽपि शृङ्खलः द्रोणोऽपि वल्लूरकटस्प्रियङ्गुराच् ॥३७॥ षट्पदी ॥

शल्वाच्यवन्नामगुणश्च संख्या प्रायस्तथा सिध्यति यस्तदर्थे ।
प्राप्तालमापन्नवदादिकेत्यर्थान्तर्द्विगौ चार्थपितोः परस्य ॥३८॥ **स्त्रीलिङ्गम्** ॥

**नामेत्यादि** । यद् व्युत्पत्तिमन्तरेणार्थप्रतीतिकरमनादिसमभिधानं तन्नाम । रूढिशब्द इत्यर्थः । तदधिकृतं वेदितव्यम् । नपुंसकलिङ्गं चा पुंल्लिङ्गात् स्यात् । ल-स्तु-त्व-त-न-त्त शब्दान्तं नप् । जलम् । मस्तु । तत्त्वम् । क्षतम् । विपिनम् । वृत्तम् । त्तं किम् ? अन्यायुक्तार्थे । तुन्तः । कुन्तः । हस्तः । मुहूर्तः । धम्मिल्लः । **हलोररुयम्** । हलः परे ररुयान्तम् । पात्रम् । शुक्रं रेतः । देवता तु भार्गवः शुक्रः । अश्रु । सस्यम् । **द्वयच्** । शीसिन्तं [? असिसुसन्तं] द्वयच् नप् । पयः । सर्पिः । इदं वयः पक्षी । रक्षः राक्षसः । तमः राहुः । रित्वात् आणि देवस्य पुंस्त्वं प्राप्तं बाधते । सन्तमेव रित् परं बाधते, नान्यम् । तेनायं पारावतः पक्षी । अशनः वृक्षः । शैलः, पुत्रः, शक्रः, आर्यः । **मं च** । द्वयज् मन्नन्तम् । कर्म । द्वयचौ किम् ? स्थूलशिराः ना । तरीमा [? तलिमा] आकल्पः । **गृहे जरतं च** । गृहवर्ति ज-र-तम्, तं च प्रागुक्तम् । तं च इतो रितोऽर्धर्चादित्वात् तल्लिंगाश्चार्षाः । र्ज । उटजम् । उटजः मुनिगृहम् । मन्दिरम् उदवसितम् । पुनस्तं तसंयुक्तार्थम् । निशान्तम् । च किम् ? भवनं वेश्म, धिष्ण्यं, हर्म्यम् । एतत् किम् ? आवसथः । तमसादेर्नाम **तमः** तिमिरं ध्वान्तम् । तथा [द्वाः] द्वारं गोपुरम् । **तालु** काकुदम् । **रणं** मृधं युद्धम् । **धनं** स्वापतेयं वसु । [**पूर्**] पुरं पत्तनम् । **हृदयं** चितम् । **भं** नक्षत्रम् ॥१॥

**रंचेत्यादि** । **रं च** तं च प्रागुक्तान्तं च । **तनोः** शरीरस्य नाम कलेवर । च किम् ? वपुः क्षेत्रम् । रं किम् ? कायः । दलादीनां नाम र्हलोदरान्तानां नाम । **दलं** पर्ण पलाशम् । **खम्** इन्द्रियं हृषीकम् अक्षम् । खं किम् ? अक्षश्चन्दकः । तथाऽथ खम् आकाशम् अम्बरं वियत् विहायः । **अमृतं** पीयूषम् । **दुःखं** द्वन्द्वम् । **मांसं** पलं तरसम् । **हिमं** तुहिनं तुषारम् । **मुखं** तुण्डं, पुष्करं मुरजमुखम् । **शं** सुखं शर्म । **अघं** पापं वृजिनम् । **विट्** पुरीषम् अशुचि । **भयं** साध्वसम् । नाम किम् ? **भीः** भीतिः । **पुण्यं** सुकृतम् । **बिलं** विवरम् । **ओषधं** भेषजम् । **वस्त्रं** चीवरम् । **जलं** तोयम् । **अस्त्रं** रुधिरम् । **दारु** काष्ठम् । **धनुश्चापम्** । **शिखरं** टङ्कम् । **अजिरं** प्राङ्गणम् । **पिच्छं** बर्हिः ॥२॥

**हलेत्यादि** । **उदरं** जठरम् । फलादिजातीनां च नाम । **फलं** कपित्थं लकुचम् । **पुष्पमु**त्पलं मुद्गरकम् । **लोहे**नाग्निविलेयस्य **कांस्यादेर्ग्रहणम्** । **लोहं** कृष्णं कालायसं, **स्वर्णं** सुवर्णं, **तारं** रूप्यकं,

त्रपु वङ्गं, सीसकं नागं, ताम्रं शुल्वं, सिक्थं मदनं, जतु । **मण्डनम्** आभरणं केयूरम् अङ्गदं कटकं मुकुटम् । **उद्भिजं** बिडं सैन्धवं, रोमकं लवणम् । **व्यञ्जनम्** उपदंशं दुग्धं, दधि उदश्वित्, मधु माक्षिकम् । तथा **अपत्यं तोकं** नानयोर्नाम । द्वयोर्ग्रहणात् तु सूनुः । **क्रियाचादिविशेष-चार्थादैक्ये** । क्रियायाः चादेश्च विशेषो विशेषणं नप्, ऐक्ये एकत्वे च वर्तते । मृदु पचति । नीचं यात‍ि । चादेः, पुरस्ताद्, रमणीयम् । दिग्देशः कालो वा । पुंनिर्देशाद् अनामापि । सविनयं पृच्छति। **चार्थदा** । चार्थो द्वन्द्व एकत्वे वर्तमानो, दालक्षितो, अव्ययीभावश्च नप् । पाणिपादं, हस्त्य[श्व]म्, आराशस्त्रम् । दा । अधिस्त्रि । उपवधु । पञ्चनदम् । शनैर्गङ्गम् । दित्वादन्यपदार्थेऽपि न वाच्यलिङ्गता । **द्वित्रिपात्रादि च** । द्वित्रीति समाहारद्विगुः । पात्राद्यन्त एकत्वे वर्तते । त्रीणि पात्राणि समाहृतानि त्रिपात्रम् । त्रिभुवनम् । चतुर्युगम् । चतुष्पथम् । त्रिरात्रम् । **चादितः पथः** । चादिपूर्वपथः कृतसमासान्तो नप् । शोभनः पन्थाः सुपथम् । दुष्पथम् । कापन्थम् । चादेः किम् ? जल अपन्थाः । स्वती पूजायाम् । चानुवृत्ते, यथाप्राप्तं च । द्विपथम् । अन्यार्थे, अपथो देशः ॥३॥

**ङसीत्यादि** । **ङस्त्येतदादित्व उपक्रमोपज्ञे** । उपक्रम्यत उपज्ञायत इति भावार्थयोर्घण् । डौ ते । तच्छखः । एतयोरादित्वे प्राथम्ये गम्यमाने ङस्तीति षष्ठी, समासे सति । नन्दोपक्रमाणि मानानि । नन्देनादौ कृतानि । पाणिनस्योपज्ञा पाणिनोपज्ञमकालकं व्याकरणम् । चन्द्रोपज्ञमसंज्ञकम् । एतदादित्वे किम् ? देवदत्तोपक्रमः प्राकारः । तदुपज्ञो रथः । **नाम्नि कन्था यदुशीनरेषु** । ङेस्ति, संज्ञार्थे कन्था । सोशमिकन्थम् । आह्वरकन्थम् । नाम्नि किम् ? वीरणकन्था । उशीनरेषु किम् ? दाक्षिकन्था ग्रामसंज्ञा, सोऽयं न चोशीनरदेशे । **छायाबहूनां च** । बहूनां सतां सत्का छाया, तैः सह कृतषष्ठ्यन्तसमासो नप् । शलभानां छाया शलभच्छायम् । इषुच्छायम् । बहूनां किम् ? वृक्षस्य च्छाया वृक्षच्छायं, वृक्षच्छाया । नित्यमिदम् । तैः किम् ? शलभानां परमच्छाया । **सभा च सङ्घे** । सभा नप् सङ्घे वाच्ये, येषां सङ्घस्तैः सह समासे । स्त्रीसभम् । विप्रसभम् । तत्सङ्घ इत्यर्थः । **राजार्थरक्षःसदृशां गृहे तैः** । राजाभिधेयो येषां शब्दानां तेषां सत्का सभा, तैः सह समासे गृहे भवने वाच्ये । चानुवृत्तेः सङ्घे च । इनसभम् । ईश्वरसभम् । नृपतिसभम् । राजार्थानां किम् ? जगत्तुङ्गसभा । अर्थग्रहणाद् राज्ञापि न । राजसभा । रक्षःसदृशां सत्का सभा, भवने सङ्घे च वाच्ये, तत्समासे नप् । राक्षससभम् । पिशाचसभम् ॥४॥

**स्वाङ्ग इत्यादि** । **स्वाङ्गे सुहृन्न्यायदलेषु धर्मे मित्रेऽथ सारार्धम्** । स्वाङ्गादिष्वर्थेषु धर्मादयो नप् । स्वाङ्गे धर्मसाधने क्रियाकल्पे । इदं धर्म । एतानि धर्माण्यासन् । सुहृदि, मित्रं सखा । न्यायादनपेते, इदं सारम् । दले समप्रविभागे । अर्धं पिप्पल्याः । एषु किम् ? एष धर्मः सनातनः । मित्रो रविः । सारः प्रधानम् । ग्रामार्धः । उ निपातः । **कर्मभावेऽणादिः समूहे च कृदच्च भावे** । कर्माद्यथोऽत् । अदन्तस्तद्धितभावे नप् । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् । आधिपत्यम् । भावे श्वेतत्वं, श्वैत्यम् । कार्ष्ण्यम् । दार्ढ्यम् । गौरवम् । मार्दवम् । स्तेयम् । अदन्तः किम् ? ग्रामता । गरिमा । समूहे भैक्षं कापोतं, राजन्यकं, अश्वीयम् । कृदपि भावप्रत्ययान्तो नप् । हसितं तस्य । शोभनं भक्तम् । लब्धं सिद्धम् । करणम् । सांराविणम् । सान्द्राविणम् । वर्तने णिन्, ततोऽण् । आसितव्यम् । शयनीयम् । स्थेयम् । अवध्यम् । कार्यम् । ईषदाढ्यं भवम् । देवभूयं गतः, देवत्वं गत इत्यर्थः । अत् किम् ? कृपा । कृतिः । भिदा । घणाद्यन्तानां तु पुंलिङ्गं वक्ष्यति

"अब्यण्घनकोकिकान्तः" [२।३०] इति । **भक्तम्** अन्नम्, ओदनः । **आस्पदं** प्रतिष्ठा । **यवसं** घासः । **पुरीतत्** अन्त्रम् ॥५॥

**कुहकेत्यादि** । अतो अदन्तादिषु स्त्रीत्वे प्राप्ते नप् । कुहकम् इत्यादि सुगमं यावद् दशमान्ते । **एकपुण्यात् सुदिनादहं स्यात्** [२।१२] कृतसमासान्तम् । एकाहं, पुण्याहं, सुदिनाहम् ॥६-१०॥

तथा **अव्यक्तलिङ्गोक्तौ** । अव्यक्तस्यास्पष्टस्य लिङ्गस्योक्तावभिधाने यत् प्रयुज्यते तन्नप् । किं तस्यागमे जातम् । यत् तत्रोत्पद्यते तदानेयम् । इमानि गोरूपाणि । गावो बलीवर्दाश्च समेता उच्यन्ते । भूतानि । सर्वे प्राणिनः । सप्तमी किम् ? यच्छिष्टैरव्यक्तलिङ्गोक्तौ प्रयुज्यते तन्नप् । तेन सुतशिशुगोसिन्धुशब्दानां न नप्त्वम् ॥११॥

**सङ्ख्येत्यादि** । [**सङ्ख्येयसङ्ख्यैकपरा शताद् यत्** । शतादिसङ्ख्याऽदन्ता नप्, सङ्ख्येये वर्तमाना एकपरा एकार्थनिष्ठा च स्यात् । शतं पुरुषाः स्त्रियः कुलानि वा । एवं सहस्रम्, अयुतम् । अत् किम् ? इयं लक्षा कोटी च । अयं शङ्कुः । सङ्ख्येये किम् ? शतं नृणां, द्वे शते, त्रीणि शतानि । सङ्ख्या किम् ? लिङ्गाधिकारे सर्वसङ्ख्यार्थम् । तेन "शत्यादि०" [२।३७] स्त्रियां वक्ष्यति । सा सङ्ख्येये सङ्ख्यैकार्थपरा स्यात् । विंशतिः पुरुषाः । एवं त्रिंशत्, नवति विंशत्या पुरुषैः । सङ्ख्येये किम् ? पुरुषाणां विंशतिः, द्वे विंशती, तिस्रो विंशतयः । **आदन्द्विगुः** । आकारान्तोऽनन्तश्च द्विगुर्नप् । स्त्रिया अच्प्रत्याहारयावत् । स्त्रीलिंगं चातः च् [२।३९] यावत् । षिति [?] । पञ्चखट्वं, पञ्चखट्वी । दशमालं, दशमाली । अनुः [?] । पञ्चतक्षं, पञ्चतक्षी । पञ्चराजं, पञ्चराजी । **ङेस्ति** । षष्ठीसमासे । **सुरादि च** । यवसुरं, यवसुरा । भूतनिशं, भूतनिशा । वृक्षच्छायं, वृक्षच्छाया । गोशालं, गोशाला । क्षत्रियसेनं क्षत्रियसेना । नगरं, नगरी । इदम् इयं वा अर्चिः ज्वाला च । अत् प्रत्याहारार्थः । **विश्** इति स्त्रियां विभीतकादिः कटसन्तो [२।३९] । विश् प्रत्याहारोऽत्र । पागन्वप् च । विभीतकं, [विभीतकः । तटं, तटः । भल्लातं, भल्लतः । आमलकम्, आमलकः ।] इत्यादि । **अर्धर्चाद्यन्ते**ऽप् नप् । अप् प्रत्याहारार्थम् । अपः पुंसि पाठाच्च पुंलिङ्गत्वं च । अर्धचम्, अर्धर्चः । वारं, वारः इत्यादि । **अष्टादश दिनस्य** । **कमण्डलुः** । दिननामाप्युभयम् । दिनं, दिनः । दिवसं, दिवसः । वासरं वासरः । अहन् नपि च विंशे । [आसनं, आसनः । अन्धकारं, अन्धकारः] ॥१२॥

**शङ्खः पद्मः स्यादम्भोजे** । जलजेऽर्थे उभयलिङ्गौ स्तः । निधिः पुंस्येव । **भूतः प्रेते** पिशाचेऽर्थे उभयलिङ्गः । अन्यत्र भूतम् उपचितम् । भूतानि प्राणिनः । उपमान-क्रियावचनश्चाभिधेयलिङ्गः । पितृभूतोऽयं, पितृभूतमिदम् । पक्ष्मः, पक्ष्मं तूलम् । अर्मम् अक्षिरोगः । **शङ्कुः** सङ्ख्या । **पाशः** बन्धनम् । **पिण्डः** कायः । पिण्डम् अयः । **सत्त्वं** गुणः, सत्त्वः प्राण इत्यादि ॥२६॥

**मुकुलोऽस्त्री** । **मण्डलो**ऽपि । अत्र लिङ्गाधिकारे यो रित् सोऽत्रापि नपर्थम् । "अर्धर्च" [२।१२] इति द्व्यच्सु यदुक्तं तदन्तं त्र्यच्कार्ये । कुटजं, कुटजः मुनिगृहम् । रणः, रणं युद्धम् । एवं धन-मांस-हिमर्-ओर्षध-वरत्र-दारु-धनूर्-शिखर-हल-लोहफल-क्रकच-दैवर्-गुल्मर्-कान्तार-मण्डल-

पिटका: । स्त्रियां वर्षा: । पुंसि वर्ज्रमास-वर्णनीलादि-र्विष-र्शङ्कु-गृह इत्यादि **रित्** । **प्** पकार: प्रत्याहारार्थ: । नपुंसकलिङ्गान्ते **नप्** । अर्धर्चाद्यन्ते अप् ॥२७॥ **नप् समासम्** ॥

**पुंसीत्यादि** । अत: परं लिङ्गं पुंसि ज्ञेयम्, आ स्त्रीलिङ्गात् । **अत् स्नुत्** । अदन्त: सन्त: [नन्त:, उदन्त:] शब्द: पुंसि । अत्, वृक्ष: । घट: । स्, अङ्गिरा: । दो: बाहु: । न्, प्लीहा व्याध्यंश: । मूर्धा शिर: । उत्, सेतु: जलबन्ध: । केतु: ध्वज:, इत्यादि पर: । अन्ते किम् ? भावे, गरिमा । महिमा । भावादन्तादि नप्त्वे प्राप्ते **अपृघणणघनकोकि** [इत्यन्ता:] । अत: किम् ? स्तुस्त्रीत्वेभ्योऽप् । शर: । जय: । गम: । अपघन: । हव: इत्यादि । घण् अकर्तृभावे । पाक: । त्याग: । निकेतो गृहम् । क्लेशो दु:खम् । अलङ्कार आभरणम् । न्यदो ण: । न्यादय: । पचादेर्घ: । पेचक: । उरच्छद: । न । कायज् वा चादे: । यज्ञ: । यत्न: । पाप्मा: । अजाद्यात् क: । विघ्न: आखुत्थो वर्तते । अन्तर्क्त उक्ति: । अन्तर्धि: निधि: । जलधि: । सूत्रे व्यत्ययश्छन्दोऽर्थम् । **कूपादीनां** नाम च । **कूप:** प्रधि: उदपान: । **अब्धि:** । समुद्र: । उदन्वान् । **पुष्य:** सिध्य: । **असि:** करवाल: । **नद:** भिद्य: उध्य: लोहित: । **अब्द:** घन: जीमूत: शरण्य: । **कोष्ठ:** कुशूल: पलत: । **स्व:** त्रिदिव: इरामति: । **वज्र:** पवि: दम्भोलि: शतकोटि: । **दन्त:** रदन: दशन: । **च्छिदि:** भिदि: परशु: । चक्री स्यन्दन: । **रश्मि:** घृणि: । **धान्य:** शालि: व्रीहि: तिल: । **ऋतु:** वितान: यज्ञ: । विभक्त्यन्तसङ्घात् प्राण्यादीनां तद्भेदस्य च नाम । पिता । भ्राता । सप्ति: । कपि: । कृमि: । तिमि: । वृषल: । कुलाल: । मर्त्य: मनुष्य: । विट् । वैश्य: । वणिक् । अनड्वान् । पारापत: । कपोत: । तद्विशेषस्य । दूत: । पण्डित: । कवि: । यति: । विपश्चित् । सुहृद् । दुहृद् इत्यादि । एकत्वनिर्देशाद् बहुप्राणिसमवाये न स्यात् । इयं श्रेणि: शिल्पसमुदाय: परिषत् । **अग:** पर्वत: शैल: अद्रि: गिरि: । अगो वृक्षश्चोच्यते । तद्भेद: । ताल: । तमाल: । शाल: । चूत: । आम्र: । अर्जुन: । असन: । **दैत्य:** बलि: नमुचि: मुनि: असुर: । [राट्] राष्ट्रं जनपद: । अन्यद् गोष्पदम् । तद्भेद: । अङ्गा: । मगधा: । पाञ्चाला: । वृजय: । प्राग्वल्लिङ्गसंख्यैव, वक्ष्यति च ॥२८॥

वृत्तं [**र्वर्णेति**] । र्वणादे रित्वान्नप् च । तद्भेद: । नील: । पीत: । लोहित: । हरित: । द्रव्यवाचि त्रिलिङ्गता । नीलाऽश्वा । **र्विष:** हालाहल: सो गर: डुण्डुभ: । **मास:** । शुचि: । शुक्र: । नभस्य: । **मरुत्** । देव: । तद्भेद: । इन्द्र: । आदित्य: । अग्नि: । वह्नि: । मरुद् वायुश्चोच्यते । तद्भेदश्च । मरुद् वात: पवन: उदान: समान: । **ध्वन:** । ध्वान: ध्वनि: कलकल: कोलाहल: । तद्भेद: । उदात्त: । अनुदात्त: । स्वरितादि । **ऋतु:** । हेमन्त: । वसन्त: । **रात्रोऽषि** । कृतसमासाजन्तो, रात्रोऽषीत्यसमाहारे । अहश्च रात्रिश्च । "अहोरात्राविमौ' पुण्यौ' ॥ सर्वरात्र: । अर्धरात्र: । वर्षारात्र: । अषि किम् ? अहोरात्रम् । [**नृपार्थनाभि:** ।] अयं नाभि: राजा । नृपार्थं किम् ? इयं नाभि: प्राण्यङ्गम् । अप्योस् प्रत्याहारौ । अप् अर्धचादि । योस् योन्यादि कटसन्त: [२।३४-३७] । तौ पुंस्यपि तत्र दर्शितौ । व्रातादि पुंसि ॥२९॥

अयं **दुन्दुभि: । नाक्षो** किम् ? **दुन्दुभ्या अक्षेण** ॥३०॥

**षष्ठे नाडीव्रण:** । नाडी किम् ? शिरोव्रणम् । यानेभ्यो युगं च । रथयुग:, शकटयुग: । भ्यस् किम् ? अनोयुग: । यानेभ्य: किम् ? कलियुगम् । वस्त्रयुगम् । **वाकान्त:** समास: । अनुक्रान्तो

वाकोऽनेनानया वा, स तत् सानुवाकः । घणन्तोऽप्यस्तु । लाजायाः जसन्तत्वाद् बहुवचनान्ताश्च स्युः । जसन्तद्वन्द्वाल्लाजतसोः पर्यायोऽपि । इमे **लाजाः** अक्षताः । **असवः** प्राणाः । दाराः कलत्रम् । गृहाः गेह । वल्वजाः वीरणकटः । **वस्त्रस्ये** किम् ? इयं दशा वयोवस्था । **सक्तवः** यवभूयचूर्णः । रित्वाद् एकत्वाच्च । इदं सक्तु । चकारान्मन्त्रश्चोकारादिः । मन्त्रणं मन्त्रः । घण्यपि । **वर्धः** आयतं चर्म । **मेढ्रः** शपः । कुंठअङ्कोष्ठौ वृक्षौ । फलेऽपि पुंसि, हरीतकीवत् । षण्ठपण्डौ प्राणित्वात् पुंसि । ननु नपः कार्यित्वात् लिङ्गमुच्यतां पुंस्त्रीलिङ्गे किमित्याह-**पुंस्त्रस्त्रियां तिस्त्रघनप् न नस्त्री** । "पुंस्त्रु०" [२।] इत्यत्र पुंलिङ्गस्य कार्यमुक्तम् । स्त्रीलिङ्गस्य तु स्त्रियां तिसृचतसृ इत्यत्र भविष्यति । अथ पुश्छित्यकः प्राप्त अष्टलन्तं किमित्याह - **नप् न न स्त्री** । यत् तत् पुंलिङ्गम् । तयोः प्राप्तयोरपवादार्थमित्यर्थः ॥३३॥ पुंलिङ्गं समाप्तम् ॥

**लिङ्गं स्त्रियाम्** अतो वेदितव्यम् । **योनिमतां** भगवतां यन्नाम । माता जननी । स्वसा भगिनी । दुहिता सुता । ननन्दा भर्तृभगिनी । याता देवरभार्या । दनुकद्रुदितयो दानवनागदैत्यमातरः । योषित् युवतिः । स्त्री भार्या । जाया पत्नी । थोड्यान् । ऊत् । कमण्डलूः । अलाबूः । डीप् । आङ् । यावक्रोशी । भावे । शमी । रोहिणी । शिंशपा । पाटला, तरुत्वात् पुंसि प्राप्ते । यूका । पिपीलिका, प्राणित्वात् । द्राक्षा । तिन्तिरिकादि फलत्वान्नपि । मल्लिका । मालती । केतक्यादि, पुष्पत्वात् । ग्रामता । रथकन्या । खलिनीत्यादि समूहार्थत्वात् । इत्युक्तापवादः । अनुक्तोऽपि । करुणा । दया । लीला । माला । स्रगित्यादि । ऊड्यान् किम् ? यवलूः, ग्रामणीः, **कीलालपाः**, **वाच्यलिङ्गाः** । **शिष्टेद्द्रुनौ दीधितिलिद्दरद्धल्** । **शिष्ट** उक्तादन्योऽनुक्त इत्यर्थः । **इदन्त** द्रुशब्दान्तादि इत् । इयं रुचिः, धूलिः, दर्विः । इयं दद्रुः त्वग्दोषः । शतद्रुः नदी । **नौः** द्रोणी । **दीधितिः** रश्मिः । **लित्** प्रत्ययः । वृक्षता । प्रभुता । भावेऽपि, इयं **दरद्** हृदयम् । **हल्** । इयं त्विट् दीप्तिः । विप्रुट् शीकरः । समित् इध्मम् वीरुत् गुल्मम् । यत्तु स्त्रियामेव साधितं तदनामापि । संपत् । विपत् । कृतिः । भक्तिरित्यादि । शिष्टः किम् ? मुनिः । पतिः । हरिः । इन्द्रः । सितद्रुः अब्धिः । हरिद्रुः । तरुः । शतद्रुः नदः । उदन्वान् । अनड्वान् । **जात्याद्याः** । स्त्रीलिङ्गाः । **वर्षाद्याः** । जसन्तत्वाद् बहुवचनान्ताश्च ॥३४॥

**शत्यादीति** । **विंशत्याद्या** संख्या स्त्रियां स्यात् । सङ्ख्येये एकार्था च । विंशतिः पुरुषाः, स्त्रियः, कुलानि वा इत्याद्युक्तम् । **योन्यादि** कटसन्तः [२।३४-३७ "अप्योस् [२।२९] इति पुंसि पाठात् पुंलिङ्गश्च । इयं योनिः । अयं योनिः भग इत्यादि । **कम्बली** मे, कम्बल मे च ॥३५॥

**शिल्पचतुर्द्विपदाभ्यभिधानम्** । एषां नाम उभयं स्यात् । शिल्पी, शिल्पः । एवं वरटी, वरटः । सुवर्णकारी, सुवर्णकारः । कलादी, कलादः, नापिती, नापितः । **चतुष्पदानाम्** । हस्तिनी, हस्ती । कूर्मः, कूर्मी । **द्विपदानाम्** । ब्राह्मणी, ब्राह्मणः । क्षत्रिया, क्षत्रियः । शूद्रा, शूद्रः । मयूरी, मयूरः । योनिमतामिति सिद्धे सयोनिशब्दो न स्त्रीत्यर्थम् । यावत् कटी प्राण्यङ्गः, कटः वीरणकृतः ॥३६॥

**विभीतकादिः** कटसन्तः नपि च विस्पाठात् त्रिलिङ्गः । [विस् प्रत्याहारः ।] विभीतकी, विभीतकः, विभीतकम् । तटी, तटः, तटम् । यावत् कटम् । शपोऽश् पुंस्यपि । विस् नप्यपि

प्रत्याहारार्थम् । **प्रियङ्गु** राजकः । **आच्** । आत्वे त्यादिरशिषौ च । यावदत्र पाठात् स्त्रीत्वं च । पञ्चखट्वीत्यादि । षट्पदीयम् ॥३७।

**शल्वाच्यवदित्यादि** । वाच्यस्य यल्लिङ्गः शल् सर्वादिः । सर्वे नराः । सर्वाः स्त्रियः । सर्वाणि कुलानि । एवं, त्वं ना । त्वं स्त्री, त्वं कुलम् । वयं नराः । वयं स्त्रियः । वयं कुलानि । यः नरः । या स्त्री । यत् कुलम् । सः नरः । सा स्त्री । तत् कुलम् । युष्मदस्मत् सङ्ख्याद्यलिङ्गं स्यात् । **नाम** संज्ञाशब्दः । **प्रायो** बहुलं वाच्यवत् । सरयूर्नाम नदी । एवं कुहुर्नष्टचन्द्राऽमावास्या । श्रीकण्ठो मालवको देशः । मथुरा नगरी । अयं सिन्धुः समुद्रः । इयं सिन्धुर्नदी । अयं किष्कुः हस्तः । इयं किष्कुः वितस्तिः । नवसारिका पुरी । कान्यकुब्जं नगरं, संयानं च । मथुरह्लदो ग्रामः । तोटकं वंशस्थ इत्यादि वृत्तम् । प्रायः किम् ? न च वरेन्द्री तीरभुक्तिः । कोङ्कणकं काश्मीरं नाम देशः । शालुकिनी लिङ्गाषाढीनामः ग्रामः । तैलावटं श्रीभवनं नाम ग्रामः । तदहरभवे च वक्षति च [?] । स्रग्धरा आपीडः मालिनीत्यादि वृत्तं छन्दोजात्यपेक्षया वा । **गुणः** । श्वेतः पटः । श्वेता पटी । श्वेतं वस्त्रम् । शुचिः ना । शुचिः स्त्री । शुचि कुलम् । सङ्ख्या । एको ना । एका स्त्री । एकं कुलम् । पञ्च नराः । पञ्च स्त्रियः पञ्च कुलानि । **तथा सिध्यति यस्तदर्थे** । तदर्थे इति तस्य विवक्षितवाच्यस्यार्थे यः शब्दः सिध्यति स वाच्यवत् । क्षीरं पिबतीति क्षीरपाः ना, स्त्री, कुलं वा । एवं ग्रामणीः ना, स्त्री, कुलम् । यवलूः ना, स्त्री, कुलम् । काष्ठभित् ना, स्त्री, कुलम् । आत्मंभरिः ना, स्त्री, कुलम् । गोदोहनो घटादिः ना, स्त्री, कुलम् । दाक्षिः ना, स्त्री, कुलम् । गोमान् ना । गोमती स्त्री । गोमत् कुलम् । कृतकटः ना । कृतकटा स्त्री । कृतकटं कुलम् । **प्राप्तालमापन्नवद् [आदिके ति]** । आदिः पूर्वपदं यस्य तदादिके तीति समासे, अर्थान्ते द्विगौ च वाच्यवत् । प्राप्तो जीविकां प्राप्तजीविकः ना, प्राप्तजीविका स्त्री, प्राप्तजीविकं कुलम् । अलं जीविकायै अलञ्जीविकः ना, अलञ्जीविका स्त्री, अलं जीविकं कुलम् । आपन्नो जीविकाम् आपन्नजीविकः ना, आपन्नजीविका स्त्री, आपन्नजीविकं कुलम् । अलं चादिः । निष्कौशाम्बिः । अतिनुः । **अर्थान्तः** । ब्राह्मणाः ३ [ब्राह्मणार्थ ओदनः, ब्राह्मणार्था शिखरिणी, ब्राह्मणार्थं पक्वान्नम् ।] सः, सा, तत् । **द्विगुः** । पञ्चकपालः देशः भोजनः पुरोडाशः । **पितः** । परलिङ्गं प्राप्ते **चार्थे पितोः** द्वन्द्वतत्पुरुषयोः **परस्यो**त्तरपदस्य यत् तल्लिङ्गं स्यात् । इमौ मयूरीकुक्कुटौ । इमे कुक्कुटमयूर्यौ । इमौ अश्ववडवौ । इमे अश्ववडवाः । इति द्वन्द्वे निपातनात् पुंस्त्वम् । पित् । अर्धपिप्पली । राजपुरुषः । राजदारिका । नीलोत्पलम् ॥३८॥ **स्त्रीलिङ्गं समाप्तम् ॥ समाप्तं च लिङ्गानुशासनम् ॥**

**( २ ) अतोऽस्त्रितरादितः स्वम् । [ १।२।१।२। ]** अकारान्तान्नपः परं सु अम् कार्यि अम् स्यात् । कुण्डम् । अतिजरसम् । हे कुण्ड । र्तक् । नपः किम् ? पण्डकः । त्रितरादितः । इतरादेर्नपोऽतः स्वम् तरित्स्यात् । इतरत् । कतरत् । परमयतमत् । र्तक् । त्राद् वा य रितो यरम् । हे अन्यत् । श्लोकः –

> इतरान्यतरान्येभ्यो डतरडतमान्ततः ।
> एकतरं परित्यज्येतरादिः पञ्चको गणः ॥

नपः किम् ? कतरः । एभ्यो विहितं किम् ? प्रियकतरः ।

**(३) लुक्** । [ १।२।१।३। ] नपः स्वम् लुक् स्यात् । वारि । तत् पयः ।

**(४) स्वित्ववेकः** । [ १।२।१।४। ] सु इत् स्यात् लुग्वा इक इगन्ताच्च यः परः । हे वारि । हे वारे । हे कर्तृ । हे कर्तः । प्रियत्रि कुलम् । प्रियतिसृ कुलम् ।

**(५) अचि स उक्तपुंस्को वाऽऽपि** । [ १।२।१।५। ] वा टाप्यजादौ नबिगन्तः उक्तः पुमान् यत्रार्थे स उक्तपुंस्थोऽर्थः । तच्छब्दः स इति पुमानिव स्यात् । ग्रामणिना [कुलेन] । ग्रामण्या कुलेन । शुचिने [वस्त्राय] । शुचये वस्त्राय । आपि किम् ? शुचिनी [कुले] । अर्थः किम् ? पीलुने फलाय । नपः किम् ? चित्रग्वा स्त्रिया ।

**(६) अस्थिसक्थ्यक्षिदधेरनिष्टः** । [ १।२।१।६। ] नब् इकोऽस्थ्यादेरन्तोऽन् स्याद् वाऽऽपि अचि । अस्थ्ना । सक्थ्ना । अक्ष्णा । दध्ना । अनः अः किम् ? दधनि वा । दधेरिति पुंनिर्देशाद् द्वन्द्वैकत्वस्य वा पुंस्त्वम् । अस्थ्यादेरनब्वृत्तेष्वात् स्यात् । प्रियदध्ना न्रा । प्रियदध्न्यै स्त्रियै । अन्यथा दधीनि अन् स्यादिति ब्रूयात् ।

**(७) नुम्सुपि** । [ १।२।१।७। ] नब् इको नुम् स्यात्, सुप्यचि । वारिणी । प्रियतिसृणि । कर्तृणि । रित्वात् परं बाधते ।

**(८) अंच् शौ** । [ १।२।१।८। ] नुमेव । वनानि । बहुवृक्षाणि । रुलः । अचः परस्य रुलर्नुम् शौ । उदश्विन्ति । अतिजरांसि । रुल्जातित्वात् । काष्ठतक्षि ।

**(९) आदि वार्लः** । [ १।२।१।९। ] लर्भ्यां परस्य रुलः आदिर्नुम् स्याद् वा शौ । बहूर्जिः । बहूर्न्जि । सूर्जिः । सूर्न्जिः । सुवल्गि । सुवल्गि । रुलः किम् ? सुफुल्लि वनानि । अन्यो यमो रुल इतीच्छति तदा पाठः 'आदि यम् वा' । अर्थस्त्वयं स्थालान्तस्यादियम यदि स्यात् तदा नुम् रुल आदिरित्यावर्तते ॥२॥१॥

**अज्झोऽतुरन्यत्र न वाऽश्न ईत्यात्**
**शप्श्यात् श्र्यशौ गी गिगुगीयुदाडः ।**
**टौ स्ये डितष्ट्याऽऽडिति न्यत्सखिर्युयो**
**ड्यौ त्खौ रुडस्तुर्डु युदे जसोरेड्** ॥१।२।२॥ वृत्तम् ॥

**(१०) अज्झोऽतुः** । [ १।२।२।१। ] अद्भूतो झ यस्मात् ततः परस्य शतुः नुम् वा शौ । ददन्ति । ददति । जक्षन्ति । जक्षति । अज्झ किम् ? कुर्वन्ति ।

**(११) अन्यत्र न** । [ १।२।२।२। ] अशौ नुम् न स्यात् । ददती स्त्री, कुले वा । जक्षत् । जक्षतौ । अज्झोऽतुः किम् ? कुर्वन् ।

**(१२) वाऽश्न ईत्यात्** । [ १।२।२।३। ] आद् अवर्णान्ताद् अश्नः श्नावर्जितात् परस्य शतुः नुम् वा स्यात् ईत् इकारे परे । अर्थाद् दीर्घोः परतः । तुदती तुदन्ती कुले स्त्री वा । करिष्यन्ती कुले । करिष्यती कुले । करिष्यन्ती स्त्री । करिष्यती स्त्री । [ई इति डी गी इत्येतयोर्निर्देशः । डीग्योरित्यभिप्रेतः ।] डीग्योः किम् ? तुदन्ति । तुदता । आत् किम् ? अदती । अश्नः किम् ?

लुनती ।

**( १३ ) शप्श्यात् । [ १।२।२।४। ]** श्यपः श्याच्च परस्य शतुः नुम् नित्यं ङीग्योः । भवन्ती स्त्री । भवन्ती कुले । दीव्यन्ती च ।

**( १४ ) र्श्यशौगी । [ १।२।२।५। ]** नपः परोऽसर्शि शादौ गीतुल्यौ । कुण्डानि । पयांसि । कुण्डे अतिजरसी । पयसी अतिजरसी ।] र्स्नितः । नप् किम् ? वृक्षौ । नप् ति वृत्तम् ।

**( १५ ) गिगुगीयुदाङः । [ १।२।२।६। ]** इ उ तित् युत् आट्च क्रमेण गि गु गी स्यात् । इतः । अग्नी । उतः । बुद्धी । उतः । वायू । धनू । अङः खट्वेजरसीति केचित् । तित् किम् ? नद्यौ । वध्वौ । आङ् किम् ? जरसौ ।

**( १६ ) टौस्ये । [ १।२।२।७। ]** इष्टे रात् वर्तते । टा ङसि परे आङ् ए स्यात् । शालया । शालयोः । अत् आद स्याद् अधिकृते टौसि । देवयोः २ । अधिकृते किम् ? टे नातः । इति देवेन ।

**( १७ ) ङित्तष्ट्या । [ १।२।२।८। ]** आङः परस्य ङितः टित् या स्यात् । खट्वायै । खट्वायाः । खट्वायाम् ।

**( १८ ) आडिति न्यत् सखिर्यु । [ १।२।२।९। ]** टा डिति परे न्यत् लघुसूतिः सखि, अनयोः सम्बन्धी तत्परो वा इरि वर्णोऽप् स्यात् पतिसख्योरित्यर्थः । न्यत् निद् असमासार्थोऽतो बहुद्यूर्वो गृह्यते, तदंशत्वात् । सख्शब्दस्योक्तमात्रग्रहणाद् बहुर्पदाभ्यां परस्य नायं विधेः । पत्या । पत्ये । बहुपत्या । सख्या । साडिति किम् ? पतीनाम् ।

**( १९ ) यो ङ्यौ । [ १।२।२।१०। ]** य इत्युक्तगुणाद् यकारात् परो ङि औ स्यात् । पत्यौ । सख्यौ । यः किम् ? वयादीति यकाराद्यौ मा भूत् । पतीयते क्विप् । पत्यि । सख्यि । ङ्ये च । पत्युः । सख्युः ।

**( २० ) त्खौ रुङः । [ १।२।२।११। ]** त् ख् तत्सम्बन्धी तत्परो वा पर्योपादेशस्तस्माय इति यकारात् परो ङः ङसिङसोर्ङमात्रं रुरित् स्यान् मारावित्यर्थः । पत्युः । सख्युः । सख सामान्यार्थम् । लूनीयते क्विप् । नत्वासिद्धेः लून्युः । पून्युः । एवं पत्युः । स्मिच्छति । क । क्विप् । सुख्युः । सान्युः । युवत्युः ।

**( २१ ) तुर्ड । [ १।२।२।१२। ]** तित् ऋ लृ ततः परो ङुः स्यात् । मातुः पितुः । ऋतः किम् । स्त्रो धातोः ।

**( २२ ) युदे जसोरेङ् । [ १।२।२।१३। ]** इउ तित् एङ् स्यात् ङे जसि परे । अग्नये । वायवे । अग्नयः । वायवः ॥२॥२॥

**ङ्याम्यंशतो डौ नरि ना डितो वाट्**
**स्त्र्याख्ये युवो यू स्त्र्य इतिर्नुडामः ।**

**सङ्ख्यानदाड्ह्रस्वत्रयादियुव्यु-**
**धातोरवीणः श्नुभ्रुवः स्त्रियो वा ॥१।२।३॥** वृत्तम् ॥

**(२३) ङ्याम्न्यंशतः । [ १।२।३।१।]** नियोंऽशतः परो ङि आम् स्यात् । नियाम् । गामण्याम् स्वां स्यात् । खट्वायाम् । सर्वस्याम् । बुद्ध्याम् । नद्याम् ।

**(२४) ङौ । [ १।२।३।२।]** युत् वृत्तेः । युतः परो ङिर् औ स्यात् । अग्नौ । धेनौ ।

**(२५) नरि ना । [ १।२।३।३।]** पुंसि ना स्याद् आटा कार्यी युतः । अग्निना । वायुना । अतिपतिना । नरि किम् ? बुद्ध्या ।

**(२६) ङितो वाट् । [ १।२।३।४।]** प्रत्येकं ङसेः स्त्र्याख्यात् स्वतः स्त्रीवृत्तेः युतः परस्य ङित आड् वाऽऽगमः स्यात् । बुद्ध्यै । बुद्धये । इष्वै । इषवे । प्रियसेन्यै । प्रियसेनये । नराय स्त्रियै वा । स्वतः स्त्री वा । स्नेहपटवे नराय ।

**(२७) स्त्र्याख्ये युवः । [ १।२।३।५।]** प्रत्येकं ङसेः स्त्र्याख्या युव्वाचिनो यू ईऊकारान्तात् परस्य ङितो वा स्यात् । श्रियै । श्रिये । श्रियाः । श्रियः । श्रियाम् । श्रियि । एवं, भ्रुवै । भ्रुवे । भ्रुवाः । भ्रुवः । भ्रुवाम् । भ्रुवि । अतिश्रिये नराय । स्त्रियै वा ।

**(२८) यू स्त्र्यः । [ १।२।३।६।]** स्त्र्याख्याद् ईदूतः स्त्रिया ई, तस्यास्वपरस्य ङित आड् नित्यं पार्थक्यात् । नद्यै । लक्ष्म्यै । वषाभ्वै । स्त्रियै । स्त्रिया किम् ? अतिस्त्रियै । अत एवान्यस्या प्रधानस्यापि यथोक्त आड्विधिः । अतिलक्ष्म्यै नराय । स्त्र्याख्या किम् ? ग्रामण्ये । ब्राह्मण्यै ।

**(२९) इतिर्नुडामः । [ १।२।३।७।]** इतीत्युक्तपरामर्शे । आडिव स्त्राख्ये युवो वा यू स्त्र्यो नित्यं परस्यामो नुडागमः स्यात् । श्रियाम् । श्रीणाम् । भ्रुवाम् । भ्रूणाम् । अतिश्रियाम् । अतिश्रीणां नराणाम् । वर्षाभूणां स्त्रीणाम् । युतोऽति स्त्रेः ह्रस्वादिति ।

**(३०) सङ्ख्यानदाड्ह्रस्वत्रयात् । [ १।२।३।८।]** एभ्यः परस्यामो नुट् । संख्या । चतुर्णाम् । पञ्चानाम् । षण्णाम् । सप्तानाम् । कतीनाम् । अनत् किम् ? तावताम् । चत्वारिंशताम् । आड् । खट्वानाम् । आट् किम् ? कीलालपाम् । ह्रस्व । वृक्षाणाम् । अतिस्त्रीणाम् । धेनूनाम् । मातृणाम् । रितुर्नुमं बाधते । वारीणाम् । ग्रामणीनाम् । कुलानाम् । ह्रस्वात् किम् ? ग्रामण्याम् । त्रय । त्रयाणाम् । अतित्रयाणाम् । अत एवामि त्रेः त्रयश्च ।

**(३१) इयुव्युर्धातोरचीणः । [ १।२।३।९।]** ड्डीयुरिवर्णश्च इयुव् स्यादजादौ । नियौ । लुवौ । नामक् । नियम् । इण । ईयतुः । धातो किम् ? कुमार्यौ । स्वादौ किम् ? स्त्र्यर्थः । अचि किम् ? श्रीः । युः किम् ? सोमपौ । इणोऽयत्वार्थम् ।

**(३२) श्नुभ्रुवः । [ १।२।३।१०।]** उरुव् स्याद् अचि युक्तयोगाद् धातोः संयोगात् परस्य श्नोः । आप्नुवन्ति । भ्रुवौ । संयोगात् किम् ? चिन्वन्ति ।

**(३३) स्त्रियाः । [ १।२।३।११।]** ईरित् स्यात् । विस्त्रियै । सुस्त्रियाम् । स्त्रियतेः क्विप् । स्त्रियै नराय । वा परार्थः ॥२॥३॥

**सौऽम्यौति युक्ताद्यवजादि सुप्व-**
**सुध्यप् चतो दृन्पुनष्कारवर्षा- ।**
**भूर्वा जरा ङोऽमि नु वा मघोनः**
**डार्वा नञोऽसौ सस्यदैकपद्ये ।**
**षुर्नः परे ण्यादिपदादयूनां**
**वान्ते तथैकाच् सकुनाम्नि नाना ॥१।२।४॥ षट्पदी ॥**

**( ३४ ) [ वा ] सौऽमि । [ १।२।४।१। ]** [सि] शसि अमि च स्त्रिया ईर् इप् वा स्यात् । स्त्रियः । स्त्रीः । स्त्रीम् ।

**( ३५ ) औति । [ १।२।४।२। ]** तन्नित्यं स्त्रिया इति सिद्धे ह्रस्वस्त्र्यर्थम् । अतिस्त्रियौ । अत एव परोऽपीन्न । अतिस्त्रियः । अतिस्त्र्यौ ।

**( ३६ ) युक्तात् । [ १।२।४।३। ]** धातोः संयोगाद् धातोः ड्युरियुव् स्यादचि । यवक्रियौ । कटप्रुवौ । शिश्रियुः । धातोर्योगात् किम् ? उन्न्यौ । अयनं ई । बहुर्ज्ज ई बहुर्ज्जी । बहुर्ग्यौ ।

**( ३७ ) यवजादि । [ १।२।४।४। ]** अज् आदिर्यस्य तद् अनेकाज् इत्यर्थः । स धातोर्युः यव् स्याद् अचि । निन्ये । निन्याते । सखीयतेः क्विप् । सख्या । सख्ये । सख्युः । सख्यि । एकाच निषौ च परार्थम् ।

**( ३८ ) सुप्यु । [ १।२।४।५। ]** धातोरुवर्णोऽचि सुप्येव वः स्यात् । वसूयतेः क्विप् । वस्वौ । वस्वि । सुपि किम् । लोलुवः । लुलुवुः ।

**( ३९ ) असुध्यप् चतः । [ १।२।४।६। ]** सुधीवर्जितो धातोर्युः अप् चतः कारकचादेः परो यप् स्यात् सुप्यचि । ग्रामण्यौ । खल्वप्वि । तस्य, परमस्य च नेतारौ, तन्न्यौ परमन्न्यौ । सुल्विति रोण्यौ । अप्चादेः किम् ? परमनीः । परमनियौ । असुधी ई किम् ? सुधियौ । सुधी किम् ? प्रध्यौ ।

**( ४० ) दृन्पुनष्कारवर्षाभूः । [ १।२।४।७। ]** एभ्यः परः भुव उर् व स्यात् सुप्यचि । दृन् हि स भुवतीति [दृन्भू] । दृन्भ्वौ । पुनर्भ्वौ । कारभ्वा । वर्षाभ्वि । एभ्यः किम् ? प्रतिभुवौ ।

**( ४१ ) वा जरा ङस् । [ १।२।४।८। ]** जरन्तो ङस् वा स्यात् सुप्यचि । ङिदन्तार्थः । जरसौ । जरे । अतिजरसि । नतिजरेण ।

**( ४२ ) अमि । [ १।२।४।९। ]** द्वितीयाऽमि जरा ङस् वा । तत्र नमादेशे सि जरा जरसु । ततो लुक्, स्वरूपत्वात् । अतिजरं कुलं यस्य । अतो मादेशे त्वमि ङस् वा । लुग् नास्ति, आदेशत्वात् । अतिजरम् अतिजरसं चेति रूपत्रयम् । अर्थात्रप्यत्र लुग्नास्ति ।

**( ४३ ) नु वा मघोनः । [ १।२।४।१०। ]** अस्यान्तो नु उदित् स्याद् वा सुपि । असावित्युक्तेर्नावीरिति वर्तते । पुनर्वोत्तरत्र नित्यार्थः । मघवान् । मघवन्तौ । मघवद्भ्याम् । मघवत्सु । यद् वा, मघवा । मघवानौ । मघोनः । मघवसु । सुपि किम् ? माघवनः स्थालीपाकः ।

**(४४) डार्वा नञोऽसौ । [१।२।४।११।]** अनञः परस्य अवर्णो न्रोन्, नालक्षितोऽन्तार्थं, स्यादसौ सुपि । अर्वन्तौ । अर्वता । अर्वद्भ्याम् । अर्वत्सु । अनञः किम् ? अनर्वाणौ । असौ किम् ? अर्वाः ।

**(४५) सस्यत् । [१।२।४।१२।]** सो यस्य असत् वक्षिडादेशस्य सस्य यो यादेशः सोऽसत् । तस्य शास्त्रं शास्त्रान्तरे कर्तव्येऽसदिव । नमः । ख्यात्रे । पुंख्यानम् । स्कसिणाः न स्युर्यासिद्धेः असदा सुर्विधेः ।

**(४६) ऐकपद्ये र्षुर्नः परे णी । [१।२।४।१३।]** रेफषकारऋवर्णात् परो नो णी ईदित् स्यात् । एकपदमेवैकपद्यं, तस्मिन् कार्यनिमित्ते वर्तते । परे इति णीशास्त्रं च असद् इतः परे शास्त्रे । एवं सर्वत्र । चतुर्णाम् । पुष्णाति । कर्तृणाम् । अनोते पीतो नरान् । कुर्वन् वाऽऽस्ते । द्वित्वात् सिद्धेः । ऐकपद्ये किम् ? धर्मनासिकः ।

**(४७) आदिपदाद् अयूनां वाऽन्ते । [१।२।४।१४।]** पूर्वपदस्था र्युः परस्योत्तरपदस्यान्ते समीपे वा अयुवादेर्नो णी स्याद् वा । व्रीहिपायिणौ । व्रीहिवायेण । माषवापिणौ । माषाणां वापोऽस्यास्तीति । माषवापिणी । पक्षे न एव अयूनाम् । अत्र गाथा षट्पदी -

युवघ्नपक्वाऽहननाङ्क्षुटुस्तुलान्तरे निवासाऽग्निनिवेशनर्तनम् ।
अनूपनन्दी नगरं च नन्दनं नृतेर्यङि क्षुभ्तृपि नो नु युर्नमेः ।
आचार्यखानौ गहनं च षः पदे ॥१॥

अयूनां किम् ? आर्ययूना । क्षत्रिययूना । घ्ना । वृत्रघ्ना । वृत्रघ्नः । परिपक्वानि । परिपक्वेन । पर्यहनि । आदिपदात् प्राप्ते । अनाङ् । आङ्वर्जितं पदं शकारच-वर्ग[टवर्ग]सकारतवर्गलकाराश्च । एभिरन्तरे व्यवधाने नो णी न स्यात् । माषकुम्भस्य वापेन माषकुम्भवापेन । चतुरङ्गयोगेन । रशना । अर्चनम् । अर्जनम् । कारकटुवि । दाढ्र्येन । कर्मण्येन । रसना । रसेन । नर्तनम् । आराधनम् । विरलेन । एभिः किम् ? करेण । अर्केण । दर्भेण । बृंहणम् । उरष्केण । अनाङ् किम् ? पर्याणद्धम् । एकपद इति प्राप्ते । इतः प्रायः आदिपदान्नाम्नि प्राप्ते । परिनिवासः । पर्यग्निः । परिनिवेशः । परिनर्तनम् । दर्भानूपः हरेः । [दर्भानूपम् ।] नृप्नोति । हरिनन्दी । नृतेर्यङि । नरीनृत्यते । क्षुभ्तृपिद्भ्यां परस्य नुः श्नोः । क्षुभ्नोति । तृप्नोति । [तृप्नुतः । तृप्नुवन्ति ।] एक पदे प्राप्ते । युर्नमेः । युप्रत्ययान्तणमेरित्यर्थः । नृनमनम् । नाम्नि । आचार्यात् ख आन् । आचार्यभागीनः । आचार्यानी । परिगहनम् । षः पदे । पदे यः ष् ततो न नी णी । निष्पानम् । सर्पिष्पानम् । षः किम् ? निर्याणम् । पदे किम् ? सुसर्पिष्केण ।

**(४८) तथैकाच्सकु । [१।२।४।१५।]** तथाऽत्यनन्तरोक्तो णी स्यान्नित्यं तच्चेत् पर एकाच् स्यात् सकु कवर्गवद् वा । एकाच् । क्षीरपेण । वृत्रहणौ । सकु । माषकुंभवापेण । चतुरङ्गयोगेण । मातृभोगीणः । आर्द्रगोमयेण । गर्गाणां भगो अस्य अस्तीति गर्गभगिणी । अघ्ननां किम् ? वृत्रघ्ना । अन्ते किम् ? गर्गाणां भगिनी गर्गभगिनी ।

**(४९) नाम्नि नाना । [१।२।४।१६।]** संज्ञायां बहुलम् । पूर्वपदस्थात् र्युः परपदस्थो नो

णी स्यात् । द्वि विता न कार्या ।

नाम्नि सर्वस्व वा प्रादेः शारिका मिश्रका वणम् ।
पुरगासिध्रकाग्रेभ्यः कोटराच्चेक्षुनिश्शर - ॥१॥

पीयुक्षाप्लक्षकार्ष्यान्तः प्राम्रखदिरतस्तथा
द्वित्र्यज्वृक्षौषधेर्वात्वऽनिरिकादेर्गिरिनदी ॥२॥

तव करणदी तथा स्याद् वक्रणितम्बा च करणभावेऽथ ।
पाणं देशे स्हायनमद्वाह्यादह्नवाहनयोः ॥३॥

नाम्नि सर्वस्योत्तरपदस्य नो णी । द्रुणसः । वाध्रीणसः । खुरणसः । **वा प्रावादेः** । प्रादिस्थान्निमित्तात्, तथैव । प्रणसः । न च । प्रनेत्रः । **शारिकादिकोटरान्तात्** परं वणं नाम्नि । सारिकावणम् । ईक्ष्वादेः खदिरान्तादनाम्न्यपि । ईक्षुवणम् । उत्तरपदे किम् ? हे प्लक्ष वनं तिष्ठति । द्वित्र्यज्वृक्षौषधेर्वा । द्व्यचः त्र्यचश्च वृक्षोषधिवाचिनः परं वणं वा । दूर्वावणम् । दूर्वावनम् । शिरीषवणम् । शिरीषवनम् । बदरीवणम् । बदरीवनम् । द्वित्र्यचः किम् ? देवदारुवनम् ।

ओषध्यः फलपाकान्ताः लतागुल्माश्च वीरुधः ।
फली वनस्पतिर्ज्ञेयो वृक्षापुष्पफलोपगाः ॥१॥

यद्यपि वृक्षवनस्ये र्भेदस्तथाप्यत्राभेदो द्रष्टव्यः । अनिरिकादेः किम् ? इरिकावनम् । तिमिरवनम् । गिरिणदीत्यादि वा नो णी । गिरिनदीत्यादि च [गिरिणदी । गिरिनदी । गिरिणखः । गिरिनखः । गिरिणद्धः । गिरिनद्धः ।] **करणे भावे चार्थे वा** पानं पूर्वपदस्थान्निमित्तात् । क्षीरपाणः, क्षीरपानः कंसः । क्षीरपाणं क्षीरपानं वर्तते । **देशे**ऽर्थे तथैव नित्यं, पार्थक्यात् । कषायपाणाः गन्धाराः । क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । सौवीरपाणाः बाह्लीकाः । मनुष्याभिधानेन देशाभिधानम् । स्हायनमिति । सिता तादृश उपलक्षणात् त्रिचतुर्भ्यां हायनस्य वयसि नो णी । त्रिहायणो गौः । चतुर्हायणी । वयणि किम् ? त्रिहायना शाला । **अद्वाह्यादह्नवाहनयोः** । अकारान्तबाह्याभ्यां निमित्ताभ्यां परयोः क्रमेणाह्नवाहनयोर्नो णी । पूर्वाह्णः । अपराह्नः । अतः किम् ? निरह्नः । वाहने यदारोप्यते तद् वाह्यं, ततः । शरवाहणम् । वाह्यात् किम् ? दाक्षिवाहनम् ॥४॥

**प्राद्यनोऽन्तेऽपि वेता हनोऽतो म्वि वा निक्षिनिन्दिसिनो नेरषान्ताकखा- ।**
**दौ दिहद्रागदप्साचिदामाङ्नदौ वप्पदे वावहे यास्यहन्शम्पतौ ॥१।२।५॥ स्त्रग्विणी ॥**

**(५०) प्राद्यनोऽन्तेऽपि । [१।२।५।१।]** आदिपदस्थात् निमित्तात् परस्य "अन प्राणने" अस्य अन्तेऽप्यनन्तेऽपि नो णी स्यात्, तदादिपदं प्रादि चेत् स्यात् । हे प्राण् । हे पराण् । प्राणिति । प्राणिणिषति । अण्णादिनोऽत्र अनां वसां च पाठात् कृतणत्वषत्वानां द्विर्वचनम् । अन एवायं नियमे नो, वृक्षान् । नरान् ।

**(५१) वेता । [१।२।५।२।]** इता व्यवाये प्रादिनिमित्तात् परस्यानितेर्वा नो णी स्यात् । पर्यणिति । पर्यनिति । पर्यणिणिषति ।

**(५२) हनोऽतः ।** [१।२।५।३।] प्रादिस्थात् र्षुः परस्य हन्तेरतः परो नो णी स्यात् । प्रहते । प्रहणनम् । अतः किम् ? प्राघ्नानि ।

**(५३) म्वि वा ।** [१।२।५।४।] प्रादिस्थात् र्षुपरस्य हन्तेर्मकारादौ वकारादौ च प्रत्यये परे नो णी वा स्यात् । प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः ।

**(५४) निक्षिनिन्दिनिंसः ।** [१।२।५।५।] एषां प्रादिस्थात् र्षुः परेषां नो णी वा स्यात् । प्रणिंक्षणम् । प्रनिंक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । प्रणिंसनम् । प्रनिंसनम् । प्राप्तविकल्पः ।

**(५५) नेरषान्ताकखादौ ।** [१।२।५।६।] प्रादिस्थात् र्षुः परस्य नेरषान्ते अकखादौ च द्वादौ परे नो णी वा स्यात् । प्रणिपिपक्षति । प्रनिपिपक्षति । प्रणिपापच्यते । प्रणिभिनत्ति । प्रणिवेष्टा । पक्षे नकार एव । अषान्ताकखादौ किम् ? प्रनिपिनष्टि । प्रनिपेक्षति । प्रनिकरोति । प्रनिचकार । प्रनिचखाद ।

**(५६) दिहद्रागदप्साचिदामाङ्नदौ वप्पदे वावहे यास्यहन्शम्पतौ ।** [१।२।५।७।] एषु परेषु प्रादिस्थात् र्षुः परस्य नेर्नो णी पार्थक्यान्नित्यं स्यात् । प्रणिदेग्धि । परिणिदेग्धा । प्रणिद्रान्ति । प्रणिगदति । प्रणिप्साति । प्रणिचिनोति । दासंज्ञेषु । प्रणिदित्सति । प्रणिदेदीयते । प्रणिदापयति । प्रणिददाति । प्रणियच्छति । प्रणिदयते । प्रणिद्यति । प्रणिधित्सति । प्रणिधयति । प्रण्यदधात् । प्रण्यदधत् । दासंज्ञेषु किम् ? दाप्दीप्दाडि न । प्रनिदाति । प्रनिदायति । प्रनिदाता । माडि प्रणिमयते । माडि किम् ? मिनातिमिनोत्योर्न । प्रनिमाता । प्रणिनदति । [प्रणिवपति ।] प्रणिपद्यते । प्रणिवाति । प्रणिवहति । परिणिष्यति । प्रणियाति । प्रणिहन्ति । प्रणिशाम्यति । प्रणिपतति ॥५॥

**अदेशेऽन्तरो घ्नोऽयनस्यानिमीनाहिनोनशशभाच्तकमिप्यायिप्तद्वेप्-।**
**गमोऽचोऽस हल्नो नुमीजादिनो वेज्झलो णेरदुर्तोऽन्तरो णः ॥१।२।६॥ भुजङ्गप्रयातम् ॥**

**(५७) अदेशेऽन्तरो घ्नोऽयनस्य ।** [१।२।६।१।] अदेशवृत्तेर्हन्तेरयनस्य चान्तरः परस्य नो णी स्यात् । अन्तर्हणनम् । अन्तरयणम् । देशस्तु । अन्तर्हननः । अन्तरयनः ।

**(५८) आनिमीनाहिनोः ।** [१।२।६।२।] एषां प्रादिस्थात् र्षुः परेषां नो णी स्यात् । प्रयाणि । प्रवपाणि । प्रमीणाति । प्रमीणीतः । प्रहिणोति । प्रहिणुतः । प्रवपानि मांसानि । इहानर्थकत्वान्न स्यात् ।

**(५९) नशश ।** [१।२।६।३।] प्रादिस्थात् र्षुः परस्य शान्तस्य नशेर्नो णी स्यात् । परिणश्यति । शान्तस्येति किम् ? प्रनंष्टा । प्रनंक्ष्यति ।

**(६०) अभाच्तकमिप्यायिप्तद्वेप्गमोऽचोऽस ।** [१।२।६।४।] प्रादिस्थात् र्षुः पराद् अभादेर्भ्वादेः परोऽचः परोऽसित् नो णी स्यात् । प्रयाणम् । प्रयाणीयम् । प्रयायिणो । प्रहीणः । अचः किम् ? प्रभुग्नः । अशः किम् ? प्रभिनत्ति । प्रपुनाति । अभादेः किम् ? प्रभानम् । प्रभवनम् । प्रकमनम् । प्रप्यायनम् । प्रपवनम् । प्रवेपनम् । प्रगमनम् । निर्विण्णा । अयं निपात्यते । अयं किम् ? निर्भिन्नः ।

**(६१) हल् नो नुमीजादिन: ।** **[१।२।६।५।]** प्रादिस्थात् र्षुः परस्मात् इजादेर्हलन्तात् परोऽनुमि सति नो णी स्यात् । प्रेङ्खणम् । इजादेरेव नुमि किम् ? प्रकोपनम् । नुमि किम् ? नेजादेरेव हलो नियमोऽतः । प्रापणम् । इजादेः किम् ? न नुम्येव हलोऽतः । प्रवपणम् । हल् नः किम् ? ण्यन्तादपि नित्यं स्यात् ।

**(६२) वेज्झलः ।** **[१।२।६।६।]** हलः परस्माद् इचः परो यो हल् तदन्ताद् भ्वादेः परोऽच्परोऽसिन्नो णी स्याद् वा । प्रकोपणम् । प्रकोपनम् । हलः किम् ? प्रवपणम् । अचः किम् ? प्रभुग्नः ।

**(६३) णेः ।** **[१।२।६।७।]** प्रादिस्थात् र्षुः परात् ण्यन्ताद् भ्वादेः सिचः परो नो णी वा स्यात् । प्रयापणम् । प्रयापणीयम् । प्रयाप्यमाणम् । पक्षे न एव सिद्धर्जनात् सुब्विषये एतत् ।

**(६४) अदुर्तोऽन्तरो णः ।** **[१।२।६।८।]** अदुरः प्रादेरन्तरः स्याश्च परो णः णादेशो नो णी स्यान्नित्यम् । प्रणमति । परिणामकः । अन्तर्णयति । णः किम् ? प्रनर्दति । दुरः । दुर्नयः । प्रादेः किम् ? प्रनायको देशः ॥६॥

**शर्नः क्विणोऽत्कः सकृतोऽबहोः षः**
**वस्शास्घसां षण्यसहस्वदिस्विदेः ।**
**तुण्योः प्रतः सूस्तुभसोस्तुसुस्था-**
**स्वञ्जसेनिसञ्ज् सेधतिनः सिचोऽयङः वृत्तम् ॥१।२।७॥**

**(६५) शर्नः क्विणोऽत्कः सकृतोऽबहोः षः ।** **[१।२।७।१।]** अत् सूः अकित् सः सिश्च कृतो विकारागमप्रत्ययत्वेन विहितो बहुवर्जिताद् क्विणः कवर्गादिणश्च परः षः स्यात् । शर्नः क्विणः परं यच्छर् न् च तस्मात्, तदन्तरितोऽपीत्यर्थः । एषः । सर्वेषाम् । वाक्षु । हल्षु । अग्निषु । सिद्धिष्करोति । विष्पचति । चतुष्टयम् । शर्नः । सर्पिष्षु । सर्पींषि । नः किम् ? पुंसि । कृतः किम् ? निंसे परेऽसत्त्वात् । पिपठीः । र्व इति परत्वात् । अबहोः किम् ? बहुसेक् । एकपदानुवृत्तेः बहुडुनिषेधे सुतरां पदान्निषेधाद् वा । दधिसेक् । अकित् किम् ? अग्निसात् । दधिस्पति । सात् किम् ? वाक्षु ।

**(६६) वस्शास्घसाम् ।** **[१।२।७।२।]** एषां सः क्विणः परः षः स्याद् अकृतोऽपि । उष्यात् । ऊषुः । उषितः । शिष्टः । शिष्यते । जक्षुः । जक्षिवान् । क्विणः किम् ? वसति ।

**(६७) षण्यसहस्वदिस्विदेस्तुण्योः ।** **[१।२।७।३।]** षणभूते सनि परे स्तौतेरेव ण्यन्तस्यैव च सहादिवर्जितस्य कृतः सः, उत्तरत्रप्रादिग्रहणादिह स्वादिक्विणः परः षः स्यात् । तुष्टूषति । सिषेवयिषति । सिषञ्जयिषति । सुष्वापयिषति । स्तुण्योः किम् ? सिसिक्षति । सुसूषति । षणि किम् ? सिषेच । असहादेः किम् ? सिसाहयिषति । सिस्वादयिषति । सिस्वेदयिषति । षत्वं किम् ? सुषुप्सति । भ्वादीणः किम् ? प्रतीषिषति । अभिषिषिक्षति । सोषुयिषते । यङि कृतषत्वात् सन् ।

**(६८) प्रतः सूस्तुभसोस्तुसुस्थास्वञ्ज्सेनिसञ्ज्सेधतिनः । [१।२।७।४।]** एषां प्रतः प्रादेः क्विणः परेषां सः षः स्यात् । अभिषुवति । प्रतिष्टोभति । परिष्यति । अभिष्टौति । अभिषुणोति । प्रतिष्ठास्यति । अभिष्वञ्जते । अभिषेणयति । अभिषजति । निषेधयति । स्वादीनामेव । अभिसावकीयति । सेधतेरिति शपा निर्देशात् सिध्यतेर्न । अभिसिध्यति ।

**(६९) सिचोऽयङः । [१।२।७।५।]** प्रादिक्विणः परस्य सिचोऽयङन्तस्यैव सः षः स्यात् । निषिञ्चति । अयङ एव किम् ? अभिसेसिच्यते च ॥७॥

**स्तम्भेश्च निश्रानिकटोर्जनेऽवतः**
**स्वनोऽशने वेश्च स्वदोऽप्रतेः सेव् ।**
**नेर्वेः परे स्वञ्ज्सहसुट्सिवुस्तोः**
**तद्वा टि सूरः स परो द्वये स्थाम् ॥१।२।८॥**

**(७०) स्तम्भेश्च । [१।२।८।१।]** प्रादिक्विणः परस्य स्तम्भेः सः षः स्यात् । अभिष्टभ्नाति ।

**(७१) निश्रानिकटोर्जनेऽवतः । [१।२।८।२।]** अवात् परस्य स्तम्भेः आलम्बनाविदूर्यौर्जित्येष्वर्थेषु सः षः स्यात् । दण्डमवष्टभ्यास्ते । अवष्टब्धे सेने । अहो वृषलस्यावष्टम्भः । एषु किम् ? अवस्तब्धोऽसौ शीतेन ।

**(७२) स्वनोऽशने वेश्च । [१।२।८।३।]** वेरवाच्च परस्य स्वनोः भोजनविषये सः षः स्यात् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्त इत्यर्थः । अशने किम् ? विस्वनति मृदङ्गः ।

**(७३) सदोऽप्रतेः । [१।२।८।४।]** प्रतिवर्जितप्रादिक्विणः परस्य सदेः सः षः स्यात् । निषीदति । प्रतेः । प्रतिसीदति ।

**(७४) सेव् नेर्वेः परेः स्वञ्ज्-सह-सुट्-सिवु-स्तोः । [१।२।८।५।]** निविपरिभ्यः परः सेव् सेवतेः सः षः स्यात् ॥ स्वञ्जादीनां च । सेव्र् सूर इति प्रत्याहारार्थः पृथग् निर्देशः उत्तरत्र तद्ग्रहणेन सेवो ग्रहणार्थः । निषेवते । निष्वजते । निषहते । निषीव्यति । निष्टौति । एवं परिविभ्यां सुट् । परिष्करोति । स्वञ्जिस्तोर्वा टीत्यर्थं ग्रहणम् ।

**(७५) तद् वा टि । [१।२।८।६।]** तद् उक्तरूपं स्वजादेः षत्वं वा टागमे सति स्यात् । न्यष्वजता । न्यस्वजता । न्यषहत । न्यषीवत् । न्यष्टौत् । एवं परिविभ्यां सुट् । पर्यष्करोत् । पक्षे सत्वमेव सर्वत्र । तदिति किम् ? पर्यसेवत । अन्वसीव्यत ।

**(७६) सूरः । [१।२।८।७।]** सूप्रभृतिसेवन्तानाम् अटि सत्यपि यथाविधेः सः षो नित्यं स्यात् । अभ्यषुवत् । पर्यष्टोभत् । पर्यष्यत् । अभ्यष्टौत् । व्यषुणोत् । प्रत्यष्टात् । अभ्यष्वजत । अभ्यषेणयत् । व्यषजत् । प्रत्यषेधत् । अभ्यषिञ्चत् । अयड एव । अभ्यष्टभ्नात् । अभ्यष्टभत् । दण्डमवाष्टभत् । निश्रादावेव । व्यष्वणत् । अवाष्वणत् । न्यषीदत् । न्यादेरेव ।

**(७७) सपरो द्वये स्थाम् । [१।२।८।८।]** सूरन्तर्गतानां स्थादीनामेव द्विर्वचने कृते सति,

स इति प्रादीणोऽनन्तरः, पर इति प्रकृतेश्च यथाविधि सः षः स्यात् । अभितष्ठौ । निषिषेवे । परिषिष्ठम् । कृते षणीति नियममपि बाधते । स्थामेव किम् ? प्रतिसुसूषति । अषे पदे सत्वेऽपि । अभिषिषेणयिषते अभ्यासव्यवहितत्वेऽपि । अभितष्ठौ । स इति नियमार्थम् ॥८॥

**सत्स्वञ्ज आदिर्लिटि निष्टपेका निर्दुर्विसोः सुप् समसूतिनो वेः ।**
**स्कभ्नः षितो निर्विपरेः षयोक्ते स्कन्दोऽत्र वा स्फुर्स्फुलिनिर्निविभ्यः ॥९॥ वृत्तम् ॥**

(७८) **सत्स्वञ्ज आदिर्लिटि** । [१।२।९।१।] प्रादीणः परयोः सदिस्वञ्जोर्लिटि द्वित्वे कृते आदेरेव सः षः स्यात्, न परः । अभिषसाद । अभिषस्वजे ।

(७९) **निष्टपेका** । [१।२।९।२।] निसस्तपो परे षत्वं निपात्यते, एका क्रिया चेत् । निष्टपति । सकृदेव तपतीत्यर्थः । एका किम् ? निस्तपति सुवर्णं सुवर्णकारः ।

(८०) **निर्दुर्विसोः सुप् समसूतिनः** । [१।२।९।३।] निरादेः परेषां सुपादीनां सः षः स्यात् । निःषुप्तः । सुप् किम् ? विसुष्वाप । निःषमम् । निःषूति । एवं दुर्विसुभ्यः ।

(८१) **वेः स्कभ्नः** । [१।२।९।४।] वेः परस्य स्कभ्नातेः सः षः स्यात् । विष्कभ्नाति । विष्कम्भितुम् । श्ना किम् ? विस्कभ्नोति ।

(८२) **षितो निर्विपरेः षयः** । [१।२।९।५।] निविपरेभ्यः परौ षितः षयश्च निपात्यते । निषितः । निषयः । एवं विपरी ।

(८३) **अक्ते स्कन्दोऽत्र वा** । [१।२।९।६।] विपरेरिति वर्तते भेदनिर्देशात् । वेः परस्य स्कन्दः सः षो वा स्यात्, अक्ते अक्तक्तवत्वोः परयोः । तथा परेः परस्य अत्र वेति क्ते वा अक्ते वेति वा द्विरावर्तते । विष्कन्ता । विस्कन्ता । विष्कन्तुः । विस्कन्तुः । अक्ते किम् ? विस्कन्नः । विस्कन्नवान् । परेः । परिस्कन्ता । परिष्कन्ता । क्तेऽपि । परिष्कन्नः । परिस्कन्नः । परिस्कन्नवान् । परिष्कन्नवान् । वा किम् ? प्राच्यभरतेषु परिस्कन्द एव ।

(८४) **स्फुर्स्फुलिनिर्निविभ्यः** । [१।२।९।७।] एभ्यः परयोः स्फुरस्फुलोः सः षो वा स्यात् । निःष्फुरति । निःस्फुरति । निष्फुलति । निस्फुलति । एवं निर्वौ ॥९॥

**पर्यभ्यनोः स्यन्दि ततोऽप्यजन्तौ प्रत्प्रादुषोऽस्तेर्यचि सोर्न सन्स्ये ।**
**सोढः सिडुस्तम्भसहां चडीति स्तब्धः प्रतिन्योः सहिसाट्सुषेधाः ॥१।२।१०॥ वृत्तम् ॥**

(८५) **पर्यभ्यनो स्यन्दि ततोऽप्यजन्तौ** । [१।२।१०।१।] पर्यभ्यनुभ्यः, ततोऽपिति निर्निविभ्यस्त्वापरः स्यन्दिः सकारषत्वमाप्नोति वा, अजन्तावप्राणिनि । परिष्यन्दते । परिस्यन्दते । तैलम् । एवम् अभ्यनुनिर्निविभ्यः । अजन्तौ किम् ? परिस्यन्दते मत्स्यः । पर्युदासत्वाद् अनुष्यन्देते मत्स्योदके ।

(८६) **प्रत्प्रादुषोऽस्तेर्यचि** । [१।२।१०।२।] प्रतः प्रादेरिणः । प्रादुषश्च परस्यास्तेः ये अचि च परे सः षः स्यात् । अभिष्यात् । प्रादुःष्यात् । अभिषन्ति । प्रादुःषन्ति । अस्तेः किम् ?

अभिसयुः । पुनः प्रन्नित्यार्थः ।

**(८७) सोर्न सन्स्ये । [१।२।१०।३।]** प्रादीणः परस्य सोः सनि स्ये च परे सः षो न स्यात् । अभिसुसूषति । क्विप् । अभिसुसूः । अभिसोष्यति । अभ्यसोष्यत् ।

**(८८) सोढः । [१।२।१०।४।]** सोढ् इत्येवंरूपस्य न सः षः स्यात् । परिसोढा । परिसोढुम् । सोढिति किम् ? परिषहते ।

**(८९) सिडुस्तम्भसहां चङीति । [१।२।१०।५।]** एषां प्रादीणः परेषां चङि परे सः षो न स्यात् । पर्यसीषिवत् । अभ्यतस्तभत् । पर्यसीषहत् । प्रादीणः किम् ? धात्विणः स्याद् उदाहृतं च ।

**(९०) स्तब्धः प्रतिन्योः । [१।२।१०।६।]** प्रतिन्योः सम्बन्धी स्तब्ध स्तब्ध एव स्यात् । प्रतिस्तब्धः । निस्तब्धः । प्रतिन्योः किम् ? विष्टब्धः । स्तब्धः किम् ? प्रतिष्टभवान् ।

**(९१) सहि षाट् । [१।२।१०।७।]** सहि आसन्नः साड्भूतः षाट् स्यात् । जलाषाट् । तुराषाट् । पृतनाषाट् । साट् किम् ? तुरासाहम् । सअनां वसां च असिति प्रत्याहारेण ग्रहणार्थम् ।

**(९२) सुषेधाः । [१।२।१०।८।]** सुषेधादीनां क्विणः परः स षो निपात्यते । पञ्च अ[नु]ष्टुभोऽत्र ।

सेधसाम्नी सुदुर्निभ्यः दुःसोः ष्ठुः षन्धिनिर्दुरः ।
परमेष्ठी च सच्चेष्टा गौरिषक्थः प्रतिष्णिका ॥१॥

नाम्न्यग्निब्जज्झलाषाहं भीरुष्ठानं च नोषिका ।
सच्चेष्टाताङ्गुलिषङ्गः दुन्दुभिषेवनं तथा ॥२॥

मातृपितुः ष्वसा डौ वा विकुशमि परेः ष्ठलम् ।
अम्बाम्बगो कु सव्यापद्वित्र्यङ्गुशेकुभूमितः ॥३॥

मञ्जि पुञ्जि परमाग्नि बर्हिषः ष्वाऽग्रगामिनि ।
प्रान्नेः स्नातः प्रतेः सूत्रं नदीष्टः कुशले तथा ॥४॥

एतीणो नाम्नि भाद्वेतः वेः स्त्रोऽग्निज्योतिरायुषः ।
ष्टोमश्चैवंप्रकारोण्यः सुषेधादिषु पठ्यते ॥५॥

शोभनः सेधोऽस्य सुषेधः । [दुःषेधः ।] निःषेधः । एवं सुषामा । दुःषामा । निःषामा । **दुः[ सोः ] ष्ठुः** । दुष्ठु । सुष्ठु । निःषन्धिः । दुःषन्धिः । **मातृपितुः स्वसा** । मातृष्वसा । पितृष्वसा । डौ वा । मातुः स्वसा । पितुः स्वसा । व्यादेः ष्ठलम् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । **अम्बादेर्बर्हिरन्तात् ष्ठः** । अम्बष्ठः इत्यादि । **अग्रगामिन्यर्थे** प्रात् । प्रष्ठः । निष्णातः कुशलः, अन्यो निस्नातः । प्रतिष्णातं सूत्रम्, अन्यत् प्रतिस्नातम् । तथा नदीस्नोऽन्यः । **एतीणो नाम्नि** । पूर्वपदस्थाद् इणः परपदस्थः सः षः स्याद् एति एकारे परे नाम्नि । मातृषेणः । श्रीषेणः । करिषेणः । हरिषेणः ।

एति किम् ? हरिसिंहः । इणः किम् ? विष्वक्सेनः । नाम्नि किम् ? पृथुसेनो राजा । **भाद् वेतः** । नक्षत्रादितः परः सः षः एति नाम्नि । भरणिषेणः । इतः किम् ? पुनर्वसुषेणः । शतभिषक्सेनः । तित् किम् । रोहिणीषेणः । नाम्नि किम् ? भरणिसेनः । वेः स्त्रः । विस्तृणां तेर्नाम्नि । विष्टरो वृक्ष, आसनं च । विष्टारपङ्क्तिः । नाम्नि किम् ? विस्तरो वाक्यस्य । **अग्न्यादेः स्तोमः** । अग्निष्टोमः । ज्योतिष्टोमः । आयुःष्टोमः । नाम्नि किम् ? अग्निस्तोमः । परेऽसत्वाद् अग्निष्टुतम् आचष्टे । णि क्विप् । सादेर्लक् । अग्नित् ॥१०॥

**दीर्घोऽसुपो र्वीग्घलिभूत्पदान्ते द्यूष्णिक्परिव्रान्दधृको निमो र्वः ।**
**स्त्रड्ध्वड्वसोर्जश्ष्षिरुपां वशेकाष्टषिस्ध्वि वा भष्ठुरुषोऽष्ठिमारौ ॥१।२।११॥**

**( ९३ ) दीर्घोऽसुपो र्वीग्घलि भूत् । [ १।२।११।१। ]** भूत् भ्वादि, इग्दीर्घः स्याद् रि वि चाऽसुपो विहिते हलि परे परतः । दीव्यति । मूर्च्छा । र्वि किम् ? बुध्यते । इतित् किम् ? स्मर्यते । हलि किम् ? गिरौ । सुपो, गिर्यति । पदान्तेर्द्विपदान्ते च भूधिग्दीर्घ स्यात् । गीः । धूः । गीर्भ्याम् । आशीरर्थः । पीपठींभिः । भूत् किम् ? अग्निः ।

**( ९४ ) पदान्त । [ १।२।११।२। ]** आ सन्विधेः

**( ९५ ) द्यूष्णिक्परिव्रान्दधृकः । [ १।२।११।३। ]** निपात्यन्ते । दिव् । उष्णिह् । परिव्राज् । धृष्उत्स्निहेरुदस्तलोपषत्वं धृषेर्दिदत्वं निपात्यन्तेऽते तु उकुटुकुत्वम् । सुद्यु । द्युभ्याम् । उष्णिग् । परिव्राट् । दधृग् । पदान्ते किम् ? दिवौ ।

**( ९६ ) नि मः । [ १।२।११।४। ]** भूद् मः पदान्तस्थो नि स्यात् । प्रशान् । प्रशान्भ्याम् । प्रदान् । प्रदान्भ्याम् । प्रतान् । प्रतान्भ्याम् भूत् किम् ? प्रणमौ ।

**( ९७ ) र्वः । [ १।२।११।५। ]** रुः सजुः सोः इत्यादिना यो रुः, सुप्य इत्यादिना यश्च अः विसर्जनीयः । अ उश्च अश्च र्वः । सोऽत्र द्रष्टव्यः येनेतस्त्रस्थास्त्रमसत्परे पूर्वं षाद्यस्मिन् । पिपठीरित्यादि ।

**( ९८ ) स्त्रड्ध्वड्वसोर्जश् । [ १।२।११।६। ]** स्त्रट् । ध्वट् । वस् । एषामन्तः पदान्तस्थो जश् स्यात् । उखास्त्रट् । उखास्त्रड्भ्याम् । पर्णध्वट् । पर्णध्वड्भ्याम् । विद्वद् । विद्वद्भ्याम् । पदान्तः किम् ? उखास्रसौ । अन्तः किम् ? विद्वान् ।

**( ९९ ) ष्षिझषाम् । [ १।२।११।७। ]** षपदान्तः षि चादेशः झष् । एषामन्तो जश् स्यात् । ष । षड् । षड्भ्याम् । षि । मूलतृड् । मूलतृड्भ्याम् । आदेशजः षिरेव किम् ? चतुष्टयम् । कष्टीकते । रुप् । अज् । तृब्ज्व् । सुमुग् । सुमुक् । मधुलिट् । विद्युद् ।

**( १०० ) वशेकाष्टषिस्ध्वि वा भष् । [ १।२।११।८। ]** भूदेकाज्वश् भष् स्याज्झषि पदान्ते परे, सि ध्वे च । वा समुच्चये । अर्थभुद् । अर्थभुत् । पर्ण[घुटम्] पर्णघुड्भ्याम् । गर्दभमाचष्टे गदर्धप् । गदर्धभ् । स्ध्विच् । भोत्स्यते । अभुध्वम् । रु षि किम् ? सुगण् । वश् किम् ? कुट् । पदान्तः किम् ? अर्थधुकौ ।

**(१०१) स्थझषः ।** **[ १।२।११।९। ]** भूझषः परो विहितः त च थ च झष् स्यात् । लब्ध्वा । अलब्धाः । दोग्धा । अदुग्धाः । लीढम् । अलीढाः ।

**(१०२) अष्ठिमारौ ।** **[ १।२।११।१०। ]** माः जश्च णार्थम् । प्राप्मा वेत्यत आरभ्य क्तादेशगणः । तच्छास्त्रं वाऽतः सूत्रानु परशास्त्रेऽसिदि च । अष्ठि षत्वे ठप्रत्यये च कर्तव्ये सदेव । तथा रौ कर्तव्ये पूर्तस्मिन्नपि । मादिरसत् । क्षामिमान् । शुष्किका । पक्षम् । अष्ठि किम् ? वृक्षः । क्षीबिकः । रौ । लुन्युः । पुन्युः ॥११॥

**क्रुञ्जजो युक्क्विनः कुश्च्युतेर्नग्न वा**
**स्तौ च चुः षिश्च के स्यान्मृजां ध्दो नहेः ।**
**घ्यादिदो वा द्रुहां स्वादु युक्तस्य लः**
**क्रा सरा क्सादि च न्सुब्विधौ ॥१।२।१२॥ स्त्रग्विणी ॥**

**(१०३) क्रुञ्जजो युक्क्विनः कुः ।** **[ १।२।१२।१। ]** क्रुञ्च् अच् युज् क्विन्प्रत्ययान्तश्च एषामन्तः पदान्तस्थकुः स्यात् । क्रुञ्चोऽतो नाऽलोपः । क्रुङ् । क्रुङ्भ्याम् । प्राङ् । युङ् । चुरिति सिद्धे उपान्तार्थम् । क्विन् । घृतस्पृक् । घृतस्पृग् । तादृक् । तादृग् ।

**(१०४) श्च्युतेः ।** **[ १।२।१२।२। ]** सु पदान्तस्थः कुः स्यात् । श्चयुतेः । मधुश्च्युतमाचष्टे । मधुक् । मधुग् । मधुडित्यन्ये । तदा कुर्भवेदिति पाठः ।

**(१०५) नग्न वा ।** **[ १।२।१२।३। ]** नसे कुर्वा तथा । जीवनक् । जीवनग् । जीवनट् । पदान्ते किम् ? जीवनशः ।

**(१०६) स्तौ च चुः ।** **[ १।२।१२।४। ]** चुः कुः स्यात् पदान्ते स्तौ च । सि तवर्गे परे । वाक् । वाग् । असृग् । असृक् । स्तौ । वक्ष्यति । वक्ति । वक्तः । स्तौ च किम् ? वाचा । वच्मि ।

**(१०७) षिश्च के स्यान्मृजाम् ।** **[ १।२।१२।५। ]** तथा मृजादेः षिः स्यात् । तच्चासद् अके परे शास्त्रे । कंसपरिमृट् । कंसपरिमृड्भ्याम् । मूलवृट् । मूलवृड्भ्याम् । धानाभृट् । धानाभृड्भ्याम् । देवेट् । देवेड्भ्याम् । विराट् । विराड्भ्याम् । रज्जुसृट् । रज्जुसृड्भ्याम् । विभ्राट् । विभ्राड्भ्याम् । च्छान्तः । शब्दप्राट् । शब्दप्राड्भ्याम् । सुमुट् । सुमुड्भ्याम् । शान्तः । विट् । विड्भ्याम् । दिगादेः क्विनः कुत्वमेव व्यक्तिग्रहणात् परं बाध्यते । तौ च, मार्क्ष्यति । प्रक्ष्यति । प्रष्टा । अके किम् ? प्रवेक्ष्यति । अन्तः किम् ? वृक्षवृश्चमाचष्टे । वृक्षवृच् । पदान्ते किम् ? कंसमृजौ । इत् षि सयां चिह्नार्थम् ।

**(१०८) ध्दो नहेः ।** **[ १।२।१२।६। ]** भूदनहेः । हभ् धः स्यात् । तथा उपानद् । उपानत् । उपानत्स्यति । उपनद्धा । पदान्ते स्तौ च किम् ? उपानहौ ।

**(१०९) घ्नि ।** **[ १।२।१२।७। ]** धातोर्हप् स्यान् निस्वनन्तरे परे । घ्नन्ति । पित्तघ्नः ।

**(११०) आदिदः ।** **[ १।२।१२।८। ]** आदिर्दो यस्य स हप् स्यात् । काष्ठधक् ।

काष्ठधग्भ्याम् । गोधुक् । गोधुग्भ्याम् । तौ च, धक्ष्यति । दोग्धा । पदान्ते किम् ? काष्ठदह्यै ।

**( १११ ) वा द्रुहाम् । [ १।२।१२।९। ]** तथा ह घ स्याद् वा । मित्रधृक् । मित्रधुग्भ्याम् । मित्रधृट् । मित्रधृड्भ्याम् । स्तो, ध्रोक्ष्यति । द्रोग्धा । द्रोढा । एवं मुहष्णुहष्णिहाम् । द्वौ मृज्द्रुहादी तु अनुष्टुभाऽऽह-

मृज्व्रश्चभ्रस्जयज्राजमृजिभ्राजच्छशां गणः ।
चत्वारोऽत्र दुहाद्यास्तु द्रुहमुहस्नुहस्निहः ॥१॥

ट् । धातोर्ह तथा ट् स्यात् त वाऽसत्परेऽके । मधुलिट् । लेक्ष्यति । लेढा । ढित् ढ ढे । ढनिमित्ते ढे परे हो ढ इल्लुक् स्यात् । लीढम् । मूढम् । लेढा । ढ ढे किम् ? स्वलिड्ढौकते ।

**( ११२ ) स्वा ढुः । [ १।२।१२।१०। ]** सवोरः स्व, ततः परो हो ढ इत् स्यात् ढढे परे । सोढा । वोढा । युक्तस्य । पदान्तस्थसंयोगान्तस्यान्त इत् स्यात् । श्रेयान् । पुंभिः । विधानान्नेह, भवाञ्छेते । पदान्ते किम् ? श्रेयांसौ ।

**( ११३ ) लः क्रा । [ १।२।१२।११। ]** केन रेण च लादेशसंयोगस्य पदान्तस्थस्येत् स्यात् । अजो गर्भवान् । क्रा किम् ? भूपान् । न क्सादीन् । सरा । रेण संयोगे स एव पदान्तस्थ इत् स्यात् । कटचिकीः । सः किम् ? उर्ग् । क्सादि च । पदान्तसंयोगस्य क्स्-आदिभूतम् इत् स्यात् । चकारात् स्तौ च । तक्ष । काष्ठतक् काष्ठतग्भ्याम् । मस्ज । साधुमक् । साधुमग्भ्याम् । तक्ष्यति । तष्टा । मंक्ष्यति ।

**( ११४ ) न्सुब्विधौ । [ १।२।१२।१२। ]** न् पदान्तस्थ इत् स्यात् । तस्थास्त्वं च सुपि सुपो वा विधौ प्रवर्तमाने असत् स्यात् । वृत्रहभ्याम् । राजसु । राजा पंच । सुब्विधौ किम् ? राजायते । तस्मिन् कुर्वीरन् विधानो न्नेत् । असदिति निवृत्तम् ॥१२॥

**टेनातो भ्यै द्यः कात् स्सुभ्येभ्यास्याडित्यात्स्येत्सर्वादेः ।**
**तित्स्मैस्मात्स्मिञ्ञःश्यल्पादेः पूर्वद्वादौ तीयादिग्डि ॥१।२।१३॥ विद्युन्माला ॥**

**( ११५ ) टेनातः । [ १।२।१३।१। ]** टा इनः स्याद् अतः परः । तेन अतिजरसि न । अतः किम् ? सोमया ।

**( ११६ ) भ्यैः । [ १।२।१३।२। ]** भोऽतिमात्रे ऐ स्याद् अतः । वृक्षैः । अतिजरसिः । अतः किम् ? शालाभिः ।

**( ११७ ) द्यः कात् । [ १।२।१३।३। ]** द समो यस्य सद्य, इदम् अदस् इत्यर्थः । तस्मात् कान्तादेव भ्यै स्यात् । इमकैः । अमुकैः । कात् किम् ? एभिः । अमीभिः । इमैर्गुणैरिति श्छान्दसम् ।

**( ११८ ) सुभ्ये । [ १।२।१३।४। ]** सुप् भि-ऐस्-अस्-अप्-सुप्-व्व-बहुष्वेषु परत अत ऐ स्यात् सर्वेषाम् । तेषु तेभ्यः २ । एभिः । अमीभिः । बहुसु किम् ? सः ।

**(११९) भ्यास्या । [१।२।१३।५।]** भ्य् जसि परे डा स्यात् । नराभ्याम् ३ । नराय । नराः । असासक् ।

**(१२०) ङित्यात्स्येत् । [१।२।१३।६।]** अतः परो ङित् क्रमेण त्या आत्, तस्य इत् स्यात् । तित् परार्थः । धनाय । अतिजरसात् । धनस्य । धने ।

**(१२१) सर्वादेः तित् स्मैस्मात्स्मिन् । [१।२।१३।७।]** सर्वादेरतः ङितादेरादेशो यथास्थानं स्मै स्मात् स्मिन् स्यात् । सर्वस्मै । सर्वस्मात् । सर्वस्मिन् । तित् किम् ? सर्वस्य । अस्मिन् वृत्तषट्पद्याह -

सर्वोभयोभोडतरान्यत्वत्वत् सिमान्यविश्वान्यतरत्वनेम ।
परस्परान्योन्यतथैतरेरच् एकैकपूर्वापरदक्षिणावर- ॥१॥

परोत्तरे वाऽधरचाववावपूः बाह्योपसंव्यान इहान्तरोऽधन-
ज्ञाताविह स्व त्यदि तद्यदाविदं एषोऽदसेकस्द्विरु युष्मदस्मद्
भवत्वथो किं लिहनाप्रधानं द्वन्द्वाभिधानेऽपि षट्पदीयम् ॥२॥

डप् डतमडतरप् प्रत्ययान्ताऽत्र त्वत् समुच्चयार्थः । त्व अन्यार्थः । समसिमौ सर्वार्थौ । नेमोऽर्धार्थश्च । सप्त पूर्वादयोऽवधौ मर्यादायां, नाभिधान इति । वचनादसंज्ञायाम् । अवधौ किम् ? दक्षिणा गाथकाः प्रवीणा इत्यर्थः । नाम्नि । उत्तराः कुरवः । पूर्वजितबाह्योपसंव्यानेऽर्थे । अन्तरे गृहाः । बाह्या इत्यर्थः । उपसंव्याने परिधानीये । अन्तरस्मिन् शाटके । अनयोः किम् ? अन्तरे मध्ये इत्यर्थः । अपूः किम् ? अन्तरायां पुरि । बाह्यायामित्यर्थः । स्वे पुत्राः । स्वे गावः । अधन ज्ञातौ किम् ? प्रभूताः स्वाः दीयन्ते । धनानीत्यर्थः । एते मे स्वाः ज्ञातयः इत्यर्थः । तत्पर्यायः । दपूर्व दित्यर्थः । त्यदिच्छन्दोर्थम् । एषोऽपि एतद् स्वन्तः । एकस्सर्वमित्यर्थः । द्विर् त्यरित्यर्थ भवतु उदित् । किल । सर्वलित्यर्थः । प्रागितरच् परजित्यर्थः । सर्वाद्युक्तोऽपि न स्यादप्रधानादि । प्रियविश्वाय । कतरकतमाय । नाम्ना विश्वाय ।

**(१२२) जः शी । [१।२।१३।८।]** सर्वाद्यतः जस् शिदीत् स्यात् । सर्वे ।

**(१२३) अल्पादेः । [१।२।१३।९।]** परो वाऽत्र अल्पाद्यतो जः शी वा स्यात् । अल्पे । अल्पाः । अप्राप्ते वा । नेमात् प्राप्ते सर्वाद्यन्तश्चार्थः । कतरकतमाः । कतरकतमे । दत्तकतमे । अनुष्टुबत्र-

अल्पकतिपयनेमाः प्रथमचरमे तथा ।
तयाल्पार्धानिचार्थश्च सर्वाद्यन्त इहोच्यते ॥

**(१२४) पूर्वाद्वाऽदौ । [१।२।१३।१०।]** पूर्वादि नवस्वदन्तः सर्वादि वा स्याद् उक्तेऽदौऽत् इपरे । जसि ङसौ ङौ परे । पूर्वे । पूर्वाः । पूर्वस्मान् । पूर्वस्मिन् । पूर्वे । पूर्वात् किम् ? सर्वे । अन्ये । अदौ किम् ? पूर्वस्मै । पूर्वस्यै ।

**(१२५) तीयादिग्डि । [१।२।१३।११।]** तीयप्रत्ययान्तः, अदिक् च सादृश्याद्

विदिग्वाची सर्वादिः, ङिति सर्वादी वा स्तः । द्वितीयस्मै । द्वितीयाय । तृतीयस्मै । तृतीयाय । द्वितीयस्यै । द्वितीयायै । विदिक् । पूर्वोत्तरस्यै । पूर्वोत्तरायै । दक्षिणपूर्वस्यै । दक्षिणपूर्वायै । विदिक् किम् ? पूर्वा उत्तरा यस्या मुग्धायाः तस्यै, पूर्वोत्तरायै । ङिति किम् ? द्वितीयाः ॥१३॥

**धिङस्सु नर्टा स्नुऽथा स्मदः कं भ्योभ्यं ङसिभ्योच्छनसौम हल्यात् ।**
**योयौस्सु लुग्वाम युवावमान्तो द्वित्वे त्वमैके त्वमहंसुनैव ॥१।२।१४॥**

**(१२६) धि ङःसु । [१।२।१४।१।]** सर्वादिरन्तो ङस् स्याङ्डित ङ्या उक्तोऽघि परे । सर्वस्यै । पूर्वोत्तरस्यै । द्वितीयस्यै ।

**(१२७) न र्टा । [१।२।१४।२।]** सर्वादिः सर्वादिर्न स्यात्, र्टा तृतीयायोगे । न पूर्वावरं तृतीययेत्यन्ये । मासेन पूर्वाय [मासपूर्वाय ।] वृत्तौ वा र्टेति तृतीयान्तत्वात् । तद्योगे किम् ? स्नेहेन पूर्वस्मिन् वर्तते ।

**(१२८) स्नुट् । [१।२।१४।३।]** सर्वादेरामि च नुट् स स्यात् । सर्वेषाम्, सर्वासां च ।

**(१२९) अथास्मदः कम् । [१।२।१४।४।]** सर्वादिस्मदन्ताद् युष्मदस्मदः परः आम् कम् स्यात् । युष्माकम् । अस्माकम् । अथशब्देनाप्रथमस्यापि ग्रहात्, प्रिययुष्माकम्, त्यस्माकम् । तदन्तविधिना प्रकृतेः कार्यत्वान्मदोऽभावेऽपि तु, अतियुवाकं, अतित्वाकम् ।

**(१३०) भ्यो भ्यम् । [१।२।१४।५।]** आभ्यां भ्यम् अभ्यं स्यात् । युष्मभ्यम् । अस्मभ्यम् । अतियुवभ्यम् । अत्यस्मभ्यम् । अतितुभ्यम् । अतिमह्यम् ।

**(१३१) ङसि भ्योऽत् । [१।२।१४।६।]** आभ्यां ङसिस्तद्भ्यश्चात् स्यात् । त्वत् । युष्मत् । अस्मत् । अतियुष्मत् । अत्यस्मत् । ङसि । अतित्वत् । अतिमत् । भ्यस् ।

**(१३२) शन् । [१।२।१४।७।]** आभ्यां शसः शन् स्यात् संयोगान्तलोपः । युष्मान् । अस्मान् । अतियुवान् । अतित्वान् ।

**(१३३) असौऽम् । [१।२।१४।८।]** आभ्यां परोऽम् औ च स्याद् अ उच्चारणार्थः । त्वाम् । माम् । अतियुवाम् । अत्यावाम् । अतियूयम् । अतिवयम् । औ । युवाम् । आवाम् । नामासाहचर्यं पार्थक्यात् । अतिमाम् । अतित्वाम् ।

**(१३४) हल्यात् । [१।२।१४।९।]** हलादौ सुप्यनयोरन्ते आ स्यात् । युष्माकमित्याद्युदाहृतम् । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ।

**(१३५) योयौस्सु । [१।२।१४।१०।]** अनयोर्योऽन्तः स्याद् यौस्सु ङौ टा उसौश्च परतः । त्वयि । त्वया । युवयोः ।

**(१३६) लुक् । [१।२।१४।११।]** सुप्यन्तोऽनयोः । युष्मभ्यम् । अस्मभ्यम् । त्वत् । मत् । युष्मत् । अस्मत् ।

**(१३७) वा म । [१।२।१४।१२।]** सुप्यन्तस्थोऽनयोर्म नुग्वा । युष्मान् आचक्षाणेभ्य

आगतः । युष्मत् । असत् । युष्मत् । अस्मत् ।

**(१३८) युवावमान्तो द्वित्वे । [१।२।१४।१३।]** तयोर्द्वित्वार्थयोर्मकारान्तोऽवयवो यथासंख्यं युव आव स्यात् सुपि । युवाम् । युवाभ्याम् । युवयोः । आवाम् । आवाभ्याम् । आवयोः । अतियुवान् । अत्यावान् । अतियुवयि । अत्यावयि । द्वित्वे किम् ? युष्माभिः । अतियुष्मयि ।

**(१३९) [त्वमैके] । [१।२।१४।१४।]** तयोरेकार्थयोर्मान्तोऽवयवः त्वम् स्यात् सुपि । त्वाम् इत्यादि । अतित्वाम् । औ । अतित्वान् इत्यादि । मत् सुष् लक् । त्वदीयः । मदीयः । त्वद्यति । मद्यति । त्वदयति । मदयति । त्वत्पुत्रः । [मत्पुत्रः ।] ऐक्ये किम् ? अतियुष्मान् । अत्यस्मान् । अस् ।

**(१४०) त्वमहंसुनैव । [१।२।१४।१५।]** तौ सुना सह एवेति सता त्वम् अहं स्तः । त्वम् । अहम् । त्वाम् । युवाम् । युष्मानतिक्रान्तः अतित्वम् । अत्यहम् । प्रियत्वम् । द्वित्वैकत्वेऽपि परत्वात् । एव किम् ? त्वं पुत्रोऽस्य त्वत्पुत्रकः ॥१४॥

**यूयं वयं जसा र्तुभ्यं र्मह्यं ङ्या र्तव र्मम ।**
**ङश्च पदादपादादौ स्ववाक्ये ते च मे रितौ ॥१।२।१५॥**

**(१४१) यूयं वयं जसा । [१।२।१५।१।]** तौ यूयं वयं स्तः जसा सह । यूयम् । वयम् । त्वाम् अतिक्रान्ताः, अतियूयम् । अतिवयम् एवं किम् ? युष्मत्पुत्रः ।

**(१४२) र्तुभ्यं र्मह्यं ङ्या । [१।२।१५।२।]** रि तु तावेव । तुभ्यं दत्तम् । मह्यं दत्तम् । त्वामतिक्रान्ताय, अतितुभ्यम् । अतिमह्यम् । एवं किम् ? त्वद्दत्ताम् ।

**(१४३) र्तव र्मम ङश्च । [१।२।१५।३।]** सा रित् । तव स्वम् । मम स्वम् । त्वामतिक्रान्तस्य, अतितव अतिमम । ङश्च ङित्यर्थः । एवं किम् ? त्वदीयः । मदीयः । एवं सर्वत्र ।

**(१४४) पदादपादादौ स्ववाक्ये । [१।२।१५।४।]** इतः परो विधिः स्ववाक्य एकवाक्ये वर्तमानात् पदात् परस्य, अपादादौ च, इत्यधिकारः ।

**(१४५) ते च मे रितौ । [१।२।१५।५।]** युष्मदस्मदादेशौ रितौ यथासंख्यं ते मे स्तः । च वार्थे तौ वा । स तुभ्यम् । स ते । स मह्यम् । स मे दत्तः । स तव । स ते । स मम । स मे स्वः ॥१५॥

**त्वामामा तद्वये वा म्नौ वस्नः शेषे र्त्सुनेव च ।**
**प्राक् तच्चिह्ने च जस्वा न हृदृष्टौ वाऽह-हैव-चैः ॥१।२।१६॥ अनुष्टुभौ ॥**

**(१४६) त्वामामा । [१।२।१६।१।]** तयोर्यौ त्वा-मा-ऽऽदेशौ मा युक्तौ, त्वाम्, माम् इत्यर्थः त्वौ त्वा मा स्तो वा । मा सहेत्यावर्तते । स त्वाम् । स त्वा । स माम् । स मा पातु ।

**(१४७) तद्वये वा म्नौ । [१।२।१६।२।]** तेषां ते-मे-ते-मा-त्वा-मानां, द्वये द्विवचने,

तयोर्ये पदे ते वा वाम्-नौ स्तः । स वाम् । स युवाभ्याम् । स नौ स आवाभ्याम् । दत्तः चतुर्थी । स वाम् । स युवयोः । स नौ । स आवयोः । स्वः षष्ठी । स वाम् । स युवाम् । स नौ, स आवाम्, पातु द्वितीया ।

**( १४८ ) वस्नस् शेषे । [ १।२।१६।३। ]** तेषामेव ते-मे-त्वा-मानां शेषे बहुत्वे ये पदे ते वा वस् नस् स्तः । स वः, स युष्मभ्यम् । स नः, सोऽस्मभ्यम् । दत्तचतुर्थी । स वः, स युष्माकम् । स नः सोऽस्माकम् । स्वः षष्ठी । स वः [स] युष्मान् । स नः, सोऽस्मान्, पातु । द्वितीया । पदादपदादौ किम् ? तुभ्यं नमस्त्रिजगतीपरमेश्वराय तुभ्यं नमो जिन भवोदधिशोषणाय । एकवाक्ये किम् ? स पठति । युष्माकं पुत्रो रोदिति ।

**( १४९ ) त्सुनेव च प्राक् । [ १।२।१६।४। ]** प्राक् प्रयुज्यमानं त्सु इत्यामन्त्रितप्रथमान्तं ते प्रभृतिषु कर्तव्येषु नेव असदिव स्यात् । विप्र तुभ्यम् । विप्रौ युवाभ्याम् । विप्राः युष्मभ्यम्, दत्तम् । स विप्र ते दत्तोऽथो । त्सु किम् ? स ते दत्तः । प्राक् किम् ? मयैतत्सर्वमाख्यातं युष्माकं मुनिपुंगवाः । परस्य सत्त्वाद् अपदादाविति प्रतिषेधः ।

**( १५० ) तच्चिह्ने च जस् वा । [ १।२।१६।५। ]** ते चिह्ने जसन्तामन्त्रितविशेषणे परे प्राक्पदमर्थाद् विशेष्यमसदिव वा स्यात् । विप्राः पण्डिताः युष्मभ्यम् । विप्राः पण्डिता वोऽथो स दत्तः । जस् किम् ? विप्र पण्डित ते स्वमथो । तच्चिह्ने किम् ? विप्राः पण्डितैर्मे किम् अथो भवद्भिः । विशेष्यं किम् ? नमस्या विपाः । युष्मभ्यं प्रदत्तः । अन्वादेशेऽपि चार्थम् ।

**( १५१ ) न । [ १।२।१६।६। ]** ते चिह्ने परे प्राग् आमन्त्रितम् अजसन्तं विशेष्यम् असदिव न स्यात् । माणवक जटिलक ते स्वं मा वा । माणवक जटिलक ते स्वं तव वा । तच्चिह्ने किम् ? माणवक जटिलको मे त्वमथो पुत्रः । अन्यादेशे वा सुंत इति विकल्पो न स्यात् । विशेष्यं किम् ? जटिलक माणवक तव स्वम् ।

**( १५२ ) हृद्दृष्टौ । [ १।२।१६।७। ]** हृदयेन दर्शने सति दृशर्थधातुप्रयोगे यथोक्तगुणाः ते प्रभृतयो न स्युः । स त्वां समीक्ष्य आगतः । स तव स्वं समीक्ष्यागतः । स मह्यं दत्तं समीक्ष्यागतः। मनसा निरूप्यागत इत्यर्थः । हृद्दृष्टौ किम् ? स त्वा लोकयति चक्षुषा पश्यतीत्यर्थः ।

**( १५३ ) वाऽहहैवचैः । [ १।२।१६।८। ]** [वा अह ह एव च] एतैर्योगेऽपि न । तस्मै स तुभ्यं वा दत्तः । [तस्मै स तुभ्यमह दत्तः] इत्यादि । ग्रामश्च ते नगरं च मे स्वम् । नात्र तयोर्वादिभिर्योगः ॥१६॥

**तेऽन्वादेशे वा सुंत उ पदतोऽम्मासि एतेन का चे-**
**दं स्भ्येऽच्छाकः स्त्रीयमयमिति सौ टौस्यनी द्योदमो- ।**
**द्वेऽमि वादो गुर्मोऽससकसुकस्वौ प्रागिनाद् ग्ये बहुत्वे**
**किं कोऽत्यद्रां सौ त्सनरि परचो वाम्रहस्येषु द्वन्द्वम् ॥१।२।१७॥ कुसुमितलता ॥**

**( १५४ ) तेऽन्वादेशे । [ १।२।१७।१। ]** पूर्वं विधातुं किञ्चित् प्रतिपादितस्य वाक्यान्तरेण विशेषापादनाय द्वितीयं प्रतिपादनमन्वादेशः । तस्मिंस्ते इति यथोक्ताः ते प्रवृत्तयः स्युर्नित्यं ग्रामस्तुभ्यं

दीयते । अथो जनपदस्ते दीयत इत्यादि ।

**(१५५) वा सुत उ पदतः । [ १।२।१७।२। ]** पदतः स्ववाक्यस्थात् पदात् परस्मात् सुतत् प्रथमान्तात् परे यथोक्तास्ते प्रभृतयोऽन्वादेशे वा स्युः । उ छन्दोऽर्थम् । राज्ञा गौस्ते दत्तोऽथो राज्ञा गौस्तुभ्यं दत्तोऽथो इत्यादि । वा प्राप्तौ ।

**(१५६) अम्मासि एतेन का च । [ १।२।१७।३। ]** अम् आ च्छसि द्वितीया टौ स्स एतदः एतमात्र एनत् स्यात्, का च केनैव सहवृत्तौ केवलश्च । पतिष्यत्येतत् कुण्डम् अथो एनद् अशम्यग्नि धेहि । सद् एनत्वेत्यादि । एनच्छ्रितकः परेण वृत्तौ च । एष पटुरित्येनमध्यापय । एतावशीलावतः एनौ शिक्षय । एवं एनान्, एनेन । एनयोः कश्च मत्पुत्र ? को वेदमधीतवान् ? अथो एनेन व्याकरणमप्यधीयते । का च किम् ? अथो परमेतं पश्य । यो धी एतस्मै देहि । यौ पटू एतकौ ते पुत्रौ । अन्वादेशे किम् ? एतं पृच्छ ।

**(१५७) इदम् । [ १।२।१७।४। ]** एन स्याद् एतवत् । इमं छंदोध्यापय, अथो एनं शिक्षाम् । इदं कुण्डमानय, अथो एनं परिवर्तय । इदमोऽपि तथैव । अयं तु विशेषः । अथो एनं कुण्डं परिवर्तय । मान्तमेवेत्याह चन्द्रोऽपि । अन्योऽनयोरेनदमाह । अथो एनदं कुण्डं परिवर्तय । तदेनत्काविति पाठः । त्का लघुः । का किम् ? अथो परमेदं पश्य ।

**(१५८) स्भ्येऽच्छ । [ १।२।१७।५। ]** इदम् अत् स अत् स्याच्छित्, अन्वादेशे स्भ्ये सभयादौ सुपि परे । अयं गुणी अथोऽस्मै देहि । इमकाभ्यां रात्रिरधीता अथो आभ्यामहश्च । इयकं सुशीला अथोऽस्यै दीयताम् । का च किम् ? अथो परमेदंभ्याम् ।

**(१५९) अकः । [ १।२।१७।६। ]** अन्वादेशे का चेति निवृत्तम् । अकः कवर्ज्जितेदमः सत्के स्भ्ये सुपि परे अत् शित् स्यात् सर्वार्थम् । से । अस्मै । अस्मात् । अस्य । अस्मिन् । परमास्मै । परमास्मात् । परमास्य । परमास्मिन् । एषाम् । एषु । भे । आभ्याम् । एभिः । ये । अस्यै । अस्याः । अस्याम् । इदमः किम् ? प्रियेदंसु ।

**(१६०) स्त्रीयमयमिति सौ । [ १।२।१७।७। ]** इदमः ६ सौ । इयं स्वियं शित् स्यात् स्त्री चेत् । अयम् । अनयना । सौ किम् ? इदं कुण्डम् । इदमः ६ किम् ? अतीदं, ना स्त्री वा ।

**(१६१) टौस्यनि ई । [ १।२।१७।८। ]** इदमः ६ टा आसि अन शित् स्यात् । अनेन । अनयोः । अनया । अकः किम् ? इमकेन । इदमः किम् ? प्रियेदमा ।

**(१६२) द्वोदमः । [ १।२।१७।९। ]** इदमो द् सुपि म् स्यात् । इमौ । इमान् । इमकौ । इमका । सु । इदमः किम् ? प्रियेदमौ । अदि मः । अदसः ६ डए कृत्रिमे अवर्णे परे ड्म स्यात् । अमू । अमूषु । अमुकौ । अमुष्य । अमद्दक् । ए किम् ? अदः कुलम् ।

**(१६३) अद्वेऽमि । [ १।२।१७।१०। ]** अदसोऽमात् परस्याद्वेः द्व स्यात् । अमुमुयङ् । अमुमुयक्पुत्रः ।

**(१६४) वाऽद्रः ।** **[१।२।१७।११।]** अदसोऽदात् परस्याद्रेः द्य वा स्यात् । अदम् । यङ् । अदङ्यङ् । अन्ये मो वा । ततो द इति वा वर्तते । अमुमुयङ् । अत एवात्र वा म् ।

**(१६५) गुर्मः ।** **[१।२।१७।१२।]** अदसोऽद्रेश्च अवयवान् मात् परो लु गुः स्यात् । अमुम् । अमू । अमुमु ई च अदमु ई चः । गिदसन्ध्यर्थः ।

**(१६६) अस् असक् असुक स्वौ ।** **[१।२।१७।१३।]** अदसः शिद् एते स्युः तत् सु ओ स्यात् । स्वौ लघुः । असौ । असुकौ । हे असौ । उक्ताबाधया असुकौ अपि ।

**(१६७) प्रागिनात् ।** **[१।२।१७।१४।]** माद् गु इनादेशादेव प्राग् अन्यस्मादश्चात् । अमुना शकुलेन वा । इनात् किम् ? अमुष्मै । अमूषाम् । अमुया । अमू । अमूः ।

**(१६८) ग्ये बहुत्वे ।** **[१।२।१७।१५।]** अदसो माद् बहुत्वे य ए स गी स्यात् । अमी उष्ट्राः । अमीषु । बहुत्वे किम् ? अमुया । गिदसन्ध्यर्थः ।

**(१६९) किं कः ।** **[१।२।१७।१६।]** किमु तत्सत्के सुपि कः स्याद् अकः । केषु । अकः तत्सुपि किम् ? प्रियकिमौ ।

**(१७०) अत्यद्राम् ।** **[१।२।१७।१७।]** अत्यदादेर्द्रिरन्तस्यान्तोऽत् स्यात् सुपि स्यः त्योः । सः तौ द्वयोः । त्यद्रां किम् ? अतित्यदौ ।

**(१७१) सौ त्स् ।** **[१।२।१७।१८।]** त्यद्रां सौ परे त् सः स्यात् । स्यः । स्या । सः । सकः । अकोऽनुवृत्ते । तक इत्येके । एषां ह परस्यैषवति मः । त्यद्रां किम् ? अतितत् । त् किम् ? यः । सौ किम् ? त्यद् । त्यौ । त्येषु । नात्र सुप्यकृतेः ।

**(१७२) अनरि षरचो वाम् ।** **[१।२।१७।१९।]** परस्परान्योन्येतरेतरच् एभ्यः स्वतःपुंभ्यः कर्मव्यतिहारकवृत्तिभ्यः सर्वनामभ्यः अनरि अपुंसि स्त्रीनवृत्तिभ्यः विहितः सुप आम् वा स्यात् । स्त्रियो परस्परां भोजयतः । परस्परंच एवं स्त्रियो भोजयन्ति । स्त्रीभ्यां परस्परां भोज्यते । परस्परेण। एवं स्त्रीभिः । ब्रह्मण्यौ अन्योन्यां दत्तः, अन्योन्यस्मै दत्तः । स्त्रियौ अन्योन्यां गृह्णीतः । अन्योन्यस्माद् वा । इमे इतरेतराम् इतरेतरस्य वा भोजयतः । इमे इतरेतराम् इतरेतरस्य वा तिष्ठेते । एवं कुले, कुलानि । पुल्लिङ्गत्वान्नाङ् ।

**(१७३) रहस्येषु द्वन्द्वम् ।** **[१।२।१७।२०।]** द्वन्द्वाद् रहस्यादिषु वर्तमानात् परः सुप् अम् दर्शितः । सुष्टुवे चैतत् पन्थाद्योर्द्वये ।

रहस्ये त्वथ मर्यादायज्ञपात्रप्रयोगयोः ।
व्युत्क्रमेणाभिव्यक्तौ वृत् पथिन्मथिनृभुक्षणः ॥

द्वन्द्वं मन्त्रयन्ते । रहस्यम् । द्वन्द्वं मन्त्रितं रहस्ये । मर्यादा । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । आपाटलिपुत्रं द्वन्द्वं नरा यान्ति । यज्ञादि । द्वन्द्वं पात्राणि युनक्ति धीरः । व्युत्क्रमणं भेदः । द्वन्द्वं स्थिताः । अभिव्यक्तिः । अत्यन्तसाहचर्यं लोकप्रतीतम् ।

सूर्याचन्द्रमसौ द्वन्द्वं द्वन्द्वं नारदपर्वतौ ।
सङ्कर्षणवासुदेवौ द्वन्द्वम् ॥१७॥

**ऋत्सुड्ड्भ्योऽररनप्यदैत्यपद इत्सुड्याद्धलोऽज्ड्यां पथाम्**
**इन्स्योः सुट्यनु थे नुमात्स्यनडुहो नुन्द्यौरचूगिन्युजेः ।**
**अन्त्याजादि डितीत्तु पुंस्विति ङसुस्त्वादौद्रमोऽन्नोशनोऽ**
**नेहोभ्यां पुरुदंशसः सखि तृतः सुत्सुर्न निद् वा नयः ॥१।२।१८॥ शार्दूलविक्रीडितम् ॥**

(१७४) **ऋत्सुड्ड्भ्योऽररनपि** । [१।२।१८।१।] ऋत अर् स्यात् सुटि डौ चानपि । मातरौ । मातरः । मातरम् । मातरौ । पितरि । नपि । कर्तकुलम् ।

(१७५) **अदैत्यपद इत्** । [१।२।१८।२।] अतुल्लुक् स्याद् अपदादौ ऐकारे अति च परे । पचे । पचन्ति । युष्मभ्यम् । सः । ते । अपदे किम् ? तवैषा । दण्डाग्रम् ।

(१७६) **सुड्याद्धलः** । [१।२।१८।३।] डी आद्भ्यां दीर्घाभ्यां हलश्च परः सु इत् स्यात् । कुमारी । बहुश्रेयसी । खरकुटीनरः । खट्वा । दृषद् । एभ्यः किम् ? निष्कौशाम्बिः । अतिखट्वः ।

(१७७) **अज्ड्यां पथामिन्** । [१।२।१८।४।] एषामिन् इत् स्याद्, अजादौ सुपि ड्यां च परतः । पथः । मथः । ऋभुक्षः । पश्य । सुपथी । स्त्रीकुले वा । अड्भ्यां किम् ? पथिषु । इत् किम् ? पथीयतेः क्विप्, तस्य पथ्यः । एवं सर्वत्र ।

(१७८) **स्योः सुट्यनु** । [१।२।१८।५।] एषामिन् अन्स्याद्, उरुच्चारणार्थः, सुटि परे, स्योश्च द्विवचनम् । सुडादेशे सावेव, न गीवचने । पन्थानौ । पान्थानौ । ऋभुक्षाणौ । स्योः । सुपन्थानि । इत् किम् ? पथ्यौ । स्योः सुटि किम् ? सुपथी कुले । पथिभ्याम् ।

(१७९) **थे नुम्** । [१।२।१८।६।] एषां थे परे पूर्वस्य नुम् स्यात् स्योः सुटि । सुपन्थानि । पंन्थाः । पन्थानौ । पन्थानः । पन्थानम् । मन्थाः । मन्थानौ । मन्थानः । मन्थानम् । इत् किम् ? पथीः ।

(१८०) **आत्सि** । [१।२।१८।७।] एषामिनात् स्यात् सुटि परे । पन्थाः । पन्थानौ । पन्थानः । सुटि किम् ? पथिषु।

(१८१) **अनडुहो नुम्** । [१।२।१८।८।] सुटि मि स्यात् । अनड्वान् । प्रियानड्वान् । हे अनड्वन् ।

(१८२) **द्यौः** । [१।२।१८।९।] नुम् परार्थं च दिवु द्यौ स्यात् सुट् सि । द्यौः । हे द्यौः ।

(१८३) **अचूगिन्युजेः** । [१।२।१८।१०।] अञ्चेरेव धातोः उगिथस्य तस्य च न्युब्जेः युजिरश्चासमासे नित्यत्वात् नुम् स्यात् सुटि परे । प्राञ्चि । प्राङ् । प्राञ्चः । प्राञ्चम् ।] भवन्ति ।

[भवान् । भवन्तौ । भवन्तः । भवन्तम् । भवन्तौ । युञ्जि । युङ् । युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । गोमत्यति क्विप् । गोमान् । गोमन्तौ । गोमन्तः । गोमन्तम् । गोमन्तौ । अन्त किम् ? उखास्रत् । युजेरित् किम् ? युजमापन्नाः । नित् किम् ? अश्वयुक् ।

**(१८४) अन्त्याजादि डितीत्तु । [१।२।१८।११।]** डिति परे अन्त्याजादि इत् स्यात् । अग्नौ । जलजम् ।

**(१८५) पुंस्विति ङसुः । [१।२।१८।१२।]** पुंसो नन्तो ङसुः स्यात् स्योः सुटि । उदिननुमर्थं ह्यर्थं ह्रस्वविकल्पार्थं च । बहुपुमांसि [कुलानि] । पुमान् । पुमांसौ । पुमांसः । पुमांसम् । पुमांसौ । प्रियपुंसितरा । प्रियपुंसीतरा वा ।

**(१८६) त्वादौत् । [१।२।१८।१३।]** ओ औ स्यात् सुटि । गौः । अतिगावौ । अतिगावः । अतिगावम् । अतिगावौ । द्यौः । द्यावौ । द्यावः । द्यावम् । शौ, चित्रगूति । सुटि किम् ? गवा ।

**(१८७) रमोऽन्ना । [१।२।१८।१४।]** द्वितीया अत् डा स्याद् ओतः । गाम् । द्याम् । अतिगाः ।

**(१८८) उशनोऽनेहोभ्यां पुरुदंशसः सखि तृतः सुः । [१।२।१८।१५।]** एभ्यः सुः डा स्यात् । उशना । अनेहा । पुरुदंशा । सखा । तित् ऋ तृ । माता ।

**(१८९) त्सुर्न । [१।२।१८।१६।]** एभ्यः त्सुर्डा न स्यात् । हे उशनः । हे अनेहः । हे पुरुदंशः । हे सखि । हे मातः ।

**(१९०) नित् । [१।२।१८।१७।]** नस्य य ऋदुक्तः स त्सौ न स्यात् । हे राजन् । हे दण्डिन् ।

**(१९१) वा नपः । [१।२।१८।१८।]** नप त्सौ जा नित् । हे चर्म । हे चर्मन् । हे राजन् । हे दण्डिन् ॥१८॥

**उशनोशननंत्वनडुच्चतुरां**
**सखि ङै नरि तृत्क्रुशि तुन्नरि ङ्याम् ।**
**अचि वाम्पि च दीर्घमपां हनि नोऽ-**
**र्यमपूषनुशावसतोरपि सौ ॥१।२।१९॥ तोटकम् ॥**

**(१९२) उशनोशनन् । [१।२।१९।१।]** [उशन । उशनन्] इति त्सौ स्याद् वा । हे उशन हे उशनन् । हे उशनः ।

**(१९३) अम् तु अनडुच्चतुः । [१।२।१९।२।]** एतयोरनुरसुबन्तयोरप्यमागमो मित्वात् त्सौ । हे अत्यनड्वन् । हे प्रियचत्वः ।

**(१९४) आम् । [१।२।१९।३।]** अनयोरेवामागमः पार्थक्यात् स्योः सुटि ।

प्रियानड्वाहि । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् । अनड्वाहौ । प्रियचत्वाः ।

**(१९५) सखि डै नरि ।** [ १।२।१९।४। ] सखि ऐ स्यात् पुंसि सुटि । ङिदन्तार्थः । सखायौ । सखायः । सखायम् । सखायौ । प्रियसखायः । नरि किम् ? सख्यौ । सखिकुलम् । त्सौ न । हे सखे ।

**(१९६) तत्क्रुशि तुन्नरिङ्याम् ।** [ १।२।१९।५। ] क्रुशशब्दे यस्तुन्प्रत्ययः स तृत् स्यान् नरि सुटि ङ्यां च परतः । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्ट्री । क्रोष्ट्र्याम् । ङ्यां निर्निमित्तम् । नरि ङ्यां च किम् ? क्रोष्टुनी । अक्रोष्टूनि । क्सौ न । हे क्रोष्टो ।

**(१९७) अचि वा ।** [ १।२।१९।६। ] अजादौ सुपि पुंसि अस्य अर्थादशसि तन् तृ वा स्यात् । क्रोष्ट्रा । क्रोष्टुना, आदि [=क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः । क्रोष्टोः । क्रोष्ट्रोः । क्रोष्ट्वोः । क्रोष्टरि । क्रोष्टौ ।] नरि किम् ? क्रोष्टुना कुलेन । अशसि किम् ? क्रोष्टून् । अचि किम् ? क्रोष्टुभ्याम् । त्सुन्तृचौऽशसादावित्यशास्त्रीयम् ।

**(१९८) आम् पि च ।** [ १।२।१९।७। ] अपः सौ नुमि दीर्घो वा निपात्यते । बह्वाम्पि, बह्वम्पि तडागानि ।

**(१९९) दीर्घमपाम् ।** [ १।२।१९।८। ] स्योः सुटि वाऽपादीनां दीर्घः स्याद्, अर्थाद् उपान्ताकः । अत्र वृत्ती -

अप् तृन् सूवौ च स्य नसृनेष्टृप्रशास्तृक्षतृहोतृपोतृ ।
एषाम् अरो नः स्महतोऽत्र चाकः चतुर्दशामी कथिता अवाद्याः ॥

स्वापः । अत्यापः । वदितारौ जनापवादान् । कर्तारौ कटस्य । स्वसारौ इत्यादि ८ [=नप्तारौ । नेष्टारौ । प्रशास्तारौ । क्षत्तारौ । होतारौ । पोतारौ । एषामरो दीर्घः । नो । नन्तस्याको दीर्घः । कर्माणि सुकर्तृणि । राजा । राजानौ । राजानः । राजानम् । राजानौ । स्महतोऽत्र । सन्तस्य महतश्च, अत्रेति स्योः सुटि यो नः तस्मिन् परे पूर्वोऽग्दीर्घः स्यात् । सर्पींषि । महान्ति । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसम् । अतिमहान् । महान्तौ । स्महतः किम् ? बृहन्तौ । अत्र किम् ? सुहिंसौ । त्सौ नैव । हे स्वप् ।

**(२००) हनि नोऽर्यमपूषनुसौ ।** [ १।२।१९।९। ] हन्धातुः इनन्तः । अर्यमन् । पूषन् । उ निपातः । एषां नान्तानां सावेवाग्दीर्घः स्यात् । बहुवृत्रहाणि । बहुदण्डीनि । बहुयशस्वीनि । बह्वर्यमाणि । बहुपूषाणि । सौ किम् ? वृत्रहणौ ।

**(२०१) असतोरपि सौ ।** [ १।२।१९।१०। ] असन्तात्वन्तस्य हनादीनामपि सौ दीर्घोऽत् स्यात् । सुपयाः । गोमान् । वृत्रहा । अर्यमा । पूषा । त्सौ न । हे सुपयः ॥१९॥

**नुटि नो नृ न वा यकृतो यकनो-**
**ऽसुटि वा ग्यशिणि क्वसुटोरपदम् ।**

**लघुपाच्चचुदीच्च वसूर्मघव-**
**श्वयुवं व उरी सुपि आदडिदन्न ॥१।२।२०॥ तोटकम् ॥**

**(२०२) नुटि ।** [१।२।२०।१।] आम् नुटि पूर्वो दीर्घोऽक् स्यात् । घटानाम् । मातृणाम् ।

**(२०३) नः ।** [१।२।२०।२।] नान्तस्य तथा व्यवधानेऽपि । पञ्चानाम् । नः किम् ? चतुर्णाम् । नुटि किम् ? राज्ञाम् ।

**(२०४) नृ न वा ।** [१।२।२०।३।] नृ दीर्घो नुटि [न]वा । नृणाम् । नृणाम् ।

**(२०५) यकृतो यकनोऽसुटि वा ।** [१।२।२०।४।] यकृदादयो यथासंख्यं यकनादयः स्युर्वा सुप्यसुटि परे । इह षट्पात्-

यकृन्निशाऽसृज्शकृदासनानि दोष्यूषपादाः हृदयोदके च ।
मासश्च दन्तस्त्वथ नासिकावृद् यकन्निशोऽसन्शकनासनश्च ।
दोषं च पूषं पद्हृदावुदन् च मास्दन्नसाश्चेति च षट्पदीवृत् ॥

यक्नः । यकृतः । इत्यादि [=निशि । निशायाम् । अस्ना । असृजा । शक्ना । शकृता । आस्नि । आसनि । आसने । दोष्णा । दोषा । यूष्णा । यूषा । यूषेण । पदा । पादेन । हृदि । हृदये । उद्ना । उदकेन । मासि । मासे । दद्भिः । दन्तैः । नसा । नासिकया ।] यकन् । निश् । असन् । शकन् । आसन् । दोषन् । पूषन् । एतद्वृत् । उदन् । मास् । दन् । नस् । सुप्चादिरहिता आदेशा एते ।

**(२०६) ग्यशिणि क्वसुटोरपदं लघुपात् ।** [१।२।२०।५।] गी च शिणिज् क्वसुट्वर्जितोऽन्यश्च वा तु प्रत्ययः तयोः ग्यशिणिक्वसुटोः परतः पाद् लघु स्यादित्यर्थः । अपदं न चेत् पदसंज्ञः । पादमाचष्टे पात् । पदी कुले । पदा । व्याघ्रपदी स्त्री । चतुष्पदि । वैयाघ्रपद्यः । अनयोः किम् ? चतुष्पान्दि । पादयति । व्याघ्रपाद्यते । व्याघ्रपात् । पदम् । व्याघ्रपाद्भ्याम् । एवमुत्तरत्र ।

**(२०७) चऽच् ।** [१।२।२०।६।] अनकारोऽच् च् स्याद् अनयोरपदम् । प्राचः । प्राचि । पितृचः । पितृचि । अनयोः किम् ? प्रत्यञ्चि ।

**(२०८) उदीच्च ।** [१।२।२०।७।] तथोदच् उदीच् स्यात् । उदीचः । औदीच्यम् । तयोः किम् ? उदञ्चि ।

**(२०९) वसूस् ।** [१।२।२०।८।] प्रत्ययो वस् उस् स्याद् अनयोरपदम् । विदुषः । पेचुषी स्त्री, कुले वा । विदुष्मान् रामः । पैचुष्यम् । अनयोः किम् ? विद्वांसि ।

**(२१०) मघवश्वयुवं व उरी सुपि ।** [१।२।२०।९।] मघवन्, श्वन्, युवन्, एषां व इतिवृत्तिः, नालोपो नान्तत्वार्थः, एषां व उः स्याद् अनयोरपदम् ईकारे सुपि च परे । मघोनः । अतियूनी स्त्री, कुले । यूनि । ई सुपि किम् ? माघवनम् । शौ[नम् । यौ]वनम् । अनयोः किम् ?

अतिश्वानि । नान्ताः किम् ? गोष्ठश्वान् पश्य ।

**(२११) आदडित्** । [१।२।२०।१०।] अड् अर्थाद् अनान् आत् ईत् स्यात् अनयोरपदम् । कीलालपः । कीलालपे कुले । आतो भावात् । अनयोः किम् ? कीलालपाम् ।

**(२१२) अन्न** । [१।२।२०।११।] अन् अनयोर्न स्यात् । राज्ञः । वृत्रघ्ना । तक्ष्णि । अनयोः किम् ? बहुतर्क्षाणि ॥२०॥

**न हलो वम ईडिनि वाष्टन आ-**
**ड्हलि रै त्रिति सा च तसा च चतुः ।**
**नुटि स्त्री रचि वा जस्शसोः ष्णाकते-**
**लुगष्टौ दिदतो न सुबं त्वङसिः ॥१।२।२१॥ तोटकम् ॥**

**(२१३) न हलो वमः** । [१।२।२१।१।] हलः परौ यौ वमौ ततोऽन् न् न स्यात् । कर्मणः । पर्वणि । हलः किम् ? दीव्ना । वमः किम् ? तक्ष्णा ।

**(२१४) ईडि नि वा** । [१।२।२१।२।] ईडिवद् गी स च ङिश्च तस्मिन् परेऽप् न् न् वा । साम्नी । सामनी । दध्नि । दधनि । न हलो वमः । कर्मणी । गीङ्योः किम् ? राजानौ ।

**(२१५) अष्टन आड् हलि** । [१।२।२१।३।] अष्टनोऽन्त आड् स्याद् वा हलि सुपि । च्छन्दोऽर्थं नान्तः । प्रियाष्टाः । प्रियाष्टा । हे प्रियाष्टन् । अर्थाद् अष्टानां नित्यम् । हलि किम् ? प्रियाष्टनौ ।

**(२१६) रै** । [१।२।२१।४।] तथा नित्यं पार्थक्याद्, ङिदन्तार्थः । राः । अतिरासु । हलि किम् ? रायौ ।

**(२१७) त्रिति सा च तसा च चतुः** । [१।२।२१।५।] स्त्रीहापि, स्वतस्त्रीवृत्तिरस्त्र्यपि त्रिशब्दः तिसृ स्यात् सुपि । तथा चतुर, चतसृ । चकारात् त्रिति तिसृका च । प्रियतिसा ना । चतसृषु ।

**(२१८) लुत्स्विवच्च** । [१।२।२१।६।] प्रियत्रि, प्रियतिसृ वा कुलम् । सुपि किम् ? प्रियत्रि कुलम् । स्त्री किम् ? त्रयः । त्रीणि ।

**(२१९) नुटि स्त्री** । [१।२।२१।७।] तथा नौ नुटि तिसृ चतसृ एव स्तो न दीर्घः । तिसृणाम् । चतसृणाम् ।

**(२२०) रचि वा** । [१।२।२१।८।] र् स्यात् सुप्यचि वा । आ इति ऋवर्णोऽनयोः । प्रियतिसरौ । प्रियतिस्रौ । प्रियतिसृ । नुंम् तित्वान्नपि । प्रियतिसृणी । [प्रियचतसृणी] इत्यादि ।

**(२२१) जस्शसोः** । [१।२।२१।९।] साहचर्याज्जस्शसोः परयोः तदड् नित्यं पार्थक्यात् । तिस्रः । चतस्रः । प्रियतिस्रः । प्रियचतस्रः ।

**(२२२) ष्णाकतेर्लुक्** । [१।२।२१।१०।] कतिवत् ष्णान्तसंख्या कतीनां सत्कौ जस्शसौ

लुक् स्तः । षट् २ । पञ्च २ कति २ अषट् तत्सत्कौ । प्रियषषाः । संख्या किम् ? विप्रुषः । राजानः । लुगधिकारः तुकामिति यावत् ।

**(२२३) अष्टौ** । [१।२।२१।११।] अनष्टः सत्कौ जस्शसौ डौ निपात्येते । तुक् च वर्तते । अष्टौ । अनष्टौ । तत्सत्कौ किम् ? प्रियाष्टानः ।

**(२२४) दिदतो न सुबं त्वङसिर्** । [१।२।२१।१२।] दितोऽव्ययीभावाद् अतः परः सुप् लुग्न स्याद् वा, दित्वात् प्राप्तोऽपि । अत्सु अम् पुनः स्यात् सुप् अङसि । उपकुम्भम् । अऽसि किम् ? उपकुम्भात् ॥२१॥

**वा र्टा ङि वंश्यर्द्धनदेस्तिचादिनो**
**बह्वस्त्रियां ज्यव् तुवि यस्करूपतः ॥**
**प्राग्बह्वचश्चेञ् भरतादशिग्रुतो**
**ऽज्यञ्कुण्डिनागस्ति च वोपकादितः ॥१।२।२२॥ इन्द्रवज्रा ॥**

**(२२५) वा र्टा** । [१।२।२२।१।] दिदतः परः र्टा तृतीया वाऽम् स्यात् । उपकुम्भम् । उपकुम्भेन । वा कृतम् ।

**(२२६) ङि** । [१।२।२२।२।] तथा सप्तमी । उपकुम्भम् । उपकुम्भे निधेहि ।

**(२२७) वंश्यदर्धनदेः** । [१।२।२२।३।] द्वन्द्वैकत्वे पुंस्त्वान्नदेरिति । वंश्यान्ताद् ऋद्ध्यन्तान्नद्यन्ताच्च दिदतः परः ङि नित्यमाम्यात् स्यात् । विंशतिभारद्वाजम् । सुभिक्षम् । सुभद्रम् । उन्मत्तगङ्गम् । लोहितगङ्गम् । सप्तगोदावरं वसति ।

**(२२८) तिचादिनः** । [१।२।२२।४।] तीति समासे, चादेः स्वसत्कः सुप् लुक् । राजपुरुषः । वासिष्ठः । पुत्रकाम्यति । च आतंक इत्यादि । तत्सत्कः किम् ? अतिस्वरः । प्रियोच्चैसः ।

**(२२९) बह्वस्त्रियां ज्यव्** । [१।२।२२।५।] बहुत्वे अस्त्रियां विहितो ज्यप् । ज्य । अण् । णे ण्यट् । ण्यट् । अञ् । अण् । इञ् । घण् । ण्यव् । इति ज्यव्प्रत्याहारो लुक् स्यात् । उ निपातः । लौहध्वज्यः । लोहध्वजाः । वार्क्येण्यः । वृकाः । पार्शवः । पर्शवः आङ्गाः । अङ्गाः । आम्बष्ठ्यः । त्स्यष्टाः । सुह्यानतिक्रान्तः अतिसुह्यः । सुह्मरूप्यः । तैः क्रीतः । पञ्चलोहध्वजः । बहुषु अस्त्रियां विहितः किम् ? लौहध्वज्यः । लौहध्वज्याः । प्रियलौहध्वज्याः । स्त्रीबहुत्वे तेषां नाम्नि यावत् ।

**(२३०) तुवि यस्करूपतः** । [१।२।२२।६।] यस्कादेः बह्वस्त्र्यप्रत्यये लुक् स्यात् । यस्काः । अङ्गिरसः । नाबह्वादौ । इहेन्द्रार्या च षट्पात् ।

यस्काङ्गिरोलह्यवशिष्ठगोतमात् द्रुह्यादयस्थूणभलन्दनाद् भृगोः ।
स्यान्मित्रयोर्वा तृणकर्णकुत्सतोऽण्ढञ्विश्रिकुद्रैरजवस्तितोऽत्रितः ॥१॥

खरपयशःपणभण्डितभण्डिलभडिलभडिताञ् स्त इञ् कदुकात् ।
पुष्करसत्पदकाभ्यां विषपुटपकसक्थतो ज्ञेयः ॥२॥

कर्णाटकात् कम्बलहारपिण्डीजङ्घात् सदामत्तवशीकजङ्घा-
रथाच्च पर्णाढकशीर्षमायरक्षोमुखाचोपरिमेखलात् स्यात् ।

क्रोष्टुपादाद् वहिर्योगमन्थकोत्कासतः कर्षकः क्रोष्टुमाया वत् ॥३॥

कुत्सान्तेभ्योऽण् लुक् सि वा दित्वात् । ढञ् लुग् विश्र्यादेः दिशादित्वात् । यण् खरपयशः नडादित्वात् । ञ्य भण्डितादेः अश्वादित्वात् । इञ् लुक् कदुकादेबह्वाद्यन्तत्वात् ।

**(२३१) प्राग्बह्वचश्चेञ् भरतात् । [१।२।२२।७।]** प्राग्वाचिभरतवाचिभ्यां बह्वज्भ्यां पर इञ् बह्वादौ लुत्स्यात् । पन्नागाराः । मन्थारषणाः । भरतेषु - युधिष्ठिराः । अर्जुनाः । प्राग् भरत बह्वज् इञ् किम् ? वालाकयः । हस्तिदास्रयः । पौष्पयः । शान्तनवाः । नाऽबह्वादौ प्राच्यत्वेऽपि भरतस्य ग्रहणं प्राच्यग्रहणेऽन्यत्र ग्रहणार्थम् । औद्दालकिः पिता । औद्दालकायनिः पुत्रः । आर्जुनिः ।

**(२३२) क्षशिग्रुतोऽञ्यञ् । [१।२।२२।८।]** शिग्रुत्प्रत्याहारादन्यतोऽबह्वादौ अञ्यञौ लुक् सुः । अञ् । विदाः । उर्वाः । यञ् । गर्गाः । वक्षाः । क्रीते पञ्चगर्गाः । शिग्रुतः । शैग्रवाः । नाऽबह्वादौ । विषमाक्षरात्रः ।

शिग्रुगोपवनश्यामाकबिन्दुभाजन श्यावकाः ।
श्यवकाश्वावतानौ च शृपणश्चाष्ट शिग्रुतः ॥१॥

**(२३३) कुण्डिनागस्ति च । [१।२।२२।९।]** कुण्डिनीअगस्त्यशब्दाभ्यां यञो लुक् कुण्डिन अगस्ति इति स्यात् । कुण्डिनागस्तयः । बह्वस्त्रियामेव । कौण्डिन्यः । नास्त्रियश्च । आगस्त्यम् ।

**(२३४) वोपकादितः । [१।२।२२।१०।]** उपकादेः बह्वादौ वा लुक् । उपकाः औपकायकाः । लमकाः । नाऽबह्वादौ । श्लोकत्रयान्ता हरिणीह-

उपकलमकौ भ्रूलेखा स्यात् कपिष्ठलजन्तुकौ
गडुरबधिरौ कर्णः कान्ताः शलास्थलपर्णकौ ।
जटिलकुसितौ स्यातां कान्तौ प्रतानमतञ्जलौ
यदनभिहितो दामात्कण्ठः कठेरणिरुत्तमः ॥१॥

भ्रष्टककलशीकण्ठौ सुपिष्टौ भ्रूपतञ्जली ।
काशकृत्स्नमदामात्र कदामत्तकडारकौ ॥२॥

अनुलोमन् खरीजङ्घसुगन्धकाः सुधायुकश्चरौ कृष्णात् ।
पिङ्गलाजिनसुन्दराः मयूरकर्णकपिष्टाः पिञ्जलकसुदञ्जलाः ।
केषाञ्चित् केचिदेवेष्टाः नडशिवाद्यतः यण अणिञ् ॥३॥

नडशिवाद्यत इति आद्याभ्याम् । नडादि यण् सुपिष्टकपिष्टमयूरकर्णबधिरकेभ्यः । शिवाद्यण् । कठेरण्याच्चाण् । शेषादत इञ् । कान्ताः ३ कान्तौ २ गडुरकः जटिलकः बधिर[क] एवान्ये । यदनभिहितो यत् पूरणे । दामात् कण्ठः दामकण्ठ इत्यर्थः । कृष्णात् पिङ्गलाद्याः । [कृष्णपिङ्गलः । कृष्णाजिनः । कृष्णसुन्दरः ।] ॥२२॥

**द्वन्द्वे च तिकादेस्तेषां स्त्र्यपरैर्वा**
**वा तत्पुरुषेऽसोसोऽञादि तुक्यं स्यात् ।**
**यञ्चाणभिजिद्भ्यो वाऽस्मत्वविशेष्यः**
**भे प्रोष्ठपदे फल्गुन्यौ गुरुजात्योः ।**
**वा बह्वपि सुपा लिङ्गैकादि पुरोवत्**
**स्वद्वित्व उभो द्धेऽपोऽन्तेऽनडुहो वृत् ॥१।२।२३॥ पुष्पविचित्रा षट्पदी ॥**

**( २३५ ) द्वन्द्वे च तिकादेः । [ १।२।२३।१। ]** द्वन्द्वे वर्तमानात् तिकादेः बह्वादौ लुक् । तैकायनयश्च कैतवायनयश्च तिककितवाः । एवं वाङ्खरभाण्डीरथाः । द्वन्द्वे किम् ? तैकायनि ६ कैतवायनयः । नाबह्वादौ गाथे-

पिञ्जिककितवाद् २ उरसा लाङ्कटि २ उब्जककुभाद् इञणणन्ये ।
वाहकि नारकि २ वाङ्खरि भाण्डीरथि २ उपकलमकात् यण् ॥१॥

शालङ्कि शान्तमुखि वा २ वाकायनि श्वागुद परिणद्धि तथा ।
भ्राष्टकि कापिष्ठलि वा कार्ष्णाजिनि कार्णसुन्दरि वृत् ॥२॥

पिञ्जिकादेः ३ तैकायनि कैतवायनि २ औरसायनि । लाङ्कटि २ उब्जकुम्भाद् यथासङ्ख्यं इञ् अण् । औब्जि । काकुभम् । अलभ्येति । आभ्याम् अण् । अब्जकाकुभ । औपकायन । वेति । लाङ्कटि । शान्तमुखि । इति चान्ये । तथेति वेत्यर्थः । वाकनखि । श्वागुद । परिणद्धि । इति वा । स्वालघुः । पुनर्वाऽनुक्तसमुच्चये । आग्निवेश्यदासेरकिः । यञ्ञिञौ । अन्ये इञन्ताः ।

**( २३६ ) तेषाम् । [ १।२।२३।२। ]** येषां तु लुगुक्तस्तदन्तानामेव यो द्वन्द्वस्तद्विषये बहुत्वे उत्पन्नस्यास्त्रियां लुक्स्यात् । आङ्गश्च वाङ्गश्च सौह्मश्च अङ्गवङ्गसुह्माः ।

**( २३७ ) स्त्र्यपरैर्वा । [ १।२।२३।३। ]** येषां लुगुक्तस्तदन्तानां स्त्रीलिङ्गेन, तेभ्योऽपरैर्वा सत् तयोर्द्वन्द्वः तद्विषये बहुत्वे लुग् वा स्यात् । गार्गी च वात्स्यश्च वाज्यश्च गार्गीवात्सवाजाः । भृगुवत्साग्रहायणाः । २ गार्ग्यकाश्यपगालवानाम् ।

**( २३८ ) वा तत्पुरुषेऽसोसोऽञादि । [ १।२।२३।४। ]** यस्याञादेर्लुगुक्तातदन्तस्य असोसः षष्ठ्यैकद्विवचनान्तस्य तत्पुरुषे सति सो ञादिर्लुग्वा स्यात् । वैदस्य वेदयोर्वा भार्या वैदभार्या, विदभार्या । गार्ग्यभार्या गर्गभार्या । असोसः किम् ? गार्ग्यकृतम् । इञादि किम् ? आङ्गकुलम् । तत्पुरुषे किम् ? उपगार्ग्यम् ।

**( २३९ ) तुक्यं स्यात् । [ १।२।२३।५। ]** पितरमाचष्टे । णिञ् । क्विप् पित्

अपत्यमन्यस्याश्रुतत्वाद् येषां लुगुक्तस्तदन्तस्य पितामन्त्यानां बहुत्वे विषयभूते तेषां लुक् स्यात् । वैदस्य वैद्ययोर्विदानां वाऽपत्यानि बहवो माणवकाः विदाः ।

**(२४०) यञ् चाणभिजिद्भ्यः । [१।२।२३।६।]** अभिजिदादेर्योऽपत्यार्थे यञ् स बहुत्वेऽप् स्यात् । अभिजितोऽपत्यानि आभिजिताः । वैदभृताः । बहुत्वे किम् ? आभिजित्यः । श्लोकोऽत्र -

अभिजिद्विदभृच्छालावच्छिखावच्छमीवच्च ।
ऊर्णावच्च श्रुवच्चेति यञपत्येत एव वृत् ॥१॥

**(२४१) वाऽस्मत्वविशेष्यः । [१।२।२३।७।]** अस्मच्छब्दोऽविशेष्यो विशेषणेनानवच्छिन्नोऽबहुत्वे विवक्षिते बहुत्वे वर्तमानो वा प्रयुज्यते । अहं ब्रवीमि । वयं ब्रूमः । तुशब्दादस्मच्छब्दानुपदम् । अन्यथा गोदौ ग्राम इव न स्यात् । अविशेष्यः किम् ? अहं गर्ग्यौ ब्रवीमि । एवं यदुः २ दभी ३ पाचकः देवदत्तः एकः । अप्राप्ते वेति, बहुत्वे वयमेव ।

**(२४२) भे प्रोष्ठपदे फल्गुन्यौ । [१।२।२३।८।]** भे नक्षत्रार्थे प्रोष्ठपदे द्वे फल्गुन्यौ च बहुत्वे वा प्रयुज्येते । अद्य पूर्वाः प्रोष्ठपदाः । पूर्वे प्रोष्ठपदे । पूर्वाः फल्गुभ्यः । पूर्वे फल्गुन्यौ । भे किम् ? प्रोष्ठपदे, माणविके । एताः किम् ? पूर्वे भद्रपदे । द्वे किम् ? फल्गुनी ।

**(२४३) गुरुजात्योः । [१।२।२३।९।]** गुर्वाख्यायां पूज्याख्यायां जात्याख्यायां च बहुत्वे बहुषु वाशब्दः प्रयुज्यते । त्वं गुरुः । यूयं गुरवः । युवां गुरू । भवान्नाह । भवन्त आहुः । सम्पन्नो व्रीहिः । सम्पन्ना व्रीहयः । द्वित्वेऽप्येकीयं मतम् । व्रीहियवाः । व्रीहियवौ । अन्ये त्वाहुः जात्याख्यायामेकस्मिन् [पा० अ० १/२/५८] इत्यनेनात्र व्रीहियवावेव । तदत्रेष्यते । व्यवस्थिता वा वृत्तेः सङ्ख्यायोगे निषेधश्च । एको व्रीहिः । वा विशेष्योऽत्र पार्थक्यात् । पण्डिताः यूयं मे गुरवः । एते व्रीहयः । बहुत्वे यूयमेव । जातिव्यक्तित्वे तु तत्त्वार्थत्वात् बहु बहुवचनस्य । त्वं च वयं च वयम् । व्रीहयश्च [यवाश्च] व्रीहियवाविति न सिध्यति ।

**(२४४) वा बह्वपि सुपा । [१।२।२३।१०।]** वा बहुलार्थः । क्वचिदबहुत्वे बहुषु शब्दः प्रयुज्यते सुपा योगे । इमे दाराः, गृहा इत्यादि । सङ्ख्येयबहुत्वेऽप्येकत्वं विंशत्यादि विंशनरा इत्याद्युक्तम् । गौः, गावौ, गावः । सुक्तं सुक्ते, सुक्तानि । पावकः । विंशतिः, विंशती, विंशतयः, इत्याद्यभिधेयवल्लिङ्गवचनानि । सुपा किम् ? दारगवम् ।

**(२४५) लिङ्गैकादि पुरोवत् । [१।२।२३।११।]** लिङ्गसंख्ये स्वार्थे प्रयुक्तस्येवोपचरितस्य स्तः । अग्निर्माणविका । गौर्वाहीकः । वचना खरकुटीना । भूतमियं स्त्री । आवपनमुष्टिका । कुल्या जलधिः । शिरो मे श्रीः । यशो मे मुखम् । स्थाली पातालम् । वर्षाः हेमन्तः । दाराः कुटुम्बिनः । ते भृत्याः नृपतेः कलत्रमितरे संपत्सु चापत्सु च । लिङ्गसङ्ख्ये किम् ? कालकारकाद्युपचरितस्येव । अग्निष्टोमयाजी पुत्रोऽस्य भविता । भावि कृत्यमासीत् । गोमान् भविता । बहुलत्वाच्छ्रियंमन्यं श्रियमन्यं कुलम् ।

**(२४६) स्वद्वित्व उभः । [१।२।२३।१२।]** स्वद्विचन एवोभः प्रयुज्यते । उभौ । स्वद्वित्वे

किम् ? प्रियोभयौ ।

**( २४७ ) द्धेऽपः । [ १।२।२३।१३। ]** अपोऽन्तो दुः स्यात् स्वद्वित्वोक्तेः सुपि भे परे । अद्भिः स्वद्भ्याम् ।

**( २४८ ) अन्तेऽनडुहः । [ १।२।२३।१४। ]** अनडुहोऽन्तो द् स्याद् अन्ते पदान्तस्थस्य । स्वनडुत्कुलम् । आनडुहिः । अनडुत्सु । अनडुत्ता । अनड्वान्नोक्तान्तः । अन्ते किम् ? अनड्वाहौ । अनडुह्यति । **वृद्** इति द्वितीयः पादः समाप्तः **॥२३॥**

**[ ॥ इतिश्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे प्रथमाध्याये द्वितीयः पादः ॥ ]**



## [ ।। अथ तृतीयः पादः ।। ]

**स्वौजसमौट्छष्टाभ्यां भिस्ङेभ्याम्भ्यस्ङसिभ्याम्**
**भ्यस्ङसोसाम्ङ्योःसुप् हाद्यैरं गौणादारादर्था- ।**
**दर्थ्याः क्रियाचिह्नाप्याद् दिवः करणं चाप्यं च**
**र्डिर्म्मि द्यूतक्रयविक्रये वा प्रादेः ।।१।३।१।।। चतुरूर्ध्वम् ।।**

(१) **सु औ जस्** प्रथमा १ । **अम् औट् शस्** द्वितीया २ । **टा भ्याम् भिस्** तृतीया ३ **ङे भ्याम् भ्यस्** चतुर्थी ४ । **ङसि भ्याम् भ्यस्** पञ्चमी ५ । **ङस् ओस् आम्** षष्ठी ६ । **ङि ओस् सुप्** सप्तमी ७ । [ १।३।१।१। ] उजटशटड ४ इप् एत इतः । एतत् त्रयं त्रयम् एकद्विबहुषु सुप् चैकादौ वक्ष्यति । धातोः सुपूत्याद्यात् कः, सुप्तिङो नोक्तार्थत्वात् किन्त्वर्थवता सम्बन्धाद् अर्थवतः शब्दमात्रात् स्यात् । ड्यारत्कृत्तद्धितसमासाद् अर्थवत्त्वात् । तस्य विधिरुच्यते ।

(२) **हाद्यै रं गौणात्** । [ १।३।१।२। ] हादिभिर्युक्ताद् गौणाद् अप्रधानाद् रम् द्वितीया स्यात् । षट्पाद् इह-

हैतान्तराधिक्समयापरे स्तः सर्वोभयाभे निकषान्तरेण ।
द्वित्वे व्यधश्चोपरिलक्ष्मवीप्सेत्थम्भूतकेभिः प्रतिपर्यनूनि ।
भागेऽप्यनुर्हेतुसहेऽप्यपान्तहीने विनार्तपृथगत्र नानाच् ।।१।।

हादिभिः ५ युक्तात् । हा तं व्याधेः १ । दक्षिणेन ग्रामं ग्रामस्य वा नदी २ । अन्तरा त्वां च मां च ना । धिक् तमयशः ४ । समया ग्रामं नदी ५ । परेस्तस् । परेः परो यस्तस् सर्व-उभय-अभेश्च तेन । परितो ग्रामं नदी । एवं [सर्वतः ग्रामं नदी । उभयतः ग्रामं नदी । अभितः ग्रामं नदी ।] तथा निकषा तं सः । अन्तरेण त्वां च मां च ना । त्वामन्तरेण नायं किञ्चित् । द्वित्वेऽव्यधश्चोपरि । द्विरुक्ते नाव्यादिना ३ अव्यधे त्वामुत्सवः । अधोऽधो ग्रामं क्षेत्राणि २ । उपर्युपरि तं दुःखानि ३ तर्डः । लक्ष्मवीप्सेत्थंम्भूतेऽर्थेऽप्यऽभिना युक्ताच्च । वृक्षमभि विद्योतते विद्युत्, तेन सा लक्ष्यते । वृक्षं वृक्षमभिषेकः । स साधुस्त्वामभि । प्रति परि अनु एभिर्लक्ष्माद्यर्थैः । वृक्षं प्रति । एवं [वृक्षं परि । वृक्षमनु ।] भागेऽपि स्वीक्रियमाणं सार्थैः प्रत्यादिभिः । यदत्र मां प्रति स्यात् । [मां परि । मामनु ।] योऽत्र मे भाग आभजतीत्यर्थः । अप्यनुक्तसमुच्चये । च आकृत्यर्थः । हेतुसहार्थेनानुना । शाकल्यस्य संहितामनु प्रवृष्टः । तया हेतुभूतया वृष्टः । तमनु स्थितः । तेन सह । न र्टं । हीनार्थेनोपानुना । त्वामुप, त्वामनु वादिनः । त्वत्तोऽन्ये हीनाः । विनाद्यैः । धर्मं विना, धर्मम् ऋते कुतः सुखम् ? पृथक् तं, नाना तं स्थितः । नैके चु विच् प्रत्याहारार्थः, आकृतिगणत्वात् । न मां प्रतिभाति पापम् । गृहाण प्रतिभाति यत् त्वाम् । हाद्यैर्युक्तात् किम् ? हा

पुत्र । न र्ङ ।

धातुप्रत्ययवाच्योऽर्थस्तदभावेऽ लटोच्यते ।
वाक्यार्थत्वात् प्रधानं स्यादप्रधानं ततः परम् ॥२॥

(३) **आरादर्थात्** । [१।३।१।३।] दूरान्तिकार्थाद् गौणाद् असत्त्वार्थाद् रम् । दूरं ग्रामात् कूपः । एवं विप्रकृष्टम्, अन्तिकम्, आसन्नकम् । गौणात् किम् ? दूरः कूपः ग्रामात् ।

(४) **अर्थ्याः** । [१।३।१।४।] ङसि, ङि, टा तदारादर्थात् स्युः । ग्रामात् कूपः दूरात्, दूरे, दूरेण वा । दूरोऽगौणः ।

(५) **क्रियाचिह्नाप्यात्** । [१।३।१।५।] गौणात् क्रियायाः विशेषणात् रम् । शोभनम् ओदनं पचति । शोभनम् ओदनस्य पक्ता । तथा तदाप्यात् कर्मकारकाद् रम् । षट्पदीह

इष्टं तथाऽनीष्टमुपेक्षणीयं प्राप्यं च निर्वत्यमथो विकार्यम् ।
हेतूपयोगस्य गुणादिसक्तं याचां च टापाऽकथितं ह्युषन्ति ।
याच्पृच्छिभिक्षां दुहिरुच्चिशाश्च कर्षदण्डिवह्मोषिजिनीहृत्रादेः ॥१॥

तत्रेष्टादि । पयसा ओदनं भुङ्क्ते । विषमत्ति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । प्राप्यादि । ग्रामं गच्छति । आदित्यं पश्यति । कटं करोति । काण्डं लुनाति । ओदनं पचति । अङ्गारान् करोति, भस्म वा । प्रकृतिसत्तोच्छेदोऽत्र । अकथितं च । उपयुज्यत इत्युपयोगो गवादिः । याचां याचादीनामुपयोगस्य हेतुर्निमित्तं पौरवादि, टापा कर्तृकरणादिनाऽनुक्तम् अकथितं न वाप्यमुषन्ति तज्ज्ञाः । हेतु असुप् । याचामित्येतान्यायुच्छीत्यादिनाऽऽह । पौरवं गां याचते । गुरुं धर्मं पृच्छति । त्वां मां भिक्षते । गां पयो दोग्धि । व्रजमवरुणद्धि । वृक्षं फलान्यवचिनोति । तथा शास्तु वो गुणेन धर्मकर्मादिना यत् सक्तं सम्बद्धं तत् त्वां कथितमाप्यम् । शिष्यं धर्ममनुशास्ति, ब्रूते च । आदिग्रहणात् कर्षाद्याप्यमसक्तं च । ग्रामं शाखामाकर्षति । ग्रामं शतं दण्डयति । ग्रामं भारं वहति । लोकं गा मोषयति । ग्रामं शतं जयति । ग्रामं गां नयति । कुम्भं भारं हरते । आदिग्रहणाच्छिष्यं धर्मं चोदयति । तण्डुलानोदनं पचति । वीरणान्, वीरणैर्व कटं करोति । अन्ये कर्षादिरेव नित्यम् । पौरवं, पौरवान् पौरवस्य वा गां याचत इतीच्छन्ति तदशास्त्रीयम् । टाऽकथितं किम् ? पाणिना कांस्यपात्र्यां पयो दोग्धि । करणाधारौ नाप्यम् । इह तु, कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम्, व्याकरणं सूत्रयतीति यः कृतादिभिः कटादेः सम्बन्धः स प्रत्ययेऽर्थान्तराभिधायिन्युत्पन्ने कृतादीनामुपसर्जनत्वान्निवर्तते, क्रियया तु सह सम्बन्धाद् रम् ।

(६) **दिवः करणं चाप्यं च** । [१।३।१।६।] दीव्यतेः कारणं योऽर्थः स, आप्यं च करणं च । अक्षान् अक्षैर्वा दीव्यति । अक्षाणां देवनम् । अक्षादेर्देवनाः । अक्षाः दीव्यन्ते । स तेनाक्षैर्देवयते। दिवः किम् ? वाचा स्तौति । करणं किम् ? गृहे दीव्यति ।

(७) **ङिर्म्मि द्यूतविक्रये** । [१।३।१।७।] द्यूते क्रयविक्रये चार्थे दिवः ङोर्मि आप्ये षष्ठी स्यात् । शतस्य दीव्यति ।

**वा प्रादेः ।** [ १।३।१।८। ] प्रादिविशेष्यस्यास्यानयोराप्ये वा ङः । शतं शतस्य वा प्रदीव्यति ॥३।१॥

**व्यवहृपण इकानामज्वरेः स्याद् रुगाप्ये**
**कृञ इति प्रतियत्ने वेस्तृपोर्हिंसनेऽतः ।**
**क्रथिजसिनटिसातां पिष्प्रणिघ्नश्च नाथ-**
**स्तङि दृशभिवदेः स्याद् रम्प्रयोज्यश्च हृक्रोः ॥२।१।३।२ ॥ मालिनी ॥**

( ८ ) **व्यवहृपणः ।** [ १।३।२।१। ] तदर्थस्य वाऽऽप्ये ङः । शतं शतस्य वा व्यवहरति । एवं पणतेः । द्यूतक्रयविक्रये किम् ? तान् पणायति स्तौति । शलाकां परिहरति । अपहरति ।

( ९ ) **इकानाम् ।** [ १।३।२।२। ] स्मरणार्थानां वाऽऽप्ये ङः । मातुः मातरं वाऽध्येति । एवं ध्यायति, स्मरति । मातुः माता वा स्मर्यते । भावाप्यविवक्षा ।

( १० ) **अज्वरेः स्याद् रुगाप्ये ।** [ १।३।२।३। ] रुगाप्ये इत्यामा वृत्तेः रुजार्थानां ज्वरिवर्जितानां वाऽऽप्ये ङः । पुनराप्यग्रहणात् तेषामेवाप्ये तत्कर्तृक इत्यर्थः । तं तस्य वा रुजति शूलम् । एवं ज्वरः । एवमामयतः । तेषां रुज्यते रोगेण । रुजार्थानां किम् ? तं सन्तापयति ज्वरः । उपतापोऽत्रार्थः । अज्वरेः किम् ? तं ज्वरयति प्राप्ते चेति रम् । तत्कर्तृके किम् ? श्लष्मैनं रुजति। व्याधिना ग्राहयति ।

( ११ ) **कृञ् इति प्रतियत्ने ।** [ १।३।२।४। ] प्रलप्युः असत आधानाय सतो वाऽपायरक्षणाय समीहा प्रतियत्नस्तत्रार्थे कृञो व्याप्ये ङः । एधो दकस्योपस्कुरुते । एवमुपस्क्रियते वा । यत्नः किम् ? कटं करोति ।

( १२ ) **ईश्वयोः ।** [ १।३।२।५। ] वाऽऽप्ये ङः । तं तस्य वेष्टे सर्पिः । सर्पिषो वा दयते।

( १३ ) **हिंसनेऽतः क्रथिजसिनटिसाताम् ।** [ १।३।२।६। ] अतः परेषां हिंसार्थानां क्रथिजसिनटीनां सातां कृताकाराणां वाऽऽप्ये ङः । तं तस्य चाक्राथयति । एवमुज्जासयति । [उन्नाटयति ।] आत्त्वं कृतत्वात् । हिंसने किम् ? शिष्यमुज्जसयति । सातां किम् ? तमचिक्रथत् [उदजीजसत्, उदनीनटत्] ।

( १४ ) **पिष्प्रणिघ्नश्च ।** [ १।३।२।७। ] पिषेः प्रणिहन्तेश्च वाऽऽप्ये ङः । चौरं चौरस्य वा पिनष्टि । एवं प्रहन्ति, प्रणिहन्ति । निप्रति सतस्य वा । प्रणिहन्यते च । हिंसने किम् ? धानाः पिनष्टि । शिष्यं प्रहन्ति । प्रणि किम् ? तं हन्ति । च किम् ? नातो हिंसा ।

( १५ ) **नाथस्तङिति ।** [ १।३।२।८ ] नाथतेर्वाऽऽप्ये ङः तङाने परे । सर्पिः, सर्पिषो वा नाथते । तन्मे भूयादित्याशास्ते । तङिति किम् ? पुत्रमुपनाथति । अधीष्वेत्युपयाचते ।

( १६ ) **दृशभिवदेः स्याद् रं प्रयोज्यश्च ।** [ १।३।२।९ ] अनयोः प्रयोज्यः कर्ता, योज्यं वा स्यात् तङाने । स तैः सा त्वा दर्शयते । स त्वां त्वया गुरूनभिवादयते । तङि किम् ? दर्शयति स तं वा ।

**( १६ ) ह्रक्रोः** । [ १।३।२।१० ] प्रयोज्यो वाऽऽप्यं पार्थक्यात्र तङीति । स तं तेन वा भारं हारयति । एवं सक्तूनभ्यवहरति । कटं कारयति । आकारयति । विकारयति । आहारशब्दाप्यानाप्यविषयेऽपि वाऽऽप्यमेव स्थितवावृत्तेः ॥२॥

**बोधाहारध्वनिगतिसमानाप्यकानां न खादः**
**शब्दायक्रन्दद इति नियो ह्वश्च भक्षेर्वधेऽना ।**
**वाहेः क्रुद्‌ध्रुह्यतोऽभिनिविशः त्सकर्मकाधारदेश**
**धिस्थास्शीङाध्युपनुवसतेः सर्वकालान्वभावाः ॥१।३।३॥ मन्दाक्रान्ता**

**( १७ ) बोधाहारध्वनिगतिसमानाप्यकानाम्** । [ १।३।३।१। ] बोधाहारध्वनिगतिभिः समाः तुल्याः एतदर्थाः, ते चाविद्यमानाप्यकाश्च, तेषां प्रयोज्यः कर्ता नित्यमाप्यं पार्थक्यात् । स त्वां पुष्पं बोधयति । अवगमयति । ज्ञापयति । ध्यापयति । घ्रापयति । स त्वां नरं जल्पयतीत्यादि । आहारार्थे। स तं सक्तून् भोजयतीत्यादि । शब्दार्थे । स तं श्लोकं जल्पयति । अध्यापयतीत्यादि । गत्यर्थे । स तं ग्रामं गमयति । प्रापयतीत्यादि । अनाप्ये स तं शाययति । आसयतीत्यादि ।

**( १८ ) न खादः शब्दायक्रन्ददइति** । [ १।३।३।२। ] एषां प्रयोज्यो नाप्यम् । स त्वां सक्तून खादयति । आदयति च । स त्वां शब्दाययति । क्रन्दयति च ।

**( १९ ) नियो ह्वश्च** । १।३।३।३। ] नियः प्रयोज्यो नाप्यम् । सोऽजां न्रा ग्रामं नाययति । स तं ह्वाययति । च किम् ? नातो नञ् ।

**( २० ) भक्षेर्वधे** । [ १।३।३।४। ] भक्षतेर्भक्षयतेर्वा वधे हिंसार्थे प्रयोज्यः कर्ताऽऽप्यम् । सस्यं गां भक्षयति । भक्ष्यन्ते यवकान् गा ।

**( २१ ) अना वाहेः** । [ १।३।३।५। ] वाहेः प्रयोज्यः अनाम् अनृजातिः कार्याणामनियन्ता चेत् कर्ताऽऽप्यम् । वाहयति भारं गाः । अना किम् ? वाहयति भारं न्रा ।

**( २२ ) क्रुद्‌द्रुह्यतः** । [ १।३।३।६। ] कित्वात् सप्रादिभ्यां कुधिद्रुहिभ्यां युतो युक्तो गोण आप्यम् । तमभिक्रुध्यति । तमभिद्रुह्यति सः । कित् किम् ? पुत्रस्य क्रुध्यति । पुत्रस्य द्रुह्यति । प्रयोज्य इति निवृत्तम् ।

**( २३ ) अभिनिविशः** । [ १।३।३।७। ] शकन्ध्वादित्वादभेरल्लोपः । आधारेण सम्बन्धादस्याधार आप्यम् । ग्राममभिनिविशते ।

**( २४ ) त्सकर्मकाधारदेशः** । [ १।३।३।८। ] देशो ग्रामनगरादि, जनपदो वा, नदीपर्वतादि वा, अकर्मकाणां धातूनां क्रियाधारः आप्यम् । ग्रामं वसति । नगरं शेते । कुरून् स्वपिति । पञ्चालानास्ते । नदीं तिष्ठति । पर्वतं वसति । ग्रामस्य स्वप्ता । ग्रामः सुप्यते । पापेऽभिनिवेशः । ग्रामे स्वपिति इत्याद्यप्यक्ताबाधया । अकर्मकाणां किम् ? ग्रामे पचत्योदनम् ।

**( २५ ) अधिस्थास्शीङाध्युपनुवसतेः** । [ १।३।३।९। ] अधिर्विशेष्यः । स्थां आस् शीङ् इत्येकः । आ-अधि-उप-अनोर्विशेष्यो वसतिर्द्वितीयः । द्वंद्वैकत्वादस्याधार आप्यम् ।

शकन्ध्वादित्वादनोरल्लोपः । ग्राममधितिष्ठति । एवमध्यास्ते । अधिशेते । आवसति । ग्रामस्यानुवसनम् । ग्रामोऽनूष्यते । अध्यादिसाहचर्यान्नेह । ग्रामे उपवसति । न भुङ्क्ते । आङ् चेत् तदा डित् आङा पाठः ।

**(२६) सर्वकालान्वभावाः । [१।३।३।१०।]** एकैकः सर्वकात्स्न्येन क्रियाया आधार आप्यम् । क्रियागुणद्रव्यैः साकल्येनैषां सम्बन्धः सर्वार्थः । मासमास्ते । मासं पचत्योदनम् । मासं कल्याणी, मासं रम्या मथुरा । मासं गुडधानाः । क्रोशं स्वपिति । एवं वक्रः । पर्वतः । गोदोहमास्ते । एवं वक्रः । बुद्बुदः । सर्वः किम् ? रात्रौ शेते । अध्वनि स्थितः । गोदोहे गतः । शरदि यजेत् । गुणद्रव्ययोरराधारता भवतेर्गम्यमानत्वात् ॥३॥

**टान्तेतरेऽसीन्दुकर्त्रादिकाभ्यां ङें संप्रदानादिहितादिकाभ्याम् ।**
**भिन्नावधिभ्यां च ङसि ङि धाराधिभ्यां च शेषे च घटादिना ङ्ः ।**
**स्टाप्हेतुना लोऽर्थवतो सुं मुख्यात् ॥१।३।४॥ पञ्चपात् ॥**

**(२७) टान्ते । [१।३।४।१।]** कालाध्वभावेभ्यः साकल्येनाधारेभ्योऽन्ते कर्तव्यसमाप्तौ सत्यां टा तृतीया स्यात् । मासेनानुवाकोऽधीतः । एवं क्रोशेन । गोदोहेन । अन्ते किम् ? मासमधीते । न च गृहीतः ।

**(२८) अन्तरेऽसी । [१।३।४।२।]** कारकप्रस्तावात् कारकयोरन्तरे मध्ये वर्तमानात् कालादेरसः स्याद्, रित्त्वात् पञ्चमी सप्तमी च । अद्य भुक्त्वा देवदत्तो द्व्यहाद् ओदनं भोक्ता । द्व्यहे वा । इहस्थोऽयमिष्वासः क्रोशाल्लक्ष्यं विध्यति । क्रोशे वा । कर्तृकर्मणोर्मध्ये कालाध्वानौ । इन्दुकर्त्रादिकाभ्यां ३ लघुः । आदिः प्रत्येकं सम्बध्यते । भ्यां च सादृश्याद् यथालक्ष्यं तृतीयापञ्चम्योः गृह्यते । तत्रेन्द्वादिभिर्युक्तादप्रधानात् तथा कर्तृहेतुकरणादिभ्योऽप्रधानेभ्यो टा स्यात् । बहुलमेतदिष्यते । वृत्तद्वयं चेह -

भादिन्दुनालुप् प्रसितावबद्धोत्सुकैः समार्थैरतुलोपमा टा ।
निषेधपर्याप्तभवत्वलं किं कृतैश्च साकार्थविनानृते च ॥१॥

टाजैर्गुणार्थैः कलहोनमिश्रैः श्लक्ष्णावराभ्यां निपुणादिपूर्वैः ।
कर्तुश्च हेतोः करणात् कदङ्गात् संज्ञाप्यचिह्नात् प्रकृत्यादितो वृत् ॥२॥

**(२९) इन्दु- [१।३।४।३।]** इन्दुना युक्ताद् भान्नक्षत्रादाधाराद् वा टा स्यात् । लुप् चेद् अणादेरिन्दोरप्रयोगेऽपि तद्योगगतिः । पुष्येण पुष्ये वा पायसमश्नीयात् । एवं मघाभिः मघासु वा । इन्दुना किम् ? मघासु ग्रहः । आधारात् किम् ? अद्य पुष्यः । **प्रसित-अवबद्ध-उत्सुकैर्युक्तादाधारात्** । केशैः केशेषु वा प्रसितः । [समार्थैरतुलोपमा ।] तुला उपमावर्जैः । समार्थैस्तुल्यार्थैः युक्ताद् वा, नाधारादिति । तेन तस्य समः । समानः तुल्यः सदृशः । नाभ्यामर्जुनस्य तुला । २ नास्ति । टातो नित्यार्थम् । निषेधार्थैः पर्याप्ताद्यैः पर्याप्तं भुक्तेन । एवं भवतु । अलम् । किम् । कृतम् । चकार आकृत्यर्थः । अस्तु । न किञ्चित् । **साकार्थैः** । पुत्रेण साकम् । एवं सार्धं, सह, समं, युगपत् । गम्यमानैश्च "वृद्धो यूना" [पा० अ० १।२।६५] इत्यादि । **विना** । तेन

विना । एवं पृथक्, नाना । **अनृते** किम् ? तं तस्माद् वा ऋते । **टाजैर्गुणार्थैः** । तृतीयान्ताज्जातैर्गुणवचनैरर्थेन च । अनुवादान्नेतरेतराश्रयः । गिरिणा काणः । वनेनार्थः । **कलहाद्यैः** । वाचा कलहः । मासे मासेनोनः । जसन्तद्वन्द्वाद् ऊनार्थैः । मासेन विकलः । गुडेन मिश्राः धानाः । आचारेण श्लक्ष्णः । मासेनावरः । वाचा निपुणः । आदेस्तेन समः, सदृशः । चः समासार्थम् । मासेन पूर्वः ।

**( ३० ) कर्त्रादिकाभ्याम् । [ १।३।४।४। ]** कर्त्रादिभ्यः कर्तृहेतुकरणवाचिनोऽप्रधानात् । तेन कृतं, क्रियते वा । भिक्षाभिर्वसति । विद्यया यशः । कन्यया शोकः । धनेन कुलम् । दात्रेण लुनाति । कदङ्गात् कुत्सितादङ्गात् । अक्ष्णा काणः । पादेन खञ्जः । **संज्ञाप्यात् [ चिह्नात् ]** । मात्रा सञ्जानीते । उक्तावधयानां वारितत्वात् । तङि किम् ? तां सञ्जानाति । शिखया परिव्राजकं कमण्डल्वा छात्रमप्राक्षीत् । **प्रकृत्यादेः** । प्रकृत्याऽभिरूपः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । जात्या विप्रः । समेन धावति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । आद्याकृत्यर्थः । वृद् गणसमासौ ॥

**( ३१ ) ङें सम्प्रदानादिहितादिकाभ्याम् । [ १।३।४।५। ]** तथैव सम्प्रदानादिभ्योऽप्रधानेभ्यः, हितादिभिर्युक्तात्, प्रधानाच्च ङें चतुर्थी स्यात् । तदत्र षट्पात्–

आप्यक्रियेप्स्योऽथ रुचां प्रतृप्यः ह्नुश्लाघशप्स्थामधिज्ञीप्स्यमानः ।
इष्टः स्पृहेधरियत्युत्तमर्णोऽसूयाद्रुहेर्ष्याक्रुधनः प्रकोप्यः ।
पृच्छेक्षिराधोऽस्य गुणोऽनुप्रत्योः प्रत्याच्छुवः स्यादपि पूर्वकर्ता ॥१॥
तुमर्थभावादसतोऽस्य चाप्यादप्राप्तगत्यर्थक्रियाप्यतोऽर्मे ।
मन्यस्य निन्द्यादशुकादितोऽपि क्लृप्यर्थकर्तुर्विक्रियातस्तदर्थात् ॥२॥
उत्पातलक्ष्यात् करणात् परिक्रीवाऽऽशीर्हितायुः सुखभद्रक्षेमा- ।
र्थार्थे नमःस्वस्तिवषट्स्वधाभिः स्वाहालमर्थैर्बलिरक्षिताद्यैः ॥३॥

सार्द्धवृत्तेन सम्प्रदानमाह । **आप्यक्रियेप्स्यः** कर्मणाऽऽसुमभियोक्तुमिष्टोऽर्थः, क्रियया च, सम्प्रदानम् । तुभ्यं गां ददाति । क्रियया । श्राद्धाय निगल्हते । युद्धाय संनह्यते । पत्ये शेते । इप्स्यः किम् ? रजकस्य वस्त्रम् । घ्नतः पृष्ठं ददाति । **[रुचां प्रतृप्यः ।]** रुच्यर्थानां प्रीयमाणोऽर्थः । बालाय रोचते मोदकः । बालस्थाभिलाषस्य कर्ता मोदकः । त्रे स्वदते दधि । **ह्नुङादेः** । युपयितुं बोधयितुमिष्टोऽर्थः । तस्मै ह्नुते, श्लाघते, शपते, तिष्ठते । स्वगुणांस्तं बोधयितुमिच्छति । **स्पृहेरिष्टो** व्याप्योऽर्थः । पुष्पेभ्यः स्पृहयति । उक्ताबाधया, पुष्पाणि वा [स्पृहयति] । चुराद्यदन्त । **धारयतेर्यो**ऽर्थ **उत्तमर्णो,** अत एव समासः । तस्मै गां धारयति । **असूयादेः** । गुणेष्वपि दोषोद्भावनमसूया । अपकारो द्रोहः । परगुणानामसहनमीर्ष्या । अमर्षः क्रोधः । जसन्तद्वन्द्वैकत्वादेतदर्थानां **प्रकोप्योऽर्थः**, यं प्रति कोपः । तस्मै असूयति । एवं द्रुह्यति, अपकारोति, ईर्ष्यति, क्रुध्यति, कुप्यति । प्रकोप्यः किम् ? भार्यामीर्ष्यति । परैर्दश्यमानां न क्षमते । तमसूयति लिप्सया । पुत्रस्य क्रुध्यति, विनयं शिक्षयति । **इक्षिराधोः** प्रयोगे यस्य सत्का पृच्छा क्रियते, शुभाशुभं पृच्छ्यते सोऽर्थः । तस्मै ईक्षते दैवज्ञः, राध्यति

वा । **अनुप्रत्योः** तत्कगृणादेः, प्रत्यात्परः **श्रुणोतेरपि** **पूर्वकर्ता**ऽर्थः । एतावभ्युपगमार्थौ । सोऽन्येन प्रसक्तस्य सतः स्यात् स प्रयोक्ता पूर्वक्रियाकर्ता । होत्रे अनुगृणाति, प्रतिगृणाति वा । तस्मै गां प्रतिश्रुणोति, आश्रुणोति वा । प्रतिजानातीत्यर्थः । आदिमाह । **तुमर्थाद् भाववचनात्** ङें । पाकाय व्रजति । एवं त्यागाय, भूतये । तुमर्थः किम् ? त्यागः । भावः किम् ? गोदायो व्रजति । **असतोऽस्य चाप्यात्** । अस्य तुमर्थस्य यदाप्यं ततो ङें । अस्यैव च तुमर्थस्याप्रयुज्यमानस्येत्यर्थः । फलेभ्यो व्रजति । तथैवेभ्यः । ओदनाय । तुमर्थस्यासतः किम् ? फलैधानाहर्तुम्, ओदनं पक्तुं भोक्तुं, वा व्रजति.। **अप्राप्तगत्यर्थक्रियाप्यतोऽर्मे** । अनाप्तमनाक्रान्तं च तद् गत्यर्थानां क्रियया चेष्टयाऽऽप्यं च । ततो ऽर्मे [=अर्म् ए] द्वितीयाचतुर्थ्याविव स्तः । ग्रामं ग्रामाय वा गच्छति । उत्पथेन पन्थानं पथे वा याति । अप्राप्तं किम् ? पन्थानं याति । क्रिया किम् ? मनसा मेरुं याति । **मन्यते** राप्यात् शुकादिवर्जितान्निन्द्यादनादरतया प्रतिपाद्याद् अमः । न त्वां तृणं तृणाय वा मन्ये । [न त्वां] श्वानं शुने वा [मन्ये] । युष्मदश्चतुर्थ्या निन्दा न स्यात् । मन्यस्य किम् ? न त्वां तृणं मन्ये । निन्द्यात् किम् ? त्वां नरं मन्ये । त्वां तृणं मन्ये । सत्तापतिपत्तौ नातिनिन्दा । अशुकादेः किम् ? न त्वां शुकं मन्ये । शुकं काकनौ शृगालाद्याकृतिगणः । **क्लृप्यर्थानां** कल्पमानादिरर्थः, तस्य **विकारात्** । ङें। कल्पते यवागुः मूत्राय, यवान्नमुच्चाराय । एवं सम्पद्यते, जायते । **तदर्थात्** । तस्मै इदं तदर्थम् । यस्मै इदं ततो ङें। यूपाय दारु । रन्धनाय स्थाली । **उत्पातलक्ष्यात्** । उत्पातेन लक्ष्यो योऽर्थस्ततः । वाताय कपिलिका विद्युत्, आतपाय लोहिनी । करणात् परिक्री । षष्ठीलोपात् परिक्रियः करणात् ङें । उक्ताबाधजो टां च । शताय शतेन वा त्वं परिक्रीतम् । [वाऽऽशीर्हितायुः ।] वा ङें हिताद्यर्थैः, आशीश्चेदर्थः । तुभ्यं तव वा हितं भूयात्, पथ्यम्, आरोग्यम् इत्यादि । एवमायुष्यं जीवितम् इत्यादि । **सुखं** शर्म इत्यादि । **भद्रं** मद्रं कल्याणमित्यादि । क्षेमं कुशलम् इत्यादि । क्षेमं लघुः । **अर्थः** प्रयोजनमित्यादि । अर्थः किम् ? आ पुत्रे तपः । वाऽऽशीर्नातः । **नमः आदिभिः** । नमो देवाय । [स्वस्ति पुत्राय । वषट् शिखायै । पितृभ्यः स्वधा । अग्नये स्वाहा । अलमर्थैः । अलं मल्लो मल्लाय । एवं शक्तः, समर्थः, प्रभवति, प्रौढः । कुबेराय बलिः । गोभ्यो रक्षितम् । आद्याकृतिगणार्थः । तस्मै हितं सुखम् । अनाशिष्यपि । णमुप्रतिपादनार्थैश्च । शास्त्रे प्रणम्य । पित्रे णमामि । तस्मै प्रतिपादयति । व्रते कथयतीत्यादि ॥

**(३२) भिन्नावधिभ्यां च ङसिर् । [१।३।४।६।]** भ्यां तथैव, अनुक्तसमुच्चये चकारादादी लभ्येते । भिन्नादिभिर्युक्ताद् अप्रधानाद् अवध्यादिभ्योऽप्रधानेभ्यो ङसिर् पञ्चमी स्यात् । अत्र चत्वारि वृत्तानि -

भिन्नार्थ आरादिदमर्थ आह्वाप्रतिश्च तौल्यप्रतिदानयोस्तैः ।
आङ्व्याप्त्यवध्योः परिवर्जनेऽपोऽञ्चू बहिष्षिवो दिक् प्यलु वा र्घमोस्तैः ॥१॥

यस्मादपायोऽवधिरत्र लाति भीत्रार्थभीहेतुपरे ज्यसोढौ ।
वक्तोपयोगे जनिकर्तृहेतुः रक्षार्थवीष्टः प्रभवो भ्रुवश्च ॥२॥

अन्तर्दधये येन सहादिदृक्षा व्याप्याज्जुगुप्साप्रविमादरामैः ।
प्रश्नोत्तरात् कालपथोर्यतोऽन्तो ङिस्वी च ताभ्यां करणादसत्त्वे ॥३॥

स्तोकाल्पकत्यादिपयाच्च कृच्छ्राद् हेतोर्ऋणाद् वा गुणतोऽस्त्रियाश्च ।
निद्र्धार्यभेदादपि कारणादेः पूर्वप्रपञ्चा इति केचिदाहुः ॥४॥

तैरिति सम्बन्धाद् **भिन्नार्थैः** । भिन्नो देवदत्तात् । इतरोऽन्यो विलक्षणादिः । **आराच्छब्देन** । आराद् ग्रामात्, दूरमन्तिकं वा । इदमर्थैराराद्यर्थैः पुनरसत्त्वार्थैः । ग्रामाद् दूरं विप्रकृष्टमन्तिकमासन्नं वा । आहि-आ प्रत्ययान्ताभ्याम् । दक्षिणाहि ग्रामात् । उत्तरा ग्रामात् । न ङः । **तौल्यप्रतिदानयोः** । प्रतिनिधिदत्तनिर्यातनयोर्य प्रतिः । मेतन [?] । अभिमन्युरर्जुनतः प्रति । अर्जुनसदृशः । माषानस्मै तिलेभ्यः प्रति प्रयच्छति । माषैस्तिलान् प्रतिनिर्यातयति । **व्याप्त्यवध्यर्थेनाङा** । आ पाटलिपुत्राद् वृष्टो देवः । तमभिव्याप्य मर्यादां वा कृत्वा । **पर्यपाभ्याम्** । परि, अप वा, त्रिगर्तेभ्यो वृष्टः । तांस्त्यक्त्वा । अञ्च्-बहिश्च । आभ्यां सिदास् प्रत्याहारार्थः । प्राग् ग्रामात्, प्रत्यक्, उदग् आदिः । **बहिर्ग्रामात्** । वि प्रत्याहारेण । विनानु । **दिक्** । दिग्वाचिशब्दैः । पूर्वो ग्रामात् । **प्यलु वा** । क्त्वाप्यस्तस्य लु वा युक्तात् । र्घमोः प्राप्तयोराधाराप्यात् ङसिस्र्यात् । आसने उपविश्य, आसनात्, प्रेक्षते प्रासादमारुह्य, प्रासादात्, प्रेक्षते । प्यलु गत एव । अवधिरपादानम् । तमाह । **यस्मादपायोरवधेरत्र लाति** । यस्माच्छकाशाद् अपायो विश्लेषः स्यात्, लाति गृह्णाति वा सोऽर्थोऽवधिः । ग्रामाद् याति । पर्वतादवरोहति । वृक्षात् पर्णं पतति । कुसूलाद् धान्यमादत्ते । **भीत्रार्थ**योर्भिषे **हेतुः** । **पराजे**रशक्योऽसह्योऽर्थः । चौरेभ्यो बिभेति । चौरेभ्यस्त्रायते । हेतुः किम्? अरण्ये बिभेति । अध्ययनात् पराजयते । भोजनाद् वा । असोढः किम् ? शक्रं पराजयते । **वक्तोपयोगे** । उपयोगे नियमपूर्वके विद्याग्रहणे साध्यो वक्तार्थः । उपाध्यायाद् अधीते । आगमयति वा । उपयोगे किम् ? नटस्य शृणोति । **जनिकर्तृहेतुः** । जनेः कर्ता जायमानस्तस्य हेतुः प्रकृतिः योऽर्थः । शृङ्गाच्छरो जायते । गोमयाद् वृश्चिकः । **रक्षार्थानां** विशेषेणेष्टोऽर्थः । यवेभ्यो गां रक्षति । एवं वारयति, निवर्तयति । **प्रभवो भुवश्च** । प्रभवत्यस्मात् प्रभवः । भवनं भूः । चकारः कर्त्रनुकर्षणार्थः । भुवश्च कर्तुः प्रभवोऽर्थः । हिमवतो गङ्गा प्रभवति । **अन्तर्द्धये येन सहादिदृक्षा**। व्यवधाननिमित्तं येन सहादर्शनेच्छा सोऽर्थः । उपाध्यायान्निलीयते । स मां मा द्राक्षीत् । अन्तर्द्धये किम् ? चौरान्न दिदृक्षते । सत्यपि दर्शने अदिदृक्षायां भवति । आदिलब्धानाह । **व्याप्याज्जुगुप्साप्रविरामादरामैः** । प्रविभ्यां मादरामौ प्रमादविरामावित्यर्थः । जसन्तद्वन्द्वादेतदर्थे व्याप्यादेषां कियया सम्बन्धाद् ङसिर् । अधर्माज्जुगुप्सते । धर्मात् प्रमाद्यते । अधर्माद् विरमति । **प्रश्नोत्तरात्** । कुतो भवान् ? पाटलिपुत्रात् । **कालपथोर्यतोऽन्तः** । कालस्य यश्चाध्वनोऽन्तः समाप्तिर्यतः सकाशात् ततः । कार्तिक्या आग्रहायणी मासे । अतो ग्रामान्नगरं चत्वारि योजनानि । चतुर्षु च योजनेषु । **ङींस्वी च ताभ्याम्** । ताभ्यां कालपथिभ्यां युक्तौ यौ कालाध्वनौ ताभ्यां परौ ङींस्वी स्तः । कालात्तु ङि। अध्वनश्च स्वी [सु+ई] प्रथमासप्तम्यौ । तथोदाहृतम् । **स्तोकादेः करणभूता**दसत्त्वार्थाद् ङसिर् । उक्ताबाधयोर्टा च । स्तोकात्, स्तोकेन वा, मुक्तः । एवं अल्पाद्, अल्पेन वा, मुक्तः । **कत्यादिपयः** । कतिपयात्, कतिपयेन इत्यर्थः । **कृच्छ्रात्,** कृच्छ्रेण वा, मुक्तः। हतोर्ऋणात् । हेतुभूताद् ऋणात् । शताद् बद्धः । हेतोः किम् ? कर्तरि टें च । शतेन बद्धः । **वा गुणतोऽस्त्रियाश्च** । गुणवाचिहेतुभूताद् **वा स्त्रीवर्जितात्** । जाड्यात्, जाड्येन वा, बद्धः । गुणात् किम्? धनेन कुलम् । अस्त्रिया किम् ? बुद्ध्या मुक्तः । **निर्धार्यभेदात्** । निर्धार्याणां भेदाद् विजातीयाद् अवधेः । पाटलिपुत्रेभ्यो माथुराः सुकुमारतराः ।

आढ्यतरा वा । भेदात् किम् ? नराणां क्षत्रियः शूरः । **कारणादेः** । अग्निरत्र धूमात् । ब्राह्मणाच्छंसी इत्यादि ॥

**(३३) ङि धाराधिभ्यां च । [१।३।४।७।]** भ्याञ्चकारौ तथैव । आधारादिभ्योऽप्रधानेभ्यो-ऽध्यादिभिर्युक्तार्थाच्च प्रधानात् ङि सप्तमी स्यात् । इह वृत्ते –

आधारनिर्धार्यवधेश्च कालाद् भावान्यचिह्नाद् ङसनादरे वा ।
तत्कारकार्हान्यविपर्ययेभ्यः स्वाम्येऽधिनाऽऽधिक्य उपेन तेनार्म् ॥१॥

तत्प्राणिहेतो निपुणो विनारं कालात् सुजर्थैरधितोऽपि पत्या ।
दायादसाक्षिप्रतिभूप्रसूतैः स्वामीश्वराभ्यां कुशलायुक्ताभ्याम् ॥२॥

ध्रियन्ते क्रिया अस्मिन्निति धारोऽधिकरणम् [**आधारो**ऽधिकरणम्] । तच्चतुर्विधम्-औपश्लेषिकं, व्यापकं, वैषयिकं, सामीप्यकं चेति । तद्वाचिनो ङि स्यात् । कटे आस्ते । तिलेषु तैलम् । गुरौ वसति । गङ्गायां घोषः । **निर्धार्यवधेः** । निर्धार्यस्यावधेः । शकन्ध्वादित्वादल्लोपः । यतो जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं ततो ङि स्वराकाराद् ख्श्च । नरेषु नराणां वा क्षत्रियाः शूराः । गोषु गवां वा कृष्णा सम्पन्नक्षीरा । गच्छत्सु गच्छतां वा धावन्तः शीघ्राः । **कालाद् भावान्यचिह्नात्** । भावः क्रिया । स चासावन्यचिह्नं च, ततो ङि । कालाच्च क्रियाचिह्नादेव । कालात् । शरदि पुष्यन्ति सप्तच्छदाः । भावात् । गोषु दुह्यमानासु गतः, दुग्धास्वागतः । **ङसनादरे वा** । ङस् षष्ठी स्याद् भावान्यचिह्नाद् अनादरेऽर्थे । रुदति, रुदतो वा, प्राव्राजीत् । रुदन्तमनादृत्य गतः । **तत्कारकार्हान्यविपर्ययेभ्यः** । क्रियां प्रति साधनत्वं येषां ते कारकार्हाः । अन्येऽकारकार्हाः । तदिति, यदा कारकार्हाणां कारकत्वम्, अकारकार्हाणां चाकारकत्वम् । विपर्ययः कारकार्हाणामकारकत्वम्, अकारकार्हाणां च कारकत्वं, तदैतेभ्यो ङि । ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । विप्रेषु तरत्सु वृषला आसते । तथा दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते । तथा ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते । तथा दरिद्रेषु भुञ्जानेषु ऋद्धा आसते । इतोऽध्यादिभिर्युक्तात् । स्वाम्यर्थेन अधिना, आधिक्यार्थेन उपेन । अधि ब्रह्मदत्ते पाञ्चालाः । अधि पाञ्चालेषु ब्रह्मदत्तः । खार्यामुप द्रोणः । **तेनार्म्** । तान्तात् क्रान्ताद् इन् । तेन् तेन युक्ताद् अर्म् इति परेण ङसिना योगाद् अर्मः आप्याद् ङिः । अधीती व्याकरणे । परिगणिती च्छन्दसि । **तत्प्राणिहेतोः** । तस्य कर्मणः प्राणिवाचिनो निमित्तात्, प्राणिसत्कनिमित्ताद् वा ङिः । चर्मणि द्वीपिनं हन्ति [दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥] प्राणिनः किम् ? लोहाय नावं जलधौ भिनत्ति ।४। निपुणादिना युक्तात् । [विना] अरम् इति न चेद् द्वितीया प्राप्ता । स निपुणो मातरि । एवं, साधुः मातरि । असाधुः मातरि । अरं किम् । साधुर्मातरं प्रति । **कालात् सुजर्थैः** युक्ताद् ङिः । सुजाद्यैरिति । घटादिपाठात् षष्ठी च । द्विरह्नि भुङ्क्ते । द्विरह्नो वा । पञ्चकृत्वोऽह्नि, अह्नो वा भुङ्क्ते । सकृदह्नि, अह्नो वा भुङ्क्ते । आधारे ङिङसौ । करणे तु, द्विरह्ना भुङ्क्ते । **अधितोऽपिपत्या** । अधिपतिना पत्या चेत्यादेः ङिङसौ स्तः । गोषु गवां वाऽधिपतिः । एवं पत्यादि । गवां गोषु वा पतिः । गवां गोषु वा स्वामी । गवां गोषु वा ईश्वरः । गवां गोषु वा दायादः । गवां गोषु वा साक्षी । गवां गोषु वा प्रतिभूः । गवां गोषु वा प्रसूतः ।] **कुशलः** [निपुणः ।] कुशलः कटकरणे

कटकरणस्य वा । आयुक्तः [व्यापारितः] **आयुक्तः** कटकरणे कटकरणस्य वा । आभ्यामासेवायामेव । अन्यत्र, आयुक्तो गौः शकटे । [ईषद् युक्त इत्यर्थः ।] आभिमुख्येन युक्तो ङिरेव । क्तालुघुः [?] ॥

**(३४) शेषे च [१।३।४।८।]** आप्यादेरन्यः स्वस्वामिसम्बन्धसमूहविकारावयवादि शेषः । तत्राप्रधानात् परे ङः षष्ठी स्यात् । राज्ञो ना । नुर्च्चरोः [?] कुलम् । पशूनां वृन्दम् । यवानां चूर्णम् । पशोः पादाः । सम्बन्धविवक्षायाम् । सुभाषितस्य शिक्षते । न माषाणामश्नीयात् । दध्नः पूर्णो घटः । घ्नतः पृष्ठं, राज्ञो दण्डं, रजकस्य वस्त्रं ददाति । वृक्षस्य पर्णं पतति । नटस्य शृणोति। नीलमुत्पलमित्यादौ तु नीलादेरपि प्रधानत्वान्न षष्ठी ।

**(३५) घदादिना ङः । [१।३।४।९ ।]** घदादिना युक्ताद् अप्रधानाद् ङः षष्ठी स्यात् । षट्पाद् इह -

आप्याध्वतेना घणपोऽन्यतो वा
घपा तु कर्तु रमि वा यपाऽर्मि ।
क्ताकेर्लडाधारस्त्रियां सुजाद्यै-
रेतेन चाराच्च तसर्थयुक्तात् ।
नप्क्काविदिज्ञः करणाच्च होमे
प्रेष्यब्रुवोः प्रस्थितहव्यतो र्मः ॥१॥

**आप्याध्वतेना** । यणे यः घत्प्रत्याहारे णः, इना च घणद्भ्यां विहितेन युक्तादाप्याद् ङस् स्यात् । गवां दोहः । उदकस्य पिबः । अपां स्रष्टा । कटस्य करणम् । स्त्रियार्गन्ता । [**घणतः**] घणपिना । अर्धस्य त्यागी । सुखस्य भोगी । वीराणां प्रसविनी । विषयाणां जयी । घता किम् ? ओदनं पचन् । घण् अप् इना किम् ? कृतपूर्वी कटम् इत्युत्पन्ने घणप्सम्बन्धो निवर्तते इति वचनम् । **अन्यतो वा** । घता युक्तादेकस्मादाप्यान्नित्यं द्वितीयाद् वा । अजाया नेता स्रुघ्नस्य स्रुघ्नं वा यद्वा अजाया, अजां वा, नेता स्रुघ्नस्य । पयसो दोहको गोर्गां वा । गोर्दोहकः पयस पयो वा । वाऽनुक्तसमुच्चये वा । द्विषतायुक्तादाप्याद् वा ङः । चौरं चौरस्य वा द्विषन् । **घपा तु** । घदन्तवर्तिना घपा घणप् स्यादित्यर्थः । युक्ताद् आप्यादेव, न कर्तुः । आश्चर्यो गवां दोहोऽगोपालकेन । [आश्चर्य] इन्द्रियाणां जयो राज्ञा । गत्यर्थाप्याद् अर्मे एव । [आश्चर्यो] ग्रामाय ग्रामं वा गमः खञ्जेन । नियमार्थं वचनम् । **कर्तुः** । घपा युक्तात् कर्तुः । भवतः आसिका । एवं शायिका, स्वापः, आसना । घना किम् ? सुशयं भवता । **रमि वा** । आप्ये सति, गम्यमाने वा, घता युक्तात् कर्तुर्वाऽऽप्यान्नित्यं षष्ठी, व्यवस्थितवाधिकाराद् अप इत्यकारप्रश्लेषाद् वा । घणप्वर्जितेन घता न वाऽब्धण्भ्यां तु कर्तुरिति सिद्धे घपेत्युक्तम् । विचित्रा सूत्रस्य कृतिः तेन तस्य वा शब्दानामनुशासनं वा । गम्यमाने अन्तर्द्धौ येन यस्य वाऽदर्शनमिच्छति, आत्मन इति गम्यते । रमि किम् ? आसिका नुः । यपाऽर्मि । यप्प्रत्याहारेण युक्तात् कर्तुर्वा ङिः अर्मि पूर्ववत् । पुनरर्मि एकस्मिन्नेवाप्ये सति धातोर्न द्वितीये [इति] नियमार्थम् । तस्य तेन वा पयः पेयम् । एकः कटः कृत्यः, कार्यः, कर्तव्यः । कर्तुः किम् ? गेयो ना साम्नाम् । अर्मि किम् ? तेन क्रष्टव्या शाखा

ग्रामम् । द्व्याप्येन धातुना यबन्तेन न स्याद् इत्यर्थः । **क्ताकेर्लडाधारस्त्रियाम्** । त्रिलघुः न याथासंख्यं **बह्वेकवचनात्** । लट्वर्तमानकाले आधारे च विहितेन क्तेन, तथा अअकाभ्यां स्त्रियां विहिताभ्यां युक्ताद् अप्रधानात् षष्ठी । राज्ञां मतः । एवं बुधः पूजितः । आधारे । इ इदमेषामासिता। इदमेषां भुक्तमोदनस्य । स्त्रियाम् । चिकीर्षा तव कटस्य । भेदका तव काष्ठानाम् । लडादौ किम्? तेन कृतम् । **सुजाद्यैः** । द्विरह्नो भुङ्क्त इत्याद्युदाहृतम् । **एतेन** । दक्षिणेन ग्रामस्य पर्वतः । **आराच्च तसर्थयुक्तात्** । आरादर्थैस्तस्प्रत्ययार्थैश्च युक्तात् । दूरं ग्रामस्य । एवम् अन्तिकं [ग्रामस्य], दक्षिणतः, उत्तरतः, पुरः, पुरस्तात्, उपरि, उपरिष्टाद् इत्यादि । **नप्क्ताविदि ज्ञः करणात्** च । नपि क्तः, असुबन्तत्वात्, तेन युक्तात् तथा अज्ञाने ज्ञः । डेरलुक् । तत्करणाच्च ङः । तस्य हसितं, नृत्तं, व्याहृतम् । चः टार्थः । तेन हसितं, नृत्तं, व्याहृतम् । [अविदि ज्ञः ।] सर्पिषो जानीते । तेन करणभूतेन प्रवर्तते, मिथ्याज्ञानं वा । तत्र रक्तो द्विष्टो वा भ्रान्त्या प्रवर्तते, तदाप्यज्ञानमेव । **होमेऽर्थे प्रेष्यब्रुवोर्मः** । आप्यात् किम्भूतात् ? अप्रस्थितं प्रस्थितशब्देनाविशेष्यं च तत् **हव्यं** हविर्वाचि च, ततो ङस् । अग्नये च्छागस्य हविषो वपायाः मेदसः प्रेष्य । एवं ब्रूहि । अनयोरिति किम् ? अग्नये च्छागं जुहुधि । हव्यात् किम् ? अग्नये गोमयान् प्रेष्य । होमे किम् ? तस्मै पुरोडाशं प्रेष्य । अप्रस्थितात् किम् ? इन्द्राय प्रस्थितान् सोमान् प्रेष्य । देवतासम्प्रदान इष्यते । च्छान्दसमित्यन्ये ॥

**(३६) स्टाप्हेतुनोलः । [१।३।४।१०।]** सु च टा च स्टा । द्वयोः पित्त्वात् सुप् टाप् च । हेतुना जातावेकत्वम् । हेत्वर्थैर्युक्ताद् अप्रधानाद् अनन्तरष्टापा तृतीयाद्याः स्युः । हेत्वर्थाच्चाप्रधानत्वात् कर्त्रादिगणानामाकृतित्वाद् वा त एव गणेषु गणान्तरविभक्तय उदाहृताः । धनेन हेतुना वसति । धनाय हेतवे [वसति] इत्यादि । एवं निमित्तकारणे पदेऽमादिभिः । थलः सर्वोभयादेर्लिदन्ताद् उभयल् तद्ग्रहेणेनासन्नग्रहणाद् अर्थादेर्हेत्वथैर्युक्तादप्रधानात् सुप्रस्वाद्याः स्युः । किं कारणं गतः ? कं हेतुं वसति ? सर्वेण निमित्तेनेत्यादि ।

**(३७) अर्थवतो सुं मुख्ययात् । [१।३।४।११।]** अभिधेयमात्रेणार्थवतो मुख्यात् प्रधानात् सुंः प्रथमा स्यात् । अनुष्टुबिह-

सत्ता लिङ्गानि मानानि एकत्वादि गुणादि च ।
शब्दानर्थाभिधेयं च अर्थमात्रं तदुच्यते ॥१॥

**सत्ता** स्वार्थः उच्चैर्नीचैर्गृहम् । अनर्थकत्वेऽपि । प्रलम्बते । अध्यागच्छति । **लिङ्गान्यत्र** यथा स्यात् । वृक्षः । कुण्डम् । कुमारी । **मानानि** । धान्यं द्रोणः, आढकः । घृतं पलम् । द्रोणादेर्न ङः । **एकत्वादि** । उक्तार्थत्वेऽपि एको ना, द्वी, बहवः । एकादेर्न ङः । गुणादि च । नीलमुत्पलम् । दीर्घं काष्ठम् । लिङ्गात् प्राप्ते नीलादे र्न ङः । **शब्दानर्थाभिधेयं च** । शब्दश्चासावनर्थकश्च तस्याभिधेयमनर्थकत्वमेव तदप्यर्थमात्रमुच्यते । खं, खपुष्पं, शशर्मृगम्, अहं, राजा, देवो, ना स्याद्, असतोऽलिङ्गाशङ्का । अर्थवतः किम् ? पदावयवान्मा भूत् । मुख्यः क्रियासम्बद्धोऽर्थः । कृतः, क्रियते वा कटः । स पचन्नास्ते । मुख्यात् किम् ? तेन सुप्यते । अभिमुखीकरणमामन्त्रणम् । तत्रापि सुं कित् स्यात् । आमन्त्रणे त्यू इति वचनात् । हे च्छात्र तव गोः । न ङेः । हे च्छात्रागच्छ । नाकित् प्राक् सिद्धेः ॥४॥ पंचपात् ।

**क्रौड्यादिगोत्रे त्वणिञोः स्त्रियां घो वा दैवयज्ञाद्यदजादितस्वाड् ।**
**आड् वा मनोऽनः स्त्रिचि पाच्च पादा डी शोणगौरादित ऊङू चोद्धयः ॥१।३।५॥ वृत्तम् ॥**

**(३८) क्रोड्यादीनाम् [१।३।५।१।]** गोत्रं पौत्रप्रभृति अपत्यम् । तस्मिन् पौत्रादौ स्त्रियामपत्ये विहितयोरणिञोरन्तो घः स्यात् । अष्टमाला चास्मिन्-

क्रौडिव्याडीक्षितिशलिरापेर्लाडिः शालाकापेः स्थलिरिह चौपाच्चैटयात् ।
बैल्वाल्लोकाद्यद् युवतौ सूतः स्यात् साकिः सौधातकि क्षत्रिये भोजः स्यात् ।
भौरिकिभौलिकिरेभ्यो भोजसूतस्वरूपयोः बैल्वयतः कुलाख्याच्च गुरूपोत्तमतोऽनृषे ॥१॥

क्रोडेरपत्यं पौत्रादि स्त्री क्रोड्या । **व्याड्या** । एवं सर्वत्र । क्षितिशलिरापेरिति । आपिक्षितिः । आपिशलिः । [लाडिः ।] शालाकापेः स्थलिः । शालास्थलिः । कापिष्ठलिः । **चौपादेः** यतः । चौपयतः । [चैटयतः । बैल्वयतः । लोकायतः ।] **युवता**वर्थे सूतः । [साकिः । सैकयतः ।] सौधातकि असुप् । क्षत्रियेऽर्थे भोजः । क्षत्रिलघु । **एभ्य** इति प्रागुक्तेभ्यो विहितयोरित्यर्थः । **भोजसूतस्वरूपयोः** । अणञोरभावेऽप्यनयोरन्तो ड्यः स्यात् पाठात् डित्त्वाच्च । भोज्या क्षत्रिया, भोजाऽन्या । सूत्या युवतिः, सूताऽन्या । [बैल्वयतः ।] कुलाख्याच्च । गोत्राख्यान्न ताच्छब्दाद् विहितयोरणिञोरित्यर्थः । पौणिक्या । भौणिक्या । मौखर्या । आख्या किम् ? काश्यपी । **गुरूपोत्तमतोऽनृषेः** । स्वभावाद् उत्तमस्त्रीप्रभृतीनामन्त्यमाह । गुरूपोत्तमात् । त्रिप्रभृत्यन्तसमीपगुर्वक्षराद् ऋषिवाचिवर्जितात् पौत्रादौ स्त्रियामपत्ये विहितयोरणिञोर्घः स्यात् । करीषस्येव गन्धोऽस्य कारीषगन्धिः । तस्यापत्यं पौत्रादि स्त्री कारीषगन्ध्या । कौमुदगन्ध्या । [वराहस्यापत्यं वाराहि । तस्यापत्यं पौत्रादि स्त्री] वाराह्या । औडुलोम्या । पौत्रादौ किम् ? वाराही । अणिञोः किम् ? आर्त्तभागी । विदाद्यञ् । अनृषेः किम् ? वासिष्ठी । रुष्यण् । गुरूपोत्तमात् किम् ? औपगवी । स्त्रियां किम् ? वाराहिः ।

**(३९) वा दैवयज्ञ्यादि । [१।३।५।२।]** एतदन्तः स्त्रियां स्वार्थे द्यो वात्र चतुर्ग्रा । दैवयज्ञिः । शौचिवृक्षिः । सात्यमुग्रिः । काण्ठेविद्धिः । ङीसिः ३ छन्दोऽर्थम् । दैवयज्ञिः इत्यादि । देवयज्ञस्यापत्यमनन्तरं पौत्रादिर्वा स्त्री दैवयज्ञ्या, दैवयज्ञी ।

**(४०) अदजादितस्वाड् । [१।३।५।३।]** आदन्ताद् अजादिभ्यश्च स्वार्थे स्त्रियामाड् स्याद् अतः । खट्वा । शर्वा । देवदत्ता । पृथगधिकारार्थम् अजादौ । उपजातिषट्पात् । आड्याः-

अजैडकाऽश्वा चटका च वत्सा स्यान्मूषिका कोकिलबालहोडा ।
पाका च मन्दा च विलातकन्या पूर्वापहाणा अपरापहाणा ॥१॥

ज्येष्ठा कनिष्ठेति च संप्रहाणा कुञ्चोष्णिहा देवविशा न वेति ।
जातिस्तु शूद्राऽमहदाद्यमूला स्यान्मध्यमा मध्यफलादमीभ्यः ।
भस्त्रास्त्रिपिण्डाजिनसंसणेभ्यः प्राकाण्डतत्प्रान्तशतैकपुष्पात् ॥२॥

नञ् विद्यमानादिसहादिस्वाङ्गात् क्रोडादितो नाम्नि मुखान्नखाच्च ।
कृतान्मितात् स्यात् प्रतिपन्नजातात् स्कंबल्यसङ्ख्याचितकालबिस्तात् ॥३॥

**अजा एडका** इत्याद्याऽनन्ताः । **कोकिलादेश्चात्** देयः । **कुञ्चाद्या ३ न वा**ऽऽडन्ताः । कुङ् कुञ्चा ६ नवेत्यत्र हलो न्वापाठः । अलन्ताद् वा आड् । अर् । अरिर् । अन्त्याजाद्यलोपार्थम् । दिक्, दिशा, वाक्, वाचा इत्यादि । **शूद्रा जातिः** । जातिः किम् ? शूद्रस्य भार्या शूद्री । अमहदादि किम् ? महाशूद्री आभीरजातिः । **फलाद्** आड् अमीभ्यः ६ पतद्धस्त्राफला ६ । **प्रागादेः** ६ पुष्पात् । प्राक्पुष्पा ६ । **नञादेः स्वाङ्गात्** । अकेशा । विद्यमानकेशा । स्चादि छन्दोऽर्थम् । सकेशा ३ । एवमनुदरादि ३, अमुखादि ३ । नञादेः किम् ? दीर्घकेशी । **क्रोडादितः** स्वाङ्गात् । कल्याणक्रोडा। एवं कल्याणखुरा । कल्याणगौरवा । कल्याणोरवा । कल्याणवाला । कल्याणशफा । कल्याणगुदा । आदिराकृत्यर्थः । सुभगा, सुगला आदि । तथा गौर**मुखा** । शूर्प**णखा** । नाम्नि किम् ? उत्तुङ्गमुखी । जातेश्चाङ्गाच्च क्ता डीबाधार्थम् । कृदतादेः । कुण्डकृता । कुण्डमिता । कुण्डप्रतिपन्ना । कुण्डजाता। दन्तकृता । दन्तमिता । दन्तप्रतिपन्ना । दन्तजाता । कृतादेः ४ किम् ? पलाण्डुभक्षिती । शङ्खभिन्नी। स्कम्बल्यादेः । पिन्मानादित्युक्तेः । द्विगोरणादिलुकि मानभूतात् कम्बल्यादेः । द्विकम्बल्या । दिशता । द्व्याचिता । द्विवर्षा । द्विबिस्ता । एभ्यः ४ किम् ? द्विकुड्वी ॥

**( ४१ ) आड् वा मनः । [ १।३।५।४। ]** मन्नन्तात् स्त्रियां स्वार्थे वाऽन् । द्वे दामे दामानो। सीमे सीमानौ । पामे पामानौ । अतिनस्मनां मुख्यामुख्यानां ग्रहणम् । अतिप्रथिमे । पुनरात् किम्? डी मा भूत् ।

**( ४२ ) अनः सि । [ १।३।५।५। ]** अनन्ताद् बहुव्रीहौ वाऽर् । सुपर्वे सुपर्वाणौ । सत् किम् ? अतिपर्वणी यष्टिः । सन्निति शोषणादिपाठात् । बहुराज्ञौ च । [बहुराजा, बहुराजानौ, बहुराजानः ।] सित् किम् ? अतिराज्ञी ।

**( ४३ ) ऋचि पाच्च पादा । [ १।३।५।६। ]** शिति ऋच्यर्थे पाद् पादादन्तो वा स्यात् पाच्च वा, न र्डा । त्रिपादा त्रिपाद् ऋक् । पञ्चपदा पङ्क्तिः इत्यादि । पादार्थपदे न ।

**( ४४ ) ङी शोणगौरादितः । [ १।३।५।७। ]** शोणादिभ्योऽदन्तेभ्यो वा ङी, गौरादिभ्यो नित्यं पार्थक्यात् । आदिमे दोधकवृत्तगाथा-

> शोणविशाल विशङ्कटचण्डपद्धतिवाड्गरहंश्च पुराणः ।
> स्यात् कमलः कृपणो विकटः सन् स्याद्धरुजः पुरुषः पिदुदारः ॥१॥
>
> स्वाङ्गादमुख्यादुदरौष्ठजङ्घाशृङ्गाङ्गगात्रादथ दन्तकर्णात् ।
> पुच्छाच्च कण्ठादथ नासिकायाः गुणादुतोऽचोऽप्यखरोरितोऽक्तेः ॥२॥
>
> नाम्नि क्त नीलादथ चन्द्रभागादवस्त्रजातेः सिति तादरालोप् ।
> कल्याणतः क्नः पलितासित्तात्तः नो लोहितैताद्धरिताच्च श्येतात् ।
> कान् क्षत्रियार्यस्य वनो २ गाथा ॥३॥

शोणी शोणा इत्यादि । सत्पोऽनन्होक्ता वा ङी सिति । प्रियराजे । प्रियराजानौ । प्रियराज्यौ द्वौ । प्रियदध्न्यान् । भात् किम् ? सुपर्वे । सुपर्वाणौ । सित् किम् ? अतिराज्ञी । **स्याद्** बहुव्रीहौ पादोऽपि । द्विपदी । द्विपाद् । व्याघ्रपदी । व्याघ्रपाद् । **पुरुषः पित्** । पित्त्वाद् द्विगोरणादिलुकि

मानभूतात् पुरुषात् । त्रिपुरुषी । त्रिपुरुषा रज्जुः । पित् किम् ? तैः कृता पञ्चपुरुषा । **स्वाङ्गादमुख्यात्** । दीर्घकेशी । दीर्घकेशा । अतिकेशी । अतिकेशा । उत्तुङ्गमुखी । उत्तुङ्गमुखा । अत्र श्लोकः-

अद्रवन्मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत् तथायुतम् ॥४॥

अद्रवत् किम् ? बहुकफा । मूर्तिमत् किम् ? बहुज्ञाना । प्राणिस्थं किम् ? दीर्घमुखा शाला । अविकारजं किम् ? बहुशोफा । अतत्स्थं तत्र दृष्टं च तदपि स्वाङ्गम् । दीर्घकेशी । दीर्घकेशा रथ्या । तेन चेत् तत् तथायुतम् । पृथुस्तनी । पृथुस्तना प्रतिमा । स्वाङ्गात् किम् ? *बहुजवा । अमुख्यात् किम् ? सुग्रीवा । यस्मिन् छिन्नेऽपि प्राणी न म्रियते तदप्रधानम् । तथैवोदरादेः ।* किन्त्वेभ्य एव बह्वच्संयोगोपान्तेभ्यः । तलोदरी इत्यादि । [तलोदरा । बिम्बोष्ठी । बिम्बोष्ठा । समजङ्घी । समजङ्घा । तीक्ष्णशृङ्गी । तीक्ष्णशृङ्गा । मृद्वङ्गी । मृद्वङ्गा । तनुगात्री । तनुगात्रा । चारुदन्ती । चारुदन्ता । लम्बकर्णी । लम्बकर्णा । कल्याणपुच्छी । कल्याणपुच्छा । कलकण्ठी । कलकण्ठा । दीर्घनासिकी । दीर्घनासिका ।] **गुणाद् उतोऽचोऽप्यखरोः** । अचः परादर्थादेकादेकाल्व्यवहिताद् गुणवाच्युकारान्ताद् अखरोः । पट्वी । पटुः । मृद्वी । मृदुः [कन्या] । विभ्वी । विभुः । बह्वी । बहुः । गुणात् किम् ? आखुः । [जातिशब्दोऽयम् ।] अचः किम् ? पाण्डुः [इयं कन्या ।] अखरोः किम् ? खरुः [इयं कन्या । श्वेता पतिंवरा वेत्यर्थः ।] **इतोऽक्तेः** । इदन्तात् स्त्रीलिङ्गाद् अक्तेः, उपलक्षणत्वाद् अक्तार्थात् । शक्तिः, शक्ती । शस्त्रं, शस्त्री । राजा, राज्ञी । अङ्गुलिः, अङ्गुली । अक्तार्थात् किम् ? पङ्क्तिः । अकरणिः । **नाम्नि क्तनीलात्** । संज्ञायां क्तान्तान्नीलाच्च । प्रबद्धविलूनी । प्रबद्धविलूना । नीली । नीला । [चन्द्रभागात् ।] चन्द्रभागी नदी । चन्द्रभागा । अन्ये त्वनदी चेत् । **अवस्त्रजातेः सिति तात्** । अनाच्छादाज्जातिवाचिनः परस्मात् क्तान्ताद् बहुव्रीहौ । पलाण्डुभक्षिती । पलाण्डुभक्षिता । सुरापीती । सुरापीता । अनाच्छादात् किम् ? वस्त्रच्छन्ना । जातेः किम् ? सुखप्राप्ता । **क्नः पलितासितान्तः** । आभ्यां वा ङी, तस्यान्तः क्नः स्यात् । पलिक्नी । पलिता । असिक्नी । असिता । **[नो] लोहितादेः** । [लोहित एत हरित श्येत इत्येतेभ्यो] वा ङी तस्यान्तो नः स्यात् । लोहिनी । लोहिता । एवम् [एनी । एता । हरिणी । हरिता । श्येनी । श्येता । भरणी । भरता । रोहिणी । रोहिता ।] कान् क्षत्रियार्यस्य । आभ्यां वा ङी, तस्यामनयो किद् आनागमः स्यात् । क्षत्रियाणी । क्षत्रिया । आर्याणी ॥ आर्या । अत्राख्यार्थं पाठः । त्राख्यात् तु, क्षत्रियी । आर्या । [आर्यस्य भार्या इत्यर्थः ।] **वनो २** । वन्प्रत्ययांन्ताद् वा ङी, तस्यां वनोऽन्त रः । धीवरी । धीवा । पीवरी । पीवा । शर्वरी । अवावरी । सहयुध्वा । वेति बहुलम् । गाथेति पञ्चपदी ॥३॥

इतो **गौरादि** ।
अत्रेन्द्रवज्रा हरिणी च दोधकौ
गाथा चत्वार उपजातिसंयुते ।
शार्दूलमाद्यद्वितयं च मालिनी
अस्यां च तुर्यादिभवात्वनुष्टुभौ ॥५॥ अयं गणः च्छन्दोनामसंग्रहः ।

गौरोद्र्दसूर्दाऽऽरटपाण्डभङ्गाः संवादनालब्धेऽधिकारपोटाः ।
काकादनालक्षिचराश्च चोरः शर्कारशष्कण्डभषाश्च गोहः ॥६॥

शबलगवयौ भ्रूणद्रोणावरीहणधातकौ
वरटवकयौ तक्षन्मत्स्यौ वृसातसमालकाः ।
बदरसुषवौ स्वन्तर्कारौ पिशङ्गपुटद्रुमाः
कुवलयहयौ सारङ्गर्ष्यावलिन्दमहोमठः ॥७॥

भौरिकिभौलिकिगौतमसूर्याः स्वांगसृपाटमनुष्यपटाश्च ।
आढकफाण्टकदेहनपूषाः मण्डरमण्डलवेतसशूर्पाः ॥८॥

शातनपातनतेजनसूचाः आमलकोउकणसेचनबिम्बाः ।
विष्कलसल्लकमालतपिण्डाः औदहमानिनदप्लवदेवाः ॥९॥

क्रोष्ट्री पृथिव्यनड्वाही स्यात् सौधर्मी हरीतकी एषणः करणे ।
विकलास्तरणौ लवणस्तथा कदरः कदलोऽनड्वह्याय: स्थूणपितामहः ॥१०॥

रेवती रोहिणीभे करीरी कौशातकी पिप्पली मेधमातामहौ याना ।
सूर्मैचि श्रोण्यां कटोऽथो पटः आग्रहायण्यथो प्रत्यवाद्रोहणः ॥११॥

स्दाम्नो वयःस्हायनतो द्विगोश्चाक्षेत्रेऽपि काण्डाल्लुकि मानतः पा ।
वयस्यनन्त्येऽञ्जृगितोऽस्वसृभ्यः टिड्ढाणञष्ठञ्ठणतः षितोऽन्ये ॥१२॥

स्वाङ्गान्तात् कबराच्छरान्मणिविषात् स्पुच्छादिवात्स्पक्षतः
नीलादोषधिप्राणिनां च करणात् क्रीतात् तथाल्पे तितात् ।
संज्ञाकेवलभागधेयकुशलात् पापावराद् भेषजात्
मामक्यार्य कृती समानसदृशः सोर्मङ्गलाद् भिक्षुणी ॥१३॥

भाजी च पक्वाऽऽवपनं च गौणी कृष्णा च काली कबरी सुकेशे ।
आयस्यमत्रे कुशकुण्डतो डी स्थूला च नागी त्वकृता स्थली च ॥१४॥

मत्सी सखी कामुकतो रिरंसुः न्राख्याच्च भार्येति अपालकादेः ।
अन्तः कुसीदाग्निवृषाकपीनां पूतक्रतोश्चेत्कुसितान्मनोर्वैच् ॥१५॥

वरुणभवमृडेन्द्राचार्यशर्वाच्च रुद्रात्
यवनहिमअरण्याल्लिप्युरूरौ यवात् कान् ।
इञित इति नृजातेः पाककर्णास्त्रियो यात्
भवति च फलपुष्पात् पर्णमूलाच्च वालात् ॥१६॥

यञोऽषावटाद्वायनो लोहितादेश्च कौरव्यमाण्डूकयोरासुरेः स्यात् ।
सशिश्वी न पत्युः पदाद् वा सपत्न्यस्ति यूनस्ति देवी च सूर्यादिनाऽना ॥१७॥

कल्माषमूलाटबृहच्च सूदः कालाब्धिलोहाण्डमहच्च पुत्रः ।
आलम्बिभोलिङ्गि तथा च नाटः आसन्दशष्कुलमथान्यथा वा ॥१८॥

गूदर्दखूदर्दसमीवालतनुभिदकेदरकादर्दना
हरिणलवयौ मूषः कौशातनोभयस्त्रवाः ॥१९॥

तरुणस्तलुनो देहः तमालः पनसस्तथा ।
स्वालकः स्वाल्लतो वापि श्लेषो यूषः पुषोऽपि वा ॥२०॥

**गौरी, ऊदर्दी** इत्यादि । छन्दः षट्कं सुगमं, किन्त्वीकारान्तानां पाठः । अपुंवदर्थः । **पृथिवी**भार्यः । **एषणः करणे**ऽर्थे । एषत्तनया एषणी । एषणाऽन्या । **रेवती** । **रोहिणी** । भे नक्षत्रेऽर्थे । रेवता । रोहिताऽन्या । एवं **कटी** श्रोण्याम् । **प्रत्यवरोहिणी**त्यर्थः । **स्दाम्नः** । सिति दाम्नो द्विगोः । द्विदत् । द्विगोः किम् ? उद्दानाश्वा । **वयश्चेद्** गम्यते सिति हायनाद् द्विगोः । चतुर्हायणी गौः । द्विगुवयसी किम् ? आद्यहायना । द्विहायना शीला । द्विगोश्च अदन्तात् । पञ्चपूली । परत्वात् पञ्चाजी । अस्य किम् ? पञ्चधेनुः । पीति द्विगोरणादिलुकि मानात् काण्डाद् अक्षेत्रे । द्विकाण्डी । अक्षेत्रे किम् ? द्विकाण्डा क्षेत्रभक्तिः । मानात् किम् ? क्रीते त्रिकाण्डा । लुकि मानतः पा । सुपः सर्वत्र सम्भवाद् अणादिलुकि द्विगोर्मानवाच्यदन्तात् । पा इति पितोऽन्यत् पोतोऽप्येवंगुणात् तथोदाहृतम् । स्कम्बल्यादेः । पुरुषः पित् । पिकाण्डात् । द्वौ कुडवौ परिमाणमस्य द्विकुडवी । एवं त्र्याढवी । मानात् किम् ? क्रीते त्रिकुडवा । पञ्चाश्वा । समाहारद्विगुत्वादमानेऽपि । पञ्चाढकी । **वयस्यनन्ते** । अचरमे वयसि स्वतोऽदन्तात् । कुमारी । किशोरी । वर्करी । करभी । वधूटी । चिरिण्टी । अनन्ते स्थविरा । वृद्धा । [अतः] किम् ? द्विवर्षा । उत्तानशया । लोलितपादिका । अर्थाद् वयोगतिर्न शयपदात् । अजाद्याकृतित्वाद् वा । मध्यादिवत् स्पष्टार्थां वृद्धकुमारीति । वृद्धादन्त्यत्वगतिर्न कुमारात् । अतः किम् ? शिशुः । अञ्नृगितोऽस्वसृभ्यः । अञ्च् न् ऋ उगित् एतदन्तात् । प्राची । अतिपर्वणी । कर्त्री । भवती । भवन्ती । श्रीमती । धातोरुगितोऽञ्च एव । उखास्रत् । डा । अस्वसृभ्यः किम् ?

स्वसा ननन्दा दुहिता च माता तिस्रा स्याच्चतस्राङ्यृतो न ।
नान्ता च संख्याऽऽड् भ च युष्मदस्मद् ऋत्स्त्रीस्वतः कष्टमलिङ्गिनोऽन्ये ॥२१॥

**ङ्यृतो** न । स्वस्रादेः ऋतो ङी न स्यात् । **नान्तसंख्या भश्च** । पञ्चनदी । [सप्तरोहिण्यः ।] मुक्ते आत्र च । **न चाड् युष्मद् अस्मद् स्वतः** स्त्रीत्वम् । **ऋतोऽन्ये त्वलिङ्गिन** इति **कष्टं** दुर्विज्ञेयम् । **टिड्ढाणञ्ष्ठञ्ठणतः** । टित् ढ अण् अञ् एषां ठञणोश्चातः अदन्तात् । कुरुचरी । ऊरुद्वयसी । ढ । सौपर्णेयी । शाबलेयी । अण् । कुम्भकारी । औपगवी । अञ् । औत्सी । स्त्रैणी । पौंस्नी । ठञ् । लावणिकी । अण् । आक्षिकी । प्रत्ययग्रहणात् स्वाङ्गाद् अमुख्याद् इत्युक्तेः स्वार्थ एवान्यविधिर्वा । प्रियकुरुचरा । षष्ठ्याऽतोर्विशेषणात् पाणिनीयमधीते पाणिनीया । तदन्तस्त्रीत्वविशेषणात् काशकृत्स्नीं मीमांसामधीते काशकृत्स्ना । **षितोऽन्ये** । स्वरार्थं पृथक् । नर्तकी । **स्स्वाङ्गान्तात्** । सिति स्वाङ्गान्तात् परात् क्तन्तात् । शङ्खभिन्नी । केशलूनी । स्वाङ्गात् किम् ? वस्त्रच्छन्ना । सित् किम् । हस्ता कृतादेः अजादिपाठाद् दन्तकृता । **कबराद्युपमानाभ्यां सिति पुच्छात्** । कबरपुच्छी । उलूकपुच्छी [सेना ।]

**इवात् सिति पक्षात्** । उलूकपक्षी [शाला ।] स्वाङ्गादमुख्यादिति प्राप्ते । **नीली** ओषधिः । नीली वडवा । **ओषधिप्राणिनोः** किम् ? नीला शाटी। प्राल्लघुः । **करणात्** परात् **क्रीतात्** तथाकरणादे**त्वाल्पोक्तौ** क्तान्तात् तीति समासे । वस्त्रक्रीती । सूपविलिप्ती स्थाली । [अल्पसूपेत्यर्थः ।] करणात् किम् ? सुक्रीता । [दुष्क्रीता ।] ति किम् ? वस्त्रेण क्रीता । [वसनेन क्रीता ।] अल्पोक्तात् किम् ? चन्दनानुलिप्ता कन्या । [अनल्पेनेत्यर्थः ।] **संज्ञा** चेत् **केवलादेः** । केवली । [भागधेयी मित्रावरुणयोः । कुशली । पापी । अवरी । भेषजी । मामकी । आर्यकृती ।] इदन्तावन्त्यौ च्छन्दोऽर्थम् । समानसदृशः समानरूपात् । संज्ञावाच्यन्यस्मादपि समानी । अधिकरणी । ऊद्वाहिनी । अक्षौहिणी इत्यादि । सुमङ्गली भिक्षुणी निपात्यते । संज्ञा किम् ? केवला । [कुशला । पापा । अवरा । भेषजा । मामका । आर्यकृता । समाना । सुमङ्गला] इत्यादि । भाजी भवति पक्वा चेत् । गौणी आवपनं चेत् । काली कृष्णा चेत् । कबरी सुकेश केशविन्यासश्चेत् । आयसी चेदमत्रं चेद् यथासंख्यं कुशी कुण्डी स्तः । नागी स्थूला चेत् । स्थली अकृता अकृत्रिमा चेत् । मत्स्यस्य मत्सी । सख्युः, सह खेन, सखोऽस्य वा सखी च स्त्रियाम् । कामुकी रिरंसुश्चेत् । पक्वाद्याः किम् ? भाजा [। गौणा । काला । कबरा । आयसा ।] आद्याः । [त्राख्याच्च ।] पुंसः आख्याभूताद् अदन्तात् तद्योगात् तेन भार्या चेत् प्रतीयते । प्रष्ठस्य भार्या प्रष्ठी । गणकी । कुमार्यां भवः कौमारस्तस्य भार्या कौमारी । अपालकादेः किम् ? गोपालिका । आद्याकृत्यर्थः । अतः किम् ? देवता । कुसीदादेः अन्त ऐच्च । कुसीदायी । अग्नायी । वृषाकपायी । पूतक्रतायी । कुसीतार्या ।] मनोर्वा ङी तत्र ऐच्चान्तः । मनायी [मनोर्भार्या, मनावी] मनुः । वरुणादेर्ङी तत्रैषां कानागमः । वरुणानी । एवमादेः [भवानी, मृडानी, आचार्याणी । शर्वाणी । रुद्राणी ।] लिप्यादौ । यवनानां लिपि यवनानी । उरु महद् हिममरण्यं च हिमानी, अरण्यानी । यवात् कान् दोषे एवेष्यते । दुष्टो यवो यवानी । इञित इति नृजातेः । इञा सामान्येन पार्थक्यात् । सुतङ्गमनिर्वृत्ता सौतङ्गमी । इतो मनुष्यजातिवाचिनः । अवन्ती । कुन्ती । यान्ताच्च नृजातेः । औदपेयी । तित् किम् ? अवन्ती । यतः क्विप् । अवन्तीः । पाककर्णास्त्रियोयात् । इष्टेर्जातिमात्रं वर्तते जातिवाचिपाककर्णान्तात् । ओदनपाकी । आखुकर्णी । अस्त्रियो नित्यं स्त्रियामदृष्टात् । स्त्रियामन्यत्र च दृष्टात् । कुक्कुटी । शूकरी । जातेः किम् ? स्त्रियः मक्षिका । यात् क्षत्रिया स्वार्थे एव । प्रियकुक्कुटा । अतः किम् ? तित्तिरिः । जातिवाचिफलाद्यन्तात् । दाडिमफली । शङ्खपुष्पी । पद्मपर्णी । दर्भमूली । गोवाली । यञः । गार्गी । वात्सी । [अषावटात् ।] न षकारावटाभ्यां विहितात् । शार्कराक्ष्या । पौतिमाख्या । गौकाक्ष्या । आवट्या । वाऽऽयनः । यञन्ताद् ङी, तत्र च यञन्तो वा आयनः स्यात् । नाषावटाद् वर्तते । गार्गायणी । शार्कराक्षायणी । आवट्यायनी । वोदाहृतः । [लोहितादेश्च ।] लोहितादेरायनो नित्यं पार्थक्यात् । कर्तृवशाद् गणसमाप्तेः सकलतो घञः । लौहित्यायनी । शाण्डिययनी । मनायीशब्दान्मानाय्याल्यानी । नाणादौ पुंस्त्वं, पाठात् । वतण्डाद् अनाङ्गिरसे वातण्ड्यायनी । शिवाद्यणः वातण्डी । आङ्गिरसे स्त्रियां यञो लुग् जातेः ङी । वतण्डी । कपेराङ्गिरसे काप्यायनी । अन्यत्र कापेयी । सकलान्तात् किम् ? काण्ठी काण्ठ्यायनी वा । ण्याऽणिञन्तस्य कौरव्यादेः । कौरव्यायणी । [माण्डूकायनी । आसुरायणी ।] [सशिश्वी न पत्युः ।] सित् अशिश्वी । सित् किम् ? अशिशुः । पत्युरन्तो न, स्वभार्या चेत् । पत्नी । वृषलस्य पत्नी । पदाद् वा । परस्मिन् यत्र समासार्थं भार्या चेत् समस्तपदा परात् पत्यु ङी तत्रान्तो नः । आशापत्नी । आशापतिः । वृद्धपत्नी । वृद्धपतिः । सपत्न्यस्ति । ति समासे । कृतङीनान्ता निपात्यन्ते भार्या चेत् । समानः पतिरस्याः सपत्नी । एकपत्नी । वीरपत्नी । पिण्डपत्नी । पुत्रपत्नी । ङ्यन्तनिपातनात्र

पुंस्त्वम् । सपत्नीभार्या । यूनस्ति । यूनस्ति स्यात् । ङ्यपवादः । युवतिः । यूनी इत्यन्ये । सूर्यस्य भार्या सूर्या देवी चेत् । नारी तु सूरी । आद्याकृत्यर्थः ।

अन्तर्वत्नी च गर्भिण्यां कान्वोपाध्यायमातुलात् ।
भार्या पाणिगृहीतीति च पतिपत्नी नसूधसः ॥२२॥

अन्तर्मती त्वगर्भिणी । उपाध्यायमातुलादी तत्रास्य कान् वा । उपाध्यायानी । उपाध्यायी । मातुलानी । मातुली । अभार्या तु पाणिगृहीता । पतिमती च । नसूधसः । ऊधसो ङी तत्रास्यान्तो नः सिति । द्व्यूध्नी । कुण्डोध्नी । सित् किम् ? प्राप्तोधाः [गौः] । स्त्रियामेव । महौधो धेनुकां गणमध्ये । आदि किम् ? परं च्छन्दस्त्रयं केषाञ्चिदेवेष्टम् । कल्माषीत्यादि । आसन्दशष्कुल- मथान्यथा वा । आनन्दसं इति वान्ये । एवमुत्तरश्लोकद्वयमुक्तरूपमन्यथा वा, नास्ति वा ॥

**( ४५ ) ऊङ् चोद्भ्यः । [ १।३।५।८। ]** भ्यस्तणार्थः । अत्र गाथा -

नृजात्युतोऽयो भवतीह पङ्गूः बाहू ततः कद्रूकमण्डयलूभ्याम् ।
सनाम्नि अप्राण्यहनुभ्य ऊरोः वामोपमा संहितलक्ष्मणादेः ।
सहात् शफात् स्यात् सहितात्तिस्वस्रूः ॥१॥

नृजातिवाच्युदन्तात् स्त्रियामुङ् स्यात् । ब्रह्मबन्धूः । वीरबन्धूः । कुरूः । उतः किम् ? खलपू। अयोः किम् ? अध्वर्युः सा । ङकारो घङिति प्रत्याहारार्थः । पङ्गोरुङ् पंगूः । बाह्वन्तादेः सऊङ् नाम्नि । मद्रबाहूः । भद्रबाहूः । कद्रूः । कमण्डलूः । नाम्नि किम् ? वृत्तबाहुः । अप्राणिवाचिभ्यो हनुउदन्तेभ्यः । अलाबूः । कर्कन्धूः । दिधिषूः । प्राणिभ्यः । कृकवाकुः । हनुभ्यः । हनुः । परशुः । रज्जुः । इत्याकृतिगणः । तीति समासे । वामादिभ्य उरोः । वामोरूः । उपमानात् करभोरूः । कदलीस्तम्भोरूः । एवं श्वसुरस्य भार्या श्वश्रूः ॥५॥

**ङ्यांड्यण्ययञ्यो लुगथास्य स्थङ्योरागस्त्यसूर्यस्य लुचि ङ्यङन्ते ।**
**गौणो लघुर्गौरपि गौणीसूची केऽण्डयोर्न वाऽऽङः कपि के न वाऽऽडीत् ॥१।३।६॥ वृत्तम् ॥**

**( ४६ ) ङ्यां ड्यण्ययञ्ञो लुगथास्य । [ १।३।६।१। ]** ङीप्रत्यये परे यण् ण्य यञ् एषां यः तथा अस्य च लुक् सौ मी । वार्कणी । गार्गी । अस्य शोणी । गौरी ।

**( ४७ ) स्थङ्योरागस्त्यसूर्यस्य [ १।३।६।२। ]** योऽलुक् । आगस्तीयः । आगस्ती [प्रभा]। सूरी नारी । तेनैकदिक् । सौरी सा सौरीयः ।

**( ४८ ) लुचि ङ्यङ् । [ १।३।६।३। ]** अणादिलुचि सत्यां ङ्यङ्प्रत्याहारो लुक् स्यात् । पञ्चकारीषगन्ध्या देवताऽस्य पञ्चकारीषगन्धिः । पञ्चशोणः । पञ्चेन्द्रः । पञ्चाग्निः । द्विस्त्रः । पञ्चयुवा। क्रीतेऽपि । द्विखट्वः । पञ्चमत्स्यः ।

**( ४९ ) अन्ते गौणो लघुर्गौरपि । [ १।३।६।४। ]** गोरन्तस्थो ङ्यडपि गौणोऽप्रधानो लघुः स्यात् । अतिखट्वः । निष्कौशाम्बिः । अतिकरभोरुः । अतिगुः । अन्ते किम् ? स्त्रीप्रियः । बहुगोधनः । गौणः किम् ? सुस्त्री । सुस्त्रिः ।

**(५०) गोणीसूची ।** [ **१।३।६।५।** ] लुचि साधूस्तः । पञ्चगोणिः । [दशसूचिः ।]

**(५१) केऽण्ड्योः ।** [ **१।३।३।६।** ] किप्रत्यये परे अण् डीत् एतयोः हृस्वः । ज्ञका । ब्रह्मबन्धुका । शोणिका । अण्डयोः किम् ? गोका । डी अपुंस्त्वार्थम् ।

**(५२) न वाऽऽडः कपि ।** [ **१।३।६।७।** ] कपि परे यथासंख्यम् अण्डयोर्न, आडो वा, हृस्वः । सुस्त्रीकः । सुकडूकः । वा आडः ॥ सुज्ञकः ।

**(५३) के न वाऽऽडीत् ।** [ **१।३।६।८।** ] स्त्र्यार्थात् । परोऽत्र, स्त्र्यर्थान्नित्यं स्त्रीलिङ्गवृत्तेर्विहिताद् आडस्थाने इच्च हृस्वश्च वा स्यात् । केऽनि सादि अनकारके आन्परे परतः । खट्विका । खट्वका। खट्वाका अखट्विका । [अखट्वका । अखट्वाका ।] बहुखट्विका । [बहुखट्वका । बहुखट्वाका ।] स्त्र्यर्थात् किम् ? सर्विका । अतिखट्विका । के किम् ? खट्वाता । अनि किम्? दुर्गकाकन् । आडि किम् ? सुद्राखट्वाकः ॥६॥

**स्त्र्यर्थादधातोरसुपो यकान्ताद् वृन्दारभस्त्रद्वयजसूतपुत्रात् ।**
**ज्ञैषस्वतस्त्यादपदान्नरात् के वा वर्तिका स्याच्छकुनौ तु पादः ॥१।३।७॥ वृत्तम् ।**

**(५४) स्त्र्यर्थाद् अधातोरसुपो यकान्ताद्** इत्यादि । [ **१।३।७।१।** ] अधातोर्यकान्तात् वृन्दारादेश्च परस्याडः इद् वा स्यात्, असुबन्ताद् विहितात् परे केति परतः । इभ्यिका । इभ्यका । क्षत्रियिका । क्षत्रियका । चटकिका । चटकका । मूषिकिका । मूषिकका । वृन्दारिका । वृन्दारका। अविद्यमाना भस्त्रा माल्या अभस्त्रिका । अभस्त्रका । अजिका । अजका । अनजिका । अनजका । पुत्रिका । पुत्रका । ज्ञिका । ज्ञका । एषिका । एषका । एषेतिनिर्देशाद् एतिकाश्चरन्ति इति नित्यम् । स्विका । स्वका । अधातोः किम् ? सुशयिका । अशयिका । असुपा डि किम् ? अद्वके अनेषकाद् अत्याद् अयदात्याद् अस्वतेऽदश्च, तेन त्यप् त्यण् अत्, अपदादीनां नित्यमित् स्यात्, असुपाऽडिके डि। इहत्यिका । दाक्षिणात्यिका । अतः । मुण्डिका । हारिका । बहुचर्मिका । धातोः सका । अके । नन्दनानि । नन्दतान्नन्दका । देवका । अनानिकारकः । सुपः । बहुपरिव्राजका । अपदां किम् ? श्लोकोऽत्र-

यत्तदौ क्षिपकाविति ध्रुवका चटकैर्नका ।
ज्योतिस्तां तव पित्रेषु तारका वर्णकाऽष्टका ॥१॥

यका सका क्रमेण । तारका ज्योतिषि । वर्णका तान्तवे । अष्टका पित्र्ये । अन्यत्र तारिकाद्या ।

**(५५) नरात् के ।** [ **१।३।७।२।** ] पुनः के सामान्यार्थम् । अत इत् स्यात् । नरान् कायति नरिका ।

**(५६) वा वर्तिका स्याच्छकुनौ ।** [ **१।३।७।३।** ] वर्तका वा, अन्यत्र वर्तिका । **पादस्तृतीयः** ॥७॥

**[इति श्री बुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे प्रथमाध्याये तृतीयः पादः ॥]**

## [ ॥ अथ प्रथमाध्याये चतुर्थः पादः ॥ ]

**शक्तोस्तु चार्थे भपुनर्वसूः सुप् द्वन्द्वस्ति पुष्याद् बहुलं सुपादि ।**
**वासापरार्थे बहुव्रीहिसंख्याः स्यादव्ययीभाव च वंश्यरूपैः ॥१।४।१॥ वृत्तम् ॥**

**(१) शक्तोस्तु चार्थे । [१।४।१।१।]** चशब्देनैव प्रत्यायितोऽर्थः स्वार्थः, इतरेतरयोगः, समाहारश्च । तस्मिंस्तच्छब्दानां प्रयोगे यः कश्चिदेकान्यशब्दार्थप्रत्यायने शक्तः समर्थः सोऽस्तु । स प्रयोक्तव्यो नेतर इत्यर्थः । कः शक्तः ? कोऽस्त्वर्थः ? षट्पादिह -

चार्थे समर्थः सदृशैकशेषो वृद्धश्च यूनैव स चेद् विशेषः ।
स्त्री ना स्त्रिया ना सुतया च पुत्रो भ्राता भगिन्या नबान्येन वैकम् ।
स्वस्रा च मात्रा श्वसुरः पिता वाऽन्यैः स्वैस्त्यदोऽन्त्योऽलघुगोष्विति स्त्री ॥१॥

सदृशेषु रूपेणार्थेन वा सरूपेषु एकशेषो भवति । एकः शिष्यतेऽन्ये निवर्तन्ते । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः । एवमक्षा वादाः माषाः । चक्रदण्डौ कुटिलदण्डौ वा । शक्तः किम् ? माता जनयित्री । माता च धान्यस्य । एकश्च एकश्च । अन्यार्थे त्वेके । चार्थे किम् ? अक्षमक्षं पश्य । समुच्चयः । तानानय, तांश्चान्वानय । शक्त इत्याशास्त्रम् । वृद्धश्च यूनैव स चेद् विशेषः । गोत्रस्यापत्यमन्तर्हि ततः परो युवा । तेन सह प्रयोगे वृद्धः शिष्यते । एव स चेद् विशेषः । तद्युवानिमित्तमेव यदि वैरूप्यं स्यात् तुल्याकृतौ प्रत्ययभेदोऽपि । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् ? [गर्गश्च गार्ग्यायणश्च] गर्गगार्ग्यायणौ । यूना किम् ? [गार्ग्यश्च गर्गश्च] गार्ग्यगर्गौ । स किम् ? गार्ग्यवात्स्यायनौ । एव किम् ? [भागवित्तिश्च भागवित्तिकश्च] भागवित्ति भागवित्तिकौ । कुत्सा सोवीरत्वं च भागवित्तिके विशेषोऽस्ति । स्त्री ना । यूना सह वृद्धा स्त्री शिष्यते, नैव ना । पुंवच्च सा । गार्गी च गार्ग्यायणश्च गार्ग्यौ । दाक्षी च दाक्षायणश्च दाक्षी। स्वार्थे तु स्त्रिया नेति, गार्ग्या । स्त्रिया ना । स्त्रिया सह ना पुमान् शिष्यते, स्त्रीपुंकृत एव चेद् भेदः । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । एवं कुक्कुटौ । स किम् ? कुक्कुटमयूर्यौ । एव किम् ? इन्द्रेन्द्राण्यौ । त्राख्यात् तद्योगविशिष्टास्त्रीत्वे किम् ? प्राक्प्राच्यौ । [अत्र प्रागित्यव्ययस्य] अलिङ्गत्वात्। सुतया च पुत्रः । सुतार्थनिर्देशात् सुता च, दुहिता च वा, पुत्री च वा, पुत्रश्च पुत्रौ । एवं भ्राता भगिन्या । भ्राता [च] भगिनी च, स्वसा च वा, भ्रातरौ । स्त्रिया नेति सिद्धं चेन्न तुल्या क्षतित्वात्। [नबेति] नप् शिष्यतेऽन्येन नपा, तच्चैकार्थं वा स्याद् बहुलयोगान्नपा नप्कृत एव चेद् भेदः । शुक्लश्च कम्बलः शुक्ला च शाटी शुक्लं च वस्त्रं तत् शुक्लं, तानि शुक्लानि वा । नबान्येन किम् ? शुक्लं च शुक्लं च शुक्लं च शुक्लानि चैकं नान्येन लघुः । श्वश्रा च मात्रा सह यथासङ्ख्यं श्वसुरः पिता च शिष्यते वा । पुनर्वेति नोत्तरत्र । श्वसुरश्च श्वश्रूश्च श्वसुरौ वा । एवं पितरौ मातापितरौ

वा । अन्यैः- स्वैस्त्यदोऽन्त्यः । यथासङ्ख्यमन्यैरत्यद्भिः सह त्यदः शिष्यन्ते । स्वैस्त्यद्भिः सहान्त्यस्तेषां त्यदां यः परः शिष्यते । स च सा च वा देवदत्तश्च । स च देवदत्ता च वा तौ । एवं यौ । तथा स च यश्च यौ । अहं च भवती च भवत्यौ । सर्वादीनां वृत्तिमात्रे पुंवद्भावः । अलघु गोष्विति स्त्री । गोष्वितीत्येवं प्रकारे ग्राम्यपशुबहुवचनान्तग्रहणात् ग्राम्यपशुसंघेषु अलघु अतरुणेषु, स्त्रिया नेति प्राप्ते, स्त्री शिष्यते । अजा इमाः । गावः इमाः । ग्राम्य किम् ? रुरवः पृषत इमे । पशु किम् ? विप्रा इमे । सङ्घः किम् ? गावौ इमौ । लघु किम् ? वत्साः बर्क्करा इमे । गोसदृशानेकमेकेष्वेव । अश्वाः गर्दभा इमे ॥

(२) **भपुनर्वसूः । [ १।४।१।२। ]** पुष्यादत्र तदर्थवाचि ह्राः परौ भे नक्षत्रार्थौ पुनर्वसू द्वौ पुनर्वसुरित्येकोऽर्थः स्यात् । चार्थे द्वन्द्वश्चेत् पुष्यश्च पुनर्वसू च पुष्यपुनर्वसू । तिष्यसिध्याच्च । [तिष्यपुनर्वसू । सिध्यपुनर्वसू ।] समाहारे नप् । भे किम् ? पुष्यपुनर्वसवो बालाः ।

(३) **सुप् द्वन्द्वस्ति । १।४।१।३। ]** तीत्यजतन्त्रं, "तौ वृत्त्यन्ये" [१.१.५.९] इत्युक्तेः, तद्विधेः समास इत्यर्थः । सुप् सुबन्तमर्थादनेकं शेषाविषयं चार्थे समस्यते, द्वन्द्वसंज्ञः समासः स्यात् । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । वाक्त्वचम् । धवखदिरपलाशाः । तथाऽक्षाक्षे । मातृमातरौ । समुच्चयात् । वा चयावसमर्थौ ।

(४) **बहुलं सुपादि । [ १।४।१।४। ]** बहुलं सुप् सुपा समस्यते इत्यधिकारः । आदीति तत्र समासे सुब्बहुलमादि पूर्वपदं स्यात् । अत्र षट्पाद्वृत्ते अनुष्टुप्त्रयवृत्तमार्ये -

ह्रस्वत्व्वजाद्यत्वसखार्हलेश्यं प्राग्वर्णभात्रोश्च समाजतूडोः ।
स्सङ्ख्यातिसुः सार्डि विशेषसल्संख्यातं च वाग्न्याहितजातपीत ।
प्रियोढभार्यास्तडिरायुधाङ्गिर्गड्वादितिस्तः सुखकालजातेः ॥१॥

भा काणखञ्जौ गडुलः कडारः कुण्ठश्च शौण्डः खलतिर्वृद्धश्च ।
गौरस्तनुः पिङ्गलभिक्षुकौ स्तः स्याद्राजदन्ता वठरस्तदन्ताः ॥२॥

भाजं दन्तस्तथा लिप्तवार्सितो भृष्वलुञ्चितः ।
अवन्त्यश्मकमवक्तित्रपक्वं शिंशपास्थलम् ॥३॥

स्याच्चित्ररथवाह्लीकं आवट्यायनिबन्धकी ।
चित्रस्वाती च शूद्रार्यं वि वको नार्जनौ तथा ॥४॥

धर्मार्थौ वा च शब्दार्थौ अन्तादी मधुसर्पिषी ।
गुणवृद्धी च कामार्थौ उप्तगाढो र्पित गतः ॥५॥

स्यात् स्थूलमूलं शामुशीरबीजं जायापती जम्पती दम्पती च ।
भार्यापतीपुत्रपती भवेतां गोपालिधान्यं च शिरो विज्ञश्च ॥६॥

तण्डुलकिण्वमुलूखलमुशले नग्नमुषितोऽपि विज्ञेयः ।
दृषदुपल्यं दारगवं केशश्मश्रू भवेतां च ॥७॥

स्नातकराजानौ स्तः गोजावाजं च सिक्तसंमृष्टम् ।
स्यान्मूलाशकरण्डं चाक्ष्यग्रेतो भ्रुववणे च ॥८॥

द्वन्द्वे तावत् ह्रस्वं लघ्वक्षरं त्यु इदुदन्तम्, अजात्यत् अजादि च तदन्तं च, असखा सखिवर्जं त्यु, अर्हं पूज्यं लेश्यम् अल्पाक्षरं पूर्वपदं स्यात् । कुशकाशम् । शरबीजम् । अग्निवातौ । यदुगुप्तौ । असखा किम् ? सुतसखायौ । अश्वखरौ । अजावी । इन्द्रचन्द्रार्काः । मातापितरौ । दीक्षातपसी । प्लक्षन्यग्रोधौ । वागिन्द्रौ । द्वये परम् । पांसुकुशौ । वाय्वग्नी । प्राग्वर्णभात्रोश्च । वर्णानां भातॄणां च यः प्राक् प्रथमः स आदिपदम् । क्षत्रियविशौ । युधिष्ठिरार्जुनौ । तथा समाजृतूडोः । तुल्याचाम् ऋतूनां नक्षत्राणां च द्वन्द्वे । चित्रास्वाती । हेमन्तशिशिरौ । समाच् किम् ? ग्रीष्मवसन्तौ । स्संख्या । सिति प्राक्पदम् आदि स्यात् । द्वित्राः । नवतिशतम् । तिसुः । तीति समासे सुरप्रथमान्तमादि संख्यावंश्यरूपैः । द्विमुनि । सार्डि विशेषसल्संख्यातं च । सिति सप्तम्यन्तं विशेषणं सल् सर्वादि संख्या क्तान्तं चादिपदम् । कण्ठेकालः । चित्रगुः । सर्वश्वेतः । विश्वदेवः । द्विपुत्रः । कृतकटः । द्वये परम् । द्व्यन्यः । कृतसर्वः । कृतचत्वाः । वाग्न्याहितेत्यादि । सिति क्तान्तं चादिपदम् । अग्न्याहितः, आहिताग्निर्वा । जातपीतप्रियाः, चादि । पुत्रजातः । जातपुत्रः । दन्तजातः । जातदन्तः । श्मश्रुजातः । जातश्मश्रुः । तैलपीतः । पीततैलः । घृतपीतः । पीतघृतः । मद्यपीतः । पीतमद्यः । इति षडेवान्ये । प्रियगुडः । गुडप्रियः । एवम्, ऊढभार्यः । भार्योढः । तडिरायुधात् । प्रहरणार्थेभ्यः परौ क्तान्तसप्तम्यन्तौ वा । अस्युद्यतः । उद्यतासिः । दण्डपाणिः । पाणिदण्डः । आयुधात् किम् ? दर्भपवित्रपाणिः । डिर् गड्वादितः । सप्तम्यन्तं गड्वादिभ्यः परं वा । गडुकण्ठः । कण्ठेगडुः । शिरसिगडुः । शिरस्यरुः । तः सुखकालजातेः । क्तान्तं सुखादिवाचिभ्यः परं वा । सुखजाता । जातसुखा । मासजाता । जातमासा । पलाण्डुभक्षिता । भक्षितपलाण्डुः । आकृतित्वात्, दुःखजातः गतार्थः । भा काणेत्यादि । भेति कर्मधारये काणादिविशेषणमपि चादि । काणहनु इत्यादि । स्याद् राजदन्ता बठरस्तदन्ताः । बठरोऽत्रैव भिति स्यादिति सम्बन्धः । राजदन्तादयः तदन्ता इति । स पूर्वोक्तः पूर्वनिपातविधेः । सर्वापवादोऽन्ते येषां ते तदन्ताः स्युः । यथायोगं समासः । दन्तानां राजा राजदन्तः । लिप्तवासितादि [=नग्नमुषितम् । सिक्तसंमृष्टम् । मृष्टलुञ्चितम् । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् ] । धर्मार्थौ वा च अर्थधर्मौ वा । एवं [शब्दार्थौ । अर्थशब्दौ । कामार्थौ । अर्थकामौ ।] जाया पतिश्च जम्पती । एवं दम्पती । जायायाः जं दं च निपात्यते । वाक्ष्यग्रेतो भ्रुववणे च । यथासङ्ख्यम्, अक्षिभ्रुवम् । अग्रेवणम् ॥

**(५) वा साऽपरार्थे बहुव्रीहीति । [१।४।१।५।]** असुबन्तोऽपदत्वादनुच्चार्यात्र बहुव्रीह्यादि-संज्ञास्तिदादिभिः कार्यसिद्धेः संज्ञास्तज्ज्ञबालावबोधार्थाः । समस्यमानपदेभ्योऽपरपदार्थे वा समासः स्यात् सालक्षितो, बहुव्रीहिसंज्ञो, वेति बहुलम् । गाथाऽत्र

तुल्यार्थचादेर्डिवि वेत्पदं चेत् संघातवैरूप्यरसो न भूद्रम् ।
प्रादेर्नञोऽस्तेः सह टर्युतेऽस्ति क्षीरादिदिग्नाम दिगन्तराले ।
आसन्नसंख्याधिकचाद्यदूरासंख्येयमात्रे तु तया स चासौ ॥१॥

स चासौ । स बहुव्रीहिरन्यार्थेऽसौ प्रथमावर्जिते द्वितीयाद्यर्थे स्याद् बहुलयोगात् । प्राप्तोदको

ग्रामः । ६॰ असौ किम् ? वृष्टे देवे गतः । सपुत्रः स्याद् विधानात् । तुल्यार्थचादेः । समानाधिकरणानां स स्याच्चादीनां च । सुनताऽजिनवासाः । आसन्नदासन्द्रदत्तः । साधुसखिप्रियः । बहुविद्यातमकः । पूर्वंतमः । तुल्यार्थानां किम् ? पञ्चभिर्भुक्तमस्य । धवश्च खदिरश्चास्मिन् । चादेरूच्चैर्मुखः । डिवि वा इत्पदं चेत् । सप्तम्युपमानपूर्वपदस्य स स्यात् ततः पदमित् लुक् । कण्ठे स्थिताः काला अस्य कण्ठेकालः । उरसिलोमा । उष्ट्र[स्य] मुखमिव मुखमस्य उष्ट्रमुखः । सुपा किम् ? चन्द्र इव मुखमस्य चन्द्रमुखः । सुपा परेण सता पदमित् स्यादित्यर्थः । सङ्घातवैरूप्यरसः । समुदायविकारषष्ठ्याः स स्यात् ततः पदं चेत् । केशानां संहारः चूडाऽस्य केशचूडः । सुवर्णस्य विकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः । न भूद्गं प्रादेः । पदं चेद् वर्तते प्रादेऽपरस्य भूद्गस्य स स्यात् । तच्च भूद्गं धातुजं पदमिच्च न चार्थाद् विकल्पः । प्रपतितपर्णः । प्रपर्णः । प्रपलाशः । नञोऽस्तेः । नञोऽस्त्यर्थस्य तथा । अविद्यमानपुत्रः अपुत्रः । अभार्यः । सह टयुते । सहशब्दो युक्ते तृतीयान्तेन स स्यात् । सह पुत्रेण सपुत्रः । युते किम् ? सह दशभिः पुत्रैः भारं वहति गर्दभी । विद्यमानैरित्यर्थः । सकर्मा, सलोमा, आद्ययुतेऽपि बहुलयोगात् । पदं चेन्न च न वर्तते । अस्ति क्षीरागौ । अस्तिफला इत्यादि च स्यात् । दिग्नाम समस्यतेऽत्र दिशामन्तराले वाच्ये । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दिग् दक्षिणपूर्वा । उत्तरपश्चिमा । दिग्नामरूढिः किम् ? ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यद्न्तरालमिति । आसन्नसंख्याधिकचाद्वयदूराः शस्यन्ते तयाऽत्रोक्तसंख्यया उभयोः संख्येयेऽर्थे स स्यात् । आसन्ना दशानाम् आसन्नदशाः । द्वौ वा त्रयो वा द्वित्राः । पञ्चषाः । त्रिचतुराः । अधिकत्रिंशाः । उपविंशाः । अदूरदशाः । अनन्यार्थेऽपि । तया किम्? आसन्ना नृणां पञ्च नराः । आसन्नाद्याः किम् ? नराः पञ्च । संख्येये किम् ? अधिका विंशतिर्गवाम् ।

**(६) संख्याः स्याद् अव्ययीभावश्च वंश्यरूपैः । [१।४।१।६।]** सुप्सुपा बहुलं वा वर्तते। संख्यादयो वंश्यादिभिः सह समस्यन्ते चेद् अव्ययीभावः समासः स्यात् । वृत्ते हरिणप्लुताद्ये अत्र–

वंश्येन संख्या दि षि सुप्नदीभिः स्नाम्न्यत्र लात्वेश्च प्रहृत्य तेन ।
युद्धे सरूपं च खलेयवादि प्राह्णं च तिष्ठद्गु वहद्गु काले ॥१॥

यवं तथा संहृतलूनयूनात् धातोर्यमानाच्च खलेबुसं च ।
पदातिभूमी समम: समानात् स्वस्तीर्थतीरे गवमायतीतः ॥२॥

प्ररथं प्रमृगापरदक्षिणं व्यापरपुण्यसुपापनिरोदुरः ।
च समं च पराह्नप्रदक्षिणं षविधानमसंप्रतिसंप्रति ॥३॥

स्यात् प्रातमेकान्तमुवार्डसाद्ये पारे च मध्ये डींसि नासियत्वे ।
यावत् सुपा प्रत्यभिसंमुखेऽङ्कैः दैर्घ्ये समीपेऽनु सदान्यथात्वे ॥४॥

द्यूतेऽक्षसंख्ये परिणा शलाका चादिः सुपा संपदभावपश्चात् ।
प्रख्यायथाऽतुल्य डिबन्तकृत्स्नाऽकालक्रमेऽल्पे प्रतिनैककाले ॥५॥

विद्यया जन्मना वा प्राणिनामेकसन्तानलक्षणो वंशसूत्रभवो वंश्यः । तेन सह संख्या

समस्यते, दीत्यव्ययीभाव एव । द्वौ मुनी वंश्यावस्य द्विमुनी । त्रिमुनि । व्याकरणस्य विद्यया तद्वतामभेदे तु व्याकरणम् । एवं त्रिकाशि नुर्ना वा । दि किम् ? परमं द्विमुनि । दीति नेच्छन्त्येके । षि सुप् नदीभिः स्नाम्नि । षिति समाहारे सित्त्वादन्यार्थे संख्या नाम्नि सुप् नदीभिः समस्येते । सप्तगङ्गम् । द्वियमुनम् । पञ्चनदम् । सप्तगोदावरम् । षि किम् ? सप्तगङ्गाः । नामत्वान्नित्यम् । उन्मत्तगङ्गम् । लोहितगङ्गम् । शनैर्गङ्गम् । सित् किम् ? कृष्णवेणा । नाम्नि किं ? शीघ्रगङ्गो देशः । अत्रेत्यादि । अत्रेति सप्तम्यतं लात्वा गृहीत्वेत्येतस्मिन्नर्थे, तेनेति तृतीयान्तं प्रहृत्ये तस्मिन्नर्थे युद्धविषये समानरूपं समस्येते । चकारादीत्येव इन्वसमासान्तो दर्शितः । केशेषु च केशेषु च गृहीत्वा, दण्डैश्च दण्डैश्च प्रहृत्यान्योन्यं युद्धं भूतम् । केशाकेशि । दण्डादण्डि । ईचि प्राग्दीर्घः । दि किम् ? परमं केशाकेशि । युद्धे किम् ? हस्ते च हस्ते च गृहीत्वा सख्यं कृतम् । सरूपं किम् ? दण्डैश्च मुशलैश्च प्रहृत्य युद्धं कृतम् । खलेयवादि । दीत्येव निपात्यते । खले यवा यस्मिन् काले स तथा [=खलेयवम् ।] तिष्ठन्ति गावो दोहाय, गर्भग्रहणाय वा यस्मिन् काले स तथा [=तिष्ठद्गु ।] खले तु सञ्चेत्यं तम् । आयतीगवं च काले । यवं सृहृतादेः परम् । संहृतयवम् । धातोर्यमानाच्च । संहृत्यादेः यमानान्ताच्च परं यवम् । संह्रियमाणयवम् । संहृतयवम् । लूनयवम् । बुसमित्येके । ततश्च संहृतबुसम् । लूनयूनत्वं बुसस्यासम्भवि । एवं समपदाति । समभूमि । समानतीर्थम् । समानतीरम् । आयतीगवम् । वि आदेः । समं, चकाराद् आयतीतश्च । विषमम् । [अपरसमम् । पुण्यसमम् । सुषमम् । पापसमम् । निष्षमम् । दुष्षमम् ।] षविधानं क्विणोऽनापत्याः षत्वं च । एकान्ते मु । उच्छन्दोऽर्थम् । खलेयवाद्येतत् । दित् किम् ? परमं तिष्ठन्तु । वा ङसाद्ये पारे मध्ये शब्दौ ङसा षष्ट्या वा समस्येते आद्यपदार्थे चातः । गंगायाः पारं गंगापारं, पारेगंगम् । गंगामध्यं, मध्येगंगम् । एत्वं निपात्यते । ङसि ना आस् । आपाटलिपुत्रम् । आबहिस्सन्तः । इयत्त्वेऽर्थे यावत् सुपा । यावदवकाशमुपवेशय । इयत्वे किम् ? यावद्दत्तं तावद्भुक्तम् । प्रत्यभिसम्मुखे-ऽर्थेऽङ्कैर्लक्षणेनेत्यर्थः । अग्निम् प्रति शलभाः पतन्ति । प्रत्यग्नि । अभ्यग्नि । स्र्वसुपोस्तुल्यत्वात् पूर्वपदम् । अङ्कैः किम् ? स्रुघ्नं प्रति गतः । प्रत्यभि किम् ? येनाग्निस्तेन गतः । संमुखे किम् ? प्रत्यङ्का गावः । [प्रति नवोऽङ्को यासामिति तथा ।] अन्यार्थे वचनान्तरे च । दैर्घ्ये समीपेऽनु । यस्य दैर्घ्येऽनुस्तेन लक्षणेन । यस्य समीपे तेन तु सुपा । यमुनामनु आयता, अनुयमनं मथुरा । यमुनायामेन मथुरायामो लक्ष्यते । एवम् अनुगङ्गां वाराणसी । समीपे वनस्य अनुवनम् । अशनिर्गतानां कंसुद्भेदात् । सदान्यथात्वे । सदातो नित्यं समासः । द्यूतविषयेऽन्यथावृत्तौ अक्षसंख्ये शलाका च परिणा । अक्षाभ्यां द्यूतेऽक्षेण न तथा वृत्तं यथा पूर्वम् । अक्षपरि । द्यूते पञ्चभिः शलाकाभिरुत्तानाभिरवाङ्मुखाभिर्वा पातयित्वा जयति, एकया न तथा वृत्तं यथा पूर्वम् । एकपरि । द्विपरि । एवं शलाकापरि । चादिः सम्पदभावाद्यर्थः सुपा व्यपदार्थो सम्पदाभावे । यवनानां व्यृद्धिः ऋद्धेरभावो दुर्यवनम् । दुर्गब्दिकम् । यद्वा संपद्विधा समृद्धिः । ऋद्धेराधिक्यम् । तथा सम्पत्तिरनुरूपम् आत्मभावः । तदर्थे । मद्राणां समृद्धिः सुमद्रम् । सुभिक्षम् । सम्पत्तिः सब्रह्म वा भ्रुवाणाम् । सक्षत्रं शालङ्कायननानाम् । अभावोऽपि द्वेधा । विवक्षातः प्राग्रेवाभावः, सतोऽत्ययश्च । निर्मक्षिकम् । निर्मशकम् । अत्यये, निस्तृणम् । निशीतम् । अपहिमम् । दुर्भिक्षम् । [निर्भिक्षम्] पश्चाद् रथानाम् अनुरथं पादातम् । प्रख्या । पाणिनेः ख्यातिः, इतिपाणिनि । तत्पाणिनि । यथाऽतुल्ये । यथार्थश्चतुर्धा, योग्यता, वीप्सा, अर्थानतिवृत्तिः, सादृश्यं च ।

तदर्थे चादिः । -रूपस्य योग्यम् अनुरूपम् । सरूपो वहति । ये ये वृद्धा यथावृद्धम् । अर्थमर्थंप्रति प्रत्यर्थम् । शक्त्यनतिक्रमः यथाशक्ति । [ज्येष्ठानामनतिवृत्या अनुज्येष्ठं भवन्तः प्रविशन्तु ।] सदृशं शीलमनयोः सशीलम् । अतुल्य इति । यथाशब्दस्तुल्ये निषिध्यते नार्थो श्रुतत्वात् । अतुल्ये, यथा स तथाऽयम् । यद्वाऽयथा यशब्दवर्जिततुल्यार्थवृत्तिः । सदृशः किम् ? ख्या । स किम् ? खि । अयथा किम् ? यथा स तथाऽयम् । डिबन्ताः । डिप् सप्तमी । अन्तोऽवसानं समीपं च । कृत्स्नं साकल्यम् । काले क्रम आनुपूर्व्या । तदर्थे तथैककाले यौगपद्ये । स्त्रीषु कथा प्रवृत्ता, अधिस्त्रि कथा । अग्न्यन्तमधीते, साग्नि । कुम्भस्य समीपम्, उपकुम्भम् । भक्ष्यान्तः पतितानि तृणान्यपि भुङ्क्ते, सतृणम् । कालस्तैसृकस्य अतितैसृकं वर्तते । ज्येष्ठक्रमेणानुज्येष्ठम् । युगपच्चक्राणि धेहि सचक्रम्। तथाऽल्पार्थप्रतिना सुप् । सूपस्याल्पं सूपप्रति । शाकप्रति । अल्पे किम् ? वृक्षं प्रति ॥१॥

**नेषद्गुणै स्तत्पुरुषः सदाया स्वाद्यन्त्ययोः क्तादि च डादिभूद्धिः ।**
**वा कारकं रं स्वयमादि ताद्यैः प्राप्तोद्गमापन्नतपूर्वमाऽतैः ॥१।४।२॥ वृत्तम् ॥**

**(७) न [१।४।२।१।]** नञ् सुपा वा । पेति पित् तत्पुरुषश्च । न सः असः । अष्ट्रो देशोऽन्यार्थेऽपि ।

**(८) ईषद्गुणैस्तत्पुरुषः सदायाः । [१।४।२।२।]** वा ईषद् गुणवचनैः । ईषत्कडारः । ईषद्रक्तः । गुणैः किम् ? ईषद् गार्ग्य ते गृहम् ।

**(९) स्वाद्यन्त्ययोः क्तादि च । [१।४।२।३।]** क्तादिः सुपा समस्यते यस्मात् समस्यमानो स्वादिः सर्वः सुप् संभवति तदर्थेऽन्त्यपदार्थे च । सदा नित्यं पित् तत्पुरुषसंज्ञः समासः स्यात् । अत्र षट्पात् -

पापे कुरल्पेऽभिविधौ तथा चाङ् स्यात् कृच्छ्रनिन्द्ये दुरतिक्रमितिः ।
पूज्ये च सुः प्रादिगतेः र्सुनानुक्रान्ते रमात् पाद्यसिरानिरादि ।
ग्लाने तु पर्यादिरवादिक्रुष्टे डेरातथा र्टा च यथाक्रमं वृत् ॥१॥

पापेऽर्थे, अल्प इतीषदर्थे कुः । कुपुरुषः । कोष्णम् । अभिविधौ चाङ् । आकडारः । आबद्धः । कृच्छ्रनिन्द्ये दुर् । दुःस्तुतम् । अतिक्रमेण पूज्ये चाति । अतिसिक्तं त्वया । अतिसखा । सु पूज्ये । सुराजा । सुसिक्तः । उपलक्षणत्वाद् गताद्यर्थे र्सुना प्रादि । प्रगत आचार्यः प्राचार्यः । सङ्गतोऽर्थः समर्थः । अत्यादि क्रान्ताद्ये रमा । अतिक्रान्तः खट्वाम् अतिखट्वः । उद्गतो वेलाम् उद्वेलः । निरादि क्रान्ताद्यर्थे एव असिरा । निर्गतः कौशाम्ब्याः निष्कौशाम्बिः । [अप गतः शाखायाः] अपशाखः । यथाक्रमं ग्लानाद्यर्थे पर्यादि डेरा । क्रुष्टाद्यर्थेऽवादि र्टा । परिग्लानोऽध्ययनात् पर्यध्ययनः । शक्तः कुमार्यै अलङ्कुमारिः । तथाऽवकृष्टं कोकिलया अवकोकिलं वनम् । सन्नद्धो वर्मणा संवर्मा । स्वाद्यन्तयोरा समाहारम् । सर्वः सुप् किम् ? वृक्षं प्रति । अतिक्रान्तः, अतिक्रान्तम्, अतिक्रान्तेन इत्यादि खट्वां द्वितीयाद्यर्थे मा भूत् ॥

**(१०) डादिभूद्धिः । [१।४।२।४।]** डादयो धातुभिः समस्यन्ते । जलदाल्यनुष्टुप्गाथाष्टगेन्द्रे

इहैव -

डाचीऊरीवषडुररीवैतालीताज्याताली सज्जसुरसी वादल्पः ।
पापीधूल्यावथ सकलाविः प्रादुः वौषट् स्वाहाश्च गुलुगुधास्तद्वथ्यः ॥१॥

श्रौषडाक्षीफली विक्लीवार्दालीमष्मषाफलूः ।
केवालीमस्मसालोहीसेवालीमष्मषास्वधा ॥२॥

सम्बंभ्रमस्याच्छकलाऽनुकारकारिकासि तृप्तौ तु ।
कणेमनःपुरोस्तं चत्प्रतखिद्वदिनाच्छ अग्रहेऽन्तर्भूषणेऽनादरे ।
तदरेऽलमसत्सत्त्वदोवानुपदेशने तिरोऽन्तद्धौ कृञाऽन्वाजउपाज एष वा ॥३॥

अच्व्यौ साक्षादात्स्थामिथ्याप्राजर्यासाचिन्ता प्रादुः ।
वीजर्याविः संसर्प्या स्यात् भद्रा मुग्धा चोष्णं शीतम् ॥४॥

स्याद् रोचना प्राजरुहा मनांसि आद्रं तथा बीजरुहोदकं च ।
स्यात् कम्पनेऽर्थे लवणं च सेचनेऽन्तो यतप्रात्सहने तु विप्रात् ॥५॥

उरो मनो मध्यपदं ड्यनत्याध्याने तथा नेर्वचने विवाहे ।
हस्ते च पाणौ यमने तु प्राध्वं चेज्जीविकावोपनिपन्नवार्ताः ॥६॥

नाचि प्रत्ययौ तसाहचर्याद् वर्षादिश्च कृभ्नज्यस्त्रिभिः । पटपटाकृत्य । पटपटाकृतम् । पटपटाकरोति । शुक्लीभूय । [शुक्लीभूतम् । शुक्लीकरोति ।] ऊरीकृत्य । [ऊरीकृतम् । ऊरीकरोति ।] सम्बम्भ्रमः ३ । कला । संशकला । ध्वंसकला । भ्रंशकला इत्यर्थः । संशकलाकृत्य । [ध्वंसकलाकृत्या लाशकलाकृत्य ।] ऊर्यादि । [ऊरीकृत्य । ऊररीकृत्य ।] अनुकारोऽनुकरणम् । खाट्कृत्य । [फट्कृत्य।] तेतौ व्यवधानात् खाडिति कृत्वा । कारिकाकृत्य । असीति धात्वविकारे पञ्चम्यन्तो भूद्धिः । जलधेः । कुम्भकारः । कणेहत्य मनोहत्य पयः पिबति । यावत्तृप्तः । तृप्तौ किम् ? मनःकृत्वा पुरस्कृत्य अस्तंभूय । चत् चादि किम् ? तिस्त्रः पुरः कृत्वा गतः । प्रतः प्रादयः । निषिध्य । प्रणायकः । प्रणयति, भूद्धिरिति निर्देशात् । प्रादिकारकोपपदानां धातुभिः सुबुत्पत्तेः प्राक् समासः । अश्वक्रीती । धनक्रीती । बहुलमेवात्र वृत्तम् -

अनर्थकं पर्यधि पूजने सुः अतिक्रमे चातिरपि पदार्थ - ।
सम्भावनागर्ह्यसमुच्चयान्ववसर्गवृत्तिश्च न दुश्च कृच्छ्रे ॥७॥

परिसेकः । अधिसिञ्चति । अनर्थकं किम् ? परिणेता । अधिष्ठाता । सुसिक्तम् । पूजा किम् ? सुषिक्तम् । फले निष्पन्नेऽपि क्रियाप्रवृत्तिरतिक्रमणम् । तत्र पूजने चातिः । अतिसिक्तमेकत्र । अशोभनं कृतम् । पूजने तु शोभनम् । अपिः अनुक्तपदस्यार्थे पदार्थे । सर्पिषोऽपि स्यात् । मात्राद्यर्थोऽपिः । अधिकार्थोक्त्या शक्त्यप्रतिघाताविष्करणे सम्भावने । अपि स्तूयाद् राजानाम् । गर्ह्ये । धिक् तम्, अपि स्तूयाद् वृषलम् । समुच्चये । अपि सिञ्च । अपि स्तुहि । [सिञ्च च स्तुहि च इत्यर्थः ।] कामचाराभ्यनुज्ञानेऽन्ववसर्गे । अपि स्तुहि । एषु वृत्तिर्यस्यापेः स तथा । तथा, दुःस्तुतम् । नेति नैते प्रतः, अप्रादित्वात् षत्वादि न स्यात् । षि ऋत्यर्थे न वदिना च ।

अच्छाभिपर्यायः । अच्छगत्य । अच्छोद्य । एवम् अनर्हत्य । अग्रहे किम् ? अन्तर्हत्वा गृहीत्वा तां गतः । भूषणादौ । अलमादि । अलंकृत्य । भूषयित्वा । असत्कृत्य । अनादृत्य । सत्कृत्य । आदृत्य । अन्यत्र, अलं कृत्वा । अदःकृत्य चिन्तयति । अनुपदेशने स्वयंबोधने किम् ? अदः कृत्वा । तिरोभूय । अन्तर्द्धौ किम् ? तिरो भूत्वा । कृञा वा चातः तिरोवृत्तेः । तिरस्कृत्य । तिरःकृत्य । तिरःकृत्वा । एवम्, अन्वाजेकृत्य । अन्वाजेकृत्वा । उपाजेकृत्य । उपाजेकृत्वा । एषच्छन्दोर्थम् । पदन्तौ दुर्बलबलाधाना र्थौ । अच्यावर्थाच्व्यर्थे वृत्तद्वयम्, कृञा वा । साक्षात्कृत्य। साक्षात्कृत्वा । उष्णमादि मन्तम् । नन्तो यतः प्रादिति । प्रयतने इत्यर्थः । एवं विसहने प्रसहने वृत् । उर आदि ४ डि ड्यन्तम् । उरसिकृत्य । उरसि कृत्वा । मनसिकृत्य । मनसि कृत्वा । अभ्युपगम्य इत्यर्थः । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । एवं, निवचनेकृत्य । निवचने कृत्वा । वाचनाभावे कृत्वेत्यर्थः । अनत्याधानेऽनुपश्लेषणे किम् ? हस्तिपदे कृत्वा शिरः शेते । ब्रह्महत्यामुरसि कृत्वा गतः । तथेति वाऽनुकर्षेऽतो नित्यम् । हस्तेकृत्य, पाणौकृत्य विवाह्य । विवाहे किम् ? हस्ते कृत्वा । प्राध्वंकृत्य यमने बन्धने किम् ? प्राध्वं कृत्वा । जीविकाकृत्य । उपनिषत्कृत्य । वदित्युपमानार्थौ किम् ? जीविका कृत्वा । न वा र्टः । र्टाद्याः तेनोपदंश इत्याद्याः भूद्भिर्न वा समस्यन्ते । मूलकोपदंशं [भुङ्क्ते] । मूलकेनोपदंशं भुङ्क्ते । उच्चैः कृत्य । उच्चैः कारम्। अमैवाव्ययेन् क्त्वा च । [स्वादुङ्कारं भुङ्क्ते । सम्पन्नकारं भुङ्क्ते । लवणङ्कारं भुङ्क्ते ॥]

**(११) वा कारकम् । [१।४।२।५।]** क्रियानिमित्तं निर्वर्तकं वा कारकं, तद् भूद्भिः सुबन्तैर्वा समस्यते । पादभाक् । राजहतः । देवदयम् । अधर्मजुगुप्सुः । इध्मव्रश्चनः । काम्पिल्यसिद्धः । सक्तः किम् ? कटं कुर्वन् । दात्रेण लूनवान् । काकैः पातव्या । साधवे दातव्यम् । प्रासादात् पतितः । यद्वाऽधिकारोऽयम् । तान्येव प्रत्युदाहरणानि क्रमेणाह ।

**(१२) रं स्वयमादि ताद्यैः । [१।४।२।६।]** रम् द्वितीयान्तं स्वयमादि वा समस्यते ताद्यैः क्रान्तादिभिः । यथासङ्ख्यं नाम्नि सुब्भेदात् । अत्र वृत्तम् -

क्तेन स्वयं सामि क्षिपेति खट्वा कालोऽतियोगे गमि गाम्यतीत ।
प्राप्तं मतंतः पतितो गतस्तोरत्यस्त आपन्नश्रितादितै रम् ॥१॥

स्वयं सामि चादी ऐकपद्यप्राग्निपातार्थं क्तेन समस्यते । रमुत्तरार्थः । स्वयं धौतौ पादौ । साम्यर्द्धार्थः । सामिभुक्तम् । क्षि लघु क्षिपा निन्दा चेद् गम्यते । खट्वा रमन्तोक्तेः । खट्वारूढः । खट्वाप्लुतो जाल्मः । सर्वोऽप्युत्पथप्रवृत्त उच्यते । क्षिपा किम् ? खट्वामारूढो ध्यायति । वाक्येन न निन्देति नित्यम् । कालवाचि रमन्तं क्तेन । अहरतिसृताः, अहः-सङ्क्रान्ताः, रात्र्यारूढाः मुहूर्ताः । मासप्रमितश्चन्द्रमाः । अतियोगे कालस्य स्वसम्बन्धिना व्याप्तौ सुपा । मुहूर्तसुखम् । सर्वरात्रकल्याणी । यद् वा बहुलायोगात् कालाऽरमन्ता अपि सर्वकालव्यापिना सुपा । मासो जातस्य मासजातः । द्वे अह्नी जातस्य द्व्यहजातः । द्व्यहनजातः नपा पुंसा निर्दिश्य गम्यादीन् । ततस्तै रमन्तम् । ग्रामगमी । [ग्रामगामी ।] समन्तः । ओदनबुभुक्षुः । कटचिकीर्षुः । इत्याद्याद्याकृत्यर्थः । प्राप्तोऽङ्गमापन्न। असुप् सूदोऽर्थं प्राप्तापन्ने रमा समस्येते । अड् अकारान्तादेशश्च । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नसखी । प्राप्तगवी । तैरमिति जीविका प्राप्ता ॥

**(१३) त पूर्वमा । [१।४।२।७।]** क्तान्तं पूर्वेण रमन्तेन अङ् चाङ् । श्रुता पूर्वं श्रुतपूर्वा कथा । दृष्टपूर्वा सा । भुक्तपूर्व ओदनः । कृतपूर्वी कटम् । त किम् ? श्रोता पूर्वं छन्दसः । पूर्वमा किम् ? दृष्टा प्रथमं सा । भ्यसुप् प्राक् । अतैः परार्थम् ॥२॥

**ङ्गे याजकाद्यैश्च ङसिर्भियाद्यैः टर्थादिना ङे च पापादिना ङिः ।**
**भैकार्थमेकादिविशेषभूतैः दिगच्छसंज्ञान्यपदे द्विगुश्च ॥१।४।३॥ वृत्तम् ॥**

**(१४) ङ्गे याजकाद्यैश्च । [१।४।३।१।]** ङः षष्ठी समस्यते अतैः तादिवर्जितैः सुब्भिः याजकाद्यैश्च । वृत्ते तयो स्तः ।

तज्ञालनिद्धार्य तृ भावषष्ठी तृप्ताव्ययैद्व्यर्थगुणैः सुपा वा ।
कर्तर्यकेनेति च पूरणार्थैः स्याद्याजकोच्छादकहोतृपोतृ ॥१॥

उद्वर्तकाध्यापकपूजकाऽकाः तीयस्तुरीयोऽपि चतुर्थतुर्यच् ।
भर्ता च पत्तेर्गणकोरथात्स्नातकः परेर्वषकचारकोतैः ॥२॥

षष्ठी सुपा । इध्मव्रश्चनः । पलाशशातनः । अतैः किम् ? त । इदमेषां भुक्तम् । इदमेषां गतम् । राज्ञां मतः । तस्य हसितम् । मातुः स्मृतम् । ज्ञा । सर्पिषो ज्ञानम् । अन्ये प्रतिपदोक्ता न समस्यन्त इत्याहुः । सर्पिषो दयनम् । मातुः स्मरणम् । चौरसरूजनं कृद्भिः स्यात् । इध्मव्रश्चन इत्यादि तत्रोक्तं समासदर्शनात् । चन्द्रस्त्वाह - राजसंमतादिभिर्भवितव्यम् । ला । तस्य कुर्वन् । कुर्वाणः । द्विषन् । निधार्य । नृणां क्षत्रियः शूरः । तृ । अपां स्रष्टा । भाव । नुः शौर्यम् । पटस्य शुक्लता । षष्ठी । राज्ञः पाटलिपुत्रकस्य वनम् । तृप्तार्थ । फलानां तृप्तः । ओदनस्य ध्मातः । अव्यय । तस्य कृत्वा । तस्योच्चैर्गृहम् । द्व्यर्थगुणैः । द्रव्यगुणवृत्तिभिः । पटस्य शुक्लः । पटस्य रक्तः । नुः शुक्लाः । द्व्यर्थ किम् ? कन्यारूपम् । सुपा वा कर्तरि । वा समुच्चये कर्तरि सति षष्ठी न सुपा । चित्रं गवां दोहोऽन्त्रा । विचित्रास्या कृतिः पाणिनिना । कर्तरि किम् ? इध्मव्रश्चनः । यद्वा कर्तरि या षष्ठी साऽकेन । तव शायिका । भवत असिका । कर्तरि किम् ? इक्षुभक्षिका । यद्वा कर्तरि योऽकस्तेन । ओदनस्य भोजकः । यवानां लावकः । पूरणार्थम् । छात्राणां पञ्चमः । छात्राणां षष्ठः । स्याद् इतीतः समासः याजकाद्यैः । राजयाचकः । तदुच्छादकः । तदुत्साहको वेत्यादि । अकः । नित्यं क्रीडाजीविकयोः । उद्दालकपुष्पभञ्जिका । नखलेखकः । दन्तशोधकः । तीयाद्ये । भिक्षाद्वितीयः । भिक्षातृतीयः एवं च तीजर्थः । तद्भर्त्ता च । आकृत्यर्थः । गङ्गापारम् । [गङ्गायाः पारम् ।] पत्तेः रथाच्च गणकः । पत्तिगणकः । [रथगणकः ।] परेः । भक्तपरिवेषकः । पितृपरिचारकः । तैरुक्तैर्ङः । बहुलं किम् ? नरेश्वर त्वदैश्वर्यम् । सापेक्षत्वेऽपि । देवदत्तस्य गुरुकुलम् ॥

**(१५) ङसिर्भयाद्यैः । [१।४।३।२।]** पञ्चमी सुपा तस्मात् परः तत्परः भयाद्यैश्च । हरिणप्लुताऽत्र ।

भयभीति तु भीतभियोऽल्पशः पतितमुक्तमितोढमपात्रसैः ।
त च तेन लवान्तिकदूरकाः इह हि कृच्छ्र इमां न पठन्ति च ॥१॥

इतोढं त्रसेस्तचेति त्रसीक्तान्तं च अपात् पराणि । अपेत, अपोढ, अपत्रस्त इत्यर्थः । वृकभयम् । [वृकभीतिः । वृकभीतः । वृकभीः । अल्पशः । अल्पार्था पञ्चमी । अपत्रस्तान्तैः । स्वर्गपतितः । [चक्रमुक्तः । सुखापेतः । कल्पनापोढः । तरङ्गापत्रस्तः ।] अल्पार्थाः किम् ? प्रासादात् पतितः । लवोऽल्पः जसन्तद्वन्द्वाद् अल्पान्तिकदूरार्थाः पञ्चम्यन्ताः । तेनेति क्रान्तेन । अल्पान्मुक्तः। एवं स्तोकात् [मुक्तः] । अन्तिकादागतः । एवमासन्नात्, दूराद्, विप्रकृष्टात् । कृच्छ्राल्लब्धम् । अलुक् ॥

(१६) **टार्थादिना । [१।४।३।३।]** तृतीया अर्थादिभिर्वा समस्यते ।

(१७) **ङें च [१।४।३।४।]** चतुर्थी वाऽर्थादिनाऽन्येन । षट्पात् तयोः-

अर्थगुणादिदशादिभिरेके व्यञ्जनमिश्रणमोदनभक्षैः ।
कर्तरि सा करणेऽपि च भूद्भिः स्यादधिकार्थ यपा च गणोऽन्यः ।
अर्थहितेन सुखेन प्रकृत्या स्याद् बलिरक्षितकादिभिरेषा ॥१॥

यैर्गुणार्थैरित्याद्यर्थगुणादि तेन । धान्येनार्थः [धान्यार्थः । गिरिणा काणः] गिरिकाणः । [वाचा कलहः] वाक्कलहः । यावन्मासपूर्वः । तत्रादि किम् ? पितृसदृशादि । [मासावरः । विद्यासमः । माषविकलम् । कलानिपुणः । विद्वन्मित्रम् ।] दशादिभिः सहैके । एकादयः टान्ताः एकेन सहाधिका वा दश । एकादश, द्वादशादि । एकशतम् । नवनवतिशतम् । सहस्रलक्षम् । दश-विंशतिप्रभृतिभिरष्टान्ताः । नवत्याः नवान्ताः । शतादिभिः सर्वेऽल्पाः । व्यञ्जनं मिश्रणं च संस्कारकं टान्तं क्रमेणोदनभक्ष्येण । खरविशदमभ्यवहार्यं भक्ष्यम् । दध्ना उपसिक्त ओदनः दध्योदनः । क्षीरान्नम् । गुडमिश्रधानाः गुडधानाः । लवणपृथुकाः । वृत्तौ क्रियान्तर्भावः । कर्तृकरणार्था भूद्भिः सुबन्तैः । राजहतः । असिच्छिन्नः । पादहारकः । कर्तृ-[करणार्थाः] किम् ? भिक्षाभिरुषितः । अधिकोऽर्थो वाच्यतया यस्य तेन यबन्तैर्न टा । काकपेया नदी । श्वलेह्यः कूपः । बाष्पच्छेद्यानि तृणानि । कण्टकसञ्चेय ओदनः । अधिकार्थ किम् ? तया भोक्तव्यम् । गणोऽन्यः । एकोऽयं द्वितीयोऽर्थादितरेभ्यो नायमेव तेन ङें । अर्थेन नित्यं सर्वलिङ्गता चोक्ता । त्वदर्थं पयः । [ब्राह्मणार्था यवागूः । आतुरार्थः सूपः ।] गोहितम् इत्यादि । तदर्थे त्वप्रकृत्या प्रलघुः । यूपदारु । कुण्डलहिरण्यम् । प्रकृत्या किम् ? रन्धनाय स्थाली । [गोसुखम् । कुबेरबलिः । गोरक्षितम् । अर्थ, हित, सुख, बलि, रक्षित इत्यर्थादयः ॥]

(१८) **पात्रादिना ङिः । [१।४।३।५।]** वा समस्यते । पुष्पितशाखया सा स्याच्छ्लोक आर्याऽत्र गणे चतुष्कम् ।

येनर्णे शौण्डः कितवकुशलौ सिद्धशुष्कादि पक्वा
वञ्चन्ति धूर्ताश्चपलनिपुणौ स्युः समो व्यानः ।
ध्यायाध्यानोयं यदुपश्रुयुतः पण्डितस्ते च नाम्नि
ध्वाङ्क्षैः क्षेपे तैरथ दिननिशांशाश्च तत्रेत्यतोऽयम् ॥१॥

पात्रे तु स्यातां समितबहुलौ पण्डितव्याऽतर्दी
नन्दी क्ष्वेडी सुविधि तुवि जिति व्यालदाही मही च ।

स्युर्गेहेतोर्मीविचितिविजितिक्ष्वेडिशूरप्रगल्भाः
गोष्ठेतो मौलः पटुरपि तथादौ च कूपावटाभ्याम् ॥२॥

मण्डूककच्छपौ स्यातां नगरात् काकवायसौ ।
तसद्दसौ च गर्भेतो शूरधीरोऽप्युदुम्बरात् ॥३॥

मशककृमी कर्णेतोऽपि टिरिटिरा चिरिचिरा तथा ।
पिण्डीशूराखनिकवकौ स्तो मातरि पुरुषो गणो ज्ञेयः ॥४॥

सप्तम्यन्तं सर्वत्र । येन प्रत्ययान्तेन ऋणे नियोगेऽवश्यकार्यत्वात् । मासदेयम् । द्व्यहदेयम् । पूर्वाह्णेगेयं साम । प्रातरध्येयोऽनुवाकः । ऋणे किम् ? मासे देया भिक्षा । तथा अक्षशौण्ड इत्यादि । प्रसक्तादिक्रियाधारे ङिः, अतो वाच्यादेराकृतिगणत्वाद् वा स्युः समः परे । संव्यानः । अयमिति व्याडश्च । नाम्नि । अरण्येतिलकाः । कूपेपिशाचिका । अलुक् । ध्वाङ्क्षैः क्षेपेऽर्थे । तीर्थे ध्वाङ्क्षः इव तीर्थध्वाङ्क्षः । एवं काकः । वायसः । अनवस्थितः । भिसूत्पर्यायान्यसुवर्णमवतप्ते नकुलस्थितम् । अनवस्थितत्व्यम् । उदके विशीर्णम् । प्रवाहे मूत्रितम् । भस्मनि हुतम् । क्रियावैफल्यम् । क्षेपे किम् ? तीर्थे ध्वाङ्क्ष अस्ति । क्तैः क्तान्तैरहोरात्रावयवाः । पूर्वाह्णकृतम् । अपररात्रकृतम् । तत्रेति सुपा । तत्र भुक्तम् । अत ऊर्ध्वमयमेव निपातसमासो नान्यः । परमे पात्रे समिताः । क्षेपो वर्तते । ङसेः परे स्र्वताः । पात्रेबहुलाः । गेहेतः । गेहेपण्डितः । गोष्ठेविचिती इत्यादि [=गोष्ठेविजिती, गोष्ठेक्ष्वेडी, गोष्ठेशूरः, गोष्ठेप्रगल्भः ] । मौलोऽनन्तरः, तत्रादौ पण्डितः । गोष्ठेपण्डितः । गोष्ठेपटुः अपि । तथा कूपमण्डूकः । कूपकच्छपः । अवटमण्डूकः । अवटकच्छपः । द्वौ एकैकार्थम् । एवं नगरकाकः । गर्भेतृप्तः । उदुम्बरमशकः । [उदुम्बरकृमिः ।] कर्णेटिरिटिरा । [कर्णेचिरिचिरा ।] इत्यादि [=पिण्डीशूरः । आखनिकवकः । मातरिपुरुषः] ॥

**(१९) भैकार्थसेकार्थविशेषभूतेः । [१।४।३।६।]** यित् तत्पुरुषो वर्ततेऽयं भिश्च । ३ व्यवहर्तव्यकर्मधारयं विशेषणसमासं वाऽऽहुरन्ये । एकार्थं समानाधिकरणम् एकादिसुबन्तम्, अर्थाद् विशेषणभूतं विशेष्यभूतैः सुबन्तैः सह वा समस्यते । इह दोधकेन्द्रवंशे उपजातिः सा रथोद्धता सार्या सा तोटको वितानाद्यष्टौ श्लोका विपुलमध्या ।

एकविशेषणसर्वपुराणाः प्राग्भवकेवलपूर्वजरन्तः ।
मध्यममध्यनवाऽपरवीराः स्तश्चरमप्रथमौ च समानः ॥१॥

उत्कृष्टसन्तौ परमोत्तमौ महान् पूज्यैः सवृन्दारकनागकुञ्जरैः ।
वर्णैः स घ्यप्तुल्यमसत्तया नञो ङे किं च निन्द्ये न च तेन कुत्स्नैः ॥२॥

कुत्स्यानि तैः पापाणकेऽगुणोक्तौ व्याघ्रर्क्षहस्तिन्नृषपुण्डरीकैः ।
सिंहर्षभौ चन्दनकुञ्जरौ तैः पूषद्वयकौ कुञ्जबलाधिके तैः ॥३॥

वराहपद्मौ रुरुणोपमेयं कुमारमध्यापकपण्डिताभ्याम् ।
युवामृदुः प्रव्रजितापटुस्तैः स्तैस्तुल्याभिरूपौ श्रमणा च दासी ॥४॥

गर्भिणी निपुणतापसी तथा बन्धकी च कुलटादितीश्च या ।
तीजवदर्धमपरार्धरोत्तरं पूर्वमंशमिति तैर्नञादितम् ॥५॥

गृष्टिर्वशावष्कयणी च धेनुः वहे तु पोटायुवतिः प्रशंसाः ।
स्याच्छ्रोत्रियाध्यापकधूर्तवक्तृस्तोकं पयान्तकतितैस्तु जातिः ॥६॥

गर्भिण्या च चतुष्पाज्जरद्वलिनपलितखलतिना तु युवा ।
स्युः शाकपार्थिवाद्याः श्रेण्याद्यच्व्यैः कृताद्यैस्तु ॥७॥

श्रेण्येकपूगश्रवणेन्द्रदेवाः अध्यापको राशिगुणै च मुण्डः ।
स्युर्ब्राह्मणक्षत्रियपण्डिताः स्युः पटुः पृथुकुण्डमभूतमादि ॥८॥

कृपणो विशपो निचयो निधनो निपुणः कुशलश्चपलश्च गणः ।
कृतभूतनिराकृतमास्थितकस्त्ववबुद्धतितोपकृताश्च मतः ॥९॥

ख्यातम्नातौ समाऽस्तु ज्ञातोऽवादपि धारित- ।
कल्पितौ भूत आसीनः भावितोपाकृतौ गणः ॥१०॥

भुक्तगतं कृतपीतमुपात्तं क्तैः फलिकाक्रयिकापुटिकाद्यै-
रत्र फलादय एककवीरव्यस्तसमस्तजरद्वलिनाद्याः ॥११॥

मयूरव्यंसकः च्छात्रव्यंसकः प्रोहकदर्माः ।
प्रोहकटा च पराचं निश्चितप्रचितं तथा ॥१२॥

कम्बोजमुण्डएहीडं स्नात्वाकालक आहरात् ।
वसनावनिताचेलाः आचोपचमकिञ्चन ॥१३॥

पञ्चमीहा द्वितीयाऽपेहेः स्वागता च वणिजा ।
प्रेहेश्च स्वागता चैहेः [द्वितीया एह्यपेहितः] ॥१४॥

जहिजोडो जहिस्तम्बो पवनमुण्डमुद्धमात् ।
विधमानिवपाचूडा उच्चान्नीचावचे तथा ॥१५॥

उत्पतनिपतोऽवाचनिपाचाकृंधिविचक्षणा तथेहियवम् ।
इह कर्मणा च पीत्वा स्थिरको भुक्त्वा सुहित एव ॥१६॥

निपत्यरोहिणी प्रेष्या पापीयानुद्धरोऽसजा ।
उद्धरा च सृजा चेति स्यादुत्पलकपालकाः ॥१७॥

निपन्ना च परा श्यामाजोऽस्तम्बौ तथोज्जहेः ।
आख्याते तेन साखादतमोदता[चमता] तथा ॥१८॥

अश्नीतपिबता दाम पचतभृज्जता
भिन्धिपचाविह तेभ्यो लवणाकूट्य च निष्किरा ॥१९॥

आहारनिपचेत्याद्या मयूरव्यंसकादिषु ।
अयमेव समासः स्याद् बहुलं सर्वमिष्यते ॥२०॥

एकश्चासौ पुरुषश्च एकपुरुषः । एक किम् ? द्वौ पुरुषौ । विशेषणं, नीलोत्पलम् । पाचकः। पाठकः । पाठकापाचकः । कुण्टखञ्जः । [खञ्जकुण्टः ।] क्वचिन्नित्यम् । कृष्णसर्पः । लोहितशालिः। क्वचिद्, रामो जामदग्न्यः । अर्जुनः कार्तवीर्यः । क्वचिद् व्यत्ययोऽपि । पुरुषोत्तमः । सिद्धसेनाचार्यः। आचार्यः सिद्धसेनः । एवं सत्त्वानामित्यादि । सर्व किम् ? सोऽयम् । प्राग्भवेति । पूर्वकालक्रियोऽपरकालक्रियेण । स्नातानुलिप्तः । कृष्टसमीकृतम् । दग्धप्ररूढम् । पूर्वापरौ किम् ? उत्तराः वृक्षाः । विशेषणमित्येवान्ये ॥१॥ उत्कृष्टादि ५ पूर्वैः ५ । उत्कृष्टपुरुषः । सन्ना । एवं [परमपुरुषः । उत्तमपुरुषः । महापुरुषः] । पूर्वैः किम् ? उत्कृष्टो गौः, कर्दमात् । संपूज्यः वृन्दारकाद्यैः । गोवृन्दारकः । [अश्वनागः । गोकुञ्जरः ।] पूज्यः किम् ? सुसीमो नागः । वर्णैः सवर्णः । शुक्लशुक्लः । शुक्लकृष्णः । लोहितसारङ्गः । समुदाये तदंशः । घ्यप्तुल्यमसत्तया । घ्यबन्तं तुल्याख्यं वाऽजात्या । [भोज्यं च तदुष्णं चेति] भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । तथा, तुल्यश्वेतः । सदृशमहान् । असत्तया किम् ? भोज्य ओदनः । नञो ङे किम् । नञः परस्यासत्तया ङे परे किंशब्दः कतरकतमौ जात्येत्यर्थः । [कतरः कठः] कतरकठः । [कतमः कलापः] कतमकलापः । जात्या किम् ? कतरो देवदत्तः । कतमो देवदत्तः । च निन्द्ये । निन्द्ये चार्थे किं सुपा । किंराजा यो न रक्षति । किंसखा योऽभिद्रुह्यति । न । दत्तः । निन्द्ये किम् ? को राजा तत्र वेति । तेन । येन गुणेन वतीत्युपमानं भूतं तत् तेन । [शस्त्रीव श्यामा] शस्त्रीश्यामा [देवदत्ता] । कुमुदश्येनी । हंसगद्गदा । न्यग्रोधपरिमण्डला । वति किम् ? सा श्यामा । तेन किम् ? फाला इव तन्दुलाः ॥ २ कुत्सनैः कुत्स्यानि, विशेषणपरत्वार्थम् । वैयाकरणखसूचिः । निष्प्रतिभ [इत्यर्थः] । मीमांसकदुर्दुरूढः, नास्तिकः । कुत्स्यानि किम् ? वैयाकरणश्चौरः । नात्र वैयाकरणत्वं कुत्स्यते । कुत्स्नैः किम् ? कुत्सितो विप्रः । तैः । अनन्तरकुत्स्यैः पापाणके कुत्स्नेऽपि । शकन्धादित्वादल्लोपः । पापकुलालः । अणकनापितः । अगुणोक्तौ । सामान्याप्रयोगे क्वचिद् वेत्यलोपः । व्याघ्रादिभि रुरुपर्यन्तैरुपमेयं, विशेषणपरत्वार्थे च । नरो व्याघ्र इव नरव्याघ्र इत्यादि ॥३॥ पद्मैर्भिसाकृत्यर्थः । [मुखपद्मम् ।] करकिसलयम् । पार्थिवचन्द्रः । अगुणोक्तौ किम् ? ना व्याघ्र इव शूरः । [कुमारम्] अध्यापकादिभिः कुलटान्तैः । आद्याकृत्यर्थः । अतश्चपलकुशलादिभिश्च । कुमारं परलिङ्गसदृशम् । कुमारपण्डितः । इत्यादि [=कुमाराध्यापकः । कुमारयुवा । कुमारमृदुः । कुमारप्रव्रजितः । कुमारपटुः] ॥४॥ कुमारी चासौ कुलटा च कुमारकुलटा । या इति तत्पुरुषः । एवं शमित्यन्तमेके । तीज्तीयादि सुपा । द्वितीयं भिक्षायाः द्वितीयभिक्षा । [तृतीयभिक्षा । चतुर्थभिक्षा । तुर्यभिक्षा ।] याजकादिषु । भिक्षाद्वितीयम् । [भिक्षातृतीयम् । भिक्षातुर्यम् ।] नबर्णर्धम् । नपुंसकमर्धं समप्रविभागे सुपा । अर्धं पिप्पल्याः अर्धपिप्पली । नप् किम् ? ग्रामार्धः । वेद्यधर्मशास्त्रीयम् । अपरादि ४, अंशमवयवभूतम् अर्थाद् अंशिना सुपा । अपरो भागः कायस्य अपरकायः । अंशं किम् ? अपरो ना । अंशिना किम् ? पूर्वं नाभेः कायस्य ।

एकार्थं किम् ? पूर्वं च्छात्राणामामन्त्रय । मध्याह्नः । सायाह्न इति ज्ञापकात् । कायादिपथ्यपवादः । तैरिति । क्तान्तैर्नञा सह तीति समस्तैः, तमिति क्तान्तम् । अशितानशितम् । क्लिष्टाक्लिशितम् ॥५॥ गृष्ट्यादिभिर्जातिवाचि । आसामर्थाः । सकृत्प्रसूता [गृष्टिः] । वन्ध्या [वशा] । तरुणवत्सा [बष्कयणी] । प्रत्यग्रप्रसवा [धेनुः] । गर्भघातिनी [वेहद्] । उभयव्यञ्जना [पोटा] । गोगृष्टिः । [गोवशा । गोबष्कयणी । गोधेनुः । गोवेहद् ।] इभ्यपोटा । [इभ्ययुवतिः ।] प्रशंसाः । बहुवचनात् तदर्थे रूढितो मतल्लिकादिभिर्जातेरन्यलिङ्गत्वेऽप्याविष्टलिङ्गैरेवैकार्थैः । अश्वमतल्लिका । गोमचर्च्चिका । कुमारीतल्लजिका । गोप्रकाण्डम् । तथा कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । कठप्रवक्ता । अग्निस्तोकम् । पयान्तं कति, ततः । दधिकतिपयम् ॥६॥ गर्भिण्या सह चतुष्पाज्जातिः । श्वगर्भिणी । चतुष्पात् किम् ? ब्राह्मणी गर्भिणी । जातिः किम् ? कालाक्षी गर्भिणी । जरदादिना युवा । युवजरन् । [युववलिनः । युवपलितः । युवखलतिः ।] स्त्रियाम् । युवजरती । [युववलिना युवपलिता । युवखलति ।] स्युः शाकपार्थिवाद्याः, कृतमध्यमपदलोपा एकाधिकरणाः । शाकप्रधानः पार्थिवः शाकपार्थिवः । ओदनपाणिनिः । यथाकृति ॥७॥ श्रेण्यादि । अच्वावर्थाच्च्व्यवृत्तिकृताद्यैः । अश्रेणयः श्रेणयः कृताः श्रेणीकृताः, इत्यादि । च्वौ नित्यम् । श्रेणीकृताः । श्रेण्यादिकृतादी गणान्तौ आकृतिभूतौ च । किन्तु समा ङः, ज्ञातश्च । समाख्यातः । [समाम्नातः । समाज्ञातः ।] एवम् अवज्ञातः । अवधारितः ॥९-१०॥ भुक्तादिकैः क्तित्वात् प्रादिपरैः । ते एव क्तादिभिः । प्राद्यनियम आकृतित्वात् । भुक्तविमुक्तम् । गतप्रत्यागतम् । कृतापकृतम् । पीतविपीतम् । ओ निपातः । यातानुयातम् । फलिकाद्यैः फलादयः । फलाफलिका । क्रयाक्रयिका । पुटापुटिका, आदि । मानोन्मानिका ह्यर्थ । कृतापकृतादि रूढम् ॥११॥ मयूरश्चासौ व्यंसकश्च मयूरव्यंसक इत्यादयो निपात्यन्ते । अयमेव समासः स्यान्नान्यः । परमो मयूरव्यंसकः । डीसेः । स्र्वन्तः ॥१२॥ आहरात् । आहरवसना । [आहारवनिता । आहरचेला ।] इहात् । इहपञ्चमी । [इहद्वितीया ।] अपेहेः । अपेहिद्वितीया । [अपेहिस्वागता । अपेहिवणिजा । प्रेहेश्च । [प्रेहिस्वागता ।] प्रेहिवाणिजा । एहेः । एहिस्वागता । चकाराद्, एहिवाणिजा ॥१३-१४॥ उद्धमात् । उद्धमविधमा । [उद्धमनिवपा । उद्धमचूडा ।] उच्चात् । उच्चनीचम् । [उच्चावचम् ।] एवं निषण्णश्यामा । उज्जहिजोडः । [उज्जहिस्तम्ब ।] एतौ जहिजोडः । [जहिस्तम्बः] च । बहुलमाभीक्ष्ण्ये । कर्तारं चाभिदधति । आख्यातं तेनाख्यातेन सातत्येऽर्थेऽतः । भिन्ध्यादेः ३ लवणा च । भिन्धिलवणा । [छिन्धिलवणा । पचलवणा ।] अविहितलक्षणास्तत्पुरुषा इह द्रष्टव्याः ॥१५-२०॥

**(२०) दिगस्थसंज्ञान्यपदे [१।४।३।७।]** दिग्वाचिसुबन्तमेकार्थम् अस्थे अन्वर्थविहिततद्धितार्थे विषयभूते, संज्ञायां च, अन्यपदे उत्तरपदे च परतः, सुपा वा समस्यते । भिद्यिच्च समासः स्यात् । अस्थे । दक्षिणस्यां शालायां भवः दक्षिणशालः । नाम्नि । दक्षिणकोशला । [उत्तरकोशला] । दक्षिणपाञ्चालाः । [उत्तरपञ्चालाः ।] पूर्वेषुकामशमी । अन्यपदे । दक्षिणा गौः प्रिया यस्य स दक्षिणगवीप्रियः । [उत्तरगवीप्रियः ।] अस्थे किम् ? सदक्षिणपूर्वा । एषु किम् ? उत्तराः कुरवः । द्विगुश्चेत्युत्तरार्थम् ॥३॥

**अध्यर्धमर्धादि च पूरणं षा सङ्ख्या समाहार उ नेयदादेः ।**
**द्वन्द्वो गवाश्वादि यथोपदिष्टं टोऽन्तः पदादुत्तरतो हषच्चोः ॥१।४।४॥ वृत्तम् ॥**

**( २१ ) अध्यर्धमर्धादि च पूरणं षा सङ्ख्या [ द्विगुः । १।४।४।१। ]** षा परार्थः । अध्यर्धं पूर्वपदं पूरणप्रत्ययान्तं सङ्ख्यावाचि चैकार्थं सुपा वा समस्यतेऽस्थादौ समासो द्विगुसंज्ञोऽभियश्च स्यात् । टं क्रीतम् अध्यर्धकंसम् । एवम् अर्धकंसम् । एवम् अर्धषष्ठकंसम् । तदपत्यम् । पाञ्चनापिति: । संस्कृतोऽत्र पञ्चकपालः । नाम्नि । पञ्चाम्राः । सप्तर्षयः । उत्तरपदे । अध्यर्धशूर्पधनः । अर्धतृतीयकंसधनः । द्वे अह्नी जातस्य द्व्यहजातः, द्व्यह्नजातः । अस्थे किम् ? पञ्चखट्वा, दशगुः, सा । एषु किम् ? पञ्च विप्राः ॥

**( २२ ) समाहारे । [ १।४।४।२। ]** अध्यर्धादि ३ एकार्थसुपा समस्यते समाहारे सहभावेऽर्थे द्विगुः षालक्षितः स्यात्, भिघिच्च । अध्यर्धपूली । अर्धपञ्चपूली । त्रिभुवनम् । पञ्चकुमारि । उ निपातः ॥

**( २३ ) नेयदादेर्द्वन्द्वः । [ १।४।४।३। ]** इयतः परिमाणवाचिनस्तदादीनां द्वन्द्वः समाहारो न स्यात् । अत्रेतरेतरयोगः चोक्तोऽपि स्यात् । तोटकानुष्टुप् षट्पदी च ।

असमीप इयद्द्विगुणोक्त्यजसौ मृगवीतृणधान्यरुरुश्च चमू ।
नृफला नकुलज्मधुसर्पिरितो विपरीतमथो स च वैःश्रवणो ॥१॥

इध्मबर्हिर्दधिपयः परिव्राट्कौशिकौ तपः ।
दीक्षाध्ययनमेधाश्रद्धाभ्यो ब्रह्मप्रजापती ॥२॥

शुक्लकृष्णे च याज्यानुवाक्ये वाङ्मनसे तथा ।
रुक्मामोष्कन्दविशाखौ प्रवर्ग्यासमदौ तथा ।
श्रद्धामेधाद्यवसानोलूखलमुशलानि वृत् ॥३॥

तत्र षष्ठी योज्या । असमीपेऽर्थे इयतां गवाश्वाद्यपवादः । दश दन्तौष्ठाः, पञ्च मार्दङ्गिपाणविकाः, इत्यादि । समीपे त्वियतां तत्रापाठादुभयम् । उपदशं पाणिपादम् । [उपदशाः पाणिपादाः ।] अनुदशं [पाणिपादम् । अनुदशाः पाणिपादाः ।] आसन्नविंशं [पाणिपादम् । आसन्नविंशाः पाणिपादाः ।] विगुणोक्ति । विरुद्धैर्गुणैरभिधानं यस्य तस्य । शीतोष्णे उदके । सुखदुःखौ ग्रामौ । विरुद्धः किम् ? गौरपटू नरौ । गुणः किम् ? अग्न्युदकम् । [अग्न्युदके ।] उक्तिः किम् ? सुखदुःखम् । [सुखःदुःखे ।] शीतोष्णम् । [शीतोष्णौ ।] यद्वा विरोधिनामद्रव्याणां वा समाहार इति वचनात् । विशिष्टा अविरुद्धा गुणास्तेषामुक्तिर्या न द्रव्याणां तस्याः । कामक्रोधौ । रूपरसौ । उक्तिग्रहणात्, संयोगविभागौ, गमनाकुञ्चने । अविरुद्धाः किम् ? सुखदुःखम् । [सुखदुःखे ।] गुणः किम् ? नराश्वम् । [नराश्वौ ।] अविरुद्धगुणोक्तिः किम् ? अग्न्युदकम् । [अग्न्युदके ।] द्वितीयमर्थं नेच्छन्त्येके । कामक्रोधौ । [सुखदुःखौ] इत्याद्युदाहरन्ति । अजशः । अबह्वर्था इत आनकुलान्ताः । रुरुपृषतौ । रुरुश्च पृषतौ च रुरुपृषताः । हंस चक्रवाकौ । व्रीहियवौ । प्लक्षन्यग्रोधौ । धवखदिरपलाशाः । चमूनृ । सेनापुरुषाः । रथिकाश्वरोहौ । नृ किम् ? हस्त्यश्वम् । [हस्त्यश्वौ ।] बदरामलके । आनकुलच् व्यत्याहारार्थम् । नृच्न चच् ।

क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्र एव यः ।
शतं वा प्रसृतौ येषां केचिदानकुलादपि ॥४॥

अत्र हस्तपादादिभ्योऽन्त्या स्मृतिः प्रमाणम्, अतः सोक्ता । यूकालिक्षे । मधुसर्पिरितः । इतौ द्वौ द्वौ द्रष्टव्यावसुबन्तौ कार्यौ । मधुसर्पिषी । विपरीतमथो । सर्पिर्मधुनी । तपः दीक्षादेः दीक्षातपसी। [अध्ययनतपसी । मेधातपसी । श्रद्धातपसी ।] इत्यादि ॥

**(२४) गवाश्वादि । [१।४।४।४।]** द्वंद्वसमाहार एव श्लोकत्रयार्या इह तोटकं च ।

गवाश्वं कुब्जकैरातं पुत्रपौत्रं गवाविकम् ।
स्त्रीकुमारं श्वचाण्डालं गवैडकमजाविकम् ॥१॥

दासीमाणवकं शाटीपिच्छकं कुब्जवामनम् ।
उष्ट्रशशं यकृन्मेदमुष्ट्रखरमजैडकम् ॥२॥

दासीदासं कुटीकुटं मूत्रशकृत्तृणोलपम् ।
दर्भशरं तथा मूत्रपुरीषं मांसशोणितम् ॥३॥

भगवतीभागवतं चार्जुनपुरुषं च दर्भपूतीकम् ।
प्राक्पदकारुसदावैर्यासन्नाधीति वा द्योक्ति ॥४॥

स्थेणि लुङाचरणाऽपनुवादेऽव्यञ्जनजन्तुतृचामविजातिः ।
प्राणिलवानबध्वर्युक्रतुर्ज्जसचश्च त्रिलिङ्गनदीपुरदेशाः ॥५॥

सुगमम् । प्राक्पद इत्यादि । पूर्वपदभूतानां द्वन्द्वः । एवं सर्वत्र षष्ठी । वाक्पचप्रियः । यैर्भुंक्ते संस्कारेणापि पात्रं न शुध्यति त र्जितशूद्राः कारवस्तेषाम् । तक्षायस्कारम् । रजकतन्तुवायम् । कारु किम् ? चाण्डालमृतपाः । [मूकबधिराः ।] सदावैरि । नित्यवैरिणाम् । अश्वमहिषम् । काकोलूकम् । अहिनकुलम् । सदा किम् ? गोपालशालङ्कायनाः । कलहायन्ते । आसन्नाधीति । नित्यपाठानाम् । पदक्रमकम् । क्रमकवार्तिकम् । आसन्न किम् ? याज्ञिकवैयाकरणौ । पाठ किम् ? पितापुत्रौ । वाद्योक्ति । वाद्यनिमित्ता उक्तिर्येषाम् । वान्याङ्गं वा पाठस्तेषाम् । मार्दङ्गिकपाणविकम् । वाद्योक्ति किम् ? दोषिकपावारिकौ । स्थेणिलुङा चरणानुपवादे । चरणानामनुवादविषये स्थेणोर्लुङा युक्तयोः प्रयोगे सति । प्रत्यष्ठात् कठकौथुमम् । उदगात् कठकालापम् । प्रमाणान्तर-ज्ञानयोरुदयप्रतिष्ठयोरनुवादः । अन्यत्र उदगुस्ते [= कठकौथुमाः । कठकालापाः ।] चरणाः किम् ? उदगुर्मीमांसक वैयाकरणाः । स्थेणोः किम् ? अगमन् ते [=कठकालापाः] । लुङा किम् ? अतिष्ठन् ते । अव्यञ्जनजन्तुतृचामविजातिः । तृच् तृणादि । व्यञ्जनादिवर्जितजातिवाचिनाम् । आराशस्त्रि । धानाशष्कुलि । व्यञ्जनादिनिषेधः किम् ? दधिघृते । ब्राह्मणक्षत्रियौ । तृजर्थाद् बहुत्वे । कुशकाशाः । व्रीहियवाः । प्लक्षन्यग्रोधाः । जातिः किम् ? नन्दकपाञ्चजन्यौ । प्राणितुल्यद्रव्यजातिः किम् ? कामक्रोधौ इत्यादि वेत्यन्ये । प्राणिलवानबध्वर्युक्रतुः । प्राण्यङ्गानाम् अनपुंसकलिङ्गानां यजः क्रतूनां चाच्चक्रलघुश्रुति । पाणिपादम् । शिरोग्रीवम् । लव किम् ? नरनारायणौ । अर्काश्वमेधम् । सायाह्नातिरात्रिकम् । अनप् किम् ? राजसूयवाजपेयौ । अध्वर्यु किम् ? इषुवज्रौ । क्रतु किम् ?

दर्शपौर्णमासौ । ससोमको हि यागः क्रतुः । जसचश्च । बह्वर्थानाम् । रथिकाश्वरोहम् । पदातिमहामात्रम्। नृ किम् ? हस्त्यश्वाः । यदाह परत्वात् पशूनां वा । चन्द्रो हस्त्यश्वम् आह [चा० २.२.५९] । फलम्। बदरामलकम् । आनकुलच् । दंशमशकम् । नकुलमूषिकम् । द्वित्वे इतरेतरयोग एवोदाहृतः । विलिङ्गनदीपुरदेशाः । विसदृशलिङ्गानां नद्यादीनाम् । उद्ध्यैरावति । गङ्गाशोणम् । मथुरापाटलिपुत्रम् । काञ्चीकान्यकुब्जम् । कुरुकुरुक्षेत्रम् । [कुरु-] कुरुजाङ्गलम् । एषां किम् ? कैलासगन्धमादने पर्वतौ। जाम्बवशालूकिन्यौ ग्रामौ । शौर्यं नगरं केतवना च ग्रामः शौर्यकेतवने । पुराश्रयो हि विधिरस्ति, ग्रामाश्रयो हि [प्रति-]षेधः । अन्यस्त्वाह-'उभयतो ग्रामाणां प्रतिषेधो वक्तव्यः । सौर्यकेतवने । [काशि० २।४।७] तदत्रोभयमुभयस्मिन् ॥५॥

**( २५ ) यथोपदिष्टम् । [ १।४।४।५। ]** इदं निपात्यते, नान्यथा । गोश्वौ । तत्पूर्वोत्तरपदामेव वान्यत्र । बदराश्वारोहाः । रथिकन्यग्रोधाः । यद्वा यथोपदिष्टं पूर्वाचार्यैस्तेन मृगादि विशेषणमेव तथोदाहृतम् । सामान्यविशेषयोस्तु न द्वन्द्वोऽपि । मृगश्च हरिणश्च । वृक्षश्चाशोकश्चेत्यादि । मृगादेः किम् ? नरनारायणौ । पुरुषार्जुनौ । गोबलीवर्दौ । सर्वत्रान्ये । भिन्नलिङ्गयोश्च नेत्येके । गार्गी च गार्ग्यायणश्च । वात्सश्च वात्स्यायनी च द्वन्द्वः स्यात् । यथा, इन्द्रेन्द्राण्यौ । स्वार्थे तु स्त्रिया नेति, गार्ग्यौ, वात्स्यौ । तथा, अश्ववडवौ । अश्ववडवाः । इति च पुल्लिङ्गार्थं निपात्यते । समासार्थं वान्ये।

**( २६ ) टोऽन्तः पदादुत्तरतो हषच्चोः । [ १।४।४।६। ]** समाहारद्वन्द्वात् हषदचवर्गोत्तरपदात् परष्टः प्रत्ययः स्यात् । स च तस्यान्तोऽवयवः स्यात् । छत्रोपानहम् । धेनुगोदुहम् । वाक्त्विषम् । वाग्विप्लुषम् । सुहृदसुहृदम् । वाक्त्वचम् । श्रीस्रुजम् । समाहारः किम् ? पावृट्शरदौ । द्वन्द्वः किम् ? पञ्चवाक् । हादि किम् ? वाक्समित् । तदन्तत्वाद् हादद्वन्द्वादिनीत्यादि । केशत्वचिनी । पेद्यर्थः । छत्रोपानहाः ॥४॥

**रात्रिन्दिवाद्याडहनं द्विगोर्वा द्वित्रेरलुज्यञ्जलितस्तु खार्याः ।**
**भार्धाच्च नावः सखिराजनह्वः पिद्गोश्च तक्ष्णः खलु ग्रामकौटात् ॥१।४। ५ ॥ वृत्तम् ॥**

**( २७ ) रात्रिन्दिवादि । [ १।४।५।१। ]** कृतनानाप्रत्ययसमासान्तं निपात्यते । श्लोकास्तु पञ्चेह ।

रात्रन्दिवं पदष्ठीवं नक्तन्दिवमहर्दिवम् ।
ऊर्वष्ठीवमहोरात्रं द्व्यायुषं पुरुषायुषम् ॥१॥

त्र्यायुषर्ग्यजुषे दारगवं चाक्षिभ्रुवं तथा ।
स्याद् धेन्वनडुहं सेतः सुप्रातः सुदिवस्तृचम् ॥२॥

सारिकुक्षश्चतुरस्त्रः एणीपदमजापदम् ।
स्वसुप्रोष्ठपदं षोडन् भद्रपदं पदेन नो ॥३॥

मित्रेतरं सुहृदुहृद् द्वित्रेः स्तावा च वेदिका ।
व्याधेन दक्षिणेर्मा च त्रिककुत् पर्वते तथा ॥४॥

अषडक्षाशितङ्ग्भ्यामध्यायतालंपुरुषतः स्यात् ।
अलंकर्मण इन स्यादेवमादिगणादतः ॥५॥

वाक्यमित्थम् । रात्रौ च दिवा च भुङ्क्ते । पादौ चाष्ठीवन्तौ च । नक्तं च दिवा च । रात्रिन्दिवमित्यर्थः । अहश्च दिवा च । [अहरहरित्यर्थः । वीप्सायां द्वन्द्वोऽस्मादेव निपातनात् ।] ऊरू चाष्ठीवन्तौ च । अहश्च रात्रिश्च । द्वे आयुषी समाहृते । एवं त्रीणि । पुरुषस्यायुः, वर्षशतमित्यर्थः । ऋक् च यजुश्च । दाराश्च गावश्च । अक्षिणी च भ्रुवौ च । धेनुश्चानड्वांश्च । इतरेतरयोगेऽपि द्वन्द्वे । सेतः इतो बहुव्रीहेरत् । शोभनं प्रातः कर्मास्य । एवं सुदिवः । सुभ्यः । तिस्रस्तृचोऽत्र तृचं सूक्तं, तृचोऽनुवाकः । षिति तृचं छन्दः । छन्दोऽन्यत्र । त्र्यृचो ना । सारेरिव कुक्षिरस्य । चतस्रोऽस्रयोऽस्य । षड् दन्ता अस्य [षोडन् ।] त्रि एणीपदादयः पदेन चेत् सेत्स्यन्ति नो, अतिप्रसङ्गात् । सुहृन् मित्रः । दुहृदमित्रः । अन्यत्र सहृदयः । [दुर्हृदयः ।] द्वित्रिभ्यां स्ता वा स्याद् वेदिश्चेत् । द्विस्तावा, [त्रिस्तावा] । वेदिका किम् ? द्विस्तावती, [त्रिस्तावती] रज्जुः । दक्षिणमीर्मं व्रणमस्य दक्षिणेर्मन् [मृगः], व्याधेन योगे व्याधकृतं चेत् तत् । दक्षिणोर्मोऽन्यत्र [=पशुः] । एवं त्रिककुदोऽन्यः । अषडक्षादेः । इन स्यादसितोऽपि । न सन्ति षडक्षीणि [पितुः पितामहस्य पुत्रस्य च] अस्य अषडक्षीणो मन्त्रः । आशिताः तृप्ता गावोऽस्मिन् भवन्ति [तद्] आशितगवीनमरण्यम् । राज्ञि अध्यायतः राजाधीनः । अलं पुरुषाय अलम्पुरुषीणः । [अलङ्कर्मणे] अलङ्कर्मीणः । एवमाद्यकृतसमासान्तान्त आकृतिगणे ज्ञेयम् ॥

**( २८ ) आडहनं द्विगोः । [ १।४।५।२। ]** आड् अहन् अन् एतदन्ताद् द्विगोष्टः स्यात् । [पञ्च खट्वाः समाहृताः] पञ्चखट्वम् । पञ्चखट्वी । द्व्यहः । पञ्चतक्षम् । शतराजम् । अहन् पुनर्विध्यर्थः ॥

**( २९ ) वा द्वित्रेरलुज्यञ्जलितस्तु । [ १।४।५।३ ]** । द्वित्रिभ्यां परादञ्जलेर्वा टा द्विगोरलुकि सत्यणादेः । [द्वयोरञ्जल्योः समाहारः] द्व्यञ्जलम् । त्र्यञ्जलम् । द्वाभ्यामञ्जलिभ्यामागतं] द्व्यञ्जलरूप्यः । [त्र्यञ्जलरूप्यः ।] द्व्यञ्जलमयः । [त्र्यञ्जलमयः ।] द्व्यञ्जलप्रियः । [त्र्यञ्जलप्रियः ।] त्र्यञ्जलिः । [द्वावञ्जली प्रियौ यस्य य द्व्यञ्जलिप्रियः । त्र्यञ्जलिरूप्यः । त्र्यञ्जलिमयः ।] लुकि । [द्वाभ्यामञ्जलिभ्यां] क्रीते द्व्यञ्जलिर्घटः । द्विगोः किम् ? [द्वयोरञ्जलिः] द्व्यञ्जलिः । द्व्यञ्जलिकः । अन्यत्राप्येवम् ॥

**( ३० ) खार्याः । [ १।४।५।४। ]** खार्यन्ताद् द्विगोर्वा टो लुचि । पञ्चखारम् । [पञ्चखारी । द्विखारमयम् । द्विखारीमयम् । पञ्चखाररूप्यम् । पञ्चखारीरूप्यम् । द्विखारप्रियः । द्विखारीप्रियः ।] उत्तरपदात् किम् ? पञ्चयवखारि ॥

**( ३१ ) भार्धाच्च । [ १।४।५।५। ]** चोत्तरत्र द्विषनुवृत्त्यर्थः । अर्धाद् भिति खार्यन्ताद् हो वा । अर्धं च तत्र खारी च, खार्या वा । अर्धखारम् । अर्धखारी ॥

**( ३२ ) नावः । [ १।४।५।६। ]** नावन्तादार्धाद् द्विगोश्चालुचि टो नित्यं, पार्थक्यात् । अर्धनावम् । द्विनावम् ॥

**(३३) सखिराजनह्नः पित् । [१।४।५।७।]** पित्तत्पुरुषात् सख्याद्यन्ताट्टः स्यात् । राजसखः । अतिसखः । परमराजः । उत्तमाहः । एकाहः । उक्तरूपग्रहणात्, प्रियसखी । विद्याराज्ञी । अतिद्वयह्ना ॥

**(३४) गोश्च । [१।४।५।८।]** पितो गवन्ताद् द्विगोश्चालुचि टो द्विगुः पिद्वेव । राजगवः । ४ [=अतिगवः । परमगवः । उत्तमगवः ।] पञ्चगवः । ४ लुचि । पञ्चगुः । पित् किम् ? चित्रगुः । गोः किम् ? परमनौः ॥

**(३५) तक्ष्णः खलु ग्रामकौटात् । [१।४।५।९]** । पिदाभ्यां तक्ष्यः टः । कुट्यां भवः कौटः । [ग्रामस्य तक्षा] ग्रामतक्षः । [ग्रामभूतः] साधारणः [तक्षा] । [कौटस्तक्षा] कौटतक्षः । [स्वापणशालायां यः कर्म करोति] स्वतन्त्रः [इत्यर्थः] । आभ्यां किम् ? राजतक्षा ॥५॥

**राष्ट्रतो ब्रह्मणो वा महत्को भितः स्यान्महज्जातवृद्धात्तथोक्षा सुरा- ।**
**श्वातिगोष्ठादिवार्थात्त्रसाच्छेतरात् सक्थिपूर्वोत्तरात् तन्मृगादश्मनः ॥१।४।६॥ स्त्रग्विणी ॥**

**(३६) राष्ट्रतो ब्रह्मणः । [१।४।६।१।]** ब्रह्मान्ताज्जनपदवाचिनोऽपितष्टः । सुराष्ट्रेषु वसति ब्रह्मा सुराष्ट्रब्रह्म । [सौराष्ट्रको ब्राह्मण इत्यर्थः ।] काशीब्रह्म । राष्ट्रात् किम् ? देवब्रह्मा नारदः ॥

**(३७) वा महत्कोः । [१।४।६।२।]** आभ्यां ब्रह्मणोऽपिति वा टः । महाब्रह्मः । महाब्रह्मा । महद्ब्रह्म । [महद्ब्रह्मा ।] कुब्रह्मः । [कुब्रह्मा] ॥

**(३८) भितः स्यान्महज्जातवृद्धात् तथोक्षा सुरा । [१।४।६।३।]** सुरेत्यतः प्रथमयोक्तादपि टादिः, स वा तदन्तः । भितो महदादेः उक्ष्यः टः । महोक्षः । [जातोक्षः । वृद्धोक्षः ।] भित् किम् ? महदुक्षा ॥

**(३९) श्वातिगोष्ठादिवार्थात् त्रसात् च । [१।४।६।४।]** च पिदर्थः । एभ्य इति श्वा टान्तः स्यात् । अतिश्वः [श्वानमतिक्रान्तो], वराहो वेगी, सेवको भक्तः । अतिश्वी सेना, नीचा । [गोष्ठे श्वा] गोष्ठश्वः । इवार्थात् । व्याघ्र इव श्वा व्याघ्रश्वः । इवार्थात् किम् ? नृ श्वा । त्रसात् [=अजीवात्] किम् ? फलकश्वः ॥

**(४०) इतरात्, । [१।४।६।५।]** अत्रसात् परः सुप् परिणामाद् इवार्थः स्वाटातो यिति । आकर्षः श्वेव, आकर्षश्वः । फलकश्वः । अत्रसात् किम् ? कपिः श्वेव । वत् किम् ? अश्वा पांशुराशिः ॥

**(४१) सक्थि पूर्वोत्तरात् तन्मृगात् । [१।४।६।६।]** तदित्यत्र सादिवार्थात् पितेभ्यः सक्थि टान्तम् । पूर्वं सक्थि, पूर्वसक्थम् । [उत्तरं सक्थि, उत्तरसक्थम् । फलकमिव सक्थि, फलकसक्थम् । [मृगस्य सक्थि,] मृगसक्थम् । एभ्यः किम् ? श्वसक्थि ॥

**(४२) अश्मनः ।** उत्तरार्थम् ॥६॥

**नामजात्योः सरोऽनोऽयसोऽग्रे उरो वान्तसङ्ख्याततोऽह्नोऽंशसङ्ख्याव्ययात् ।**
**सर्वतोऽ-पुण्यवर्षैकसङ्ख्यातदीर्घाच्च रात्रेर्नञो नो गवादेः पथो वा किमः स्त्रग्विणी ॥१।४।७॥**

**( ४२ ) नामजात्योः सरोऽनोऽयसः । [ १।४।७।१। ]** नाम्नि जातौ चार्थे अश्मने तदन्तात् पितष्टः । पिण्डाश्मः । जलसरसम् । लोहायसम् । इति संज्ञा । अमृताश्मः । मण्डूकसरसम् । उपानसम् । कालायसम् । इति जातिः ॥

**( ४३ ) अग्रे उरः । [ १।४।७।२। ]** उरोन्तात् पितष्टोऽग्रे प्रधानेऽर्थे भित् । हस्त्युरसम् । [उरः] सेनामुखं हस्तिनः [इत्यर्थः ।] हस्तिप्रधानं वा । अग्रे किम् ? क्रदुरः ।

**( ४४ ) वान्तसङ्ख्याततोऽह्नः । [ १।४।७।३। ]** अहरन्तसंख्यातात् पितष्टः, तत्रान् वा नः स्यात् । सङ्ख्यातमह्नः सङ्ख्याताह्नः, सङ्ख्याताहः ।

**( ४५ ) अंशसङ्ख्याव्ययात् सर्वतः । [ १।४।७।४। ]** एभ्योऽह्नस्तथा । अन् नो नित्यं, पार्थक्यात् । अंशोऽह्नः । पूर्वो भागोऽह्नः, पूर्वाह्णः । मध्याह्नः । दूयोरह्नोर्भवः द्व्यह्नः । अह्नप्रियः । द्व्यह्नजातः । अत्यह्नः । सर्वाह्नश्च ॥

**( ४६ ) अत्पुण्यवर्षैकसङ्ख्यातदीर्घाच्च रात्रेः । [ १।४।७।५। ]** रात्र्यन्तात् पुण्यादेः अंशादेश्च पितोऽत् स्यात् । भित्, पुण्यरात्रः । [वर्षारात्रः । एकरात्रः । सङ्ख्यातरात्रः । दीर्घरात्रः । एकग्रहणात् सङ्ख्या न स्मर्यते । पूर्वरात्रः । [अपररात्रः । उत्तररात्रः] ॥

**( ४७ ) नञो नो । [ १।४।७।६। ]** यतष्टादिविधिर्नञः परात् ततोऽसौ न स्यात् । गो । सखि । राजन् । अहन् । रात्रि । अङ्गुलि । ऋक् । पुर् । पथिन् । अप् । धुर् । [इति गवादिः] प्रयोजनम् । अगौः । इत्यादि [= असखा । अराजा । अनहः । अरात्रः । अनङ्गुलः । अनृचः । ललाटपुरम् । राजपथः । द्वीपः । राज्यधुरा ॥]

**( ४८ ) पथो वा । [ १।४।७।७। ]** तथैव वा । अपथः । अपन्थाः । पित् किम् ? अपथो ग्रामः ।

**( ४९ ) किमः** । परार्थः ॥

**क्षेपे तु पूजा स्वतितष्टनातः सङ्ख्या डसादेस्तु ततोऽङ्गुले सार् ।**
**काष्ठे टिदन्तर्बहिषस्तु लोम्नः सङ्ख्याऽबहु स्यादगणः प्रमाणी ॥१।४।८॥ वृत्तम् ॥**

**( ४९ ) क्षेपे तु । [ १।४।८।१। ]** क्षेपेऽर्थे किमः पराद् रादिभाजः स न स्यात् । किंगौः । किंधूः । शकटम् । किमक्षिर्ना, क्षेपोक्तेः सिति च । क्षेपे किम् ? कस्य राजा, किंराजः ॥

**( ५० ) पूजा स्वतितष्टनातः । [ १।४।८।२। ]** पूजार्थस्वतिपराद् वाऽऽदिभाजः ट न अत् नैते स्युः । स्वगौरति गौरित्यादि । नातः किम् ? स्वक्षिको ना । सूत्रद्वये पिदेव न ॥

**( ५१ ) सङ्ख्या डसादेस्तु । [ १।४।८।३। ]** सङ्ख्यावाच्यन्ताच्चादेर्पितो ड स्यात् । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । [निर्गतानि त्रिंशतः] निस्त्रिंशानि वर्षाणि । निश्चत्वारिंशानि ॥

**( ५२ ) ततोऽङ्गुले । [ १।४।८।४। ]** अवादिसङ्ख्याभ्यां यित्यङ्गुल्यन्ताभ्यां डः ।

अत्यङ्गुलः । द्वे अङ्गुली प्रमाणमस्य, द्व्यङ्गुलम् । द्व्यङ्गुलप्रियः । ततः किम् ? परमाङ्गुलिः । पित् किम् ? पञ्चाङ्गुलिर्हस्तः ॥

**(५३) सार् काष्ठे टित् । [१।४।८।५।]** सितोऽङ्गुल्यन्तात् काष्ठे दारुणि अर्थेऽर् स्यात् स च टित् । द्वे अङ्गुली अस्य, द्व्यङ्गुलम् । त्र्यङ्गुली यष्टिः । स्वङ्गुली । काष्ठे किम् ? पञ्चाङ्गुलिर्हस्तः । अडनिषेधार्थं टिदात्र च टाकृतेः ॥

**(५४) अन्तर्बहिषस्तु लोम्नः । [१।४।८।६।]** आभ्यां पराल्लोम्नोऽत् स्यात् सिति । [अन्तर्लोमानि यस्य स] अन्तर्लोमः प्रावारः । [बहिर्लोमः पटः] ॥

**(५५) सङ्ख्याऽबहु स्यादगणः प्रमाणी । [१।४।८।७।]** बहुगणवर्जसङ्ख्या प्रमाण्यन्तात् सितोऽत् । दशानां समीपा उपदशाः । आसन्नदशाः । प्रतिपदोक्तात् सितः किम् ? प्रियपञ्चा नरः । स्त्री प्रमाणं येषां ते स्त्रीप्रमाणाः, भार्याप्रधानाः । नाभ्याम् उपबहुवः । अतोऽन्यत्रैतौ सङ्ख्या ॥८॥

**सूपस्त्रिनञ्वेश्चतुरोऽप् च पूरणी पूर्ये तु भान्नेतृसुदुर्नञः प्रजास् ।**
**मेधाल्पमन्दाद्धलि सक्थि वाप्त्रयात् धर्मेति जम्भात्तृणसोमसोस्तथा ॥१।४।९॥ इन्द्रवंशा ॥**

**(५६) सूपस्त्रिनञ्वेश्चतुरोऽप् च । [१।४।९।१।]** चतुरान्तात् स्वादेः सितोऽप् स्यात्, सुतरामस्य चत्वारि विषयीभवन्ति । शोभनाश्चत्वारोऽस्येत्यादि, सुचतुरः । [चत्वारः समीपे येषां ते उपचतुराः । त्रयो वा चत्वारो वा त्रिचतुराः । अदृश्यान्यविद्यमानानि वा चत्वारि यस्य सोऽचतुरः । विगतानि चत्वारि यस्य स विचतुरः] ॥

**(५७) पूरणी पूर्ये तु । [१।४।९।२।]** पूरण्यन्तात् सितोऽप् पूर्ये वृत्त्यर्थे । कल्याणीपञ्चमा रात्रयः । पूर्ये किम् ? कल्याणीपञ्चमीकः पक्षः ॥

**(५८) भान्नेतृ । [१।४।९।३।]** नेत्रन्तान्नक्षत्रात् सितोऽप् । [मृगो नेता आसां रात्रीणाम्,] मृगनेत्रा रात्रयः । भात् किम् ? नृनेतृकः ॥

**(५९) सुदुर्नञः प्रजास् । [१।४।९।४।]** स्वादेः प्रजान्तात् सितोऽस् । सुप्रजाः । दुष्प्रजाः । अप्रजाः ।

**(६०) मेधाल्पमन्दात् । [१।४।९।५।]** मेधान्तात् स्वादेः अल्पमन्दाच्च सितोऽस् । सुमेधाः । दुर्मेधाः । अमेधाः । अल्पमेधाः । मन्दमेधाः ॥

**(६१) हलि सक्थि वाप् त्रयात् । [१।४।९।६।]** त्रयात् [=सुदुर्नञः] स्वादेः हलि सक्थ्यन्तात् सितोऽप् वा । सुहलः । [दुर्हलः । अहलः ।] सुहलिः । [दुर्हलिः । अहलिः ।] सुसक्थः । [दुस्सक्थः । असक्थः ।] सुसक्थिः । [दुस्सक्थिः । असक्थिः ।] शक्ति वा पाठः । सुशक्तः । [दुःशक्तः । अशक्तः । सुशक्तिः । दुःशक्तिः । अशक्तिः] ॥

**(६२) धर्मेति । [१।४।९।७।]** इति विवक्षार्थः । धर्मान्तात् सितोऽन् स्यादसहायपूर्वपदात् । समानो धर्मोऽस्य सधर्मा । परधर्मा । केवलात् किम् ? परमस्वधर्मः ॥

**(६३) जम्भात् तृणसोमसोस्तथा । [ १।४।९।८। ]** जम्भान्तात् तृणादेः सितोऽन् । तथेति लक्ष्यं यथेति हरिताच्च । तृणजम्भा । [सोमजम्भा । सुजम्भा [=शोभनो जम्भोऽस्य, देवदत्तः] । हरितजम्भा ।] जम्भोऽभ्यवहारार्थः, दन्तवाची च ॥९॥

**जातीयमासेकभृतौ कृतात् स्याद् गन्धेत्सुपूत्युत्सुरभेर्गुणे तु ।**
**वाल्पे त्विवार्थादिनु सर्वबीजा अहस्तितः पादिति कुम्भपद्यः ॥१।४।१०॥**

**(६४) जातीय । [ १।४।१०।१। ]** जात्यन्तात् सित ईयः स्यात् । समाना जातिरस्य समानजातीयः । विजातीयः । किंजातीयः ॥

**(६५) मासेकभृतौ कृतात् स्यात् । [ १।४।१०।२। ]** भृतावर्थकृतात् विहितप्रत्ययान्तात् परान्मासान्तात् सित इकः स्यात् । पञ्चभृतिरस्य स पञ्चको मासः । पञ्चको मासोऽस्य पञ्चमासिको भृतकः । दशमासिकः । भृतौ कृतात् किम् ? द्वादशमासः संवत्सरः । मास किम् ? [पञ्चको दिवसोऽस्य] पञ्चकदिवसः ॥

**(६६) गन्धेत्सुपूत्युत्सुरभेर्गुणे तु । [ १।४।१०।३। ]** गुणार्थगन्धात् स्वादेः ४ [=सु, पूति, उत्, सुरभि इत्येतेभ्यः] सित इत् स्यात् । [शोभनो गन्धो गुणोऽस्येति] सुगन्धिः । ४ [=उद्गन्धिः । पूतिगन्धिः । सुरभिगन्धिः] । गुणे किम् । सुगन्ध आपणिकः ॥

**(६७) वाऽल्पे तु । [ १।४।१०।४। ]** वाऽल्पवत् स्वार्थः, आगन्तोर्वा । सुगन्धिरागतः ४ [=उद्गन्धिरागतः । पूतिगन्धिरागतः । सुरभिगन्धिरागतः ।] सुगन्ध आगतः । ४ । [=उद्गन्ध आगतः । पूतिगन्ध आगतः । सुरभिगन्ध आगतः ।] तथाल्पार्थगन्धान्तादल्पः । सूपो[ऽल्पो]ऽत्र सूपगन्धि २ [=सूपगन्धं] भोजनम् । एतद्विषयेऽल्पार्थे गन्धो नान्यत्र ॥

**(६८) इवार्थात् । [ १।४।१०।५। ]** गन्धार्थोपमानात् सितो वेत् । कुमुदस्येव गन्धोऽस्य कुमुदगन्धिः । २ [=कुमुदगन्धः ।] करीषगन्धिः । २ [=करीषगन्धः ।]

**(६९) इनु सर्वबीजाः । [ १।४।१०।६ ] ।** सर्वबीजादयः सितीनन्ताः स्युः, उ निपातः । सर्वाणि बीजान्यस्य सर्वबीजी । सर्वधनी । सर्वकेशी, नटः । आकृतित्वान्न द्वन्द्वोऽत एव भितोऽन्यतो न मत्वर्थीयः । तेन वीरपुरुषवान् ग्राम इत्यादिनः स्यात् । रूढिशब्दात् स्यादपि । गौरखरवदरण्यम्, इत्यादि ॥

**(७०) अहस्तितः पादिति । [ १।४।१०।७। ]** इति विवक्षार्थः, इवार्थात् सम्बध्यतेऽत्र । हस्तादिवर्जितोपमानात् सितोऽन्तस्थः पादः पात् स्यात् । व्याघ्रस्येव पादावस्य, व्याघ्रपात् । सिंहपादी । अहस्तितः किम् ? हस्तिपादः । अनुष्टुबत्र-

हस्ती दासी कुसूलश्च गणिका च महेलकः ।
कान्ताः कटोलगण्डोलगडोलाः इद्दशाश्च वृत् ॥१॥

कटोलादय उक्तस्वरूपाः कान्ताश्च । ३ [=कटोलक, गण्डोलक, गडोलक] ॥

(७१) **कुम्भपद्यः** । [**१।४।१०।८।**] कुम्भपदी इत्यादयः स्त्रियामेव नित्यं ङ्यन्ता एव कृतपादान्तलोपा निपात्यन्ते । कुम्भाविव पादावस्याः, कुम्भपदी । कुम्भादेः पदी योज्या । अत्रेन्द्रवंशा-

कुम्भैकका स्याद्र विनिस्सुगोणतोऽप्यष्टा कुणीसूत्रसितेः सकृत्त्रितः ।
द्वे कृष्णसूची कलशीसत्तात् तथा दासुसुनेः शूकरद्रोणतः पदी ॥१॥

सूत्रसिति । द्वे पदे, एकं वा ॥१०॥

**सङ्ख्या सुतो दन्त दतृ वयश्चेत् नाम्नि स्त्रियां वा तु वृषेभ्य ऊर्ध्वात् ।**
**ज्ञुर्जानु सम्प्रात् ककुदस्यवस्था पूर्णान्न वोद्वेरथ काकुदस्येत् ॥१।४।११॥ वृत्तम् ॥**

(७२) **सङ्ख्या सुतः** । [**१।४।११।१**] । सङ्ख्यावाचिनः सोश्च सितोऽन्तः पादः पात् स्यात् । द्विपात् । त्रिपात् । सुपात् ।

(७३) **दन्त दतृ वयश्चेत्** । [**१।४।११।२**] । वयोगतौ संख्यासोः सितोऽन्तस्थः दन्तः दतृ स्यात् । [ऋकार उगित्कार्यार्थः । द्वौ दन्तावस्य] द्विदन् ३ [=त्रिदन्, चतुर्दन्] बालः । चतुर्दती सा । वयः किम् ? द्विदन्तो हस्ती ॥

(७४) **नाम्नि स्त्रियाम्** । [**१।४।११।३**] । स्त्रीसंज्ञागतौ तथा । अयोदती । फालदती । नाम्नि किम् ? समदन्ता ॥

(७५) **वा तु वृषेभ्यः** । [**१।४।११।४**] । तथैभ्यो वा । इह अनुष्टुप् -

वृषशुभ्रवराहाहिशुद्धाग्रान्तानि मूषिका ।
श्यावारोकौ तथा नाम्नि स्मृता नव वृषादयः ॥१॥

[वृषस्येव दन्ता अस्य] वृषदन्, वृषदन्तः, इत्यादि [=शुभ्रदन्, शुभ्रदन्तः । वराहदन्, वराहदन्तः । अहिदन्, अहिदन्तः । शुद्धदन्, शुद्धदन्तः । अग्रदन्, अग्रदन्तः । मूषिकदन् । मूषिकदन्तः । श्यावदन्, श्यावदन्तः । अरोकदन्, अरोकदन्तः ।] अग्रान्त । कुड्मलाग्राणीव दन्ता अस्य कुड्मलाग्रदन्, कुड्मलाग्रदन्तः । शिखराग्रदन्, शिखराग्रदन्तः । श्यावारोकौ नाम्न्येव । नाम्नि किम् ? श्यावदन्तः । अरोकदन्तः । [अरोको निर्दिप्तिः] ॥

(७६) **ऊर्ध्वाज्ज्ञर्जानु** । [**१।४।११।५।**] ऊर्ध्वात् सितोऽन्ताज्जानु वा ज्ञु स्यात् । ऊर्ध्वे जानुनी अस्य, ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥

(७७) **सम्प्रात्** । [**१।४।११।६।**] तथा नित्यम् । संगते जानुनी अस्य, संज्ञुः । [संजानुः ।]

(७८) **ककुदस्यवस्था** । [**१।४।११।७।**] इत्परोऽत्रापि सितोऽन्तस्थस्यान्त इ लुक्स्याद् अवस्था चेद् गम्यते । शकन्ध्वादित्वाद् अलोपः । [असञ्जातं ककुदमस्य,] असञ्जातककुत् । बालः [इत्यर्थः] । आपन्नककुद् वृद्धः । अवस्था किम् ? श्वेतककुदः ॥

(७९) **पूर्णान्न वोद्वेरथ काकुदस्येत्** । [**१।४।११।८।**] पूर्णात् परस्य काकुदस्यान्त इत्यत्र

वा स्यात् सिति उद्वेः परस्य नित्यं, पार्थक्यात् । पूर्णकाकुदः । तथा [उद्गतं काकुदमस्य,] उत्काकुत् ॥११॥

**नस्नासिका नाम्नि खरात्खुराद् वाऽस्थूलात्क्नसो वेर्ग्र नृचश्च नाभः । जाया तु जानि धनुषोऽन् क्वचिद् वा कप् स्त्र्यादुरोभ्योऽप्यसहादितो वा ॥१।४।१२॥ वृत्तम् ॥**

**(८०) नस् नासिका नाम्नि खरात्खुराद् वा । [१।४।१२।१।]** सित्याभ्यां नासिका नस् स्यात्, नसो वा नाम्नि [खरखराभ्याम्] । खरस्येव नासिकाऽस्य, खरणाः, खरणसः । खुरणाः । [खुरणसः] ॥

**(८१) अस्थूलात्क्नसः । [१।४।१२।२।]** स्थूलवर्जितान्यस्मात् परा नासिका नसः स्यात् सिति । [द्रुरिव नासिकाऽस्य,] द्रुणसः । वद्ध्रीणसः । गोनसः । स्थूलात् तु, स्थूलनासिकः [वराहः] । नाम्नि किम् ? तुङ्गनासिकः । क्नसः । केवलात् पादेः परा सा नाम्न्यपि नसः स्यात् । [उन्नता नासिकाऽस्य,] उन्नसः । प्रणसः ॥

**(८२) वेर्ग्रः । [१।४।१२।३।]** वेः परा सा सिति ग्र स्यात् । विगता नासिकाऽस्य, विग्रः ।

**(८३) अर्नृचश्च नाभः । [१।४।१२।४।]** शकन्ध्वादित्वाद् अलोपः । सिति नाम्न्येतौ साधूस्तः । न सन्ति ऋचोऽस्य, अनृचो माणवकः । [बह्वृचो ब्राह्मणः] काद्यान्यत्र । अनृक्कं साम । पद्मं नाभावस्य, पद्मनाभः । उर्णनाभः । अप् ॥

**(८४) जाया तु जानिः । [१।४।१२।५।]** सितोऽन्तस्थात् जाया जानिः स्यात् । युवतिर्जायाऽस्य युवजानिः । वृद्धजानिः ॥

**(८५) धनुषोऽन् । [१।४।१२।६।]** सित्यस्यान्तोऽन् स्यात् । शार्ङ्गं धनुरस्य, शार्ङ्गधन्वा ॥

**(८६) क्वचिद् वा । [१।४।१२।७।]** तथैव । शतधन्वा, शतधनुः । पुष्पधन्वा, [पुष्पधनुः] ॥

**(८७) कप् स्त्र्यात् । [१।४।१२।७।]** इनन्तात् सितः कप् स्यात् स्त्री चेत् । बहुवाग्मिका सभा । बहुदण्डिका । अस्त्रियां वा यः कपीत्यर्थः ।

**(८८) उरोभ्योऽपि । [१।४।१२।९।]** एतदन्तात् सितः कप् स्यात् । अत्र सा -

उरः सर्पि पुमान् लक्ष्मी अनड्वान् गौः पयो दधि ।<br>
मधु शालि तथोपानह् लूनित्याटो नञोऽर्थतः ॥१॥

व्यूढमुरोऽस्य, व्यूढोरस्कः । प्रियसर्पिष्कः । लृ नित्याटः । लृदन्तान्नित्यमाट् यतस्माच्च । बहुकर्तृकः । सुनदीकः । बहुवधूकः । नित्याट् हि, बहुश्रीः । बहुभ्रूः । नञोऽर्थतः । [न विद्यतेऽर्थोऽस्य, अनर्थकम् ।] नञः किम् ? व्यर्थपयामेकवचनान्तानां पाठः । तेषामन्यवचनान्तानां

वा । द्विनौ । [द्विनौकः ।] द्विपुमान् । द्विपुंस्कः ।]

**(८९) असहादितो वा । [१।४।१२।१०।]** भ्यसस्तो गणार्थम् । सहायादि-वर्जितादर्थादनुक्तसमासान्तात् सि वा कप् स्यात् । बहुखट्वः । बहुखट्वाकः । हाद्यादेर्न । सात्र

योगे सहादितो नाम्नीयसो डीन्निष्प्रवाणि च ।
नाडीतन्त्र्यन्ततः स्वाङ्गे स्तुतौ भ्रातुरयं गणः ॥१॥

योगे गम्यमाने सहशब्दपूर्वपदात् सितः । सपुत्रः । सशिष्यः । योगे किम् ? सकर्मिका विद्यमानताऽत्र । नाम्नि । विश्वदेवः । विश्वयशाः । ईयसः । बहुश्रेयान् । डीत् । ईयसः परो डी ईत् स्यात् । बह्व्यः श्रेयस्योऽस्य, बहुश्रेयसीर्णा [=पुरुषः] । बहुप्रेयसी [पुरुषः] । इत्कृतेः सोर्न लुक् । अन्यस्त्वाह-इत्कार्यो डी स्यात् । बहुश्रेयसी ना । सुलुगर्थः । निष्प्रवाणि चासुप् । [प्रकर्षेण ऊयते] प्रोयतेऽस्यां, प्रवाणिः [इति निपात्यते], तन्तुवायशलाका, सा निर्गताऽस्य निष्प्रवाणिः पटः । कञ् न नाडीतन्त्री एतदन्तात् स्वाङ्गेऽर्थे । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । तन्त्र्यो धमन्यः । स्वाङ्गे किम् ? बहुनाडिकः स्तम्बः । बहुतन्त्रीका वीणा । यद्वा, स्वाङ्गम् [अन्यपदार्थ-] स्यावयवः । बहुनाडिः स्तम्बः । स्वाङ्गे किम् ? बहुनाडिको गृहस्थः । स्तुतौ भ्रातुः । सुभ्राता । बहुभ्राता । स्तुतौ किम् । मूर्खभ्रातृकः ॥१२॥

**द्वित्रेष्ट मूर्धाक्षि च सक्थि स्वाङ्गे लात्वाद्विदण्ड्यादि तृजादितोऽत्रात् ।**
**टो दः शरद्भ्यो नबनादितो वा लुग्नोरखेरेति चतुर्थपादः ॥१।४।१३॥ वृत्तम् ॥**

**(९०) द्वित्रेष्टमूर्धा । [१।४।१३।१।]** द्वित्रेर्मूर्धान्तात् सितो वा टः स्यात् । द्विमूर्धः । द्विमूर्धा । त्रिमूर्धः । [त्रिमूर्धा ॥

**(९१) अक्षि च सक्थि स्वाङ्गे । [१।४।३।२।]** सित्याभ्यां नित्यं टः । विशालाक्षः । स्वाङ्गे किम् ? दीर्घसक्थि शकटी । टो ङ्यर्थः ।

**(९२) लात्वा [१।४।१३।३।]** [पं० ग्रं० १।४।१।६] इत्यव्ययीभावाद् युद्धे इन् प्रदर्शितः सो तेन समासान्तः स्यात् । केशाकेशि । बाहाबाहवि ॥

**(९३) द्विदण्ड्यादि । [१।४।१३।४।]** इजन्तो निपात्यतेऽन्यार्थेऽपि देत्यर्थे च । आर्येह सगीतिः

द्वेर्दण्डिमुशलिसाद्यैकप्रोह्याच्याद्युभोभयातो वा ।
द्व्यञ्जलिदत्तिपाणिहस्ति च कर्णि निकुच्याच्च संहितात् पुच्छि ॥१॥

द्वेदण्डिमुसलि । द्वौ दण्डावस्य [प्रहरणे], द्विदण्डि । द्विमुसलि । सादेः पदि । [समानौ पादावस्मिन्,] सपदि । [एकः पादोऽस्मिन् गमने,] एकपदि । [प्रोह्य पादौ,] प्रोह्यपदि [हस्तिनं वाहयति] । [आच्य पादौ,] आच्यपदि [शेते] । उभा उभया आभ्यां बाह्वादयः । उभाबाहु । उभयाबाहु । [उभादन्ति । उभयादन्ति । [प्रहरति उभौ हस्तावस्मिन्, उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । इज्लोपो निपातनात् ।

दिच्च । तथा निकुच्यकर्णि । संहितपुच्छि । आकृतित्वाद् अन्ते वा सि इत्यादि ॥

**( ९४ ) ऋजादितोऽत्रात् । [ १।४।१३।५। ]** इद्वृत्तिमात्राद् ऋजाद्यन्ताद् अत् स्यात् । अत्र स्याद् गीत्यनुष्टुप् -

ऋक्पूःपथ्यप् चाध्वन् धूश्चानक्षत्रे त्विवेऽक्षिभूमिस्तु ।
सङ्ख्यापाण्डूदक्कृष्णाद् राज्ञः पल्यहस्तिनोर्वर्चः ॥१॥

समवान्धात् तमः श्रेयः निसः श्वसोऽवसीयसः ।
सामलोमप्रतेरन्ववात् तप्ताद्रहसस्तथा ॥२॥

ऋक् पुर् पथिन् अप् एतदन्तात् । बह्वृचो विप्रः । चरणा एवेत्येके [काशि० ५.४.७४; जै० ४। २।७० म० वृ०] । अर्धर्चम् । नान्दीपुरम् । जलपथः । बहुपथो देशः । द्वाभ्यां गता आपो यत्र, द्वीपं, विमलाख्यं सरः । कच्चनः प्रगतोऽध्वानं, कित्त्वात् प्राध्व न, प्राध्वो रथः । धुरोऽनक्षेऽर्थे । राजधुरा । इवेऽक्षि । अक्ष्यन्तादुपमानेऽर्थे । लवणमक्षी लवणाक्षम् । गवाक्षम् । इवे किम् ? त्र्यक्षि । भूम्यन्तात् सङ्ख्यादेः । द्विभूमःप्रासादः । [पाण्डुभूमो देशः । उदग्भूमो देशः । कृष्णभूमो देशः ।] राजादेर्वर्चोऽन्तात् । राजवर्चसम् । [पल्यवर्चसम् । हस्तिवर्चसम् ।] तमोऽन्तात् समादेः । [संन्ततं तमः, तमसा, तमोऽस्मिन्निति वा.] सन्तमसम् । [अवतमसम् । अन्धतमसम् ।] श्रेयान्तान्निसः श्वसश्च । [निश्चितं श्रेयो] निःश्रेयसम् [अनर्थरहितं कल्याणमित्यर्थः] । [शोभनं श्रेयः] श्वःश्रेयसम् । श्वोवसीयं च । कल्याणम् [इत्यर्थः । आशीविषयेऽनयोः प्रयोगः ।] सामलोमान्ता प्रत्यन्ववात् । प्रतिसामम् । [अनुसामम् । अवसामम् ।] प्रतिलोमम् । [अनुलोमम् । अवलोमम् ।] तप्तान्ववाच्च रहसन्तात् । तप्तरहसम् । [अनुरहसम् । अवरहसम्] ॥

**( ९५ ) टो दः शरद्भ्यो नबनादितो वा । [ १।४।१३।६। ]** देत्यव्ययीभावाच्छरदाद्यन्तात् टः स्यात् । नबनादित एव वा टः स्यात् । नप् वाऽसावनन्तश्च नबन् । तदादेः शरदादित्वानित्ये प्राप्ते । इह वृत्तषट्पात् ।

शरन्मनोऽनो हिमवच्चतुः समिक् जरा जरो वाक्षि मनस्सदः कियत् ।
विपाशुपानत् प्रतितोऽनडुद्दिशः पथि नृशौ तद्दिवुपाच्च सच्छुनौ ॥१॥

प्रतिपरोऽनुसंभ्योऽक्षि संख्या गोदावरी नदी ।
डौ प्रत्युरोऽनुगुर्दैर्घ्येऽनुवृत्तबनाग्रहायणी ।
झय् गिरि पौर्णमासी च नदी चेति गणः स्मृतः ॥२॥

उपशरदम् । प्रतिमनसम् । इत्यादि [=उपविपाशम् । प्रतिविपाशम् । उपत्यदम् । शरद्, त्यद्, तद्, यद्, कियद्, हिरुक्, हिमवत् सदस्, अनस्, मनस्, विपाश्, दिश्, दृश्, विश्, उपानह्, अनडुह्, दिक् इति शरदादिः] । जरा जरश्च उपात् । [उपजरसम् ।] उपात् सच्छुनौ । उपसदम् । [उपशुनम् ।] प्रत्यादेः अक्षन्तात् । प्रत्यक्षम् । [परोक्षम् । अन्वक्षम् । समक्षम् ।] सिद्धृत्ते त्रिलिङ्गता । सङ्ख्या पञ्चमीवृत्तेः । सप्तगोदावरम् । पञ्चनदम् । डौ चाधारेऽर्थे । प्रत्युरसम् । तथाऽनुगवं दैर्घ्येऽर्थे ।

[गवामन्वायतं यानम्, अनुगवम् ।] अन् अनन्तात् । उपराजम् । आत्मन्यधि । अध्यात्मम् । प्रत्यात्मम् । नबन् । उपचर्मम् । उपचर्म । उपाग्रहायणम् । उपाग्रहायणि । झय् प्रत्याहारः । [झयन्तात् ।] उपसमिधम् । [उपसमित् ।] उपदृषदम् । [उपदृषत् ।] उपगिरम् । [उपगिरि ।] उपपौर्णमासम् । [उपपौर्णमासि ।] उपनदम् । [उपनदि] ॥

**(९६) लुग्नेरवोरेति । [१।४।१३।७।]** एति अकारेकारे समासान्ते परे, न् अ इ ने, स लुक्, अवोः अव स्याद्, ओः उवर्णान्तस्यान्तः । परमराजः । एकाहः । सुगन्धिः । गवाक्षः । स्थलपथः । तथा बाहाबाहवि । जानाजानवि । हनाहनवि ॥

**[चतुर्थपादः** । इति प्रथमाध्याये] चतुर्थः पादः [समाप्तः] ॥

**॥ [इति] श्रीबुद्धिसागराचार्यकृतायां पञ्चग्रन्थ्यां संस्कृताधिकारे प्रथमोऽध्यायः समाप्तः ॥**

इत्यर्थः । **समासः समाप्तोऽयम्** ॥



## [ ॥ अथ द्वितीयोऽध्यायः ॥ ]

### [ ॥ अथ प्रथमः पादः ॥ ]

**नाप्पदे वा सृतो ङस्तु पत्यौ स्वसास्यां च चार्थेऽर मातुः पितुः पुत्ररन्ते ।**
**ऽन्त्येऽवायुदेवस्य वेदे श्रुतस्येत्तथाग्नेस्तु सोमे वरौ णे परे ॥२।१।१॥ स्रग्विणी ॥**

(१) **नाप्पदे** । [ २।१।१।१। ] लुग् वर्तते । पदे परेऽम् द्वितीयादि लुग् न स्यात् । अस्मिंश्चत्वरस्य चतुष्टयं तु ।

खित्यमेकाजिचोर्टाम्भः ओजस्तमोऽञ्जः सहस्तो मनस्तोऽभिधाज्ञायिनोः ।
पुञ्जनुस्तोऽनुजाऽन्धेऽपि टित्यात्मनो नाम्नि ङेऽथो पराच्छंसिनि ब्राह्मणात् ॥१॥

ङस्यसत्त्वे क्षिपार्डो न पुत्रे हरे पश्यतो वाग्दिशो युक्तिदण्डेऽदसः ।
फग्वुजोर्नाम्नि देवात् प्रिये शेप लाङ्गूलपुच्छे शुनोऽथापि दासे दिवः ॥२॥

योनिविद्यायुजोऽस्मिन्मृतो हृद्दिवो ङ्र्यद्धलोर्नाम्नि प्राक्कारतो हल्यकामे-
ऽङ्गतो मस्तकान्मूर्धतो नान्तमध्याद् गुरौ कृत्सु या वा तु बन्धे तने ॥३॥

घेऽत्र कालात् शये वासि वासेऽप्यकालात् शराज्जे वरात् स्यात् क्षराद् ।
वर्षतो जे द्युकालाच्छरत्प्रावृषोऽपो मतौ योनि ये नेनृस्थबध्नाति सिद्धे गणः ॥४॥

इजन्तादेकाचः परोऽम् लुग् न स्यात् खिदन्ते पदे परे । स्त्रींमन्यः । भ्रुवंमन्यः । गांमन्यः । नावंमन्यः । श्रियंमन्यः । कुलमाविष्टलिङ्गत्वाद् स्त्रींमन्यमन्ये । तथाऽम्भ आदेर्टा । अम्भसाकृतम् । [ओजसाकृतम् । तमसाकृतम् । अञ्जसाकृतम् । सहसाकृतम् ।] मनस्तः । नाम्नि आज्ञायिनि च । मनसादेवी । [मनसा आज्ञातुं शीलमस्य, मनसश्चाज्ञायिनी वा,] मनसाज्ञायी । पुञ्जनुस्तः क्रमेण अनुजेऽन्धे च । [पुंसा अनुजा] पुंसानुजा [कन्या] । [जनुषा जन्मना अन्धः] जनुषान्ध । [अविकृताक्षो] जात्यन्ध इत्यर्थः । टेति पूरणे । आत्मनः । आत्मनाषष्ठः । सिति, आत्मचतुर्थः । नाम्नि ङे । आत्मन एवे । आत्मनेपदम् । आत्मनेभाषा । परात् । परस्मैपदम् । [परस्मैभाषा ।] परोऽत्र ङसि । [ब्राह्मणाद् ग्रन्थाद् गृहीत्वा शंसतीति] ब्राह्मणाच्छंसी ॥१॥ ङस्यसत्त्वे क्तेन स्तोकादिप्राप्ते । स्तोकान्मुक्तः । [अन्तिकादागतः । दूरादागतः । कृच्छ्राल्लब्धः ।] क्षिपा ङः । निन्दागतौ षष्ठी । चौरस्य कुलम् । क्षिपा किम् ? नृकुलम् । न पुत्रे । न लुक् वर्ततेऽतो वा । दास्याः पुत्रः । [दासीपुत्रः ।] क्षिपा किम् नृपुत्रः । तथा पश्यतोहरः । वाचोयुक्तिः । दिशोदण्डः । अदसः फग्वुञोः । आमुष्यायणः । अमुष्यपुत्रिका । नडमनोज्ञात् तदन्ते विधेः पाठात् । एवं नाम्नि ।

देवानांप्रियः । शुनःशेपः । [शुनःपुच्छः । शुनोलाङ्गूलः ।] दिवोदासः ॥२॥ योनिविद्यायुजोऽस्मिन् सृतः । योनिविद्यासम्बन्धिनः सृतः ऋदन्ताद् अस्मिन् योनिसम्बन्धिनि पदे परे सिद् ऋद् अन्योऽप्येवम्भूतो ग्राह्य इति सृत् । पितुःपुत्रः, पितुरन्तेवासी । होतुःपुत्रः । ऋतः किम् ? आचार्यपुत्रः । योनिविद्यायुजः किम् ? नृपुत्रः। अस्मिन् किम् ? पितृगृहम् । हृद्दिवोर्ङि । हृदिस्पृक् । [दिविस्पृक् ।] अत्, हल्, उदन्तात् संज्ञायाम् । अरण्येतिलकाः । युधिष्ठिरः । गविष्ठिरः । अद्बलोः किम् ? नदीकुक्कुटिका । नाम्नि किम् ? अक्षशौण्डः । प्राक्कालतः । प्राचां कारनाम्नः हलि । स्तूपेशाणः । मुकुटेकार्षापणः । हलेद्विपदिका । दृषदिमाषकः । रक्षार्थं कर्षकादि कल्पितं राज्ञे देयं शरः । तत्संज्ञा एताः । प्राक् किम् ? यूथपशुः । कार किम् ? [अभ्यर्हिते पशुः] अभ्यर्हितपशुः । हलि किम् ? [अविकटे उरणः] अविकटोरणः । अद्बलोः किम् ? [नद्यां दोहः] नदीदोहः । अकामेऽङ्गतः । कण्ठेकालः । उदरेमणिः । उरसिलोमा । अकामे [किम् ?] सुखकामः । अङ्गात् किम् ? अक्षशौण्डः । अद्बलोः किम् ? जङ्घावलिः । अङ्गुलिव्रणः । मस्तकान्मूर्धतो न । मस्तकशिखः । [मूर्धशिखः ।] तथा अन्तेगुरुः । [मध्येगुरुः ।] आभ्यां किम् ? आदिगुरुः । कृत्सु या । येति तत्पुरुषे कृदन्तेषु । स्तम्बेरमः । कर्णेजपः । गोषुचरः । वर्षासुजः । अप्सुजः । क्वचिद् वा । सरसिजम् । सरसिरुहम् । [सरोरुहम् ।] न च । कुरुचरः । वा तु बन्धे । अङ्गाद् अद्बलश्च । हस्तेबन्धः । [हस्तबन्धः ।] तनादौ । कालात् । पूर्वाह्णेतनः । [पूर्वाह्णतनः ॥] घे तरतमे । पूर्वाह्णेतराम् । पूर्वाह्णतरे । पूर्वाह्णेतमाम् । [पूर्वाह्णतमाम् ।] अलुकि काम् । अत्रेति कालशब्दे । पूर्वाह्णेकालः । [पूर्वाह्णकालः ।] कालवाचिनः किम् ? शुक्लतरे । [शुक्लतमे ।] अद्बले किम् ? रात्रितरायाम् । शयादौ अकालाद् वा । ग्रामेशयः । [ग्रामशयः । वनेवासी । वनवासी । ग्रामेवासः । ग्रामवासः ।] कालात् । पूर्वाह्णशयः । अद्बलः किम् ? भूमिशयः । शरादेः जे । शरेजः । [शरजः । वरेजः । वरजः । क्षरेजः । क्षरजः । वर्षेजः । वर्षजः ।] पुनर्जे दिवादेः नित्यम् । दिविजः । [कालेजः । शरदिजः । प्रावृषिजः ।] अपो मत्यादौ । अप्सुमतिः । [अप्सुयोनिः । अप्सव्यः । नेन्स्थबध्नाति सिद्धे । न, लुक् न स्यादिनन्तादौ । स्थण्डिलवर्ती । समस्थः । चारकबन्धः । काम्पिल्यसिद्धः । गणोऽयमत्रैव ॥४॥

**(२) वा सृतौ ङस्तु पत्यौ स्वसास्यां च । [२।१।१।२।]** सृत इति योनिविद्यासम्बन्धेन ऋद्दताद् अस्मिन्नेव पत्यौ परे स्वसायाऽस्यां च ङस् वा लुग्न स्यात् । दुहितुःपतिः । [दुहितृपतिः ।] मातुःस्वसा । [मातृष्वसा ॥]

**(३) चार्थेऽर मातुः पितुः । [२।१।१।३।]** द्वन्द्वेऽनयोरन्तोऽर स्याद् वा मातरपितराभ्याम्। मातापितरौ । पितरौ वा । चार्थे किम् । मातुःपिता ॥

**(४) पुत्ररन्ते ऋदन्ते पदे च अन्त्ये । [२।१।१।४।]** सर्वान्तेऽपि सृतः आ स्यादस्मिन्नेव। पितापुत्रौ । होतापोतारौ । होतृपोतृनेष्टाप्रशास्तारः । द्वन्द्वे किम् ? मातृष्वसा । ऋतः किम् ? पतिभ्रातरौ । सित् किम् ? दातृजामातारौ । अस्मिन् किम् ? मातृभोजयितारौ ॥

**(५) अवायुदेवस्य वेदे श्रुतस्य । [२।१।१।५।]** वायुवर्जितदेवतानां वेदे साहचर्येण श्रुतानां द्वन्द्वे आत् पदे परे । सूर्याचन्द्रमसौ । मित्रावरुणौ । आग्नेन्द्रम् । देवतानां किम् ?

पूषच्चषालौ । वेदे किम् ? चन्द्रसूर्यौ । अवायुः किम् ? अग्निवायू ॥

**(६) ईत्तथाग्नेस्तु सोमे वरौ णे परे । [२।१।१।६।]** इत् स्याद् अग्नेस्तथैव सोमे परे वरुणे चेत्यर्थः । अग्नीषोमौ । षत्वमीति निपातनाद् अन्यत्राग्निसोमम् । [अग्नीवरुणौ ।] ॥१॥

**इकृतारैच्यविष्णौ सुषासोषसो दिव् स द्यावा पृथिव्यां दिवस् वा त्वनू- ।**
**ङप्रियाद्यापि काद्येव पुंस्त्री पुमान् च्विः क्वचिन्नाम टत्कान्तचारौज्झतोः ॥२।१।२॥ स्रग्विणी ॥**

**(७) इ कृतारैच्यविष्णौ । [२।१।२।१।]** अग्नेरित् स्यात् कृतारैच्युत्तरपदेऽविष्णौ देवताद्वन्द्वे आग्निमारुतं [कर्म] । आग्निवारुणम् । कृता रैचि किम् ? आग्नेन्द्रम् । विष्णौ, आग्नावैष्णवम् । नात्वेत्वे ॥

**(८) सुषासोषसः । [२।१।२।२।]** सित् सर्वार्थः । देवताद्वन्द्वे उषसः उषासा स्यात् पदे । उषासानक्तम् ॥

**(९) दिव् च द्यावा । [२।१।२।३।]** तथैव दिवो ङि द्यावा स्यात् । द्यावाक्षमे द्यावाभूमी ॥

**(१०) पृथिव्यां दिवस् वा तु । [२।१।२।४।]** तथैव, दिवस्पृथिव्यौ । द्यावापृथिव्यौ वा। सोऽविकारार्थः ।

**(११) अनुङ् अप्रियाद्यापि काद्येव पुंस्त्री पुमान् । [२।१।२।५।]** पुंसोऽर्थः स्त्रीवृत्तिः पुंस्त्री । तद्वाचिशब्दोऽपि पुंस्त्री । स पुमान् पुंवत् स्यात् प्रियाद्यपूरणावर्जिते काद्ये परे । श्लोकोऽत्र-

कस्त्र्येकार्थ्यवराऽक्विप्प्रित् मान्यं डे ससिणौ क्यङि ।
ढेऽग्नाय्यच्ये प्रसूतात् प्रजाता गर्भिणी स्त्रियाम् ॥१॥

के द्रुस्क इडविड् । ऐडविडिका । दर्शनीयिका । स्त्र्येकार्थे । स्त्रियां समानाधिकरणे सर्वत्र, अत एवाप्रियाद्याप्युक्तम् । कुमारभार्या । श्येतभार्यः । युवजानिः । पट्वीमृद्व्यौ भार्येऽस्य, पट्वीमृदुभार्यः । वातण्डी चासौ युवतिश्च, वातण्ड्ययुवतिः । एवं कौण्डीन्यस्य वृन्दारिकाम् । पुं किम् ? खट्वाभार्यः । स्त्री किम् ? ग्रामणिकुलम्, [ग्रामणी] दृष्टिरस्य ग्रामणिदृष्टिः । स्त्रियां किम् ? कल्याणीप्रधाना इमे । एकार्थे किम् ? कल्याणीमाता । अनूङि किम् ? ब्रह्मबन्धूभार्यः । अप्रियाद्यापि किम् ? कल्याणी प्रियः । कल्याणीकान्तः । कुमारीप्रियः । [कुमारी कान्तः । षट्पाद् इह -

प्रिया कान्ता मनोज्ञा च कल्याणी सुभगा समा ।
दुर्भगा चपला क्षान्ता दुहिता भक्ति वामना ।
निचिता स्वा सचिवा च केषाञ्चित् षट्पदी मता ॥२॥

दृढभक्तिरित्यादावस्त्रीपूर्वपदविवक्षायाम् । अपि [=अप्प्रत्यये] कल्याणीपञ्चमा रात्रयः । अपि किम् ? कल्याणीपञ्चमीकः पक्षः । पृथक् स्पष्टार्थः । चरटि । भूतपूर्वा उशिज् । ओशिजचरी । अक्विप्प्रित् । क्विप्वर्जिते पिति रिति । पिति लुचि । गतगवा । पञ्चभिः गार्गीभिः क्रीतः पञ्चगर्गः । अतिशये दर्शनीयतरा । अक्विप् किम् ? पट्वी इवाचरति, पट्वयति । कुमारयति । कुमारीयतेः

क्विप्। कुमारी । रिति ईषत्पट्वी । कुमारजातीयः । तथा कुमारमानी कुक्कुटाण्डम् । **एतावस्त्र्येकार्थावेव** । बहुशो देहि । पटयति । कुमारायते । ढऽग्नायी एव । अग्नायी देवताऽस्य, **आग्नेयः** । अग्नायी किम् ? रौहिणेयः । अच्यस्यापवादः । अच्ये । अजादौ यादौ वाऽणादौ । अतिशये, पटिष्ठा । समूहे, [हस्तिनीनां समूहो] हास्तिकम् । श्यैन्याभावः । श्यैन्यां टो च द्रव्ये । अणादौ किम् ? हस्तिनीयति हस्तिन्यः । प्रसूतादयः । एताः समानाः कृतौ स्त्रियाम् । प्रसूतभार्यः । [प्रजातभार्यः । गर्भिणीभार्यः ।] एताः किम् ? द्रोणीभार्यः । कुटीभार्यः ॥

**( १२ ) च्विः क्वचित् । [ २।१।२।६। ]** अनङ् पुंस्त्री च्व्यन्तं पुंवत् क्वचित् स्यात् । स्त्र्येकार्थे, महद्भूता । न च, गोमतीभूता ॥

**( १३ ) नामटत्कान्तचारैज्झितोः । [ २।१।२।७। ]** नाम संज्ञावाचि, टत् पूरणान्तं, कप्रत्ययान्तं, चारैच् कृतारैजन्तं चानूङ् पुंस्त्री पुमान् स्यात् स्त्र्येकार्थेऽप्रियाद्योऽपि, झितोरेव, झिति कर्मधारये रिति च प्रत्यये । दत्तवृन्दारिका । पञ्चमवृन्दारिका । पाचकवृन्दारिका । सौतङ्गमवृन्दारिका । रिति । दत्तजातीया इत्यादि [= दत्तदेशीया । माथुरजातीया] । कान्तप्रत्ययनियमात् । पाकभार्यः । कृतारैच् किम् ? तावद्भार्यः । अर्धप्रस्थे भवाऽर्धप्रस्थी, सा भार्याऽस्य, अर्धप्रस्थभार्यः । तद्धिते किम् ? कुम्भकारभार्यः ॥२॥

**विकाररक्ते भ्रिति मान्यढाच्ये प्राण्यङ्गङीजाति च काकशावाः ।**
**सर्वादिवृत्तौ त्वतलोर्गुणो ङी घादौ लघुस्तूदुगितश्च वैकात् ॥२।१।३॥ वृत्तम् ॥**

**( १४ ) विकाररक्ते । [ २।१।३।१। ]** विकारे रक्ते चार्थे यः कृतारैजन्तोऽनूङ् पुंस्त्री स पुमान् स्यात् स्त्रितोः काद्ये चाप्रियाद्यापि, पार्थक्यात् । [लोहस्य विकारो लौही, लौही ईषा] लौहेषा । [कषायेण रक्ता काषायी, काषायी बृहतिका] काषायबृहतिका । तथा [लौहेषा यस्य रथस्य स,] लौहेषः । [काषायबृहतिका यस्य स, काषायबृहतिकः ॥]

**( १५ ) भ्रिति मान्यढाच्ये प्राण्यङ्गङीजाति च । [ २।१।३।२। ]** प्राण्यङ्गाद् यो ङी तदन्तं जातिवाचि चानूङ् पुंस्त्री पुमान् स्याद् भ्रितोः मानिनि टवर्जितेऽच्ये । दीर्घकेशवृन्दारिका । दीर्घकेशजातीयः । दीर्घकेशमानी । समूहे । हस्तिकम् । जाति । कठवृन्दारिका । [कठजातीया । कठदेशीया ।] एष्वेव किम् ? दीर्घकेशीभार्यः । दीर्घकेशीपाशा । प्राण्यङ्गङीनियमाद्, अकेशभार्यः । जाति । बह्वृचीभार्यः । अढे किम् ? हास्तिनेयः । अप्रियाद्यापि किम् ? कठीप्रिया ॥

**( १६ ) काकशावाः । [ २।१।१।३। ]** कृतपुंस्त्वा निपात्यन्ते । काक्याः शावः [काकशावः] । [मृग्याः पदं] मृगपदम् । मृगक्षीरम् । यथाकृत्यपुंवच्चैके ॥

**( १७ ) सर्वादिवृत्तौ । [ २।१।३।४। ]** वृत्तिमात्रे सर्वादिः पुंस्त्री पुमान् स्यात् । तस्याः मुखं, तन्मुखम् । तदिदं तत्र तथा । सर्वप्रिया । पराभावादनेका ॥

**( १८ ) त्वतलोर्गुणः । [ २।१।३।५। ]** [स्त्र्यनूङ्गुणवचनः त्वात्, तलश्च परः पुमान् । पट्व्याःभावः] पटुत्वम् । पटुता । गुणः किम् ? कठीत्वम् ॥

**(१९) ङी घादौ लघुस्तु ।** [ २।१।३।६। ] तर प्रकर्षे घ: तदादौ पुंस्त्री ङयन्तो ह्रस्व: स्यात् । घादि आसीदी च । अत्र श्लोक: –

घरूपकल्पगोत्रेषु चेलड्ब्रू च मते हते ।
अन्यदास्थास्थितरागऊत्याशीरुत्सुको गण: ॥१॥

पट्विवतरा । आदि [=पट्विवतमा । पट्विवरूपा । पट्विवकल्पा । पट्विवगोत्रा । पट्विवचेली । पट्विवब्रुवा । पट्विवमता । पट्विवहता । अन्यदास्था । अन्यदास्थित: । अन्यद्राग: । अन्यदूति: । अन्यदाशी: । अन्यदुत्सुक: । अत्राषष्ठ्यन्तस्यातृतीयान्तस्य चान्यशब्दस्य रागाद्युत्तरपदेषु नित्यं दगागम: ।]

**(२०) ऊदुगितश्च वैकाच् ।** [ २।१।३।७। ] ऊदन्तम् उगितश्च यो ङी तदन्तम् एकाच् ङ्यन्तं वा लघु: स्यात् स्त्र्येकार्थे घादौ । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा, आदि । श्रेयसितरा । श्रेयसीतरा, आदि। प्रकर्षयोगोऽस्त्रीत्वात्, प्रागेव । श्रेयस्तरा । स्त्रितरा । स्त्रीतरा । शितरा । अस्यापत्यं स्त्री । ई, इकल्पादि ॥३॥

इगयणि युवसङ्ख्यङीनामहन्सायसंख्यावितोऽह्नोऽपि ङौ तीरतारा
दिशोऽर्थेऽन्यदर्टार्ङसाशासु छे कारके रीदप: प्राद्यनङ्व्यन्तरोऽवश्यम:
स्याद् यपीन्मनसि समो वा तते षोडशाद्या यथोक्ता: परेऽग्निद्युवृत्रोऽप्यना
के तथान्तो भवेन्मुख्य इद्वाद्यसिन्मातृके मातृमातं च वन्ध्यौ सदा ॥
अथ निजपतिपुत्रयो: कू रथत्र्यज्वदेकद्यौ जातौ तृणे का पश्चात्
क्वेषदर्थे पुरौ षे । कवोष्णे महन्नाड् विशिष्टे च घासे करे ङ्योऽ
च्विजातीयभीच्याऽष्टन: । युतगव्यटि हवि:कपाले त्रयो द्वाप्यडाशीति
शन्शत्त्रिषू वा चत्वारिंशदादौ नञोऽच्यंस्तु शापे तिङन्ते त्वगो वा
ऽत्रसे सा सह: सोऽनुपाख्याधिकाख्याश्रुते ॥४॥ दण्डक: ॥

**(२१) इगयणि युवसङ्ख्यङीनाम् ।** [ २।१।४।१। ] यण् इय् उव्, असङ्ख्यं चादि ङी एतद्वर्जितानां इक्यदे वा ह्रस्व: । ग्रामणिपुत्र: । [ग्रामणीपुत्र: ।] ब्रह्मबन्धुपुत्र: । [ब्रह्मबन्धूपुत्र: । अलाबुकर्कन्धुदृन्भुफलम् । अयणादे: किम् ? शकटहूपुत्र: । कारीषगन्धीपुत्र: । स्त्रीपुत्र: । भ्रूपुत्र: । काण्डीभूत: । ऊरीकृत्य । गार्गीपुत्र: ॥

**(२२) अहन्सायसङ्ख्यावितोऽह्नोऽपि ङौ ।** [ २।१।४।२। ] सायादे: परोऽह्नोऽहन् स्याद् वा ङौ । सायमोऽप् लुग्निपातनात् । सायम् अह्न: [सायाह्न: ।] सायाह्नि । सायाहनि । सायाह्ने । द्व्यह्नि । [द्व्यहनि । द्व्यह्ने] यावदह्नि । [यावदहनि । यावदह्ने ।] व्यह्नि । [व्यहनि । व्यह्ने ॥]

**(२३) तीरतारो दिश: ।** [ २।१।४।३। ] दिग्वाचिन: परस्तीर: तार: स्यात् । दक्षिणतारम् । दक्षिणतीरम् ॥

**(२४) अर्थेऽन्यदर्टार्ङसा ।** [ २।१।४।४ ] अतृतीयाषष्ठ्या लक्षितोऽन्योऽन्येऽर्थे परे वाऽन्यत् स्यान्निपातनात् । अन्यदर्थ: । अन्यार्थ: । अर्टार्ङसा किम् ? [अन्यस्यार्थ:,] अन्यार्थ: ।

**( २५ ) आशा सु । [ २।१।४।५।]** अन्योऽन्यन्नित्यम् । सुप् गणार्थः । स चोक्तो घादौ । अन्यदाशा । अर्टाङसा किम् ? [अन्यस्य आशीः] अन्याशीः ॥

**( २६ ) छे कारके । [ २।१।४।६।]** टाङसापि । [अन्यस्मै हितः,] अन्यदीय । अन्यत्कारकः ॥

**( २७ ) रीदपः प्राद्यनद्व्यन्तरः । [ २।१।४।७।]** न अ अन । प्रादि, अनवर्णो, द्वि, अन्तर् एभ्यः परस्याप आदेरीत् स्यात् । समीपम् । प्रतीपम् । अन किम् ? प्रापः । परापः । एभ्यः किम् ? बह्वपः ।

**( २८ ) अवश्यमः स्याद् यपीत् । [ २।१।४।८।]** यत्प्रत्याहारान्तेऽवश्यमोऽन्ते इल्लुक्स्यात् । अवश्यदेयम् । यपि किम् ? अवश्यङ्कारकः ॥

**( २९ ) मनसि खलु नुमोऽपि कामे । [ २।१।४।९।]** भोक्तुमनाः । भोक्तुकामः ॥

**( ३० ) समः । [ २।१।४।१०।]** तयोः । समनाः । [सकामः] ॥

**( ३१ ) वा तते । [ २।१।४।११।]** सततम् । [सन्ततम् ।]

**( ३२ ) षोडशाद्या यथोक्ताः । [ २।१।४।१२।]** शास्त्रेणाविहितलोपागमवर्णविकारा दृश्यन्ते ते यथोपदिष्टास्तथा साधवो भवन्ति । स्याद् दोधकं चेह, अनुष्टुबौ च -

षोडश वाड्वलि नाम्नि समापाऽनूपदिवोऽगचि दीर्घ उदौ च ।
दूदभ दूढ्य पृषोदरपश्चार्धादिमयूर पिशाचबृसी च ॥१॥

ह्रस्वाद् भ्रुवोऽपि कुंसादौ पुत्रट् वा दुहिता सुतात् ।
सेतोऽग्रराजभोजेभ्यो नखादेकान्नविंशतिः ॥२॥

मांस्यवनं पृषोद्वानं मांस्यकोलूखलो बला- ।
हको दूडाशदूणाशौ जीमूतो मेखलादयः ॥३॥

वाक्यानि षड्भिः सह दश [=षोडश] । वाचं वदति वाग्वादः, तदपत्यं वाड्वलिः । सङ्गता अनुगता आपो ययोस्तौ नाम्नि देशे । [समापं नाम देवयजनम् । अनूपः ।] नाम्नि किम् ? समीपम् । [अन्वीपः ।] दिवोऽगचि । दिवोऽचि परेऽगागमः स्यात् । दिवाधीश्वरः । दिवाङ्गना । दिवौकसः । दीर्घेऽचि अत्कच्च । दिवोऽन्तः । दिवीश्वरः । दिवेश्वरः । उदौ । दिवन्तोऽत्कच्च उच्च औ उवर्णे परे । देवोहा । दिवूढाद्यूहा । दिवूढा । [दिवोढा । देवोढा ।] दिवूतिः । दिवोद्यानम् । [देवोद्यानम् । द्यूद्यानम् ।] दिवोद्गतिः । तथा कृच्छ्रेण दभ्यते, [दूदभः] । दुष्टं ध्यायति, [दूढ्यः] । पृषद् उदरमस्य, [पृषोदरः] । पश्चातोऽर्धादौ तलोपः । पश्चार्धम् । पश्चानुपूर्वी । पश्चाभिमुखः । तथा, मह्यां रौति [मयूरः] । पिशितमश्नाति [पिशाचः] । ब्रुवन्तः सीदन्त्यस्यां, [बृसी] । भ्रुवोऽन्तो ह्रस्वः स्याद् वा कुंसादौ परे । भ्रुकुंसः । भ्रुकुटिः । [भ्रकुंसः । भ्रकुटिः ।] सुतादेः परा दुहिता पुत्रट् स्याद् वा । सुतदुहिता । सुतपुत्री । मेरुपुत्री । [मेरुदुहिता] इत्यादि । नखाद्यकृतनलोपं साधु स्यात् । अत्रार्या -

नखनकुलनान्तरीयकनक्रनपुंसकनमेरुनासत्याः ।
नक्षत्रनाकनभ्राट्नमुचिनवेदाः नपादादि ॥४॥

[न वेत्तीति] नवेदाः, [वेत्तिः] असुन् [प्रत्ययान्तः] । आदिवृत्तेरेकान्नविंशत्यादयश्च निपात्यन्ते । एकेन न पूर्यते विंशतिरित्याद्यर्थे एकस्यादुगागमो नञश्च प्रकृतिभावः । एकान्नविंशतिः । एकादनविंशतिः । एकान्नत्रिंशत् । एकादनत्रिंशत् । एकान्नशतादि । मांसस्यान्तलोपः पचनपाकयोः । [मांस्पचनम् । मांसपचनम् । मांस्पाकः । मांसपाकः ।] पृषद् उद्वानम् [अस्य, पृषोद्वानम्] । ऊर्ध्वं खमस्य [उलूखलम् । ऊर्ध्वखशब्दयोरुलूखल इत्येतावादेशौ ।] उदूखलं वा । वारिवाहकः [बलाहकः । वारिशब्दस्य ब आदेश उत्तरपदादेश्च लत्वम् ।] कृच्छ्रेण दाश्यते नश्यति च [दूडाशः । दूणाशः ।] जीवनस्य मूतो [जीमूतः] । मेखलादिशब्दात् । [मेहनस्य खस्य माला मेखला ।] मह्यां रौति [मयूरः । महीशब्दस्य मयूभावः] । [मह्यां शेते च, महिषः । डित्थः । कपित्थः । दधित्थाश्वत्थमहित्थादयोऽविहितलक्षणा अत्र द्रष्टव्याः ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥५॥

**( ३३ ) परेऽसिद्युवुञोऽप्यनाके तथान्तो भवेत् । [ २।१।४।१३। ]** परे प्रत्ययाः असित् यु-वु-ञाः क्रमेण अन-अक-अन्ताः स्युः । नन्द्यादेर्युः । नन्दनः । युर्निविद्यादः । कारणा । वेदना । युः । पलाशशातनः । करणम् । गोदोहनी । असि किम् ? ऊर्णाहंशुभंभ्यः स्युः । ऊर्णायुः । [अहंयुः । शुभंयुः ।] वुञ् । अरीहणादेः । आरीहणकम् । तृच् ण्वु । कारकः । वुट् शिल्पिनि । नर्तकी । वुनासीः । जीवकः । रुन्नन्दिजीवेः । नन्दनः । जीवन्तः ॥

**( ३४ ) मुख्य इड्वा द्य सिन्मातृके मातृमाते च । [ २।१।४।१४। ]** योऽणिञोः स्त्रियां द्य आदेशो मुख्यः स्वार्थवृत्तिः स इत् स्यात्, सिदित्यन्यार्थे, मातृकादौ परे वा । क्रौडीमातृकः । [क्रौडीमाता । क्रौडीमातः ।] क्रौड्यामातृकः । [क्रौड्यामाता । क्रौड्यामातः ।] कारीषगन्धीमातृकः [कारीषगन्धीमाता । कारीषगन्धीमातः । कारीषगन्ध्यामातृकः । कारीषगन्ध्यामाता कारीषगन्ध्यामातः । परमकारीषगन्धीमातृकः इत्यादि ।] मुख्य किम् ? अतिक्रौड्यामातृकः । [अतिक्रौड्यामाता । अतिक्रौड्यामातः ।] सित् किम् ? क्रौड्याऽमाता । एषु किम् ? क्रौड्यापतिको ग्रामः ॥

**( ३५ ) बन्धौ सदा । [ २।१।४।१५। ]** तथैव । क्रौडीबन्धुः । मुख्य किम् ? अतिक्रौड्याबन्धुः । सित् किम् ? क्रौड्याः बन्धुः ॥

**( ३६ ) अथ निजपतिपुत्रयोः । [ २।१।४।१६। ]** तथैव । दैवयज्ञीपतिः । [दैवयज्ञ्यापतिः । परमदैवयज्ञीपतिः । दैवयज्ञीपुत्रः । दैवयज्ञ्यापुत्रः । परमदैवयज्ञीपुत्रः ।] भिनि । कौमुदगन्धीपुत्री । मुख्य किम् ? अतिक्रौड्यापतिः । निजग्रहणात् सिति न । क्रौड्यापतिको ग्रामः ।

**( ३७ ) कू रथत्र्यज्वदेकद्यौ । [ २।१।४।१७। ]** कुः कत् स्यात् रथादौ यि तत्पुरुषे । कद्रथः । कत्त्रयः । [कदजः ।] कदश्वः । कद्वदः । यि किम् ? कुरथो राजा । एषु किम् ? कुना ॥

**( ३८ ) जातौ तृणे । [ २।१।४।१८। ]** जातावर्थे । कत्तृणम् । जातौ किम् ? कुतृणानि ॥

**( ३९ ) का पथात् क्वेषदर्थे । [ २।१।४।१९। ]** कुः का स्यादन्ते पथाक्षयोः, ईषदर्थे च यः कुः सिति चेष्यते । कापथः, देशो वा [कापथः] । काक्षाणि । [काक्षः ।] ईषदर्थे । कालवणम्। काम्लम् ॥

**( ४० ) पुरौ षे । [ २।१।४।२०। ]** पुरुषे इत्यर्थः । मण्डूकप्लुत्या वा च सम्बध्यते । कापुरुषः । कुपुरुषः । पुरौ किम् ? कुपुरुषः ॥

**( ४१ ) कवोष्णे । [ २।१।४।२१। ]** कुः कः कव स्यादुष्णे वा का च वा । कवोष्णम्। कोष्णम् । कदुष्णम् ।

**( ४२ ) महन्नाड् विशिष्टे च घासे करे । [ २।१।४।२२। ]** एषु महतो डाङ् स्याद् वा । महाविशिष्टः । महद्विशिष्टः । एवं घासे । [महाघासः । महद्घासः ।] करे । [महाकरः । महत्करः ।] अभिदर्थमिदम् ॥

**( ४३ ) ङ्यः । [ २।१।४।२३। ]** महतो ङ्यन्तस्यान्तो डाङ् नित्यमेषु । महत्याः विशिष्टः, महाविशिष्टः । [महत्या घासः, महाघासः । महत्याः करः, महाकरः ॥]

**( ४४ ) अच्विजातीयभि । [ २।१।४।२४। ]** अच्व्यन्तो महन्नाड् स्याज्जातीये । महाजातीयः । महापुरुषः । महादेवी । महाकुलम् । भितैकार्थोपलक्षणात्, महाबाहुर्ना । महाकीर्ति । अच्वि किम् ? महद्भूतश्चन्द्रमाः ॥

**( ४५ ) इच्या । [ २।१।४।२५। ]** इजन्तोत्तरपदे पूर्वस्या स्यात् । केशाकेशि । बाहाबाहवि ॥

**( ४६ ) अष्टनः । [ २।१।४।२६। ]** आ स्यान्नाम्नि पदे परे । बहुलत्वात्, नानोऽत्र सूत्रत्वात्। अष्टापदः । अष्टावक्रो मुनिः । अष्टाविटपः । नाम्नि किम् ? अष्टगुणम् ॥

**( ४७ ) युतगव्यटि हविःकपाले । [ २।१।४।२७। ]** युक्तविषयेऽनन्ते गवि अत एवाट्, तथा हविर्विषये कपाले । अष्ट आ । अष्टागवं शकटम् । अष्टाकपालं हविः । युतः हविः किम् ? अष्टगवं, अष्टकपालं तस्य ॥

**( ४८ ) त्रयो द्वाप्यडाशीति शन्शत्त्रिषू । [ २।१।४।२८। ]** त्रयः द्वि द्वा, अपिशब्दाद्, अष्टापि स्यात्, समासान्त डाऽशीत्योरण्यस्मिन्, शन् शत् नि शब्दान्ते सङ्ख्यापदे परे । उ निपातः । त्रयोदश । त्रयस्त्रिंशत् । त्रयोविंशतिः । एवं द्वादश । [द्वात्रिंशत् । द्वाविंशतिः ।] अष्टादश । [अष्टात्रिंशत् । अष्टाविंशतिः ।] अडशीत्योः किम् ? त्रिर्दश । त्रिदशाः । त्र्यशीतिः । [द्व्यशीति ।] शन्शत्त्रिषु किम् ? त्रिशतम् ॥

**( ४९ ) वा चत्वारिंशदादौ । [ २।१।४।२९। ]** त्वालघुः । तदेव । त्रयश्चत्वारिंशत् । [द्वाचत्वारिंशत् । अष्टाचत्वारिंशत् ।] त्रिचत्वारिंशत् । [द्विचत्वारिंशत् । अष्टचत्वारिंशत् ।] इत्यादि । अडाशीत्योरेव । शन्शत्त्रिषु किम् ? त्रिशतम् ॥

**(५०) नञः ।** [२।१।४।३०।] नञ् अः स्यात् पदे । अब्राह्मणः । अपुत्रो ना ॥

**(५१) अच्यंस्तु ।** [२।१।४।३१।] तुरेवार्थे । अजादौ पादे नञ् अनेव स्यान्न द्विः । अनश्वः । अनुष्ट्रो ना ॥

**(५२) शापे तिङन्ते ।** [२।१।४।३२।] अन्नौ स्तः । अपचसि [त्वं जाल्म] अनर्हषि [त्वं जाल्म] । शापे किम् ? न पचसि [त्वम्] ।

**(५३) त्वगो वाऽत्रसे ।** [२।१।४।३३।] अत्रसे अप्राणिनि अगः स्याद् वा । [न गच्छन्तीति] अगाः । नगाः वा । वृक्षाः पर्वताश्च । अत्रसे किम् ? अगो ना शीतेन ॥

**(५४) सा सहः सः ।** [२।१।४।३४।] सहः सः स्याद् वा परे । सेति बहुव्रीहौ । सपुत्रः । [सहपुत्रः ।] सकर्मकः । सित् किम् ? सहयुध्वा । सहकारी । सहजः । सिदुत्तरपदे किम् ? सहयुध्वप्रियः । प्रियसहकारी ॥

**(५५) अनुपाख्याधिकाख्याश्रुते ।** [२।१।४।३५।] अनुपाख्येऽप्रत्यक्षेऽर्थे । सपिशाचा वात्या । साग्निः कपोतः । अधिके । सद्रोणा खारी । समाषः कार्षापणः । आख्यायाम् । साश्वत्थम् । सपलाशं नाम वनम् । श्रुते ग्रन्थान्ते बहुलात् । सकलमधीते । कलान्तम् । समुहूर्तम् । ससङ्ग्रहम् । श्रुतं दिद्वाधार्थम् । नित्यं पार्थक्यात् ॥४॥

**दित्यकालेऽहलेऽवत्सगव्याशिषि स्यान्न तीर्थ्येषु रूपादिके वा ।**
**समानो दृशदृक्षदृश्याच्च सर्वादिनः किन्त्विदं कीश्च वा वञ्चि तद्देवयोः ॥२।१।५॥ स्रग्विणी ॥**

**(५६) दित्यकाले ।** [२।१।५।१।] दित्यव्ययीभावे सहः सः स्यात् पदेऽकाले । सचक्रां धेहि । सधुरं प्राज । सब्रह्म । अकाले किम् ? सहपूर्वाह्णम् ॥

**(५७) अहलेऽवत्सगव्याशिषि स्यान्न ।** [२।१।५।[illegible]] आशिष्यर्थे सहः सो न स्यात् । स्वस्ति ते सहपुत्राय । आशिषि किम् ? सपुत्र [आयातः । सहपुत्र आयातः] । अहलेऽवत्सगवि किम् ? आयुस्ते भूयात् सहलाय, [सहहलाय, सवत्साय, सहवत्साय, सगवे, सहगवे] ॥

**(५८) तीर्थ्येषु रूपादिके वा समानः ।** [२।१।५।३।] समानः सः स्यात् तीर्थ्यादौ परे, रूपादौ वा । श्लोकौ द्वयोः -

तीर्थ्ये जनपदे पत्न्यां ज्योतिषि ब्रह्मचारिणि ।
रात्रौ नाभौ तथा पक्षे बन्धौ चेति गणः स्मृतः ॥१॥

रूपधर्मवयोवर्णगोत्रस्थानेषु नामनि ।
जातीयवचनोदर्ये रूपादिर्दशको गणः ॥२॥

समानतीर्थे वासी, सतीर्थ्यः । इत्यादि [=सजनपदः । सपत्नः । सज्योतिः । सब्रह्मचारी । सरात्रिः । सनाभिः । सपक्षः । सबन्धुः ।] सरूपः समानरूपः । सधर्मा । इत्यादि [=सवयाः । सवर्णः । सगोत्रः । सस्थानः । सनामा । सजातीयः । सवचनः । सौदर्यः] ॥

**(५९) दृश दृक्ष दृशि । [२।१।५।४।]** तथा । सदृशः । [सदृक्षः । सदृक्] ॥

**(६०) आच्च सर्वादिनः । [२।१।५।५।]** एष्वन्तः । [स इव दृश्यत इति] तादृशः । [अन्य इव दृश्यत इति] अन्यादृक्षः । अमादृक्

**(६१) किन्त्विदं कीश्च । [२।१।५।६।]** किमिदमौ क्रमेण कीई स्तः एषु । कीदृशः । [कीदृक्षः । कीदृक् । ईदृशः । ईदृक्षः । ईदृक्] ॥

**(६२) वा वञ्चि तद्देवयोः । विष्वचो वाऽद्रिकुः । [२।१।५।७।]** परोऽत्र । तदिति सर्वादि देव विष्व वा द्रिगागमः स्याद्, उस्थदोऽर्थः । वा वञ्चि क्विबन्ते अञ्चतौ । तद्र्यङ् । तद्र्यञ्चौ । तद्रीची । अदद्र्यङ् । दद्र्यङ् । कद्र्यङ् । देवद्र्यङ् । विष्वद्र्यङ् । चौ किम् ? तदञ्चिता ॥५॥

**विष्वचो वाऽद्रिकुः सं समि स्यात् सहः सध्रि तिर्ये तिरोऽको न हादौ तु दी- ।**
**र्घस्त्वनाम्नो र्लघुङ्र्याडिषीका तु तूलेऽप्यमालेष्टके भारिचित्योश्च मुम् ॥२।१।६॥ स्रग्विणी ॥**

**(६२) [विष्वेति** पूर्वत्र २।१।५।७। इत्यत्र व्याख्यातम् ॥]

**(६३) सं समि स्यात् सहः सध्रि । [२।१।६।१।]** संसहौ समिसध्री स्तः, वा वञ्चि, स त्वञ्चति सम्यक् । सम्यञ्चौ । समीची । समीचीनम् । सहाञ्चती, सध्र्यङ् । [सध्र्यञ्चौ । सध्रीची । सध्रीचीनः ॥

**(६४) तिर्ये तिरः । [२।१।६।२।]** तिरस् तिरि स्याद् एकारादौ वावञ्चि । तिर्यङ् । [तिर्यञ्चौ ।] ए किम् ? तिरश्चा । तिरश्ची । तिरश्चीनम् ॥

**(६५) अको नहादौ तु दीर्घः । [२।१।६।३।]** रूपचतुष्कमत्र -

> नहि वृद्व्यध्रुचितं सह वृकुक्षावस्रुवाष्ट भिन्नस्या-
> विष्टस्वस्तिकपञ्चन् च्छिन्नच्छिद्रस्य चिह्नस्य ॥१॥
>
> कर्णे तु विश्वाद् वसुराण्णरेषु मित्रेऽप्यृषौ कोटरमिश्रकस्य ।
> वनं तथा सिध्रकशारिकानां प्रादेर्घणीक्काशवले वहे दे ॥२॥
>
> भञ्जनकिंशुलकः स्यात् शालूकाञ्जनलोहितात् ।
> गिरौ चितेः कपि बह्वच् शरवंशमुनेः शुचेः ॥३॥
>
> धूमाहिकपिमणीनां मतौ नाजिरखदिरचक्रवाक- ।
> कारण्डवखवुर[पुलिनस्थविराणां] शुनो [पदे दन्तादौ] ॥४॥

[नहादि ।] उपानत् । मर्मावित् । नीरुक् । परीतत् । ऋतीषट् । प्रावृट् । क्वौ क्विबन्तेष्वेषु । चिह्नस्य कर्णे । दात्राकर्णः । शङ्कूकर्णः । द्व्यङ्गुलकर्णः । अस्रुवादेः किम् ? स्रुवकर्णः । [अष्टकर्णः। भिन्नकर्णः । विष्टकर्णः । स्वस्तिकर्णः । पञ्चकर्णः । छिन्नकर्णः । छिद्रकर्णः । विश्वस्यात् विश्वाद् दीर्घः वस्वादौ । विश्वावसुः । [विश्वाराट् । विश्वानरः । विश्वामित्रः ।]

राट् किम् ? विश्वराजौ । नरनाम्नी ष्टेः । ऋषौ किम् ? विश्वामित्रः । कोटरादीनां वने । कोटरावणम् । [मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् ।] आत् किम् ? पुरगावणम् चैके । प्रादेर्घणि बहुलम् । प्रतीवेशः । [प्रतिवेशः ।] प्रतीबोधः । [प्रतिबोधः ।] प्रतिहारः । [प्रतीहारः ।] क्वचिद् भिन्नविषये । प्राकारः । [प्रकारः ।] प्रासादः । [प्रसादः ।] वीमार्ग । [विमार्गः ।] न च । निषादः । [विषादः ।] क्वचित् स्यात् । नीहारः । वीहारः । इक्काशवले । बहुलमिति । प्रादीक्काशे । नीकाशः । वीकाशः । अनूकाशः । इक् किम् ? प्रकाशः । वले । कृषीवलः । आसुतीवलः । दन्तावलश्च । वहेइकः । ऋषीवहम् । कपीवहम् । इक् किम् ? पिण्डवहम् । न च । पीलुवहम् । दारुवहम् । दे । दस्य यस्तस्तस्मिन् प्रादीग्बहुलम् । नीत्तम् । परीत्तम् । ति किम्? सुदत्तम् । इक् किम् ? प्रत्तम् । भञ्जनादेरत् गिरौ । भञ्जनागिरिः । [किंशुलकागिरिः । साल्वकागिरिः । अञ्जनागिरिः । लोहितागिरिः ।] नाम्नि च कुक्कुटागिरिश्चेष्यते । चितेः कपि, सिति । एकचितीकः । द्विचितीकः । बह्वजादेः मतौ । उदुम्बरावती । मशकावती । वीरणावती । [पुष्करावती । अमरावती ।] शरावती । [वंशावती ।] एवं [धूमावती । अहीवती । कपीवती । मणीवती । मुनिवती । शुचीवती । हनूवती ।] नाम्नि वतोर्वः । नाजिराद्याः दीर्घाः स्युः । अजिरवती । [खदिरवती । चक्रवाकवती । कारण्डववती । खवुरवती । पुलिनवती । स्थविरवती ।] शुनाम् । श्वादीनां बहुलं दीर्घः स्यात् पदे [दन्तादौ] । श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः । [श्वाकुन्दः । श्वावराहः । श्वापुच्छः । श्वापदः ।] न च । श्वफल्कः । श्वमुखम् । क्वचिद् वा । श्वापुच्छः । [श्वपुच्छः ।] क्वचिद् विषयान्तरे । श्वापदः । [श्वपदः ।] पुटापुटिकादि । अनुत्तरपदेऽपि । पूरुषः । पुरुषः ॥

**(६६) त्वनाम्नोर्लघुर्ङ्याङ्** । [२।१।६।४।] त्वे संज्ञागतौ पदे च ङीआङ् ह्रस्वौ स्तो बहुलम् । [रोहिण्याः भावः] रोहिणित्वम् । [रोहिणीत्वम् । अजायाः भावः] अजत्वम् । [अजात्वम् ।] शिंशपत्वम् । [शिंशपात्वम् ।] रेवतिमित्रः । शिंशपस्थलम् । न च । नान्दीकरः ॥

**(६७) इषीका तु तूले** । [२।१।६।५।] इषीकतुलम् ॥

**(६८) मालेष्टके भारिचित्योः** । [२।१।६।६।] क्रमेण । मालभारिणी । इष्टकचितिः । इष्टकचितं च । तदन्ताप्यत्रेष्टा । मुञ्जेषीकतूलः । [उत्पलमालभारिणी । पक्वेष्टकचितम्] ॥

**(६९) मुम्** । उत्तरार्थः ॥६॥

**खित्यचादेरचोऽरुन्तुदादेस्तु नामादिषूदोदकं चोचरं वा ।**
**शिरो ये च शीर्षंश्च शीर्षोऽच्यणा नासिकाऽवर्णये नस्तु नस्क्षुद्रयोर्या- ।**
**णि ह्लेखलासे पदङ्गे च काष्यातिहत्याजिये पद्धिमे शसृचः पञ्चमः ॥२।१।७॥**

**(६९) खित्यचादेरचः** । [२।१।७।१।] खिदन्ते पदे चादिवर्जिताचो मुमागमः स्याद् ह्रस्वश्च । अढ्यङ्करणम् । हरिणिंमन्यः । वादेः । दोषामन्यः । अचः किम् ? विद्वङ्मन्यः । खित्येव तदन्ते विधिः ।

**(७०) अरुन्तुदादेस्तु** । [२।१।७।२।] मुम् पदेऽखिति च । अत्रानुष्टुपार्ये –

खित्यरुषो गिलेऽन्यस्यापाते ञो तिलश्येनयोः ।
कारे सत्यागदास्तूनामिन्धेऽग्निभ्राष्ट्रयोस्तथा ॥१॥

मध्यन्दिनलोकंपृणो धेनुभव्योष्णभद्रयोः ।
करणे इत्येऽनभ्यासस्य च रात्रेर्धातौ न वाख्येत ॥२॥

खिदन्तेऽरुषः । अरुन्तुदः । गिलेऽन्यस्येत्यगिलस्य । तिमिङ्गिलः । तिमिङ्गिलगिलः । अन्यस्य किम् ? गिलगिलः । पाते ञान्ते परे तिलश्येनयोः । तैलम्पाता, श्येनम्पाता क्रीडा । ञे किम् ? तिलपातः । सत्यादेः कारे । सत्यङ्कारः । [अगदङ्कारः । अस्तुङ्कारः ।] एवम्, अग्निमिन्धः । एवं [भ्राष्ट्रमिन्धः । मध्यन्दिनम् । लोकम्पृणः । धेनुर्भव्या, धेनुम्भव्या ।] एवम्, उष्णङ्करणम् । [भद्रङ्करणम् ।] अनभ्यासमित्यः । रात्रेर्धातौ खिदन्ते न वा । खिति तु नित्यमुक्तम् । रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः ॥

**( ७१ ) नामादिषूदोदकम् । [ २।१।७।३। ]** इह स्रग्विणी –

नाम्नि धौ वासपेयं पिषौ वाहने वौदने वीवधे मन्थबिन्द्वोस्तथा ।
सक्तुभारेषु वज्रे तथा हारगाहैकहल्पूर्वभाण्डे तथायं गणः ॥१॥

नाम्नि संज्ञागतौ पदे परे उदकम् उद स्यात् । उदवाहः । उदमेघः । उदपानः । तथा उदधिः । उदवासः । उदपेयम् । [उदपेषं] पिनष्टि । पिषौ किम् ? उदकपेषः । उदवाहनः । इतो वा । उदौदनः । उदकौदनः । इत्यादि [= उदवीवधः । उदकवीवधः । उदमन्थः । उदकमन्थः । उदबिन्दुः । उदकबिन्दुः । उदसक्तुः । उदकसक्तुः उदभारः । उदकभारः । उद्वज्रः । उदकवज्रः । उदहारः । उदकहारः । उदगाहः । उदकग्राहः ।] एकहलादौ भाण्डे । उदपात्रम् । उदकपात्रम् । एकहलादौ किम् ? उदकस्थालम् । भाण्डे किम् ? उदकफेनः ॥

**( ७२ ) चोत्तरं वा । [ २।१।७।४। ]** उत्तरपदस्थं च नाम्नि, उदकम् उद स्याद् वा । क्षीरोदा नदी । [क्षीरोदका ।] अच्छोदः । लोहितोदः ॥

**( ७३ ) शिरो ये च शीर्षंश्च । [ २।१।७।५। ]** शिरः शीर्षन् वा स्याद् यणां सम्बन्धिनि । शीर्षण्यः । शिरस्यः । 'केशे वा' [शाक० २।३।४३] इत्यन्ये ॥

**( ७४ ) शीर्षोऽच्यणाम् । [ २।१।७।६। ]** अणां सत्काज्विषये शिरः शीर्ष स्यात् । हस्तिशीर्षः । स्थौलशीर्षिः ॥

**( ७५ ) नासिकावर्णये नस् तु । [ २।१।७।७। ]** नासिका नस् स्याद् अवर्णेऽर्थे येऽणां तद्धितभवं वा । नस्यम् । वर्णस्तु नासिक्यः ॥

**( ७६ ) तस्क्षुद्रयोः । [ २।१।७।८। ]** तथैव । [नासिकायाः ।] नस्तः । [नासिकायाः क्षुद्रः] नःक्षुद्रः ॥

**( ७७ ) याणि हल्लेखलासे । [ २।१।७।९। ]** निपातनात् हृदयं हृत् स्याद् येऽणि । हृद्यः ।

हार्दम् । लेखलासे । हृदयं लिखति, हृल्लेखः । हृदयलेखः । अणीष्यते । अन्यत्र, हृदयलेखः । हृदयनिवृत्त्यर्थं हृत् । अन्यत्रोभयम् । हृच्छूलः । हृदयशूलः । हृद्दुःखम् । [हृदयदुःखम् ।] अतो वा शोकष्यञ्रोगेषु न वाच्यम् । हृच्छोकः । सौहार्द्यम् । हृद्रोगः ॥

( ७८ ) **पदङ्गे च । [ २।१।७।१०।]** पादः पदं स्याद् गे चकाराद उपहते च । पदगः । पदोपहतः ॥

( ७९ ) **काषिन्, आति, हति, आजि, ये [ २।१।७।११।]** एतेषु पत् स्याद्, हिमे च । पत्काषी । पदातिः । एवं, [पद्धतिः । पदाजिः । पद्याः ॥]

( ८० ) **शस्यृचः । [ २।१।७।१२।]** ऋचः सम्बन्धी पादः पत् स्याच्छसि परे । पादं पादं शंसति, पच्छः गायत्रीं शंसति । ऋचः किम् ? पादशः कार्षापणं ददाति ॥

**पञ्चमः** । पाद इत्यर्थः ॥७॥

**[ इति श्रीबुद्धिसागराचार्यकृत पञ्चग्रन्थ्यां संस्कृताधिकारे द्वितीयाध्याये प्रथमः, आदितो वा पञ्चमः, पादः ॥ ]**



## [ ॥ अथ द्वितीयाध्याये द्वितीयः पादः ॥]

**सम्भ्रमे स्यादनेकं पदं द्विस्तु वीप्सादिकेऽचां च वाक्ये प्लुतोऽन्त्यादि वा**
**णीयइष्टे युवाल्पौ च कन् श्रः प्रशस्य एज्ज वृद्धश्च बाढान्तिकौ साधनेदौ ॥१॥ स्रग्विणी ॥**

**(१) सम्भ्रमे स्यादनेकं पदम् । [२।२।१।१।]** भयादगतिकृतः संक्षोभः सम्भ्रमः । तस्मिन् गम्यमाने प्रयोक्तुः पदं सुप्तिङन्तमनेकवारं प्रयुज्यते । अहिरहिरहिः । बुध्यस्व [बुध्यस्व बुध्यस्व ॥]

**(२) द्विस्तु वीप्सादिके । [२।२।१।२।]** वीप्सादिष्वर्थेषु यद् वर्तते पदं तद् द्विरुच्यते । इह वृत्तं विताने -

वीप्सा क्रियाव्यक्तिविशेषणे च नित्यानुपूर्व्ये प्रथमश्च पूर्वः ।
घे डाचि संप्रादुपपादपूर्तौ किंरूपनिर्धार्यमथो समत्वे ॥१॥

अधोऽध्युपरि सामीप्ये वाक्ये वा परि वर्जने ।
प्कोने रिद्गुण आबाधे सुप्लुगो द्विः सुखप्रिये ॥२॥

वाऽकृच्छ्रे सुव्यतिहारे सर्वादीनां यथायथम् ।
यथास्वे तु पदं तेन गृहं तेन यथाकृति ॥३॥

क्रियागुणद्रव्यैर्भिन्नानर्थान् व्याप्तुमिच्छा वीप्सा । वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः । ग्रामे ग्रामे पानीयम् । क्रियाव्यक्तिविशेषणे । शनैः शनैरधीते । मन्दं मन्दं याति । पुनः पुनर्भुङ्क्ते । क्रियायाः व्यक्तिर्विशेष्यते येन तद् द्विर्विशेषणम् । अध्ययनं शनैः शनैः, करोतीत्यर्थः । व्यक्ति किम् ? शनैरधीते । नित्यानुपूर्व्ये । आभीक्ष्ण्यमिह नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । पचति पचति । भुक्त्वा भुक्त्वा अधीते । भोजं भोजं व्रजति । लुनीहि लुनीहि इत्येवायं लुनाति । क्त्वाणमुलौ द्वित्वे पौनःपुन्यप्रकाशकौ । यङ् तु तन्निरपेक्षः । [पुनः पुनः पचति, पापच्यते । यङ्ग्रहणात् पापच्यते पापच्यते इत्यन्ये [=काशि. ८।१।४] । आनुपूर्व्ये । मूले मूले स्थूलाः । अग्रे अग्रे सूक्ष्माः । भेदाभावान्न वीप्सा । प्रथमपूर्वो घे तरप्तमप्यौ घस्तद्विषये । प्रथमं प्रथमं पच्यते । पूर्वं पूर्वं पुष्यन्ति । उक्ताबाधे वा घोऽपि । प्रथमतरं पूर्वतरं वा पुष्यन्ति । [डाचि] पटपटाकरोति । पटपटायते । चित् किम् ? सञ्चाकरोति । सम्प्रोदुप एते द्विः पादपूरणे । संसमापः । [संसंश्रित्य तपः परम् । प्रप्रणम्य जिनं भव्यः । उदुदुत्पन्नमहोदयः । उपोपपद्यते श्रेयः ।] समत्वे विवक्षिते किमो रूपं निर्धारणीयं च द्विः स्यात् । उभाविमौ तुल्यजातीयौ, कतरा कतराऽनयोस्तुल्या जातिः ? सर्व इम आढ्याः, कतमा कतमा एषामाढ्यता ? कतमत् आढ्यत्वम् । कीदृशी कीदृशी विभूतिः । कथं

कथम् आढ्याः । निर्धार्यम् । अस्मात् कार्षापणाद् भवद्भ्यां माषं माषं देहि । माषौ माषौ देहि । समत्वे किम् ? आढ्यो ना, कतराऽस्याढ्यता ? अतोऽस्मै पादं देहि । अवीप्सार्थमिदम् । अधोऽध्युपरि च मामीप्येऽर्थे । अधोऽधो ग्रामम् । अध्यधि स्थापयति । उपर्युपरि विप्रान् दीक्षते । सामीप्ये किम् ? उपरि चन्द्रमाः । उपरि शिरसो घटः । इत्यौत्तराधर्यविवक्षया । तथा वाक्यप्रयोगे वर्जनेऽर्थे परि वा । परि परि त्रिगर्तेभ्य [वृष्टो देवः] । वाक्ये किम् ? परि त्रिगर्तं वृष्टः । वर्जने किम् ? ओदनं परिषिञ्चति । प्कोने रिद्गुणः । ईषदूनेऽर्थे गुणवचनं द्विः सुप्लुक् च स्याद् आदिः, पूर्वपदस्थः स च षित् पुं स्वार्थ ईषत् । पटु-]पट्वी । मृदुमृद्वी । गौरगौरी । कालिककालिका । श्येनश्येनी । गुणः किम् ? आऽग्निः सः । कोने किम् ? मृदुः सः । कोनेऽर्थे वृत्त्यभावोऽत्र रूपादीनां रित् सर्वस्य पुंस्त्वार्थम् । आबाधे । प्रयोक्तुर्मनः पीडागतौ पदं द्विः, आदिसुप् प्लुक् स्यात् । ऋक् ऋक् । पूः पूः । गतगता । नष्टनष्टः । पञ्चमी पञ्चमी । पित् पुंस्त्वार्थम् । सुखप्रिये । द्विः सुः अकृच्छ्रेऽर्थे वाऽऽदिसुप् लुक् । सुखसुखेन [ददाति ।] प्रियप्रियेण ददाति । सुखेन प्रियेण वा [अखिद्यमानो ददातीत्यर्थः ।] अकृच्छ्रे किम् ? प्रियः पुत्रः । सुर् अव्यतिहारे । सर्वादीनां सुप् प्लुग् आदिसुगागमश्चादिर्बहुत्वेऽलम् । चौ रे त्रेत्यादौ पठितावेतौ । अन्योन्यं परस्परम्, इतरेतरं भोजयन्ति । यथायथं निपात्यते यथास्वम् इत्यर्थे । यथायथं ज्ञाता अर्थाः । यथास्वभावम् [इत्यर्थः] । यथायथं यान्तु । यथात्मीयम् [इत्यर्थः] । पदान्तेन पदं द्वितीयान्तं निपात्यते । तेनेति पदेन यत्सदृशतरं तेन मह । पदं पदेन रोहति । एवं, गृहं गृहेण धावति । एवमाद्याकृतिगणः ॥

**( ३ ) अचां च वाक्ये प्लुतोऽन्त्यादि वा । [ २।२।१।३। ]** वाक्ये सन्निविष्टाचामन्त्योऽच् प्लुतः स्याद्, आदिशब्दाद् आदौ, मध्ये च बहुलम् । दशेरह -

> [प्रति] श्रुतिवृत्त्युपालम्भने चेदिवार्थे चिति प्राग्विचारे तथारम्भ ओं
> ह्युत्तरे प्रश्न एकैक आशीः प्रयोज्ये क्षियायामपेक्ष्यतिङो भर्त्सनेऽङ्गेन
> किद्द्विस्तदादौ पुरोऽर्चाप्रकोपेऽर्च्यमन्ते तु दूराद् गुरुर्वाऽनृ हे है तु भोगोत्र-
> नाम्नोऽभिवाद्येऽन्तरेऽन्ते त्वशूद्रस्त्रियास्तच्च प्रश्नान्तपूजाविचारेऽ-
> गिदादे च आयुप्परश्चायूटवौ चतुर्मात्र ऐच् स्याद् गणः ॥१॥

वेति सर्वत्र । प्रतिश्रुतिरभ्युपगमः । प्रतिज्ञा[नं] श्रवणाभिमुख्यं चोच्यते । गां देहि भोः हन्त ददामि३ । [हन्त ददामि ।] नित्यः शब्दो भवितुमर्हति३ । [नित्यः शब्दो भवितुमर्हति ।] नर किमात्था३ । [नर किमात्था ।] भोः किमाकर्षा३ । [भोः किमाकर्षा ।] सप्रतिक्षेपे निगृह्ये उपालम्भस्तदर्थे । अद्य श्राद्धमित्यात्थ३ । [अद्य श्राद्धमित्यात्थ । अत्र वादी युक्त्या प्रच्याव्य स्वमतादेवमनुयुज्यते ।] इवार्थे चिति । [चिद् इति] शब्दे [उपमार्थे] सति । राजा चिद् भूया३त् । [राजाचिद् भूयात् ।] राजेवेत्यर्थः । अग्निचिद् भूया३त् । [अग्निचिद् भूयात् ।] अग्निरिवेत्यर्थः । इवार्थे किम् ? कथञ्चिद् आहुः । प्राग्विचारे । विचारविषये पूर्ववाक्यान्त्योऽच् । अहिर्नू३ रज्जुर्नु ? [अहिर्नु रज्जुर्नु ?] स्थाणुर्णू३ पुरुषो नु ? [स्थाणुर्णु पुरुषो नु ?] तथारम्भ ओम् । ओ३म् अग्निमीळे पुरोहितम् । आरम्भे किम् ? ओमित्यक्षरमुपासीत । ह्युत्तरे । पृष्टप्रतिवचनमुत्तरम् । तदर्थे वाक्यान्तो हिः । अकार्षीः कटं त्वम् ? अकार्षं ही३ । [अकार्षं हि ।] अलावीस्त्वम् ? अलाविषं ही३ ।

[अलाविषं हि ।] किं करोमि कटम् ? करिष्यसि हि । प्रश्न एकैकः । प्रश्ने लुप्तचकाराद् एकैकग्रहणाद् वा उत्तरे च यद् वाक्यं वर्तते तत्पदान्त्योऽच् एकैकः प्लुतो वा स्यात् । अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३ इ ? [अगमः पूर्वान् ग्रामान् अग्निभूते ?] अगम३म् पूर्वा३न् ग्रामा३न् पटा३ उ [अगमं पूर्वान् ग्रामान् पटो ?] आशीः प्रयोज्ये क्षियायामपेक्ष्यतिङः । तिङन्तवाक्यान्तोऽच्, अपेक्षा चेत् तिङन्तस्याशंसने । पुत्रांश्च लप्सीष्ठा३ः धनं च तात । [पुत्रांश्च लप्सीष्ठाः धनं च तात ।] प्रैषे । कटं कुरु ३ ग्रामं [च] गच्छ । [कटं कुरु ग्रामं च गच्छ ।] क्षियायाम् । स्वयं रथेन याति३ उपाध्यायं पदातिं गमयति । [स्वयं रथेन यात्युपाध्यायं पदातिं गमयति ।] भर्त्सनेऽर्थेऽङ्गेन युक्तं तिङन्तं तिङाकाक्षं द्वे च प्लुतं च स्यात् । अङ्ग कूज३ अङ्ग कूज३ अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म । भर्त्सने किम् ? अङ्गाधीष्व ओदनं दास्यामि । किद्द्विस्तदादौ । भर्त्सने वाक्यादौ स्यादौ किद् आमन्त्रितं पदं द्विः स्यात्, तयोरन्त्योऽच्, आदिपदस्य वान्त्योऽच् प्लुतः स्यात् । चौर चौर३ [चौर३ चौर] दस्यो दस्यो३ [दस्यो३ दस्यो] घातयिष्यामि त्वाम् । आदौ किम् ? अविनीतः खल्वसि माणवक । कित् किम् ? चौरस्त्वमतो ज्ञास्यसि । पुरोऽर्चाप्रकोपे । अर्चायां प्रकोपे चार्थे किदादौ पदं द्विः पुरः पदान्त्योऽच् च प्लुतः स्यात् । माणवक३ माणवक, अभिरूपक३ अभिरूपक, शोभनः खल्वसि । कोपे । माणवक३ माणवक, अविनीतक३ अविनीतक, इदानीं ज्ञास्यसि जाल्म । कुत्सायां च कोपोऽसि । शक्तिके३ शक्तिके, यष्टिके३ यष्टिके, रिक्ता ते शक्तिः । असूयायामपि । माणवक३ माणवक, अभिरूपक३ अभिरूपक, रिक्तं त आभिरूप्यम् । आदौ किम् ? शोभनः खल्वसि माणवक । सित् किम् ? उदारो ना । अर्च्यमन्ते । वाक्यान्ते यत् क्वित् पदमर्च्यं तदन्त्योऽच् प्लुतः । शोभनः खल्वसि माणवक३ । एवम्, अग्निभूता३ इ । [अग्निभूते ।] दूराद् गुरुर्वाऽनृ । तित् ऋवर्जः दूराद् आमन्त्रितो वाक्यान्तेऽज् वा गुरुर्वा प्लुतः स्यात् । आगच्छ भो देवदत्त ३ । [आगच्छ भो देवदत्त ।] तथा अ३ग्निभूते । अग्निभूते । अग्निभूता ३ इ । गुरुर्वा समुच्चये । दूरात् किम् ? एहि नर । अनृ किम् ? कृष्णमि३त्र । कृष्णमित्र३ [कृष्णमित्र ।] हे है तु । तुरेवार्थे । वाक्यस्थौ हे है एव प्लुतौ स्तः । हे ३ देवदत्त । हे देवदत्त । [देवदत्त हे ३। [देवदत्त हे ।] एवं है ३ [देवदत्त । देवदत्त है । है देवदत्त ।] भोगोत्रनाम्नोऽभिवाद्येऽन्तरेऽन्ते त्वशूद्रस्त्रियाः । अभिवादकायाशीर्दानम् अभिवादोत्तरं, तद्विषये शूद्रस्त्रीवर्जिते यद् वाक्यं तदन्तस्थस्य भोशब्दस्य गोत्राभिधायिनः स्वसंज्ञाशब्दस्य चामन्त्रितस्यानृ गुरुरचामन्त्योऽच् प्लुतः स्यात् । अभिवादये चित्रोऽहं भोः आयुष्मानेधि चित्र भो३ः । [आयुष्मानेधि चित्र भोः ।] एवम् [आयुष्मानेधि] गार्ग्य३ । एवम् [आयुष्मानेधि] दे३वदत्त । देवद३त्त । देवदत्त३ । इन्द्रशर्म३न् । अशूद्रस्त्रियाः किम् ? आयुष्मानेधि जतूषक । आयुष्मती भव गार्गि । अन्ते किम् ? देवदत्तायुष्मानेधि । तच्चेत्यादि । तच्चेत्यशूद्रस्त्रीप्रत्यभिवादेऽन्ते यत् पदं, तथा प्रश्नान्ते पूजायां विचारे वा अगिदादि एजन्तस्य आयु [=इउ]त्पर आकारः प्लुतो वा स्यात् । प्रश्नान्ते । अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३ इ पटा ३ उ ? पूजा । हृदोऽसि माणवक अग्निभूता३ इ पटा ३ उ । विचारे । होतव्यं दीक्षितस्य गृहा३ इ । तच्च । आयुष्मानेधि अग्निभूता३ इ पटा३ उ । एषु किम् ? आगच्छाग्निभूते३ दस्यो३ दस्यो ज्ञास्यसि । अगिदादि किम् ? शोभने खलु स्तः खट्वे । अचि यूय्वौ तावाकारात् परौ यू इङ् गतौ य्वौ स्तोऽचि परे ह्रस्वदीर्घबाधार्थम् । अग्निभूता३ यिह । पटा ३ व्त्र । पटा३वुदकम् । चतुर्मात्रो

वा प्लुतो वा ऐच् स्यात् । ऐ ४तिकायन । ऐ ३तिकायन । औ ४पगव । औ३पगव ॥

**(४) णीयइष्ठे युवाल्पौ च कन् । [२।२।१।४।]** णिञ ईयसे इष्ठे परे युवनल्पौ कन् स्तो वा । युवानम्, अल्पं वाऽऽचष्टे । कनयति । अतिशयेन तौ । कनीयान् । कनिष्ठः । युवयति वा । [यवीयान् । यविष्ठः] ॥

**(५) श्रः प्रशस्यः । [२।२।१।५।]** स्याद् एषु । श्रयति । श्रेयान् । श्रेष्ठः । क्रियावृत्तित्वेऽप्यस्य । अत एवेष्ठेयसी ॥

**(६) एज्ज्यवृद्धश्च । [२।२।१।६।]** वृद्धश्च प्रशस्यश्च ज्य स्यादेषु एत् आस्यादीकारः । ज्ययति । ज्यायान् । ज्येष्ठः ॥

**(७) बाढान्तिकौ साधनेदौ । [२।२।१।७।]** एष्वेतौ क्रमेण साधनेदौ स्तः । साधयति । साधीयान् । साधिष्ठः । नेदयति । [नेदीयान् । नेदिष्ठः] ॥१॥

**ह्रस्वाः ह्रसादीम्नि च भूय्बहोर्णौ वेष्टे श्लुगि भू च तृ विन्मदस्मिन् ।**
**वा द्व्याद्यचान्त्याद्यच एषु ण्यादौ नोच्चेस्यनोऽण्येऽट्यणि दण्डिनां च ॥२।२।२। वृत्तम् ॥**

**(८) ह्रस्वाः ह्रसादीम्नि च [२।२।२।१।]** जञ्जणार्थं ह्रस्वाद्या ह्रसित्यादयः स्युः, इमनि च णीय इष्ठे परे । वृत्तार्येऽत्र -

> ह्रस्वप्रियोरुबहुलं गुरुश्च वृद्धश्च वृन्दारक तृप्रदीर्घाः ।
> ह्रस्प्रावरो बंहगरोदवर्षः वृन्दत्रपौ द्राघ्स्थिर स्थास्फास्फिरः स्यात् ॥१॥

> पृथुमृदुकृशस्य परिवृढदृढयोः भद्रो भृशस्य यु ए च ।
> दूरयुवक्षिप्रक्षुद्रस्थूलानां यणादीच्च ॥२॥

ह्रस्वस्य भावः ह्रसिमा । तथा ह्रसयति । ह्रसीयान् । ह्रसिष्ठः । एवं प्रेमा । [प्रापयति । प्रेयान् । प्रेष्ठः ।] वरिमा । [वरयति । वरीयान् । वरिष्ठः ।] बंहिमा । [बंहयति । बंहीयान् । बंहिष्ठः ।] गरिमा । [गरयति । गरीयान् । गरिष्ठः ।] वर्ष इति । [वर्षयति । वर्षीयान् । वर्षिष्ठः ।] वृन्दयति । [वृन्दीयान् । वृन्दिष्ठः ।] इम नाम्नि । द्राघिमा । [द्राघयति । द्राघीयान् । द्राघिष्ठः ।] तथा स्थिर स्था । स्थापयति । [स्थेयान् । स्थेष्ठः ।] स्फिर स्फा । स्फायति । [स्फेयान् । स्फेष्ठः ।] स्थालघुः । पृथ्वादीनामृत् र स्यात् । प्रथिमा । [प्रथयति । प्रथीयान् । प्रथिष्ठः ।] इत्यादि [= म्रदिमा । क्रशिमा । परिव्रढिमा । द्रढिमा । भद्रिमा । भ्रशिमा ।] इ उ यु । तौ ए स्तः । दूरादीनां यणादिच्च लुत् स्यात् । दवयति । [दवीयान् । दविष्ठः ।] क्षेपिमा । [क्षेपयति । क्षेपीयान् । क्षेपिष्ठः ।] क्षोदयति । [क्षोदीयान् । क्षोदिष्ठः ॥]

**(९) भूय् बहोर्णौ वा । [२।२।२।२।]** बहु भूय् वा स्यादर्णौ परे । भूययति । बहयति । भूयनम् ।

**(१०) इष्टे । [२।२।२।३।]** नित्य पार्थक्यात् । भूयिष्ठः ॥

**(११) श्लुगि भू च । [ २।२।२।४।]** अर्थादिमेयसोरिः लुक्स्यात्, बहुर्भू च । भूमा । भूयान् । लुगाढात् ॥

**(१२) तृ । [ २।२।२।५।]** तृन्तृचौ लुक् स्तो ण्यादौ । कर्तरि वोढारं दोग्धारमाचष्टे । कारयति । दोहयति । करिष्ठः । करीयान् । करयति ।

**(१३) विन्मत् । [ २।२।२।६।]** ण्यादौ लुक् स्युः स्रग्विन् [इत्येतस्य] स्रजयति । [स्रजिष्ठः । स्रजीयान् ।] स्रुग्वान् इत्येतस्य] । स्रुचयति । [स्रुचीष्ठः । स्रुचीयान् ॥

**(१४) अस्मिन् । [ २।२।२।७।]** विन्मतोर्लुकि सति ण्यादौ तृ लुक् स्यात् । कर्तृमन्तमाचष्टे । कारयति । [करिष्ठः करीयान् ॥]

**(१५) वा द्व्याद्यचान्त्याद्यचः । [ २।२।२।८।]** अस्मिन् विन्मल्लुकि द्व्याद्यचः सत्कस्य अन्त्य एवादिरवयवस्य लुक् स्याद् वा । पयस्विन् पययति पयसयति । वस्तुमान् । वसयति । [वसिष्ठः । वसीयान् ।] द्व्याद्यचः किम् ? स्रजयति ॥

**(१६) एषु ण्यादिषु [ २।२।२।९।]** तन्नित्यं पार्थक्यात् । पप्त्यटयति । ३ द्व्यादचः किम् ? स्रजयति । [स्रजिष्ठः । स्रजीयान् ।] त्वचयति । [त्वजिष्ठः । त्वजीयान् ।] अण्णादौ नोऽच्येसि । अणाद्यचि येवामिति । नान्तस्यान्तत्याजातेः श्लुक् । आग्निशर्मिः । औडुलोमिः । दाण्डम् । ब्रह्मवत्तरः । ब्रह्मीयान् । नः किम् ? आसिचितः । अव्ये किम् ? अग्निशर्मरूप्यः । अस्त्युत्तरार्थम् । अणादौ किम् ? राज्ञे अणाद्यापादम् । अच्येसि उदिति यावत् ॥

**(१७) अनोऽण्येऽटि । [ २।२।२।१०।]** अनन्तस्य ण्यट्येव येऽन्त्यादिजातेः देर्नलुक् । राज्ञो भावः, कर्म च, राज्यम् । ण्यटि किम् ? सामसु साधुः सामन्यः । ब्राह्मण्यः । नियमार्थं वचनम् ।

**(१८) अणि दण्डिनां च । [ २।२।२।११।]** चैवार्थे । दण्ड्यादीनामेवाणि परेऽन्त्याजादेः लुक् । वृत्ते च वितानमत्र -

दण्डी सुपर्वा कुथुमी शिखण्डी ब्रह्मचारी चक्रपाणि ब्रह्मन् ।
स्यात् तैत्तिलिजाजलिपीठमर्दी शील्लाङ्गली सूकरसद्मचक्री ॥१॥

सङ्कोचदेशेऽस्य शुनो विकारे हैमेऽश्मनो वेत्ये च चार्मकोशे ।
भे तैषपोषौ यदि धातुसैद्धं कर्मोमिवादेश्च अशश्वदारात् ॥२॥

औक्ष्णोऽपत्येऽगगणिगाथिविदथिफणिकेशिनाम् ।
इणोऽचो वा हितनाम्नो म्नोऽवमर्णः समूह इन् ॥३॥

मदपत्यं समूहो वेत्यादि । दाण्डम् । सौपर्वः । तैतिली [जाजलि । पीठमर्दी । शाल्भागकी] । आचार्यः । तज्जुषोऽपि तमधीते । तैतिलः । [जाजलः । पैठमर्दः । शीलालः । लाङ्गलः ।] शुनो विकाररूपे सङ्कोचेऽर्थे देशेऽस्य शुनोऽवयवेऽर्थे च शौवः सङ्कोचः ।- शौवं मांसम् । अंसे शौवनमित्यन्ये । अनयोः किम् ? शौवनः । तथा हैमम् । विकारे किम् ? हैमनम् । आश्मः आश्मनो वा । वेत्ये किम् ? चर्मणो विकारः । चार्मः कोशः । अन्यत्रान्यश्च चार्मणः । भे नक्षत्रे ।

तैषपोषौ साधुस्तः । पितीति यणि यलोपे सति । धातुसैन्धः सैन्ध्यं वा । भे किम् ? तैष्यः [चरुः । पौष्यः चरुः । कर्म शीलमस्य कार्मः निपात्यते । कार्मणोऽन्यः । नान्यपि असित्यणादिपरे चादेरसश्च दादान्तो ह्यजादेः श्लुक् स्यात् । स्वर्भकः स्वौवः इत्यादि । अत्र आर्या-

सौधः सायं प्रतिकः अष्टो य इके च ओ परिष्टश्च ।
पौनःपुन्यं परेतरं पौनःपुनिकादयो बहुलम् ॥४॥

असिततिं किम् ? कम्पुः असश्च दाराक्षि शाश्वतम् । आरातीयः । औक्ष्णोऽपत्ये । ओक्षोऽन्यत्र । अत एव रस्येनं तस्य । अगण्यादेः । अपत्ये एवाणि अन्त्यादजादेः स्नुक् । मेधाविनोऽपत्यं मैधावः । अचः किम् ? स्राग्विणः । माद्रिणः । अच एकान्तान्तरेऽपि अगण्यादेः । गाणिनः ५ [=गाथिनः । वैदथिनः । फाणिनः । कैशिनः ।] अपत्ये किम् ? मैधाविनम् । वा हितनाम्नोऽण्यपत्ये नामः म्नोऽवमर्णः । मनन्तस्यावर्मणः अण्यपत्ये नित्यम् । सौषामः । माद्रसामः । म्नः किम् ? सौत्वनः । चार्मणः । [अवर्मणः किम् ?] चाक्रवर्मणः । अपत्ये किम् ? तेनावृतः चार्मणो रथः । दण्ड्यादेः किम् ? तेन वृतः सामनः । वैमनः । स्राग्विणम् । समूहेऽर्थेऽणि इनन्तस्य । मैधावं रथम् । स्राग्वं शार्ङ्गं गाणं वा वर्तयन्ते एके । मैधावः । इनादिजातावपत्ये ब्राह्मणो बहुलयोगात् ॥२॥

**ऐऽह्नोऽचि षन्हन्धृतराज्ञ्यणीयो बिल्वग्भ्य आपत्ययक्याच्यनाचि ।**
**नाण्यच्यपत्यादपि यण्यित्रौ वा राजेत्रविप्रा दित्रतौल्वलिभ्यः ॥२।२।३॥ वृत्तम् ॥**

**(१९) ए । [२।२।३।१।]** [अश्च इश्च इति ए ।] भे घणे वर्णो लुक्स्तोऽच्येऽसित्यणादौ । दाक्षिः । बालाकिः । आत्रेयः । श्यैन्येयः । गार्ग्यः । कौण्डिन्यः । असि किम् ? ऊर्णायुः ॥

**(२०) अह्नोऽचि । [२।२।३।२।]** अणादावर्थाद् अ लुक् । आह्नम् । आह्निकम् । अत ए नान्त्याजाद् अः ॥

**(२१) षन्हन्धृतराज्ञि अणि । [२।२।३।३।]** एषु योऽन्त्योऽत् सोऽणि लुक् स्यात् । ताक्ष्यः । भ्रौणघ्नः । धार्तराज्ञः । अणि किम् ? ताक्षण्यः ।

**(२२) ईयो बिल्वग्भ्यः । [२।२।३।४।]** बिल्वगादेः परः छसे यो लुगणादौ । बिल्वाः सन्त्यस्यां, बिल्वकीया [नदी] । च्छे कागमः । तस्यां भवा बैल्वकाः । एवं, वेणुकीकीयाः । वैणुकाः । श्लोकः -

बिल्ववेणुकपोतेक्षुकाष्ठकुञ्चत्रिवेतसात् ।
वेत्रात्कृतकुगन्ततो नवकादीय लुप्यते ॥१॥

कुञ्चा ह्रस्वत्वम् ॥

**(२३) आपत्ययक्याच्यनाति । [२।२।३।५।]** अ इत्यभावे यलुक्, क्ये च्वौ वाऽनाकारेऽणादौ च परे । गार्गीयति । गार्ग्यायते । गार्गीभूतः । गार्गकम् । य किम् ? कारिकेयिः । अनाति किम् ? गार्ग्यायणः । आपत्य किम् ? सांकाश्यकः ॥

**( २४ ) नाण्यचि । [ २।२।३।६।]** अपत्ये आ यु वा स्केत्यादिना यस्यापत्यस्य लुगुक्तस्तस्य न स्यादचि, अणर्थे अजादावणादौ विषयभूते । एवं सर्वत्र । गर्गाणां च्छात्राः गार्गीयाः । एवं तैदीयाः । आत्रेयीयाः । अणि किम् ? हिते गर्गीयः । अचि किम् ? गर्गरूप्यः।

**( २५ ) अपत्यादपि । [ २।२।३।७।]** अपत्यप्रत्ययान्ताद् आपत्यं लुगण्यपि । फाण्टाहृतस्यापत्यं फाण्टाहृतिः । तस्यापत्यं फाण्टाहृतः । तस्य च्छात्राः । फाण्टाहृताः । णलुकि इञोऽण् । भगवित् तस्यापत्यम् इङ्, तदपत्यं सौवीरेषु । त एका, तस्य च्छात्रा भागवित्ताः । तिकात् पिजः पुनः छः, तस्य च्छात्राः तैकायनाः । ष्कपिञ्जलादादिञ् । पुनः ण्यच् । तस्य च्छात्राः कापिञ्जलादाः । अच्यविभागः । चित्तिकीयाः । फाण्टाहृतरूप्यः ॥

**( २६ ) फण्फिञौ वा । [ २।२।३।८।]** अपत्याद् परौ लुक् स्तो वाऽण्यचि । गार्गीयाः । गार्ग्यायणीयाः । यास्कीयाः । यास्कायनीयाः छात्राः ॥

**( २७ ) राजेऽञ् । [ २।२।३।९।]** प्रत्येकं सेः क्षत्रियापत्येञन्तादपत्यं लुग् वा । औदुंबरिः पिता, औदुम्बरिः औदुम्बरायणो वा पुत्रः । एवमाश्मकिः [पिता], [आश्मकायनः] । यण्लुक् । राजकिन्दायणः । वेत्येके । अण्यचि निवृत्तम् ॥

**( २८ ) अविप्रात् । [ २।२।३।१०।]** ब्राह्मणवर्जितादपत्यादापत्यं लुग् नित्यम् । बौधिः । [बौधायनः ।] जाबालिः । [जाबालायनः ।] भाण्डीजङ्घिः । [भाण्डीजङ्घायनः ।] कार्णेखरिः । [कार्णेखरायणः ।] पिता पुत्रश्च । अविप्रात् किम् ? कार्त्तायणिः पुत्रः ।

**( २९ ) इञतौल्वलिभ्यः [ २।२।३।११।]** प्राचेञन्तादतौल्वल्यादेरपत्याद् आपत्यं लुक् । पान्नागारिः, मान्थरैषणिः, पिता पुत्रश्च । प्राच्यात् किम् ? [दाक्षिः पिता ।] दाक्षायणः [पुत्रः] । इञ् किम् ? राघवः पिता । राघविः पुत्रः । अतौल्वलिभ्यः किम् ? [तौल्वलिः पिता ।] तौल्वलायनः पुत्रः । अस्मिन् सवितानवृत्ते -

तौल्वलि तैल्वलि धारणि रावणि वाधकि नैवकि बैल्वकि वैकलि ।
आनुति आसुरि नैवसि वैरिकि पौष्करसादि दालपि नैमश्रि च ॥१॥

दैवयज्ञि आहिंसि आतङ्कि च आसिनामि प्रादौहनि दैवमतिश्च
पौष्पिः कारेणुपालिस्त्वथ दैवतोति ॥२॥

चैङ्कि पादांहती स्यातां चापद्दक्या तु पराहनी ।
केषाञ्चिदेवेष्टा जेषलीत्याविनन्थकी
सुबसुप् छन्दोर्थम् । दीलपस्यात्वं च दालपिः ॥३॥

पैलादितो ण्यार्थञितोऽणिञौ च डे विंशतौ तादि तमेऽन्तिके वा
काद्युर्ढ उऽवाच्च इहौ नैषां कोऽशश्वदुग्दोस्तिसुसः ठिगीन्खः ॥४॥ वृत्तम् ॥

**( ३० ) पैलादिभ्यः । [ २।२।४।१।]** अपत्यान्ताद् । आपत्यलुक् । पैलः । औदमेधिः । पिता पुत्रश्च । अप्राप्यार्थमिञन्ता । अत्रेन्द्रवज्रवितानम् -

पैलौदमेध्योदकशुद्धयः स्युः स्तः पैप्पलादायनि सात्यकामी ।
औदव्रजिभौलिकिसत्यकी च शालङ्किरौदञ्चिरथौदमज्जि ॥१॥

औदभृज्ज्यौज्जहानी च राहक्षत्र्यौद्गहायनी ।
दैवस्थान्यौदमञ्ची च अङ्गादिः पैङ्गलायनि ॥२॥

अङ्गादिजनपदनाम्नः क्षत्रियादण् । आङ्गः । वाङ्गः । पिता पुत्रश्चेत्यादि ॥

**( ३१ ) ण्यार्थञितोऽणिञौ च । [ २।२।४।२। ]** ण्यान्ताद् आर्षाद् ञिदन्ताच्चापत्याद् आपत्यावणिञौ लुक् स्तः । कौरव्यः, पिता पुत्रश्च । राजा तु तिकादिपाठात्, कौरव्यायणिः पुत्रः । आर्षात् वासिष्ठः [पिता पुत्रश्च] । इञ्लुक् । तैकायनिः [पिता पुत्रश्च] । वैदः [पिता पुत्रश्च] । अणिञौ लुक् अपत्यात् किम् ? द्वैपस्यापत्यं द्वैप्यिः । एभ्यः किम् ? औपगवः पिता । औपगविः पुत्रः । अणिञोः किम् ? दाक्षायणः । आपत्यं किम् ? वामस्थस्य च्छात्राः वामरथाः ॥

**( ३२ ) डे विंशतौ तादि । [ २।२।४।३। ]** डिति परे विंशतिशब्दे अत एवाडौ तादि लुक् । [विंशत्या क्रीतं] विंशकम् । [विंशतिरधिकाऽस्मिन्] विंश शतम् । [विंशतेः पूरणो] विंशः । उपविंशाः ॥

**( ३३ ) तमेऽन्तिके । [ २।२।४।४। ]** तमे परेऽन्तिकशब्दे तादि लुक् । अतिशयेनान्तिकः अन्तमः ॥

**( ३४ ) वा कादि । [ २।२।४।५। ]** वा व्यवस्थार्थः । अन्तिके कादि लुग्वा । अन्तितमः । अन्तिकतमः । [अन्तिके] सीदति साधुश्चात्र, अन्तिषत् । अन्तियः ॥

**( ३५ ) उर्ढे । [ २।२।४।६। ]** उव्वर्णाल्लुग्वा ढे । भाद्रबाहेयः । जाम्बवेयः । वैमा[त्रेयः] । काद्रवेयः ।

**( ३६ ) उ । [ २।२।४।७। ]** उवर्णा[न्तस्य] उ अव् यणादौ । कापटवः । बाभ्रव्यः । वा । स्वायम्भुवः ॥

**( ३७ ) अवाव्य इहौ च । [ २।२।४।८। ]** अव् आव् स्तौ ये परे ओ औ च स्वाभाविकौ । गव्यम् । गव्यति । गव्यते । [नाव्यति । नाव्यते ।] इहेति अस्मिन्नेव ये परे यौ ओऔ यनिमित्तौ सावेव स्यात् । यि च व्यः । तथा, लव्यम् । अवश्यलाव्यम् । ण्युपान्तदीर्घः । इह किम् ? उपोयते । लोयमानिः । यनिमितुः स्वाभाविकत्वाभावात् ॥

**( ३८ ) नैषाम् । [ २।२।४।९। ]** हृदयस्थामत्योजादे लुर्गभावादि निपात्यते । अत्र स्यात् पञ्चपात् - आलाध्वनो खे यञि दण्डिस्ति नारके तु राजन्यमनुष्ययूनाम् ।

जैत्यासिवासितृपिञोर्ण्यटिन्तः स्याद् भ्रूणहन् धीवनुटे भ्रुवो तुक् ।
हिरण्यमयैक्ष्वाकउसारवोऽणि ॥१॥

उदाहरणानि । आत्मनीनाः । दाण्डिनायनः । राजन्यकम् । जैह्मासिनेयः । वासिनायनिः ।

नोन्तः तश्चत्यटि । भ्रौणहत्यः । दैवत्यः । उ निपातः । भ्रौवेयः । हिरण्यस्य मयटि । इक्ष्वाकु । सरयू । अनयोरणि । इत्यादि ॥

**( ३९ ) कोऽशश्वदुग्दोस्तिसुसः । [ २।२।४।१० ।]** शश्वद्वर्जितादूक्यदोसत इस्उसन्तात् पराणादि ठ कोऽन न स्यात् । शाबरजाम्बुकः । मातृकः । दोष्णः । औदश्वित्कः । सार्पिष्कः । धानुष्कः । इसुस् प्रत्ययः किम् ? आशिषिकः ॥

**( ४० ) इक् । [ २।२।४।११।]** ठ इक् स्यादन्यतः । आक्षिकः ॥

**( ४१ ) ईन्खः । [ २।२।४।१२।]** खोणादिरीन् स्यात् । आढ्यकुलीनः ॥४॥

**ईयायनेयियुच्छफढा घ आद्या आरैजजक्षु ञ्णिति दीर्घसत्रे**
**आ देविकाश्रेयसि शिंशपायामिय्मित्रयौ य्यु प्रलये च केकये ॥२।२।५॥ उपजातिः ॥**

**( ४२ ) ईयायनेयियुच्छफढा घ आद्याः ॥ [ २।२।५।१।]** छः फः ढः घश्च प्रत्ययादिभूताः क्रमेण ईय् आयन् एय् इय् स्युः । गार्गीयः । नाडायनः । वैनतेयः । क्षत्रियः । आदि किम् ? उरुदघ्नः ॥

**( ४३ ) आरैजजक्षु ञ्णिति । [ २।२।५।२।]** ञितिणित्यणादौ अक्षु मध्ये आद्योऽच् यथास्थानम् आ आर् ऐच् स्यात् । गार्ग्यः । कार्तिकेयः । पितिकायनः । औपगवः । श्रियाः श्रायः परत्वात् । आद्या इत्यापादम् ॥

**( ४४ ) दीर्घसत्रे आ देविकाश्रेयसि शिंशपायाम् । [ २।२।५।३।]** एष्वाद्योऽच् आ स्यात् । [दीर्घसत्रे भवं] दीर्घसात्रम् । [देविकाकूले भवा] दाविकाकूलाः शालयः । [पूर्वदेविका नाम प्राग्ग्रामः तत्र भवः] पूर्वदाविकः [पुरुषः] । [श्रेयोऽधिकृत्य कृतमिति] श्रायसं [द्वादशाङ्गम्] । [शिंशपास्थले भवः] शांशपश्चमसः । [पूर्वशिंशपा नाम प्राग्ग्रामः तत्र भवः] पूर्वशांशपः [पुत्रः] ॥

**( ४५ ) इय् मित्रयौ य्यु प्रलये च केकये । [ २।२।५।४।]** एतस्थः य् युश्च इय् स्यात् । मित्रयुभावेन मैत्रेयिकया श्लाघते । प्रालेयम् [उदकम्] । कैकेयः आगतापत्ये ॥५॥

**न य्वः पदाद्वैज्स्वरस्वागतादेः स्यात् प्रोष्ठ भद्रात् तु पदस्य जाते ।**
**अंशाद्दतोरर्धसुसर्वराष्ट्रेऽमद्रे दिशे ग्रामपुरे च पूर्वे ॥२।२।६॥ वृत्तम् ॥**

**( ४६ ) न य्वः पदाद्वैच् । [ २।२।६।१।]** यस्यारैज् उच्यते तत्सम्बन्धे पदात् य्वः यकारवकारान्तात् परस्याद्योऽजारैज् न स्यात्, तस्यैव युः टैजागमस्तु स्यात् । [व्यसने भवं ।] वैयसनम् । [व्याकरणस्य बोद्धाऽध्येता वा] वैयाकरणः । [पूर्वत्र्यलिन्दे भवः] पूर्वत्रैयलिन्दः । [स्वश्वस्यापत्यं] सौवश्वः । य्वः किम् ? द्वैमातुरः । पदात् किम् ? याष्टीकः [=यष्टिः प्रहरणमस्य] । आरैज्जाद्यः किम् ? द्व्याशीतिकः [=द्वे अशीती भृतो भूतो भावी वा] । अत्रोत्तरपदस्यारैच् ॥

**( ४७ ) स्वरस्वागतादेः । [ २।२।६।२।]** स्वागतादिवर्जितस्य तद्वत् । अप्राप्तविधि-प्राप्तनिषेधार्थमिदम् । वृत्तमिह –

स्वर्द्वारपालस्प्यकृतस्वरश्वस् स्वव्यल्कशस्वादुमृदुश्वदंष्ट्रा ।
स्वाध्यायग्रामौ नगरं तथा स्वात् स्वर्द्वारस्वर्गादुगमनं च स्वस्तिः ॥१॥

स्वर्भवः स्वौवः । दौवारपालिकः । अध्यायादि त्वयं स्वात् स्वाध्यायादि । सौवाध्यायिकः । [सौवग्रामिकः । सौवनागरिकः ।] एवं स्वर्गगमनमाह । सौवर्गगमनिकः । स्वेन सिद्धे स्वाध्यायादि किम् ? स्वापतेयः । अस्वागतादेः किम् ? अत्र श्लोकः –

स्वागतस्वध्वरस्वङ्ग्याष्टादितीञ्पदं तु वा ।
व्यङ्गव्याडव्यवहाराः न्यग्रोधस्ति विनिमये ॥२॥

स्वागतमाह स्वागतिकः । आश्वादिरितीडितिस्वनापूर्वात् त इकारादौ ञ्णि परे इञतश्च नित्यापि । श्वाभस्त्रिः । श्वागणिकः । इञ् । श्वाभस्त्रेरिदं श्वाभस्त्रम् । पदं तु वा । श्वापदि पदं श्वापदम् । वात्रेत्यर्थः । श्वापदम् । शौवापदी । श्वापदिः । न्यग्रोधः । तीति समासे । न्यग्रोधमूलाः शालयः । ति किम् ? नैयग्रोधो दण्डः । विनिमये क्रियाव्यतिहारेऽर्थे । व्यावक्रोशी । व्याववर्ती । स्त्रियां णच् । वातोऽण् ॥

**( ४८ ) स्यात् प्रोष्ठभद्रात् पदस्य जाते । [ २।२।६।३। ]** आभ्यां परस्याद्यो जारिप् स्यात्, जातेऽर्थे ञ्णिनि । प्रोष्ठपादः । जाते किम् ? भाद्रपदो मेघः ॥

**( ४९ ) अंशाद् ऋतोः । [ २।२।६।४। ]** अंशात् परस्य ऋतुवाचिनस्तथा । पूर्ववार्षिकः । अपरहैमनम् । अंशात् किम् ? ऋत्वन्तरव्यवहितासु च वर्षासु भवः पूर्ववार्षिकः । ऋतोः किम् ? पौर्वकायः ॥

**( ५० ) अर्धसुसर्वराष्ट्रे । [ २।२।६।५। ]** षष्ठ्यर्थे सप्तमी । अर्धादिभ्यो राष्ट्रस्य तथा । अर्धपाञ्चालकः । [सुपाञ्चालकः । सर्वपाञ्चालकः ।] राष्ट्रस्य किम् ? [सुखेटकः ॥]

**( ५१ ) अमद्रे दिशः । [ २।२।६।६। ]** दिग्भ्योऽमद्रस्य राष्ट्रस्य तथा । पूर्वपाञ्चालकः । अमद्रस्य किम् ? आपरमद्रः ॥

**( ५२ ) ग्रामपुरे च पूर्वे । [ २।२।६।७। ]** ग्रामनगराणां प्राच्यानां दिग्भ्यस्तथा । पूर्वेषुकामशमः । अपरकार्ष्णमृत्तिकः । पूर्वकान्यकुब्जः । अपरपाटलिपुत्रकः । अत एव पश्चात् सन्धेः ॥६॥

**संवत्सरसंख्ये संख्याधिकतो वर्षेऽभाविनि मानेऽशाणेऽकुलिजाख्ये ।**
**वाऽऽदेस्त्वनतोऽर्धात् प्राद् वाहण एये स्यान्नान्निपुणक्षेत्रज्ञेश्वरशुग्भ्यः ॥२।२।७॥ पुष्पविचित्रा ॥**

**( ५३ ) संवत्सरसंख्ये संख्याधिकतः । [ २।२।७।१। ]** संख्याधिकाभ्यां परयोः संवत्सर-संख्ययोस्तथा । द्विसांवत्सरिकः । [अधिकसांवत्सरिकः ।] त्रिसाप्ततिकः । [अधिकसाप्ततिकः ।] अतो न मानकार्यं कालस्य । द्वैमासिकः ॥

**( ५४ ) वर्षेऽभाविनि । [ २।२।७।२। ]** आभ्यां वर्षस्य तथाऽभविष्यदर्थे ञ्णिति ।

द्विवार्षिकः । [अधिकवार्षिकः ।] भाविनि तु, त्रैवार्षिकं धान्यम् ॥

**( ५५ ) मानेऽशाणेऽकुलिजाख्ये । [ २।२।७।३।]** आभ्यां मानस्याऽशाणादेस्तथा । द्विकौडुविकः । द्वित्रिकौडुविकः । अधिकसौवर्णिकः । अशाणादेः किम् ? द्वैशाणः । [त्रैशाणः] द्वैकुलिजकः । [त्रैकुलिजकः ।] आख्यानाम्नि । पञ्चलोहित्यः मानमस्य पाञ्चलोहितिकः । अत्रैव तृदन्ततेष्टा ॥

**( ५६ ) वाऽऽदेस्त्वनतोऽर्धात् । [ २।२।७।४।]** इत आदेर्वा परस्य नित्यम्, अर्धात् परस्य मानस्यानस्तथा । आर्धद्रौणिकम् । अर्धद्रौणिकम् । अर्धखार्यां भवा अर्धखारी, साऽस्य भार्या अर्धखारीभार्यः । अनतः किम् ? अर्धप्रस्थी । [आर्धप्रस्थी ।] अर्धप्रस्थभार्यः ॥

**( ५७ ) प्राद्वाहण एये । [ २।२।७।५।]** प्रात् परस्य वाहणस्य तथा एये टादि शित् णिति परे । प्रावाहणेयः । [प्रवाहणेयः ।] प्रावाहणेयीभार्यः । [प्रवाहणेयीभार्यः ।] यद्वा एये एयान्तस्यास्य ञ्गिति परे । प्रावाहणेयिः । प्रवाहणेयिः ॥

**( ५८ ) स्यान्नान्निपुणक्षेत्रज्ञेश्वरशुग्भ्यः । [ २।२।७।६।]** द्वन्द्वैकत्वं कृत्वा पुनरितरेतरयोगः । नञः आन । ततो नात् परस्य निपुणादेस्तथा । आनैपुणम् । अनैपुणम् । इत्यादि [= आक्षैत्रज्ञम् । अक्षैत्रज्ञम् । आनैश्वर्यम् । अनैश्वर्यम् आशौचम् । अशौचम्] ॥७॥

**कुशलस्य परस्यानुशतिकादेश्च जङ्गल - ।**
**वनोर्वा वलजस्यापि पादः षष्ठोऽयमिष्यते ॥२।२।८॥ श्लोकः ॥**

**( ५९ ) कुशलस्य । [ २।२।८।१।]** तथा मात् । आकौशलिः । [अकौशलिः]

**( ६० ) परस्य । [ २।२।८।२।]** ए एनादेः । तत्र क्वचिद् गुरुलाघवं संहितपारार्थ्यम् ॥

**( ६१ ) अनुशतिकादेश्च । [ २।२।८।३।]** परस्य, आदेश्च नित्यम् ॥

शतिकरहत्संवत्सरसंवरणानि त्वनोस्तथा ।
लोक इहास्त्री च परात् सर्वाद् भूमिपुरुषौ कुरुकत् ॥१॥

अस्य हत्यास्य हेतिश्च वध्यौगोऽङ्गारवेणु च ।
संयोगश्च प्रयोगश्च देवभूतावधेस्तथा ॥२॥

सूत्रनडोदकशुद्धौ पुष्करसदभिगमौ ।
शतकुम्भचतुर्विद्याः स्याद्राजपुरुषा ण्युटि ॥३॥

प्राग्नगरस्य हत्सिन्धुभगस्यानिन्द्रदेवता ।
आत्वे नाच्च वरुणस्य सर्वलोकादिनो गणः ॥४॥

अनोः शतिकादीनि । आनुशतिकः । एवम् ऐहलौकिकः । पारस्त्रैणेयः । चकारात्, पारलौकिकः । सार्वभौमः । सार्वपौरुषः । कौरुकात्यः ॥१॥ अस्य हत्याशब्दोऽत्रास्ति । आस्यहात्यः । अस्यहेतिः प्रयोजनमस्य, आस्यहैतिकम् । प्रागन्त्यपदसमुदायाभ्यां प्रत्ययौ । वाध्यौगः ।

[आङ्गारवैणवः ।] संयोगश्च प्रयोगश्चेति । एके सांयोगप्रायौगिकम् । आबद्धौ आधिदैविकम् ॥२॥ सौत्रनाडिः । [औदकशौद्धिः । पौष्करसादिः । आभिगामिकः । शातकौम्भः । चातुर्वैद्यम् ।] इक् । तदर्हे वण् । स्वार्थेऽण् । ण्युट् वा । णिटि किम् ? राजपुरुषायणिः ॥३॥ प्राचां देशे नगरस्य तथ । सोह्मनागरः । पौण्ड्रनागरः । प्राक् किम् ? माद्रनागरः । हृदादेः तथा । सौहार्दम् । साक्तुसैन्धवम् । दौर्भागिनेयः । अनिन्द्रदेवता आत्वे । इन्द्रवर्जदेवतामात्रविषये, द्वन्द्व इत्यर्थः, तथा । आग्निमारुतम् । ऐन्द्राबार्हस्पत्यम् । आत्वे किम् ? स्कान्दविशाखः । अनिन्द्रस्य किम् ? सौमेन्द्रम् । आग्नेन्द्रम् । परस्यैव । ऐन्द्राग्न्यम् । अनाच्च वरुणस्य तथा । आग्निवारुणम् । अनात् किम् ? ऐन्द्रावरुणम् । सर्वलोकादिनस्तथा । सार्वलौकिकम् । कौरुपाञ्चालकम् । इत्याद्याकृतिगणः ॥४॥

**(६२) जङ्गलावनोर्वा वलजस्यापि । [२।२।८।४।]** एषां परेषां वा, आदेस्तु नित्यम् । कौरुजाङ्गलः । कौरुजङ्गलः । वैश्वधेनवम् । [वैश्वधैनवम् ।] सौवर्णवालजम् । चोत्तरवाक्यार्थः ।

**पादः षष्ठोऽयमिष्यते** ॥८॥

**[इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे द्वितीयाऽध्याये द्वितीयः, आदितो वा षष्ठः, पादः ॥]**



# [अथ द्वितीयाध्याये तृतीयः पादः ॥]

**प्रज्ञेभ्योऽणिति हादितो ण्य कुतुपो ह्रस्वे र शुण्डाकुटी -**
**शम्याष्टित्तर कासुगोण्यलघुतोऽथाश्वोक्षवत्सर्षभात् ।**
**हीने तु प्रकृतोक्तितोऽत्र मयड्वा जस्वृन्दवत् कुत्सिते**
**पाशप् डामहजादि मातृप्रभृतेः प्रात्क प्रकृष्टे तमप् ॥१॥ शार्दूलविक्रीडितम् ॥**

**(१) प्रज्ञेभ्योऽणिति हादितो ण्य । [२।३।१।१।]** प्रथमान्तात् स्वार्थे प्रज्ञादेरण् इति हादेः ण्यप्रत्ययस्य तो । वृत्तत्रयं तथात्र -

प्राज्ञो रक्षोऽप्यसुरमरुतौ योधकार्षापणौ स्तः
कुञ्चाग्नीध्रे अशनिविकृते चोरसन्नाय्यविद्याः ।
षोडच्चक्षुविंदतृजगतीदेवताबन्धुशत्रु -
तृप्तश्रोत्रे हरिणवपुषोरोषधेः स्यादजातौ ॥१॥

प्रत्यक्षजुह्वद्वणिजो वयो मनः साधारणानुषगुशिच्चिकीर्षिताः ।
मत्स्ये विसारिककुदग्रहायणः प्निशचेरेचुपचेयशत्रचो ॥२॥

सन्तपनोऽथ वियातदशार्हौ सन्दिशि कर्म तु णञ्णिनु वृच्चे ।
तीतिहभेषजनन्तविलोकात्वावसथाश्च समीपतदर्थाः ।
आश्रमवर्णयुगाश्चतुरः स्युः सर्वचतुर्द्विवत्रितोऽपि तु विद्या ॥३ षट्पदी ॥

प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्रीत्यादि । तथा कार्ष्णो मृगश्चेत् । श्रोत्रं शरीरं चेत् । औषधं पिबति । जातौ तु ओषधयो रूढाः क्षेत्रे । वैसारिणो मत्स्यः । शतृ । शत्रेव शातम् । अथो निपातः । सन्दिशि कर्म तु सन्देशेऽर्थे वाचिकं श्रुत्वा यत् तथैव क्रियते तत् कर्मैव कार्मणम् । णचृणिनुप्रत्ययाभ्याम् । व्यावकोशी सोकुट्टिनं वर्तते । वृच्चेति प्रज्ञादि । अत इति । हादिः । ऐतिह्यमित्यादि । चतुरः आश्रमादि । चातुराश्रम्यम् । [चातुर्वर्ण्यम् । चातुर्युग्यम् ।] सर्वादेः विद्या । सार्ववैद्यम् । [चातुर्विद्यम् । द्वैविद्यम् । त्रैविद्यम् ॥]

**(२) कुतुपो ह्रस्वे । [२।३।१।२।]** ह्रस्वाद्युपाधिके स्वार्थे तो विधेः ह्रस्वः कुतूः कुतुपो निपात्यते ॥

**(३) २ शुण्डाकुटीशम्याः । [२।३।१।३।]** एभ्यो रः स्याद् । ह्रस्वा शुडा शुण्डारः । [ह्रस्वा कुटी कुटीरः । ह्रस्वा शमी शमीरः ।] स्वतः पुंसि ॥

**(४) टित्तर कासूगोण्यलघुतः । [२।३।१।४।]** टित् तरः स्याद् अलघुतः कासूगोणीभ्यामित्यर्थः । ह्रस्वा कासूः शक्तिः कासूतरी । [गोणीतरी ॥]

**(५) अथाश्वोक्षवत्सर्षभात् हीने तु । [२।३।१।५।]** एभ्यो हीने टित् तरः स्यात् । हीनोऽश्वोऽनश्वेन जातोऽश्वतरः । अतिक्रान्तयौवनशैशवशक्तयः । [हीनसामर्थ्यपयःसामर्थ्याः उक्षतरः । [वत्सतरः । ऋषभतरः] ॥

**(६) प्रकृतोक्तितोऽत्र मयट् । [२।३।१।६।]** प्राचुर्येण प्रस्तुतं प्रकृतं, तदुक्तौ यस्मिन् वा तदुच्यते तत्रार्थे मयट् स्यात् । घृतप्रकृतमस्यां घृतमयम् । यात्रायां तदत्रोच्यते [वटकमयी यात्रा । अन्नं *प्रकृतमस्मिन्]* चान्नमयो यज्ञः घृतमयी पूजा । उक्तिर्बहुव्रीह्यर्था च ॥

**(७) वा जस् वृन्दवत् । [२।३।१।७।]** जसन्तेभ्यः प्रकृतोक्तौ समूहवत् प्रत्ययाः स्युः, मयड् वा तथैव । मौदकिकम् । मोदकमयम् । यात्रायाम्, अश्वीयम् । [अश्वमयी यात्रा ।] गव्यम् । [गोमयम् ।] स्वतो देशैकत्वनप्सु तदत्रोच्यते वा । मौदकिको यज्ञः । [मोदकमयः ।] तृण्यम् । [तृणमयम् ।] भूमौ, तृण्या भूमिः ॥

**(८) कुत्सिते पाशप् [२।३।१।८।]** स्यात् । कुत्सितः तैडः तैडपाशः । कुमारपाशा । तैडश्चौरः । द्रव्यकुत्सा वा । पिद् अस्त्र्यर्थः ।

**(९) डामहजादि मातृप्रभृतेः । [२।३।१।९।]** मात्रादेः परं डामहजादि निपात्यते बहुलार्थे । प्र लघुः । चिच्छन्दोर्थम् । छन्दांसि पञ्चेह -

मातामहो मातुलबालिशौ देवता पितृव्योऽपि पितामहोऽपि ।
मत्वर्थतः स्थोऽत्युपधेर्ढक्विष्टः पिञ्जस्तिलात् पेज च निष्फले स्वम् ॥१॥

पाके शमीभ्यः कुणजाहमूलं कर्णादिपक्षात्तिकटस्तिलादेः ।
रजः सहो वातबलाद्धिमादूलैलुश्च शीतोष्ण आलु न तृप्रात् ॥२॥

नानाविना शङ्कट शाल वेः संप्रोत्रैः कटं वेस्तदवात् कुटारः ।
नासानतो टीटभटौ च नाटः निश्चिक्किकेनोः पिटनेर्बिरीसः ॥३॥

बिडोऽध्युपाभ्यां त्यकचिल्लपिल्लं क्लिन्नाक्षिचुल्लं च कटः समूहे ।
स्थानेषु गोष्ठादिपशोः पटो विस्तारे विकारेऽस्य च तैलस्नेहे ॥४॥

षड्द्वित्वयोः षड्गवगो युगौ च मृदस्तिकोऽर्च्येऽस्ति स नामरूपा-
द्धेयो य भागान्नवसूरमर्त्तक्षेमाद्यधिष्ठान्नवनूखलसनाः प्रात्पुराणे न च एवमादिः ॥५॥

वाक्यानि । मातुः पिता भ्राता च स्वार्थे । बाल एव । देव एव । पितुः भ्राता, पिता च । मत्वर्थ एव स्थः । शिच्छ मत्वर्थीयः । स्वार्थे ढकुः । औषधेयः । निष्फलेऽर्थे तिलात् पिञ्जपेजौ स्तः । निष्फलस्तिलः, तिलपिञ्जः । [तिलपेजः ।] स्वम् । तस्य स्वमित्यर्थेऽतः । शम्यादीनां पाक इत्यर्थे कुणः स्यात् । शम्याः पाकः शमीकुणः, इत्यादि । कर्णादीनां पक्षस्य च मूलमित्यर्थे क्रमेण

जाह ति एतौ प्रत्ययौ स्तः । कर्णस्य मूलं कर्णजाहम् इत्यादि । शम्यादिकर्णादी षट्पद्योच्यते-

शमीकुवलकर्कन्धुबदराश्वत्थपीलवः ।
करीरखदिरौ भूर्श्च कणाक्षि तु नखं मुखम् ।
केशपादौष्ठशृङ्गाणि गुल्फदन्तौ च पृष्ठ वृत् ॥६॥

तथा पक्षतिः । तिलादीनां रज इत्यर्थे कटः स्यात् । तिलानां रजः तिलकटम् । अलाबूमाभाषभङ्गाणुभ्य आकृतित्वात् । [अलाबूकटम् । उमाकटम् । माषकटम् । भङ्गाकटम् । अणुकटम् ।] तस्य सह इत्यर्थे वातबलाद् ऊलः, हिमात् एलुः । वातस्य सहः वातूलः । [हिमस्य सहः] हिमेलुः ॥ नेति नसह इत्यर्थे शीतोष्णतृप्राणाम् आलुः । शीतालुः । [उष्णालुः । तृप्रालुः ।] असहे पृथग्भावेऽर्थे । नञ्विभ्यां नाञ्ना एतौ स्तः । नाना । विना । ससाधनक्रियावचनात् । प्रादेः वेः शङ्कट शाल एते स्तः । विगते शृङ्गे विशङ्कटे । विशाले । तद्योगाद् गौश्च विशङ्कटः, [विशालः] । सम्प्रोन्नेः वेश्च कटम् । सङ्कटम् । [प्रकटम् । उत्कटम् । विकटम् ।] कुटारश्चावात् । अवकटम् । [अवकुटारम् ।] नमनेऽर्थेऽवात् टीटभ्रटनाटाः स्युः संज्ञायाम् । नासनत अवरीटम् । [अवनाटम् । अवभ्रटम् ।] तद्ययोन्नासोऽपि, पुरुषोऽपि तथोच्यते । निः कार्यी चिक् चि स्यात् ताभ्यां क्रमेण क इनो पिटः स्तः । नासानतं, चिकिनं, चिपिटम् । तद्योगान्नासापुरुषौ तथा । नेर्बिरीसबिडौ स्तः । नासानतं निबिरीसम् । निबिडम् । कथं निबिडाः केशाः, निबिडं वस्त्रम् ? उपमानात् । अध्युपाभ्यां त्यका पर्वतस्योपरि भूमिः । अधित्यका । तदासन्ना उपत्यका । के अदिन्न स्यात् त्यिकेत्यक्रते, क्लिन्नाक्षि चेत् । क्लिन्ने चक्षुषि चिल्लपिल्लचुल्लाः निपात्यन्ते । क्लिन्न [शब्दस्य] चिल पिल चुल इत्यादेशः क्रमेण] स्यात्, लप्रत्ययश्च । क्लिन्ने चक्षुषी चिल्ले, [पिल्ले, चुल्ले] । तद्योगात् पुरुषोऽपि चिल्लः, [पिल्लः, चुल्लः] । पशोः । षष्ठ्यन्तपशुवाचिनां समूहः संघ इत्यर्थे कटः स्यात् । अवीनां संघः, अविकटः । महिषीकटः । स्थानादिष्वर्थेषु गोष्ठादयः स्युः पशोः । गवां स्थानं, गोगोष्ठम् । महिषीगोष्ठम् । उष्ट्रगोष्ठम् । पटः स्यात् पशोर्विस्तारेऽर्थे । अवीनां विस्तारः, अविपटः । गोपटः । अस्येति षष्ठ्यन्ताधिकारे । स्नेहेऽर्थे तैलः स्यात् । तिलानां विकारः स्नेहः तिलतैलम् । सर्षपतैलम् । इङ्गुदीतैलम् । अस्येति प्रकृत्यर्थस्य षट्त्वे द्वित्वे च यथाक्रमं षड्गवगोयुगौ स्तः । षड् हस्तिनः, हस्तिषड्गवम् । अश्वषड्गवम् । तथा द्वौ गावौ, गोयुगम् । उष्ट्रगोयुगम् । [हस्तिगोयुगम् । अश्वगोयुगम् ।] मृदस्तिकः । मृत्तिकार्थे । स्तुत्येऽर्थे स्न स एतौ वा स्तः । मृत्स्ना । मृत्सा । मृद्रूपः । नामरूपाद् धेयो वा स्यात् स्तुत्ये । नामधेयं नाम । रूपधेयं रूपम् । य धेयश्च भागात् स्तुत्ये । भाग्यम् । भागधेयानि । नवादेर्यः स्तुत्ये वा । नव्यम् । नवम् । नवशब्दो नू च स्यात् खतनसनाः प्रत्ययाश्च स्युः । नवम् । नवीनम् । नूत्नम् । नूतनम् । पुराणेऽर्थे प्रात् न च ख नतनाश्च स्युः । प्रणम् । प्रीणम् । प्रत्नम् । प्रतनम् । एवमाद्याकृतिगणः । श्रोत्राच्छः च्छन्दोऽधीत इत्यर्थे, श्रोत्रियः ॥

**(१०) प्रात् क प्रकृष्टे तमप् । [२।३।१।१०।]** प्रथममतिशायनेऽर्थे तमप् स्यात् । अयमेषामाढ्यः, आढ्यतमः । पाचकतमः । गोतमः । समा या विजायते क्षत्रियापत्यं स्त्री, दारतमा । अतिशयेनास्य शुक्लानि वस्त्राणि, शुक्लवस्त्रतमकः । पाण्डुपुत्रतमकः । प्रात् कः प्रकृष्टे तमप्

प्रकर्षवतां प्रकृर्षे श्रेष्ठतमः, प्रकृष्टतमः ॥१॥

**तरप्त्वेव निर्धार्यतः किन्तिङे चादितो डाम् क्रियायां तबिष्ठेयसू वा ।**
**गुणात् काकिनावेकतोऽस्वामिनो डादि निर्धायतः स्यात् किमः प्रच्छनेऽन्त्यः ॥२।३।२॥**
**भुजङ्गप्रयातम् ॥**

(११) **तरप्त्वेव निर्धार्यतः । [ २।३।२।१। ]** द्वयोरेकः स्यान्निर्धार्य विभज्येऽर्थे प्रकर्षे तरप् प्राक्सात् । अयमनयोराढ्यतरः । तस्यायमभिरूपतरः । ह्यः पटुरासीत्, अद्य पटुतरः । नृणां देवानां [च] देवाः पूज्यतराः । दन्तोष्ठस्य दन्ताः स्निग्धतराः । अवस्थाजातिभेदात् निर्धार्यात् । ततोऽयं पटुतरः । तत्रत्येभ्योऽत्रत्या उभयाभ्यामीश्वराः सुकुमारतराः । उक्तात् किम् ? ग्राम्यणां नागराणां च नागराः पटुतमाः । अत्र जातौ बहुत्वम् ॥

(१२) **किन्तिङे चादितो डाम् क्रियायां तप् । [ २।३।२।२। ]** किमादेः क्रियावृत्तेः यथाविधि, तबिति तरप् तमप्, डाम् स्यात् ङिदन्तार्थे । किन्तरां करोति । पचतितमाम् । [पचतितराम् ।] पूर्वाह्णेतमाम् । [पूर्वाह्णेतराम् ।] भुङ्क्ते । उच्चैस्तमाम्, [उच्चैस्तराम्] अधीते । क्रियायां किम् ? उच्चैस्तरो वृक्षः ।

(१३) **इष्ठेयसू वा गुणात् । [ २।३।२।३। ]** तप्प्रसङ्गे गुणवाचिन इष्ठेयसू वा स्तः । पटिष्ठः । पटुतमः । पटीयान् । पटुतरः । श्येतिष्ठः । श्येतितमाः । गुणात् किम् ? गोतमः । उदिग् इत्कार्यार्थः ॥

(१४) **काकिनावेकतोऽस्वामिनः । [ २।३।२।४। ]** अस्वामिनोऽसहायादेकात् क-आकिनौ स्तः । एककः । एकाकी । एकाकिभिः क्षुद्रकैर्जितम् ॥

(१५) **डादि निर्धार्यतः । [ २।३।२।५। ]** एकान्निर्धार्येऽर्थे एकवचनान्तत्वात् तप् स्यात् डादि । डतमप् डतरबित्यर्थः । भवतोर्भवतां वा एकः एकतमः, एकतरो वा कठः । एवमत्र कुले प्रधानं, पटुः, दाता, ना वा ॥

(१६) **स्यात् किमः प्रच्छने । [ २।३।२।६। ]** पृथग्योगाद् उत्तरत्र द्वयोर्ग्रहणाद् बहुषु मध्यान्निर्धार्यात् प्रश्नविषये किमस्तौ स्तः । भवतां कः कतमः कतरः [वा] कठः । अनिर्धार्यप्रश्ने । को भवतां स्वामी, कठो वा ? ॥

[१७] अन्त्य इत्युत्तरार्थम् ॥२॥

**यत्तदश्च द्वयोर्वादि जात्या बहुत्वेऽक्ष्वगन्त्यात् पुरोऽज्ञातकुत्स्या- ।**
**ल्पह्रस्वे तिङः सर्वलः सुप् त्वडः सोः क चादेः क्षि तूष्णीमकां कस्तु शीले कचाम् ॥२।३।३॥**
**स्रग्विणी ॥**

(१७) **यत्तदश्च द्वयोः । [ २।३।३।१। ]** यत्तत्किम्भ्यो द्वयोरेकस्मान्निर्धार्यादन्ता इति डतरडतमप् स्यात् । भवतोर्यः यतरः कठः [ततर आगच्छतु । कतरो भवतोः कठः ।] स ततर आगच्छतु । कः [कतरः] गार्ग्यः [स ततर आगच्छतु ।] द्वयोः किम् ? यो यस्मिन् कुले प्रधानः

[स आगच्छतु] ॥

**( १८ ) आदि जात्या बहुत्वे । [ २।३।३।२। ]** यत्तदोर्बहुषु मध्याज्जात्या निर्धार्याद् आदीति डतमप् स्यात् । भवतां यो यतमो वा कठः स ततमो वाऽऽगच्छतु । अजातिबहुत्वे । यो भवतां पटुः [कठः] । पटुतरो भवतोः कठः ॥

**( १९ ) अक्ष्वगन्त्यात् पुरः । [ २।३।३।३। ]** यत्तदोर्बहुषु मध्यान्निर्धार्याद् इतश्चाक्षुमध्येऽन्त्यादचः पुरोऽक् स्यात् । भवतां यो यको वा कठः स सको वाऽऽगच्छतु ॥

**( २० ) अज्ञातकुत्स्याल्पह्रस्वे तिङः । [ २।३।३।४। ]** ह्र[स्वो] लघुः । विशेषरूपेणाज्ञाताद्यर्थे तिङन्तस्य तथाऽक् स्यात् । कस्यायं, किं चायं, पचति, पचतकि ? एवं कुत्सितं [पचति, पचतकि] । अल्पं [पचति, पचतकि] । ह्रस्वकालं वा [पचति, पचतकि] । एषु किम् ? पचति ॥

**( २१ ) सर्वलः । [ २।३।३।५। ]** सर्वादिरसुपस्तथाऽक् स्यात् । कस्य भवन्तः, भवकन्तः ? कुत्स्याय । सर्वस्मै । सर्वकस्मै । [युवयोः] । युवकयोः । [युष्मासु ।] युष्मकासु । अज्ञातादौ किम् ? सर्वः । वा ।

**( २२ ) सुप्त्वङः । [ २।३।३।६। ]** त्वङ्प्रत्याहारस्य सुबन्तस्यैव तथाऽक् स्यात् । त्वकम् । अहकम् । मयकि । त्वकत्पुत्रः । [मकत्पुत्रः ।] त्वकपितृकः । [मत्कपितृकः ।] नियमार्थं वचनम् ॥

**( २३ ) सोः । [ २।३।३।७। ]** प्रथमैकवचनान्तस्य सर्वादिस्तथाऽक् स्यात् । अयकम् । इयकम् । ककिं वा निपात्यते, सौ परेऽनगर्थकः ॥

**( २४ ) चादेः क्षि । [ २।३।३।८। ]** चादेस्तथाऽक् स्यात् । क्षिचाकद् वा स्यात् । उच्चकैः । धिक् । धकित् । हिरुक् । हिरकुत् । [पृथक् ।] पृथकत् ॥

**( २५ ) तूष्णीमकाम् । [ २।३।३।९। ]** तूष्णीमो मकार्यी तथा काम् स्यात् । तूष्णीकामास्ते ॥

**( २६ ) कस्तु शीले । [ २।३।३।१०। ]** तूष्णीमो म तथा कः स्याच्छीलेऽर्थे । तूष्णींशीलः । तूष्णीकः ॥

**( २७ ) कचाम् । [ २।३।३।११। ]** अन्याज्ञातादौ क स्याद् अर्थादन्येभ्यः । कस्यायम्, किं मम वाऽश्वः, अश्वकः । अल्पे, तैलकम् । ह्रस्वे, पटकः ॥३॥

**कृपानीततस्तौ नराख्याच्च चादीत्पदं बह्वचो घेलठाः स्युः षषोऽचः ।**
**द्वितीयात् परैचाच एकाज्विशालादितश्चौरिलोलोऽजिनान्ते कनेते ॥२।३।४॥ भुजङ्गप्रयातम् ॥**

**( २८ ) कृपानीततस्तौ । [ २।३।४।१। ]** कृपायां तत्सांनिध्यात् कृपापूर्वे च सामोपप्रदाने नीतिः, तत्र च तौ अकौ स्तो यथाविधि । स्वपितकि । पुत्रक दुर्बलक बुभुक्षितक । तन्नीतौ ।

वत्सक त्वकम् एहकि । उत्सङ्गके उपविश । कण्टकक । अलग्नकः । ओदनकं भोक्ष्यसि । तन्नीतावकृपायामपि ॥

**( २९ ) नराख्याच्च । [ २।३।४।२। ]** नृनाम्नस्तयोः कः स्यात् । दत्तकः । व्याघ्रकः ॥

**( ३० ) चादीत्पदं बह्वचः । [ २।३।४।३। ]** न्राख्याद् बहुत्वयोः कः, तत्र चादिपदं पूर्वपदमिल्लुक् स्यात् । अनुकम्पितो देवदत्तो दत्तकः । अबह्वचः । भूपकः ॥

**( ३१ ) घेलठाः स्युः । [ २।३।४।४। ]** तथैव । तत्रेत्पदं नित्यं, पार्थक्यात् । दत्तियः । दत्तिलः । दत्तिकः । अबह्वचः । भूपकः ।

**( ३२ ) षषोऽचः द्वितीयात् परा । [ २।३।४।५। ]** तथैव किन्तु षषो यो द्वितीयोऽच् ततः परभाग इक् स्यात् । अनुकम्पितः षडङ्गुलिदत्तः षडियः । [षडिकः । षडिलः ।] षड्मुखदत्तः । षड्मवियः । षड्मुकः ॥

**( ३३ ) एचाचः । [ २।३।४।६। ]** तथैव, किन्त्वेषु परभाग एवापूर्वेण सह इक् स्यात् । लहोडः । लहियः । लहिकः । कपोतकः । कपियः ॥

**( ३४ ) एकाज्विशालादितश्च । [ २।३।४।७। ]** तथैव, एभ्यः परभाग इक् स्यात् । वागाशीर्दत्तः । वाचियः । [वाचिकः । वाचिलः ।] त्वचियः । [त्वचिकः । त्वचिलः ।] विशालदत्तः । विशालियः । [विशालिकः । विशालिलः ।] विशाल । वरुण । सुपरि । अर्यमन् । शेवल । आकृतित्वादपठ्यं पृथगेकाच्च ॥

**( ३५ ) ओरिलो लः । [ २।३।४।८। ]** उवर्णात् परः प्रागुक्त इलः लः स्यात् । भानुदत्तः । भानुलः । वसुलः । षड्मुखदत्तः षड्मुलः ॥

**( ३६ ) अजिनान्ते कन् । [ २।३।४।९। ]** तथा कन् स्यात् । अजिनान्ते शब्दे पूर्वपदापेक्षया परभाग इत् स्यात् । व्याघ्राजिनः, व्याघ्रमहाजिनो वा, व्याघ्रकः । सिंहकः । निन्दित्वाभावार्थः । व्याघ्रकः ॥

**( ३७ ) एते । [ २।३।४।१०। ]** कन् घेलठाः स्युः । तत्र परपदमित् । देवदत्तः, [देविकः, देविलः, देवियः ।] याज्ञिकः, [याज्ञिलः, यज्ञियः, यज्ञदत्तः ।] वायुकः, [वायुलः वायुयः, वायुदत्तः ।] पितृकः, पितृलः, पितृयः, पितृदत्तः] ॥४॥

**डोपाच्च वैकं द्विचतुस्त्रितः सुज्वारे सकृत् कृत्वसिताद्दगन्यात् ।**
**बाधाच्च दूरे बहुतो दिगाख्याद् दिग्देशकालेऽपि च एन डीर्सोः ॥२।३।५॥ वृत्तम् ॥**

**( ३८ ) डोपाच्च । [ २।३।५।१। ]** डश्चोपात्, न्राख्याद् बह्वचः कृपातन्नीत्युपाधिके स्वार्थो डश्च कन् घेलठाश्च स्युः । तेषु चोपात् परभाग इत् स्यात् । अनुकम्पित उपेन्द्रदत्तः उपडः ॥

**( ३९ ) वैकम् । [ २।३।५।२। ]** न्राख्याद् बह्वच एकं पदं पूर्वं परं वेत् स्यात् । देवदत्तः, दत्तः, देवः । सत्यभामा, भामा, [सत्या] । भीमसेनः, भीमः, [सेनः] ॥

**( ४० ) द्विचतुस्त्रितः सुच् वारे । [ २।३।५।३। ]** एभ्यः सुक् स्याद् वारे कृपागणनविशिष्टे स्वार्थे । द्वौ वारौ [अस्य द्विः], द्विर्भुङ्क्ते । चतुर्भुङ्क्ते । त्रिर्भुङ्क्ते । इह तु द्विस्तावान् प्रासादः। द्विर्दशेति । गम्यमानेऽपि वारे । सि सुचः चिह्नार्थः ॥

**( ४१ ) सकृत् । [ २।३।५।४। ]** निपात्यते, एकवारेऽर्थे ॥

**( ४२ ) कृत्वसिताद्दगन्यात् । [ २।३।५।५। ]** द्व्याद्यन्यसंख्यायाः कृत्वसि स्याद् वारे । पञ्चकृत्वोऽह्नि भुङ्क्ते । पटु कतिगणात् तथा । इदित् ॥

**( ४३ ) वा धा त्वदूरे बहुतः । [ २।३।५।६। ]** धा स्याद् वा बहोरदूरोपाधिके स्वार्थे । दिवसस्य बहून् वारान् भुङ्क्ते । बहुधा । बहुकृत्वः । दूरे च । [बहु] कृत्वो मासस्य भुङ्क्ते ॥

**( ४४ ) दिगाख्या दिग्देशकालेऽपि च एन ङीर्सोः । [ २।३।५।७। ]** सप्तमी प्रथमान्तात् एन वा स्याद् दूरे पूर्वत्र दिगादौ । अविप्रकृष्टो वसति पूर्वेण । पुरस्ताद् वा ग्रामस्य वसति । पूर्वा दिगादिः रमणीयम् । पूर्वेण रमणीयम् । आख्या किम् ? ऐन्द्र्यां [दिशि] वसति । [ऐन्द्र्ये देशे वसति ।] ङीर्सोः किम् ? पूर्वं तं गतः । दिगादौ किम् ? पूर्वस्मिन् गुरौ वसति । दूरे । पूर्वत्र ॥५॥

**आ दक्षिणाद् आहि च दूर उत्तराद्धृतो ङसेश्चादधराच्च तस्तात् ।**
**परावरादञ्च इतौ पुरस्तादद्यादयो मङ्गलकारकाच्छस् ॥२।३।६॥ उपजातिः ॥**

**( ४५ ) आ दक्षिणात् । [ २।३।६।१। ]** वा स्याद् दिगादौ, अदूरे ङीर्सोः । ग्रामाद् दक्षिणा वसति । दक्षिणेन वाऽस्य । दक्षिणा, दक्षिणेन [वा] रमणीयम् । देशे चैवम् ॥

**( ४६ ) आहि च दूरे । [ २।३।६।२। ]** दक्षिणात् तथैव आहि स्याद् दूरे, आवत् । दक्षिणाहि [रमणीयम् ।] च ॥

**( ४७ ) उत्तरात् । [ २।३।६।३। ]** तथैवाहि आ स्तः, दक्षिणवत् । [उत्तराहि वसति । उत्तरा रमणीयम् ।] दूरे किम् ? उत्तरेण ॥

**( ४८ ) हृतो ङसेश्च । [ २।३।६।४। ]** दक्षिणोत्तराभ्यां ङसिर्ङीस्वन्ताभ्यां तथाऽतस् स्यात् । ग्रामस्य दक्षिणतः, [उत्तरतः वा] आगतः, वसति, रमणीयम् । पृथग् दूरादूरार्थम् ।

**( ४९ ) आदधराच्च । [ २।३।६।५। ]** आभ्यां च तथा । आत् स्यात् । ग्रामस्याधरात् । [दक्षिणात्, उत्तरात्] आगतः । हृ श्रुत्यर्थः ॥

**( ५० ) तस्तात् परावरात् । [ २।३।६।६। ]** परावराद् एकैकस्मात् तथैव तस्तात् स्तः । परतः, परस्ताद् वा [अवरतः, अवरस्ताद् वा] आगतः ॥

**( ५१ ) अञ्च इतौप् । [ २।३।६।७। ]** दिशाख्याद् अञ्चत्यन्तात् तत्त्वात् तस्तातौ स्तः, तौ च इतौप् । लुक् स्तः । पिद् अस्त्र्यर्थः । प्राच्या दिशः, प्राग् आगतः । [अपाक्], प्रत्यग्, उदक्, आगतः ॥

(५२) **पुरस्तादाद्यादयः ।** [२।३।६।८।] पुरस्ताद् आदयस्तथैव । आद्यादयः कालमात्रे, पार्थक्यात् । तयोस्तु वृत्ते –

पुरस्तादधस्तादधोऽधः पुरश्चोपरिष्टादुपर्यद्यपश्चाद्दिगादि ।
परार्यैषमः स्तः परुत्सद्यसौ चोभयद्युस्तदानीं सदा एतदत्र ॥१॥

पूर्वापरान्याद्यतरेतराधरोत्तरोभयादेद्युसथो परेद्यविः ।
कर्हीहकुत्रक्वकदाकुहेहेदानीं च एतर्ह्यधुना इतोऽतः ॥२॥

पूर्वापराधराणां पुरस्तादाद्याः [=पुरस्तात्, अपरस्तात्, अधरस्तात्] । व्यत्ययो नैषाम् । अधस् आद्याः पुरस्तात् । ऊर्ध्वस्योपरिष्टात्, उपरित् । अस्मिन्नह्नि अद्य । अवरस्मिन् पश्चात् । तथा दिगादिः । दक्षिणपश्चात् । उत्तरपश्चात् । पूर्वपरतरस्मिन् । [उत्तरपरतरस्मिन्] संवत्सरे । परारि । अस्मिन् । ऐषमस् । परस्मिन् । परुत् । समानेऽह्नि सद्यस् । उभयस्मिन् उभयेद्युः । तस्मिंस्तदानाम् । सर्वस्मिन् । सदा । एतस्मिन्नस्मिन् वाऽत्र ॥१॥ पूर्वादेः एद्युस् । पूर्वस्मिन्नह्नि पूर्वेद्युः । [अपरेद्युः । अन्येद्युः । अद्यतरेद्युः । इतरेद्युः । अधरेद्युः । उत्तरेद्युः । उभयेद्युः ।] परस्मिन् परेद्यवि । कस्मिन् काले कर्हि । अस्मिन्निह । अस्माद् इतः । अतश्च । एतस्माद् अतः ॥२॥

(५३) **मङ्गलकारकाच्छस् ।** [२।३।६।९।] [उत्तरार्थम्] ॥६॥

**बह्वल्पार्थात् संख्यैकार्थाद् वीप्सायां संख्यादेर्दण्ड – ।**
**त्यागेऽकल्चेत् खोऽञ्चोऽदिक्स्त्री गोष्ठात् खञ् भूतादावर्थे ॥२।३।७॥ विद्युन्माला ॥**

(५४) **बह्वल्पार्थात् ।** [२।३।७।१।] मङ्गलकारकाद् बह्वल्पार्थाद् वा शस् स्यात् । बहूनि [ददाति] । अल्पं ददाति । बहुशोऽल्पशो वा ददाति । एवं भूरिशः । स्तोकशः । बहुभिः [बहुशः, अल्पैः, अल्पशो वा] भुक्तम् । दात्रैर्लुनाति वा [बहु, बहुशः, अल्पं, अल्पशः ।] बहुभ्यो ददाति, आगतो वा [बहुशः, अल्पशः ।] बहुषु, [बहुशः, अल्पेषु, अल्पशः] वसति । मङ्गलार्थात् किम् ? बहूनि श्राद्धानि ददाति, अल्पं [ददाति], आभ्युदयिकं [कर्म] । कारकात् किम् ? बहूनां स्वामी । बह्वल्पार्थात् किम् ? गां ददाति ॥

(५५) **संख्यैकार्थाद् वीप्सायाम् ।** [२।३।७।२।] संख्यावाचिन एकविषयाच्च कारकाच्छस् स्यात् । द्वौ द्वौ ददाति, द्विशः । आभ्यां माषं माषं ददाति, माषशः । पटं पटं ददता पटशो दत्तः वासोराशिः । क्रमेण [क्रमेण] क्रमशः । वनशः प्रविशति । एकैकशः, एकैकसंख्याया वीप्सायां शस् । क्वचिन्नासामर्थ्यात् । देवस्य पादं पादं पूजयति । वीप्सायां किम् ? द्वौ ददाति । कारकात् किम् ? द्वयोः स्वामी ॥

(५६) **संख्यादेर्दण्डत्यागेऽकल् चेत् ।** [२।३।७।३।] दण्डत्यागयोर्वीप्सायां च संख्यापूर्वाद् अकल् स्यात् । इल्लुगत् तस्यानिमित्तस्यापादस्य यदर्थम् । द्वौ पादौ दण्डितः द्विपदिकां दण्डितः । एवं त्रिशतिकां त्यजति । वीप्सा । द्वौ द्वौ माषौ, द्विमाषिकां गृह्णाति । लित् स्त्र्यर्थः ॥

(५७) **खोऽञ्चोऽदिक स्त्री ।** [२।३।७।४।] अञ्चत्यन्ताद् अदिकस्त्र्यर्थात् खः स्यात् ।

प्राङ् प्राचीनः । तिर्यक्, तिरश्चीनम् । अदिक् स्त्री किम् ? प्राची दिक् । दिक् किम् ? प्राचीना ब्राह्मणी । स्त्री किम् ? प्रादिग् रमणीयम् । प्राचीनं दिग् रमणीयम् ॥

**(५८) गोष्ठात् खञ् भूतादावर्थे । [२।३।७।५।]** भूतादौ भूतपूर्वेऽर्थे गोष्ठात् खञ् स्यात् । भूतं पूर्वं तद् अस्मिन् वा तत्रार्थे गोष्ठाद् भूतपूर्वः । गोष्ठीनो देशः । अभूतपूर्वे । गोष्ठे वर्तते ॥७॥

**चरड्ङसो रूप्य च व्याश्रये तु तः रोगाच्चिकित्स्येऽव्यथनिन्द्यसुग्रहे ।**
**र्टः पापहेये न अकर्तुरेकदिगन्योरसः प्रत्यवधेरहोग्रहोः ॥२।३।८॥ उपजातिः ॥**

**(५९) चरट् । [२।३।८।१।]** भूतपूर्वार्थवृत्तेश्चरट् स्यात् । आढ्यो भूतपूर्वः आढ्यचरः । आढ्यचरी ॥

**(६०) ङसो रूप्य च । [२।३।८।२।]** षष्ठ्यन्तात् तथा रूप्य च चरट् च स्यात् । नुर्भूतपूर्वो गौः नृरूप्यः । नृचरो गौः ॥

**(६१) व्याश्रये तु तस् । [२।३।८।३।]** व्यालब्धः नानापक्षाश्रयो व्याश्रयः, तदर्थं षष्ठ्यन्तात् तस् स्यात् । देवा अर्जुनस्य पक्षेऽभवन्, अर्जुनतोऽभवन् । आदित्याः कर्णतः । व्याश्रये किम् ? नुर्गौः ॥

**(६२) रोगाच्चिकित्स्ये । [२।३।८।४।]** रोगवाचिनस्तस् स्यात् प्रतिकारेऽर्थे । प्रवाहिकातः प्रतिकुरु । रोगात् किम् ? शत्रोः प्रतिकुरु । चिकित्स्ये किम् ? तस्याः कोपं कुरु ॥

**(६३) अव्यथनिन्द्यसुग्रहे र्टः । [२।३।८।५।]** अचलननिन्दासुष्ठुग्रहणे सर्वेषु र्टोऽकर्तुरिति, अकर्तृविहिततृतीयान्तात् तस् । वृत्तेन न व्यथते । वृत्ततो न चलति । न क्षुभ्यतीत्यर्थः । वृत्ततः क्षिप्तः । आचारेण निन्दितः । [आचारतः निन्दितः ।] वृत्ततोऽतिगृह्यते । सुष्ठु वृत्तवान् । [आचारतोऽतिगृह्यते । सुष्ठु आचारवान् ।] एषु किम् ? दात्रेण लुनाति । [अ]कर्तुः । [किम् ?] त्रा क्षिप्तः ॥

**(६४) पापहेये न अकर्तुः । [२।३।८।६।]** पापेन हीयमानेन च युक्तात् अकर्तृटः तस् । चरित्रतः पापः । हीयते वा [चारित्रेण ।] एवं वृत्ततः [वृत्तेन वा] । मन्त्रतः [मन्त्रेण वा] । स्वरतो, वर्णतः । कर्तुः । त्रा हीयते ॥

**(६५) एकदिगण् । [२।३।८।७।]** अण् । तेनैकदिक् समानदिक् च इत्यर्थेऽण् स्यात् । तश्च वर्तते । सुदाम्ना समानदिक् सुदामनो विद्युत् । सौदामिनी वा । एवं हिमवतो [हैमवती ।] तत्तः ।

**(६६) योरसः । [२।३।८।८।]** तसणौ वर्तते । उरसैकदिक् उरस्तः । औरसः । उरस्यः ।

**(६७) प्रत्यवधेरहाग्रहोः । [२।३।८।९।]** ङसेरिति सम्बन्धात्, अर्थाद् अतिना युक्तात् पञ्चम्यन्ताद् अहाक्, रुहक्रियावधेश्च तस् स्यात् । अभिमन्युरर्जुनाद् अति । अर्जुनतः प्रति । तिलेभ्यो माषा अति । प्रयच्छति तिलतः प्रति । अवधेः । यामतो गतः । प्रासादतः प्रेक्षते । द्वितः । तत्तः त्वत्तः । युष्मत्तोऽधीते । अहाग्रहोः किम् ? सार्धाद्धीनः । सार्धाद्धीयते । नात्र वा । रुहेर्वा ।

पर्वतादवरोहति। कित् किम् ? भूमित उज्जिहीयते । उद्गायते वा, अर्थाद् भावाप्ये । कर्तरि तु, सार्थं जहाति ॥८॥

**सर्वाद्विबहोरत्पिदनोर्ङसेराद्यादेः सुपस्त्रब्भवदादिभिस्तौ ।**
**दैकान्ययत्सर्वतदस्तु काले वाऽनद्यर्हिप् तेन च था प्रकारे ॥२।३।९॥ वृत्तम् ॥**

**( ६८ ) सर्वाद्विबहोरत्पिदनोर्ङसेः । [ २।३।९।१। ]** द्व्यादिवर्जसर्वादेर्बहोश्च अदन्त-स्यादनोऽथाद् बहोर्ङस्यान्तात् तस् स्यात् । पिदाग्रहर्थं वचः । सर्वतः । ततः । बहुतः । बह्वीभ्यो बहुतः हीयते, अवरोहति वा । बहोः सूपात् । विपुलार्थत्वान्न । सर्वात् किम् ? द्वाभ्यां हीयते । पिदस्त्र्यर्थः ॥

**( ६९ ) आद्यादेः सुपः । [ २।३।९।२। ]** तस् स्याद्, आदौ आदितः, द्वित्येह । आदिर्मुखमध्ये, अतः परि सूत्रे पृष्ठस्त्वभि पार्श्वे । अग्रोक्ति । [पृष्ठोक्ति ।] यथेष्टम् ॥

**( ७० ) त्रप् । [ २।३।९।३। ]** सर्वस्बहोः सुपः सप्तम्यन्यात् त्रप् स्याद् अद्व्यतोः सर्वस्मिन् सर्वत्र । तत्र बह्वीषु बहुत्र । सर्वस् किम् ? द्वयोः ॥

**( ७१ ) भवदादिभिस्तौ । [ २।३।९।४। ]** श्लोकोऽत्र -

भवद्दीर्घायुष्मान्देवानांप्रियायुष्मता युतात् ।
प्राद्दिरस्त्रेति सिद्धेऽत्र सुपसूत्रपौ यथा ॥१॥

स भवान् । ततो भवान् । तत्रभवान् । एवं तं ततः [भवन्तम्] । तत्रभवन्तम् । तेन भवता । तस्मै भवते । तस्य भवतः । तस्मिन् भवति । एवं स दीर्घायुः । [तं दीर्घायुषम् । तेन दीर्घायुष्मता । तस्मै दीर्घायुष्मतो । तस्य दीर्घायुष्मतः । तस्मिन् दीर्घायुष्मति ।] स देवानांप्रियः [इत्यादि] स आयुष्माान् [इत्यादि] । एवं कः, कुतः, क्व, कुत्र भवान् इत्यादि । एवम् अयम् इतोऽत्र इह भवानित्यादि ॥

**( ७२ ) दैकान्ययत्सर्वतदस्तु काले । [ २।३।९।५। ]** दा स्यात् सप्तम्यन्ताद् एकादेः कालेऽर्थेऽस्वान्तः । एकस्मिन् काले एकदा । [अन्यस्मिन् काले अन्यदा । यस्मिन् काले यदा । सर्वस्मिन् । काले सर्वदा । तस्मिन् काले तदा ॥

**( ७३ ) वाऽनद्यर्हिप् । [ २।३।९।६। ]** र्हि लघुः सप्तम्यन्ताद् वा र्हिप् स्यात् । अनद्य अद्यवर्जितकाले सर्वस्बहोरन्वानोः । बहुषु । बहुर्हि । बहुत्र । एतस्मिन् काले एतर्हि । अत्र ते निपात इदम् अद्यतनार्थम् । अमुर्हि । अमुत्र । अद्यतने तु [यस्मिन् काले] यदा ॥

**( ७४ ) तेन य था प्रकारे । [ २।३।९।७। ]** तेनेति तृतीयान्तात् सर्वस्बहोः था स्यात् प्रकारेऽर्थेऽस्वानोः । सर्वैः प्रकारैः सर्वथा । तेनग्रहणात् सुप्कालौ निवृत्तौ ॥९॥

**[1]ऐकादेर्वा षोढैकध्यं द्वित्रिभ्यां धैधाधंजो धण् ।**
**तद्वज्जातीयस्थूलादेः कः कोने वा बहुट्कल्पप् ।**
**देश्यब्देशीयोऽर्च्ये रूपप् ॥२।३।१०॥ पञ्चपात् ॥**

[1] पञ्च.-१८

**(७५) धैकादेः । [२।३।१०।१।]** धा स्यात् संख्यायाः । एकेन प्रकारेण एकधा । चतुर्धा । षड्धा ॥

**(७६) वा षोढैकध्यम् । [२।३।१०।२।]** [षोढा । ऐकध्यम् ।] निपात्यन्ते ।

**(७७) द्वित्रिभ्यां धैधाधंञः । [२।३।१०।३।]** तथा स्युः । द्विधा । द्वेधा । द्वैधम् । त्रिधा । [त्रेधा । त्रैधम्] ॥

**(७८) धण् तद्वत् । [२।३।१०।३।]** तद्वत् प्रकारवद् वृत्तिभ्यां द्वित्रिभ्यां धण् स्यात् । द्वौ प्रकारौ येषां तानि द्वैधानि । त्रैधानि ॥

**(७९) जातीर्यर् । [२।३।१०।४।]** प्रकारवद् वृत्तेः स्यात् । पटुत्वं प्रकारोऽस्य पटुप्रकारः । पटुः स एव पटुजातीयः । मृदुत्वं प्रकारोऽस्याः मृद्वी । सैव मृदुजातीया । कः प्रकारोऽस्य किञ्जातीयः । अयं प्रकारोऽस्य इदञ्जातीयः । एवं ब्राह्मणजातीयः । प्रकारवद्विवक्षायां, केन प्रकारेण युक्तः कथंजातीयः । इत्थंजातीयः । एवंप्रकारा । एवंजातीयः । रेफोऽस्त्र्यर्थः ।

**(८०) स्थूलादेः कः । [२।३।१०।५।]** स्यात् तद्वत्यर्थे । इह त्रिवृत्ती आर्यविताने -

स्थूलाणुमाषेषु तिलेषु कृष्णः बाह्यासुरायामवदातकालौ ।
व्रीहौ यवोऽहौ तु सुराऽथ चञ्चः स्तः पत्रमूले तु समस्तव्यस्ते ॥१॥

वस्त्रे तु गोमूत्र बृहत्यलिञ्जरः चञ्चद्बृहच्छालिषु जीर्णमण्यपि ।
पुत्रः कुमार्याः श्वसुरोऽप्यतद्वति रक्तास्थिरे कालमणौ च लोहितः ॥२॥

क्षेपेऽध्वजातेः प्रतिच्छन्दनाम्नोः लट् चास्थिकोके त्वनर्धार्थतान्तात् ।
यावेष सूस्तब्धमणी च पीतः ज्ञातेतरप्रष्ठभवन्तिमाने ॥३॥

शीतोष्णे द्वे सूक्रतौ निपुणोऽणुयसौ वियातलू चेत् ।
बहुतरसुकरतरौ स्तः पुण्यस्तातौ तु वेदान्ते ॥४॥

कृत्रिमे पूत्रसूत्रे तु तन्तुदानं तु कुत्सिते ।
शून्यरिक्ते तु कन्द्वादेः क्रीडार्थात् कन्दुको यथा ॥५॥

स्थूलत्वविशेषयुक्तः । स्थूलकः । अणु माष इषवः त्रयोऽन्येऽणुः माषेष्वर्थेषु । अणुकः । अणो इक्षु पचन्ति । तिलेषु कृष्णश्च । इक्षुकः । तिलाः कृष्णकाः तिलाः । एवं बाह्यासुरायाम् । अवदातकालौ चान्ये । व्रीहिषु यवः । अहौ सुरा । पत्रमूले समस्तव्यस्ते । पत्रमूलकः । पत्रकः । मूलकः । वस्त्रे आच्छादने गोमूत्रः । जीर्णः शालिषु । पुत्रः कुमार्या इति । कुमारीपुत्रश्च । अत ऊर्ध्वम् अतद्वतिको वा स्यात् । रक्त अस्थिरेऽनित्येऽर्थेऽत्र कालकोलको रागविशेषेण पटः । कालकः कोपेन । मणौ च रक्तास्थिरे च लोहितोऽत्र लोहितको रागेन कोपेन वा मणिर्वा । क्षेपे क्षिप्यतेऽनेन । तद्वृत्तेश्च । व्याकरणेन त्वं गर्वितः । याज्ञिका केन ? अध्वजादेः । प्रतिच्छन्दनाम्नोः । तदाकारवृत्तेः संज्ञायां च । अश्वप्रतिच्छन्दकं काष्ठादिमयम् अश्वकः । हस्तिकः । गन्त्रिका । नाम्नि । शूद्रकः इत्यादि । ध्वजादेर्न । अत्र षट्पदी -

ध्वजचित्रनटेऽर्चाशिवे नरे पुष्पदेवयोः ।
देवाऽजराजशङ्खभ्य वारिशतात् पथे तथा ।
चामरज्जौ तथा हस्ते उष्ट्रग्रीवेन्द्रदण्डयोः ॥६॥

ध्वजे गरुडः कपिः सिंहः । चित्रेऽर्जुनः दुर्योधनः । नटे भीमः भरतः । अर्चासु शिवः । विष्णुः आदित्यः । इवार्थे नरे । चञ्चा इव चञ्चापुरुषः । पुष्पो पुष्पं, कुसुमं, पद्मम् । देवदेवः, सुरः असुरः । देवादेः पथे देवपथः ॥६॥ स्वार्थे लाट् च कः । कोने त्वनर्धार्थतान्तात् । ईषदूने, अर्धार्थवर्जितेऽन्यत्कान्तात् कः । ईषद् भिन्नं भिन्नकम् । पटुच्छिन्नं छिन्नकम् । नार्धार्थात् । अर्धच्छिन्नं सामिकृतम् इत्यादि ॥

**(८१) कोने वा बहुट् । [२।३।१०।६।]** ईषदूनार्थाद् बहुः स्यात् । टिदाद्यर्थः । ईषदूनः पटुः बहुपटुः । बहुगुडं द्राक्षा । बहुतैलं प्रसन्ना । बहुयवागुर्भक्तम् । बहुवर्षा हेमन्तः । अर्थाः स्वतो लिङ्गवचनं नानुवर्तन्ते ॥

**(८२) कल्पब्देश्यब्देशीयः । [२।३।१०।७।]** तथैव । गुडकल्पा द्राक्षा । तैलदेश्या प्रसन्ना । कृतदेशीयः प्रासादः । स्वार्थाः स्वतो लिङ्गवचनान्यतिवर्तन्ते । पिद् अस्त्र्यर्थः ॥

**(८३) अर्च्ये रूपप् । [२।३।१०।८।]** स्तुत्ये स्वार्थे रूपप् स्यात् । प्रशस्य तिडः तैडरूप्यः । चौररूप्यः पश्यतोहरः ॥१०॥

**तिङोऽशे ञ षष्ठाष्टमाट्ट्णीक तीयादविद्या त्विवे लोहितात्कर्कतो वस्तितो ढञ् ।**
**अण् शर्कराभ्यो य शाखाभ्य आकस्मिके च्छः कुशाग्राद् ॥२।३।११॥ भुजङ्गप्रयातम् ॥**

**(८४) तिङः । [२।३।११।१।]** तिङन्ताद् यथाविधि कल्पप्त्वादि स्यात् । ईषदसमाप्तं पचति, पचतिकल्पम् । [पचतिदेश्यम् । पचतिदेशीयम् ।] अर्च्ये । पचतिरूपम् ॥

**(८५) अंशे ञ षष्ठाष्टमात् । [२।३।११।२।]** ञः स्याद् अंशे भागे स्वार्थेऽतः । षष्ठो भागः षाष्ठः । [अष्टमो भागः] आष्टमः ।

**(८६) ट्णीक तीयादविद्या तु । [२।३।११।३।]** ट्णीक् स्यात् तीयाद् अविद्या चेत् । द्वितीयमेव द्वैतीयीकम् । [द्वैतीयकम् ।] तार्तीयिकी । [तार्तीयकम् ।] विद्या तु द्वितीया, [तृतीया] ट्णित् ॥

**(८७) इवे लोहितात्कर्कतः । [२।३।११।४।]** इवेत्यर्थे ट्णीक् स्यादाभ्याम् । लोहित इव लोहितीकः स्फटिक उपाधेः । [कर्कः] । शुक्लाश्व इव कार्कीकः ॥

**(८८) वस्तितो ढञ् । [२।३।११।५।]** इवे । वस्तिरिव वास्तेयम् । वास्तेयी प्रणालिका ॥

**(८९) शिलाया ढच्च । [२।३।११।६।]** ढञ्चेवे । शिलेयम् । शैलेयं दधि । [शिलेयी । शैलेयी] ॥

**( ९० ) अण् शर्कराभ्यः । [ २।३।११।७। ]** इवे । शर्करेव शार्करम् [दधि मधुरत्वात्] । पुत्रः शतादिः शतपुत्र इत्यर्थः ॥

**( ९१ ) यः शाखाभ्यः । [ २।३।११।८। ]** इवे । शाखेव शाख्यः । जघनं द्रुणी द्विवचनं जघन्यः । द्रव्यम् । अनयोस्तु षट्पात् -

स्याच्छर्करा लोमकपालिके स्तः गोपुच्छनाराजिन्कपिष्टिकाः स्युः ।
स्यात् पुण्डरीको नकुलोष्टमायं पुत्रः शतादिः शतिकेति शाखा ।
स्कन्धो मुखोरःशरणानि शृङ्गं शिरोऽग्रमेघाः जघन द्रुणी वृत् ॥१॥

**( ९२ ) आकस्मिके च्छः । [ २।३।११।९। ]** इवे । काकतालयोरेवाकस्मिकं मीलनं काकतालीयमिदम् । अयमर्थः । काको निलीनोऽतर्किततालपातेन हतः । तथाऽन्यस्य वधः काकतालीय उच्यते । वर्तिका निलीनाऽन्धेन करणे प्राप्ता, तादृगन्यद् अन्धवर्तकीयम् । श्येनकपोतीयम् । अजया भूमिं खनन्त्याऽऽत्मवधाय कृपाणो दर्शितः, तदिवान्यद् अजाकृपाणीयम् ॥

**( ९३ ) कुशाग्रात् । [ २।३।११।१०। ]** इवे च्छः । कुशाग्रमिव कुशाग्रीया बुद्धिः, सूक्ष्मत्वात् । कुशाग्रीयं शास्त्रम् ॥११॥

**वल्लोहितादेः ठठणेकशालाया ज्योऽस्कपूगाच्च फञोऽस्त्रि व्रातात् ।**
**पर्श्वादितोऽणायुधजीविसङ्घा ण्यण्वृकात् स्याच्छ तु दामनिभ्यः ॥२।३।१२॥ इन्द्रवज्रा ॥**

**( ९४ ) वल्लोहितादेः । [ २।३।१२।१। ]** इवे स्यात् । दोधकवृत्तवितानमत्र -

लोहितपाण्डरमण्डलगोणीशष्कलवल्गुखलानि उदश्वित् ।
कर्कहरी कुशलो मुनिबभ्रू स्याद् भरुजः कपिरङ्गुलिरत्र ॥१॥

तरस्तरू स्यादनिवे विशेषहृस्वोऽप्युपायो विनयः कथञ्चित् ।
सन्देशने वागुपचारेऽकस्मात् स्यात् सम्प्रदानव्यवहारमेव ॥२॥

समुत्कर्षसमाहारौ समूहसन्ततात्ययाः ।
अनुगादिः समयः स्याद् एवमाद्याकृतिगणः ॥३॥

लोहित इव लौहितिकः । अत्रेति लोहितादौ, अङ्गुल्यादिरपि । अनिवेशविशेषादेः । हृस्वोप्युपायः । उपाय एव औपयिकः । सन्देशने वाक् । वाचिकं कथयति सन्देशमित्यर्थः ।

**( ९५ ) ठठणेकशालायाः । [ २।३।१२।२। ]** अठे स्तः । एकशालिकः । ऐकशालिकः ॥

**( ९६ ) ज्योऽस्कपूगात् । [ २।३।१२।३। ]** सोऽस्य ग्रामणीत्यर्थे, सित् कः, स्कः, तत्कान्तवर्जितपूगात् । नानाजातीया नियतवृत्तयो धर्मकामप्रधानाः सङ्घाः पूगाः, तद्वाचिनः स्वार्थे ज्यो नित्यं स्यात् । लोहध्वज्यः । [लोहध्वज्यौ ।] लोहध्वजाः । शैब्यः । [शैब्यौ ।] शिबयः । चातक्यः । [चातक्यौ ।] चातकाः । आस्वः किम् ? देवदत्तो ग्रामणीरेषां [त इमे] देवदत्तकाः । नित्योऽतो विधेः ॥ अस्कः किम् ? देवदत्तो ग्रामणी एषां [त इमे] देवदत्तकाः । नित्योऽतो

विधिः ॥

**(९७) च फञोऽस्त्रिव्रातात् । [२।३।१२।४।]** स्त्रि लघुः । नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः व्राताः, तद्वाचिनः फञन्ताच्च ञ्यः स्याद्, अस्त्रि अस्त्री चेत् । कौञ्जायन्यः । [कौञ्जायन्यौ ।] कौञ्जायनाः । ब्राध्नायन्यः । [ब्राध्नायन्यौ । ब्राध्नायनाः ।] व्रातात् । [कापोतपाक्यः । कापोतपाक्यौ ।] कपोतपाकाः । व्रैहिमत्यः । [व्रैहिमत्यौ ।] व्रीहिमताः । अस्त्री किम् ? कौञ्जायनी । व्रीहिमता ॥

**(९८) पर्श्वादितोऽणायुधजीविसङ्घात् । [२।३।१२।५।]** पर्श्वादेः शस्त्रजीविसङ्घवाचिनोऽस्त्रियां स्वार्थेऽण् स्यात् । पार्शवः । [पार्शवौ । पर्शवः ।] अस्त्री किम् ? पर्शूः । अत्रेन्द्रवंशा -

पर्शुर्दशार्हो भरतोऽसुराशनी वाह्लीककार्षापणवसुवयोमरुत् - ।
सत्वत्पिशाचाश्च त्रिगर्तरक्षसी सोशीनरास्ते स गणः समापितः ॥१॥

**(९९) टेण्यणवृकात् स्यात् । [२।३।१२।६।]** तथैव । वार्केण्यः । [वार्केण्यौ ।] वृकाः । वार्केणी । आयुधजीविसङ्घात् किम् ? वृकः श्वापदः । स्त्रियां चातः ॥

**(१००) छ तु दामनिभ्यः । [२।३।१२।७।]** तथैव । दामनीयः । [दामनीयौ ।] दामनयः । इह वृत्तश्लोकौ -

स्युर्दामनी कौष्टकिजालमानिकाकन्दिशाकुन्तकिसार्वसेनि - ।
कौञ्जायनाः जानकिब्रह्मगुप्ताभ्यावर्तिकौञ्चोऽपरश्चाश्वबिन्दुः ॥१॥

वैजवाप्याच्युतन्ति च सावित्रीपुत्र दण्डिकी ।
मौञ्जायनोलपी स्यातामौदकि सुलभो गणः ॥२॥ ॥१२॥

**वाहीकेऽविप्रराजन्याञ्ज्यट् स्याद् वाऽऽद्यात्तस्यापत्यम् ।**
**राष्ट्राख्याद्राज्ञोऽञ् स्याद्राजाख्यव्यत्यस्तादण् पूर्वादेः ।**
**साल्वांशादेरिञ् पाण्डोर्ड्यण् कुर्वादिभ्योऽण्यचुमाछेयम् ॥२।३।१३॥ षट्पदीगाथा ॥**

**(१०१) वाहीकेऽविप्रराजन्याज्ज्यट् । [२।३।१३।१।]** वाहीकेषु शस्त्रजीविसङ्घाद् अविप्रजातिराजन्यशब्दात् ञ्यट् च नित्यं स्वार्थे । कौण्डीबृस्यः । [कौण्डीबृस्यौ ।] कौण्डीबृसाः । क्षौद्रक्यः । [क्षौद्रक्यौ ।] क्षुद्रकाः । मालव्यः । [मालव्यौ ।] मालवाः । कौण्डीबृसी स्त्री । वाहीके किम् ? शबरः । अविप्रराजन्यात् किम् ? गोपालिः । तथा राजन्यः । शस्त्रजीवि किम् ? मल्लाः । सङ्घे किम् ? सम्राट् वागुरः ॥

**(१०२) स्याद् वा । [२।३।१३।२।]** शस्त्रजीविसङ्घाद् यतोऽन्यः प्रत्ययो नोक्तोऽर्थात् ततोऽन्यद् वा स्यात् स्वार्थे । शबर एव शाबर्यः । पौलिन्द्यः । [पौलिन्द्यौ । पुलिन्दाः ।] शाबरी स्त्री । वेत्यायक् ॥

**(१०३) आद्यात् तस्यापत्यम् । [२।३।१३।३।]** अतः परम् आद्यात् परमप्रकृतेरेव तस्यापत्याद्यर्थे वाऽकादयः [प्रत्ययाः] स्युः । गर्गस्यापत्यं पौत्रादिः गार्ग्यः । तस्याप्यपत्यं गार्ग्यः । एवं दाक्षिः । औपगवः । उक्तपदानां वा आद्यपदात् । चर्मणा परिवृत्तो रथः चार्मणः । तस्येत्याविकारम् । अपत्यमित्यापादम् ॥

**(१०४) राष्ट्राख्याद्राज्ञोऽञ् स्यात् । [२।३।१३।४।]** जनपदसमाननाम्नः क्षत्रियात् तस्यापत्येऽञ् स्यात् । इत्यत्रेव नेञ् । पञ्चालस्यापत्यं पाञ्चालः । ऐक्ष्वाकः । इक्ष्वाकवः । राष्ट्रात् किम् ? द्रुह्युः । द्रौह्यवः । [द्रौह्यवौ ।] द्रौह्यवाः । राज्ञः किम् ? पाञ्चालिः विप्रः ॥

**(१०५) राजाख्यव्यत्यस्तात् । [२।३।१३।५।]** क्षत्रियतुल्यनाम्नो राष्ट्रात् तस्य राजेत्यर्थेऽञादयः । पञ्चालानां राजा पाञ्चालः । इतोऽपत्यं राजेत्यधिकारः ॥

**(१०६) अण् पूर्वादेः साल्वांशादेरिञ् । [२।३।१३।६।]** तथैव स्तः, गणान्वयवति ॥

**(१०७) पाण्डोर्ड्यण् । [२।३।१३।७।]** अराष्ट्रात् पाण्डवः । णिद् अपुंवदर्थः । पाण्ड्याभार्यः ॥

**(१०८) कुर्वादिभ्यो ण्यच् । [२।३।१३।८।]** तथा स्यात् । वक्र्यप्रत्याहारार्थः ॥१३॥

**चोलादितो लुक् कुरु कुन्त्यवन्तेः स्त्रियामतोऽकेकयतोऽप् शिवादेः ।**
**ण्येञ् दर्भबाह्वादिदिशादितो ढण् निदुःष्वसुः छण् छ च वात्यचः पिः ॥२।३।१४॥**

**(१०९) चोलादितो लुक् । [२।३।१४।१।]** तदर्थोऽञादिः । चोलः । [शकः । यवनः । कम्बोजः । केरलः] ॥

**(११०) कुरुकुन्त्यवन्तेः स्त्रियाम् । [२।३।१४।२।]** लुक् स्यात् तु तदर्थः स्त्री चेत् । कुरुः, [कुन्ती, अवन्ती] स्त्री ॥

**(१११) अतोऽकेकयतः । [२।३।१४।२।]** तथा तदर्थस्याकारस्य लुक् अकेकयादेः । मद्रस्यापत्यं स्त्री मद्री । शूरसेनी । दरत् । अतः किम् ? औदुम्बरी । केकयादेः । कैकेयी । प्राच्याऽत्रैव । पाञ्चाली । आङ्गी । पञ्चाह तान् दोधषट्पदीभ्याम् -

स्तः पुरुशूरमसौ च कलिङ्गः द्व्यञ्मगधाविति शाल्वलिभागः ।
प्रत्यग्रथाऽश्मक वेत्कलकूट नृकुरुकोशल नादिरजादैत् ॥१॥

गान्धारिशाल्वेयविवर्जितं त्यज् वृच्चोलकम्बोजशकाः भवेयुः ।
स्यात् केवलोऽस्मिन् यवनो गणोऽयं स्यात् केकयप्राच्यसुरोऽथ भर्गः ।
कश्मीरसाल्वौ करूषस्तथैव सुस्थालकौरव्य च षट्पदी वृत् ॥२॥

तदपत्यं राजन्येऽर्थे । पौरवः । [पौरवौ ।] पुरवः । द्व्यच् । आङ्गः [आङ्गौ । अङ्गाः ।] वाङ्गः । [वाङ्गौ । वङ्गाः ।] सौह्मः । [सौह्मौ । सुह्माः ।] पौण्ड्रः । [पौण्ड्रौ । पुण्ड्राः ।] इति गणान्ते । साल्वांशा अमी -

उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥३॥

औदुम्बरिः । वत् पूरणे । गणान्ते वृत् । कौरव्यः । [कौरव्यौ ।] कुरवः । नादि नकारादि । नैप्यः । नीपाः । नैश्यः । नैशाः । नैचक्यः । नैषध्यः । इनु तदन्तः । वाताश्वः । वासात् यः । आवन्त्यः । कुन्त्यः । ऐत् किम् ? कुमारी नाम क्षत्रियः, तस्यापत्यं राजा वा, कौमारः । त्यच् । आरैजादि । आम्बष्ठाः । आम्बष्ठ्याः । सौवीर्यः । कापटव्यः । गान्धारिशाल्वेयवर्जनं किम् ? गान्धारः । [गान्धारौ ।] गन्धारयः । शाल्वेयाः । अञ् गणान्तवृत् । चोलादिगणान्तः । वृदन्तः केकयादिः ॥

**( ११२ ) अण् । [ २।३।१४।४।]** अण् स्यात् तस्यापत्यार्थतः । औपगवः । अग्निचितः ॥

**( ११३ ) शिवादेः । [ २।३।१४।५।]** तथाऽण् स्यात् । अस्मिन् हरिण्या सह दोधकेन्द्रवज्रे भवेतामुपजात्यनुष्टुभौ -

शिवबधिरकौ चार्यश्वेताः सुरोहितिकातरू
कपिटकविरला गङ्गाकुञ्चाभलन्दनकोकिला ।
रवणकहयौ तक्षन्सन्धी वतण्डकपालितौ
जट्लिकमुनी भूरिर्भञ्जः खदूरकखञ्जरौ ॥१॥

पिष्टसुपिष्टपिटाकनभाका उत्करकोहलरोधककुत्स्थाः ।
वृष्णिकविश्रवणौ च सपत्नी भूमिकुठारपिशाचा इला च ॥२॥

खञ्जारमञ्जीरकवर्तनाक्षा आलेखनोत्कायमयूरकर्णाः ।
यस्कोर्णनाभौ वडवा च लह्यः प्रोष्ठानभिम्लानजलह्रदाः स्युः ॥३॥

क्षीरह्रदो गोफिलिका कपिलिकाऽयःस्थूणरेखाः तृणपर्णचण्डौ ।
स्याद्दष्टिषेणः त्रिवणं त्रिवेणी स्यात् प्रोष्ठिकः परिषिकतृक्षकौ च ॥४॥

नारीनदीनाम्न इहात्यचो जरत्कारो विरूपाक्षकनीनकन्याः ।
वृष्ण्यन्धकर्षेस्तृणकर्णतः कुरोः संभद्रसङ्ख्यापरमातुरुर्भवेत् ॥५॥

भारद्वाजे भवेच्छुङ्ग आत्रेये तु विकर्णकः ।
पीलामण्डूकयोरत्र वात्स्ये तु छगलो गणः ॥६॥

शैवः । क्वचिद् असुच्छन्दोर्थतक्षदर्भादौ च । ताक्ष्यः । ताक्ष्ण्यः । विपाशाकुञ्जादौ च । विपाशः । वैपाशायन्यः । [कौञ्जायन्यः ।] गङ्गातिकदिशादौ च । गाङ्गः । गाङ्गायनिः । गाङ्गेयः । त्रिवेणी त्रिविणं स्याच्च । त्रैविणां तथा । नारीमानुषीतन्नाम्नश्चात्यचोऽत् पदाद्यारैजाद्यचः । चिन्तिताया अपत्यं चैन्तितः । शैक्षितः । नदी । ऐरावतः । वैतस्तः । पलालशिराः । नार्मदो नीलः । आभ्यां किम् ? सौपर्णेयः । नाम्नः किम् ? शोभनेयः । द्व्यचः किम् ? चान्द्रभागेयः । वासवदत्तेयः । कन्या कनीनः स्यात् । कानीनः कर्णः । वृष्ण्यन्धकर्षेः । वृष्णेः वासुदेवः । आनिरुद्धः । अन्धकात् श्वाफल्कः । रान्धसः । ऋषेः वासिष्ठः । वैश्वामित्रः । तथा वार्णकर्णः । कुरोः नाकुलः । साहदेवः ।

सम्भद्रसंख्यापरायाः मातुरुरन्तश्च । सङ्गता माता, तदपत्यं साम्मातुरः । भाद्रमातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । त्रैमातुरः । [षाण्मातुरः ।] ड्यर्थेऽन्यः । पीलामण्डूकयोर्वात्र । दिशादौ च । पैलेयः । माण्डूकः ।] वाग्रहणात् माण्डूकिः । द्व्यचो णे पैलः ।

**(११४) ण्येञ्दर्भबाह्वादिदिशादितो ढण् । [२।३।१४।६।]** तस्यापत्ये यथाक्रमं दर्भबाहुदिशादिभ्यो ण्य इञ् ढण् एते स्युः ।

एष्विन्द्रवज्राप्यथ दोधकं च शार्दूलमार्या तिलकेन्द्रवज्रे ।
श्लोकौ चतुर्यं द्रुतषट्पदी च ताविन्द्रवज्रा च मयूरसारिणी ॥१॥ शब्दौ च वृत् ॥

दर्भैडकाशुभ्रशकन्धिशाकिन्कापिञ्जलादिर्मुरकर्णकारि ।
कौसारिवैचातकिसूर्पणायाः चाफट्टको गर्गर इन्द्रवृक्षः ॥२॥

एडकिधातकिवाक्कपितक्षन्श्यावरथाः रथकारमयाथौ ।
हेत्रजमारककूटशलाकाः वामरथः सकलादिव दध्नौ ॥३॥

दाम्नोष्णीषिनितान्तवृक्षपयतः स्याच्छ्यावनायः कुरुः
वेनाच्छन्दसि चार्द्रवृक्षविमती सूदक्तथा केशिनी ।

सत्यङ्कारतथेन्द्रजालपितृमत् सम्राडथ क्षत्रिये
सेनान्ता इह कारिलक्ष्मणजतो मूढेनपिण्डी तथा ॥४॥

गणकारि तन्तुवाय्यो भडभिङ्गारपथिकारिणा ।
श्यावपुत्रो विहितङ्कारो दर्भादिः स्याद् गणोऽत्रायम् ॥५॥

बाहूपबाहुछगलाभगलासुमित्राचूडोपबिन्दुविकलाकृकलाबलाका ।
पञ्चन्युधिष्ठिरकुनामनुदञ्चसस्तन्प्राकारमर्दिननडुद्गदरामकृष्णः ॥६॥

प्रद्युम्नसाम्बार्जुनदेवशर्मन् जयेन्द्रशर्मन् ध्रुवकाग्निशर्मन् ।
अष्टन्सुनामन्ध्रुवकोपवाकुमाध्यन्दिः चानुहरद्विवाकु ॥७॥

लोमन् शिरोऽन्ते च उदङ्क नाम्नि स्तः क्षेमधृत्विन्खरनादिनो तु ।
सम्भूयसम्भसमितौजसश्चेत् शलङ्कथो लुक् कुचदिच्चटाकु ॥८॥

पुष्करसदजिगर्तो दुर्मित्राः केवला नगरमर्दिन् ।
माषशराविनुदस्विन् शृङ्खलतोदिन्नजाधेनु ॥९॥

वर्चाकुश्च सधावन् तु मूषिकात् क्षेमवृद्धितः ।
व्यासनिषादचाण्डालबिम्बसुधातृवरूटाः ॥१०॥ द्वितीयो गणः ॥

दिक्षा आलीढशालूकगोधाखट्वराः सुनामाः ।
सुदामा सुदत्तः सुदक्षः शतहारः कर्पूरः ।
गङ्गा विमाता शलाका अकशाप्यः मृकण्डुः ॥११॥

परिधिपाण्डवजीवकिशोरिकाशवलकर्षगुदाश्च कुमारिका
सकलशुक्रशकाजिररुक्मिणीशकुनिनारदमाधुरिकासृकः ॥१२॥

शुभ्रशलाथलविष्टपुराः स्युर्ब्रह्मकृतः कृकलासविधाताः ।
भारतभामरकद्रुमृकण्डुरन्यतरेतरदेवतराः स्युः ।
श्वकृकुशाविकुशावमुकष्टुदग्रमकष्टशकन्धि अनीवि ॥१३॥

कान्ताऽशोकाऽनुदत्ताः स्युः वायुदत्तश्च धर्मिणी ।
जिह्वाशिनशलाकाभ्रूखरोन्मत्ताश्च रोहिणी ॥१४॥

खट्वादुःकुललेखभ्रू अनामन्तं च पिङ्गला ।
वासिष्ठे लक्षणश्यामौ प्रवाहणकुबेरिका ॥१५॥

ज्येष्ठा कनिष्ठा सुदुरो भगादिन् कल्याण्यमा मधुमया परस्त्री ।
मध्या बलीवर्द्यनुदृष्टिबन्धकी रजाज्जरात्नी कुलटा नु वादिन् ॥१६॥

काश्यपे कुशीतको विकर्णकाम्बिकाद्यडो द्व्यचो निक्रिभ्यः ।
पीच् चतुःपदी च गृष्टिहृष्टिविश्रिकुद्रिमित्रयुर्बलिश्च ॥१७॥

हल्यजवस्त्रीवृत् । उत्तरेण सह । एकत्र १६ [+१=१७] । दार्भ्यः । वामरथः । सकलादिवत् अच् । अन्ते इति स्वरकार्यवर्जः । वामरथ्यः । बहुषु लुक् । वामरथाः । सकलादेर्गोत्रादण् वामरथ्यस्थाचो । वामरथः । संघाकघोषलक्षणेष्वक्यक्रिकः लुक् । वामरथ्यस्याङ्कः वामरथः । कुरु क्षत्रियार्थः । कौरव्याः । वेनाच्छन्दसि । भाषायां वैनिः । केशिनीति न पुंवत् । केशिन्यः । सांम्राज्यः । क्षत्रिये किम् ? सांम्राजः सेनान्ताकारुलक्ष्मणश्च । सेन् प्रत्याहारः । बाह्वादौ वेक् । हारिषेण्यः । हारिषेणिः । वारिषेण्यः । [वारिषेणिः ।] कारु । तन्तुवाय्यः । तन्तुवायिः । कौम्भकार्यः । कौम्भकारिः । नापत्ये । इञ् नास्ति । रथकारोऽत्र जातिवाची । कारुः सिद्धोऽनेन । लाक्ष्मण्यः । लाक्ष्मणिः । दर्भादि ॥५॥

बाह्वादेर्मूषिकान्ताद् गोत्रादेः । बाहविः । लाहवोऽन्यः । सम्भूयसम्भसोः स इत् स्यात् । साम्भूयिः । [आम्भिः ।] अमितौजस् अस्य च । [अमितौजसः । अमितोजिः ।] शालुङ्कः । शालुङ्किश्च । अत्सेच् । अदन्ताः । दाक्षिः । सेचः । औपगविः सेच् । सेनान्ता इह कारुलक्ष्मणश्च इत्युदाहृतम् । अकङ् स्यादन्त इत ऊर्ध्वं व्यासादेः ६ । वैयासकिः । [नैषादकिः । चाण्डालकिः । बैम्बिकिः । सौधातकिः । वारुटकिः ।] बाह्वादि ॥१०॥

दैशेयः ५ । सुदुरो भगा । सुभगा । दुर्भगा इत्यर्थः । ज्येष्ठादेः डिनतः स्यात् । ज्यैष्ठिनेयः इत्यादि । रजाज्जरात्नी । रजती रजनी इत्यर्थः । कुलटानुवादिन् । कोलटिनेयः । कौलटेयः । पुनडिन् नोत्तरत्र । कुलटाच्च चो वा इत्येके पठन्ति । कुलटाच् च, अनेन वच्प्रत्याहारः । बलीवर्द्यादि । तस्य वा डिन् । घर्थेभ्यः । घडो द्व्यचोऽनिक्रिद्भ्यः । घट्प्रत्याहारात् । कौम्भकारेयः । सोपर्णेयः । कामण्डलेयः । द्व्यचो घड एव नारीनृदीबाधार्थम् । दात्तेयः । इर्खर्जित इदन्तात् । आत्रेयः । वाह्नेयः । अनिक्रः किम् ? दाक्षायणः । द्व्यच एव । मारीचः । पीच्चतुःपदी च । पीत्र्

पीलामण्डूकाच् । चतुःपदी । शाबलेयः । बाहुलेयः । वैहतेयः । वैनतेयः । एवं गार्ष्टेयः इत्यादि ॥१७॥ शाब्दो हल्यजवस्तीवृत् यावद् दिशादि ॥

**( ११५ ) निदुःष्वसुः । [ २।३।१४।७। ]** षन्निमित्ताद् ऋतः परस्याः स्वसुः अपत्ये ढञ् नित् स्यात् । मातृष्वसेयः । पितृष्वसेयः । ऋ किम् ? मातुःष्वसः । [पितुःष्वसः ।] ष किम् ? भातृस्वसः ॥

**( ११६ ) छण् । [ २।३।१४।८। ]** तथैव । मातृष्वस्रीयः । मातृष्वसेयः । न डित् ॥

**( ११७ ) छ च । [ २।३।१४।९। ]** स्वसुरपत्ये । स्वस्रीयः । पृथक्केवलार्थः ॥

**( ११८ ) वाऽत्यचः फिः । [ २।३।१४।१०। ]** अत्याद्यारैजाद्यचः, तस्यापत्ये फिः स्यात् । वेति बहुलम् । ग्लुचुकायनिः । ग्लौचुकिः । अहिसुञ्चकायनिः । [आहिसुञ्चकिः ।] विष्णुमित्रायणिः । [वैष्णुमित्रिः ।] त्यचः त्य राजदन्तिः । वा किम् ? दैवदत्तिः । दाक्षिः । प्लाक्षिः ॥१४॥

**भ्रातुर्व्यछौ यः श्वसुरात् कुलाड्ढकञ् खोऽन्त्यान्महादेः खञकौ वृच्चोऽपि ठण् ।**
**क्षुद्राभ्य एरण्णाण्र च जाण्टफाण्टतः गोधात एरण् चटकाट्ड चाड् स्त्रियाम् ॥२।३।१५॥**
**इन्द्रवंशा ॥**

**( ११९ ) भ्रातुर्व्यछौ । [ २।३।१५।१। ]** तथा स्तः । भ्रातृव्यः । भ्रात्रीयः ॥

**( १२० ) यः श्वसुरात् । [ २।३।१५।२। ]** श्वसुर्यः ॥

**( १२१ ) कुलात् । [ २।३।१५।३। ]** कुल्यः । बहुकुल्यः । बहुदुदंशः ॥

**( १२२ ) ढकञ् । [ २।३।१५।४। ]** कुलादपत्ये । कौलेयकः ॥

**( १२३ ) खः । [ २।३।१५।५। ]** कुलात् । कुलीनः ॥

**( १२४ ) अन्त्यात् । [ २।३।१५।६। ]** कुलान्तात् खः । आढ्यकुलीनः । महाकुलीनः । दुःकुलीनः । दिशादौ च । दौष्कुलेयः ॥

**( १२५ ) महादेः खञकौ । [ २।३।१५।७। ]** तथा स्तः, महाकुलात् । महाकुलीनः । महाकुलः ॥

**( १२६ ) वृचोऽपि ठण् । [ २।३।१५।८। ]** वृच्प्रत्याहारः । वृकवञ्चिनि त्यादेर्नीजन्तात् तस्यापत्ये ठण् स्यात् । रुक्मवती वृचि -

हल्यजवस्रीवृद्वकवञ्चिन् कर्णवृकाद्दण्डादपि ग्राहः ।
द्वारमणेरश्वादपि पाली कुक्कुटतोऽक्षो रेवततो डीच् ॥१॥

वृदन्तो दिशादि । वार्कवञ्चनिकः । कर्णादेः ग्राहः । कर्णग्राहः । [वृकग्राहः । दण्डग्राहः ।] तथा द्वारपाली । [मणिपाली । अश्वपाली ।] कुक्कुटाक्षः । रेवती च ॥

**( १२७ ) क्षुद्राभ्य एरण् । [ २।३।१५।९।]** अनियतपुंस्काऽङ्गहीना वा क्षुदा तद्वाचिनोऽपत्ये णित् एर स्यात् । पौणिकेरः । कौलटेरः । अप्यनुवृतेर्यथाप्राप्तोऽपि । पौणिकेयः । कौलटिनेयः । तथा काणेरः । दासेरः । नाटेरः ॥

**( १२८ ) आण्र च जाण्टफाण्टतः [ २।३।१५।१०।]** आभ्यां णिदारः स्यात् । जाण्टारः । [फाण्टारः] ॥

**( १२९ ) गोधातः । [ २।३।१५।११।]** तथा । गौधारः ॥

**( १३० ) एरण् । [ २।३।१५।१२।]** तथाऽतः । गौधेयः ॥

**( १३१ ) चटकाट्ड च । [ २।३।१५।१३।]** तत्तथा डचान्तोऽणुगर्थम् । चाटकैरः ॥

**( १३२ ) आङ्स्त्रियाम् । [ २।३।१५।१४।]** स्त्रियाम् अत्ये आङ् स्याद् अस्यास्या वाऽपत्यं स्त्री । चटका ॥१५॥

**तिकादेः फिञाद्यादापौत्रादितोऽर्च्येऽस्ति वंश्ये गुरुभातृको वा वयःस्था - ।**
**नपूज्ये सपिण्डेऽस्ति कुत्स्यः स्त्रियाष्ठण्णः सौवीतष्ठण् फिञश्छोऽपि फिञ्णौ ॥२।३।१६॥**
**भुजङ्गप्रयातम् ॥**

**( १३३ ) तिकादेः फिञ् । [ २।३।१६।१।]** तथा स्यात् । इह हरिणप्लुतेन्द्रवंशा आर्यास्यादिन्द्रवंशा -

तिकनीडयमुन्दवसूरसः कितवभौरिकिलाङ्कटाः कुरु ।
देवरथौरसलोमकाः वृषसुयामनुदन्यमथा शुभः ॥१॥

कौरव्यगौकक्ष्यशिखाश्च वह्यकसंज्ञे अमित्रं च वरेण्यखल्यके ।
स्याच्चन्द्रमाश्चैटयतश्च सैन्धवः आरट्यगङ्गे तरआरणायनः ॥२॥

क्षैञ्जयतत्वजावतौ [क्षैतयत-]शैकयतौ बालनीलचौपयताः ।
यज्ञग्राम्यौ शाट्यरूप्यौ [चन्द्रमसारद्ध]तैतिला ज्ञेयाः ॥३॥

कर्मारछागाद्दगुकोसलाद्वृषाद् यट् च द्व्यचोऽणोऽप्यपितः त्यदोऽस्य फिञ् ।
कार्कट्यगारेथयोर्निद्रर्मिचर्मिणोः पुत्रान्न वा वाकिनात् काकलङ्कयोः ॥४॥

तैकायनिः । [नैडायनिः । यामुन्दायनिः ।] कर्मारादेः परस्य फिञः यट् चागमः । कार्मार्यायणिः । [छाग्यायनिः । दागव्यायनिः । कौसल्यायनिः । वार्ष्यायणिः ।] द्व्यचोऽणः । अणन्ताद् द्व्यचः फिञ् । कर्तुरपत्यं [पुमान्] कार्त्रः, तस्यापत्यं कार्त्रायणिः । आङ्गायनिः । द्व्यचः किम् ? औपगविः । अप्यपितः त्यदः । त्यदादेराजैदाद्यचः अपितोऽनपत्यप्रत्ययान्तात् फिञ् अपिशब्दाद् यथाप्राप्तं च । त्यादायनिः । त्यादः । यादायनिः । [यादः ।] आम्रगुप्तायनिः । [आम्रगुप्तिः ।] ग्रामदाक्षायणिः । [ग्रामदाक्षिः ।] नापितायनिः । नापित्यः । त्यदः किम् ? याज्ञदत्तिः । पितः । औपगविः । अस्य फिञ् । अतः परं फिञ् यथाप्राप्तं च फिञि तु अस्येति

षष्ठ्यन्तस्य कगागमः स्यात् । कार्कट्यकायनिः । कार्कट्यः । गारेथकायनिः । [गारेथिः ।] न इल्लुक् स्यात् । वर्मिचर्मिणोः स्त्रियां च । वार्मिकायणिः । [चार्मिकायणिः ।] पुत्रान्तं वा । लक्ष्याविरोधिनो विध्यधिकारादयो बहुलवचनात् पुत्रान्ताद् आरैजाद्यचोऽनपत्यप्रत्ययान्तात् यिकयिकगयि वा । गार्गीपुत्रायणिः । गार्गीपुत्रः । गार्गीपुत्रकायणिः । वात्सीपुत्रिः । [वात्सीपुत्रायणिः । वात्सीपुत्रकायणिः ।] वाकिनिः । एवं काकलङ्क्योः ॥

**(१३४) आद्याद्आपौत्रादितोऽर्च्ये । [२।३।१६।२।]** आद्यात् परमप्रकृतेः पौत्रादिप्रत्ययान्तात् स इत्येऽपत्यप्रत्ययः स्वार्थेऽप्यत्यवणादय इत्यर्थः, पुनः स एव चेत् तदन्तवाच्यः पुमान् अर्च्यः पूज्यः स्यात् । गर्गापत्यं गार्गिः । तस्यापत्यं गार्ग्यः । स एव तत्रभवान् गार्ग्यायणः । गार्ग्यो वा । तत्रभवन्तो गार्ग्यायणाः । गर्गा वा । एवम् औपगविः । औपगवो वा । कार्त्र्यायणिः । कार्त्र्यो वा । पुमान् किम् ? दाक्ष्यः । आद्यात् किम् ? गार्ग्यायणः । पौत्रादेः किम् ? दाक्षिः । अर्च्यः किम् ? औपगवः । स इति प्रकृतिः । प्रत्ययप्रकृत्यर्थं पुमर्थं च ॥

**(१३५) अस्ति वंश्ये । [२।३।१६।३।]** पौत्रस्याद्यात् पौत्रादिप्रत्ययान्ताच्चतुर्थादारभ्यो योऽपत्येऽणादिः स जीवति वंश्ये स्यात् । गार्ग्यायणः । औपगविः । मृते । गार्ग्यः । औपगवः । पौत्र एव । यद्वा स्वार्थेऽपत्येऽचणाणादयः स्युः, स एव चेदन्तवाच्यः पुमान्, अस्ति जीवति वंश्ये पित्रादौ । गार्ग्य एव गार्ग्यायणः । औपगव एव औपगविः । मृते पित्रादौ गार्ग्य एव । अन्यस्मिन् जीवत्यपि गार्ग्य एव । अनच्यार्थे च वचनम् ॥

**(१३६) गुरुभ्रातृकः । [२।३।१६।४।]** आद्यान्त्यौ । आद्यन्तात् तस्यापत्यं पुमानित्यर्थे यथाविधि प्रत्ययः स्यात् तदन्तश्चेद्गुरुभ्रातृकः । गुरुः ज्येष्ठः पूज्यो वा भ्राता यस्य स तथा । स च ना सता तेन पौत्रादपत्ये । औपगवे गार्ग्ये वाऽस्ति औपगविः । गार्ग्यायणः । कनीयान् भ्राता । गुरुः किम् ? गार्ग्यः ॥

**(१३७) वा वयःस्थानपूज्ये सपिण्डेऽस्ति । [२।३।१६।५।]** तथैव गतद्वत्तस्य चेद् वयसा स्थानेन च पूज्यः उत्कृष्टः सपिण्डः पितृव्यपितामहभ्रात्रादि अस्ति जीवति, पुनरस्ति स्वयमप्यस्ति चेत् । गार्ग्यायणः, गार्ग्यो वा । औपगविः [औपगवो वा] ।

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।<br>
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥१॥

इत्यादौ क्रियायां येऽधिक्रियन्ते ते सपिण्डाः । सा चेयमासप्तमपुरुषा क्रिया निवर्तते ॥

**(१३८) कुत्स्यः । [२।३।१६।६।]** तथैव तदन्तः कुत्स्यश्चेत् । गार्ग्यायणः [जाल्मः] । [गार्ग्यो] जाल्मः । कार्त्र्यायणिः [जाल्मः] । कार्त्र्यो वा [जाल्मः] ॥

**(१३९) स्त्रियाष्ठण्णः । [२।३।१६।७।]** तथैव स्त्रीलिङ्गात् । गार्ग्या अपत्यं जाल्मः गार्गः । गार्गः किम् ? ग्लुचुकायन्या अपत्यं ग्लौचुकायनिकः । ग्लौचुकायनः । स्त्रियाः किम् ? औपगविः । गार्ग्यो जाल्मः । कुत्स्यः किम् ? गार्गेयः । पौत्रादेः किम् ? कारिकेयो जाल्मः ॥

**(१४०) सौवीरतष्ठण् । [२।३।१६।८।]** सौवीरप्रसिद्धात् तथा ठण् वा वृत्ते यथाप्राप्तं वा । भागवित्तेरपत्यं भागवित्तिकः । परत्र तार्णविन्दविकः । इग्वा । आकाशापेयिकः । इग्वा । जाल्मः । त्रयः सौवीराः ।

**(१४१) फिञश्छोऽपि । [२।३।१६।९।]** फिञन्तात् सौवीरात् तथा छ ठण् वा । अन्यदपि । यामुन्दायनेरपत्यं यामुन्दायनीयः । ठणश्च । [यामुन्दायनिकः । यामुन्दायनिर्वा ।] एवं सौयामायनीयः । [सौयामायनिकः । सायामायनिः ।] वार्षायणीयः । [वार्षायणिकः । वार्षायणिः । जाल्मः । कुत्स्यः किम् ? यामुन्दायनिः । सौवीरात् किम् ? तैकायनिः । फिञान्ताः सौवीरास्त्र्य एव ॥

**(१४२) फिञ्णौ । [२।३।१६।१०।]** च परार्थौ ॥१६॥

**फाण्टाहृतेस्तन्मिमतान्नडादेः फक्कुञ्जगर्गाश्वविदादितोः ञ्फ - ।**
**यञ्फञ इत्याङ्गिरसे वतण्डी पौत्रादि तत्सप्तम एष पादः ॥२।३।१७॥ वृत्तम् ॥**

**(१४२) फाण्टाहृतेस्तत् । [२।३।१७।१।]** तदिति सौवीरात् पौत्रान्तादतोऽपत्यमात्रे फिञणौ स्तः । फाण्टाहृतस्यापत्यं पौत्रादिः फाण्टाहृतिः । तदपत्यं फाण्टाहृतायनिः । फाण्टाहृतः । स्त्रियां ड्यात् । णिदपुंवद्‌र्थः । फाण्टाहृताभार्यः ॥

**(१४३) मिमतात् । [२।३।१७।२।]** सौवीरादपत्ये तौ स्तः । मैमतायनिः । मैमतः । पृथक् पौत्रादिनिवृत्यर्थम् असौवीरात् । मैमतायनः ॥

**(१४४) नडादेः फक् । [२।३।१७।३।]** पौत्रादावपत्ये । नडस्यापत्यं तत्पौत्रादिः नडायनः । इह एणप्लुता च दोधकद्रुतवंशाः स्युस्तथा श्लोकौ -

नडमित्रयुगन्धरशिंशपाः लमकहंसककार्मुकदण्डिनः ।
चरसप्तलपञ्चसमिद्रिकाः शकटो लोहः तृणोपकदण्ड्याः ॥१॥

पिङ्गरपिङ्गलकिङ्करदासाः किङ्कलकातरकाथलकाश्याः ।
काश्यपकामुकसायककाव्याः मुञ्जकुमारजनन्धरप्राणाः ॥२॥

स्थिरकदुर्गयुगन्धरब्राह्मणाः पटकपाशसुकृत्यमजाचरौ ।
वहनचित्रद्वितीयमथोपकः कारकशोणममुष्य च नाव्य च ॥३॥

क्षाप्यग्निशर्मन्मिमतेतिकाः स्युः पञ्चालहस्तिन्सुमताश्वलाग्राः ।
स्याद् ब्रह्मदत्तः सुमनाश्च लोहः स्यात् त्यास्मको मित्ररणेऽपि कृष्णः ॥४॥

वाशिष्ठ्ये ब्राह्मणे क्रोष्टा क्रोष्टं चाऽतकशातकौ ।
शलङ्कुश्च शलङ्कं च जीवन्तद्रोणपर्वतात् ॥५॥

शरद्वद्भार्गवे वात्स्ये शुनकाच्चाग्रहायणे ।
दर्भो वाजप्यतिको लिङ्गुश्चाश्कचो यञ्जस्त्विकः ॥६॥

रणेऽर्थे कृष्णः, पठ्यर्थेऽन्यः । क्वाप्यग्निशर्मिन् । आग्निशर्मायनः वृषगण एव । जीवन्तादेः वा । जैवन्तायनिः । जैवन्तिः । [द्रौणायनिः । द्रौणिः । पर्वतायनः । पार्वतिः ।] अञ्क च । पौत्राद्यञन्तहरितादेः यञन्तेञन्ताच्च । हारितायनः । गार्ग्यायणः । दाक्षायणः । आकृतिगणत्वात् प्राणनरादयोऽपि ॥

**(१४५) कुञ्जगर्गाश्वविदादितो ञ्फयञ्फञ इति । [२।३।१७।४।]** तस्यापत्ये पौत्रादौ यथासंख्यं ञ्फयञ्फञ्अञ् एते स्युः ।

एष्विन्द्रवज्रे २ सनान्यः २ अनुष्टुप् ४ गाथा ५ चतुर्ये ७ अथ तोटकं स्यात् ।
स्यादष्टगाथा १० तिलका ११ तथार्या १२ उपेन्द्रवज्रा १३ विपुला १४ द्या १४
श्लोकाः १६ ॥१॥

कुञ्जे विपाशः शठः शाकशुण्डे ब्रध्नो गणस्कन्दशुभाश्च भस्मन् ।
स्कम्भश्च लोम शङ्खवृच्च गर्गाजविश्वावसुशङ्खवृक्षाः ॥२॥

प्राचीनयोगैकपुलस्तिरेभाः शालावदूर्णावदसङ्कृतिश्च ।
स्यात् कौशिके बभ्रुमधु द्विजे तु स्तो वंशवर्यौ तितिक्षाग्निवेशः ॥३॥

यज्ञवल्कः पूर्णकल्कमनुतन्तुगन्तुशन्तु -
कृष्णमन्तुरोहिताश्च वृक्षकक्षे तित्तिरिश्च ॥४॥

शिखावद्व्याघ्रपादौ स्तः शमीवल्लोहितभ्रुवाः ।
गोलन्दकश्च गोकक्षाः पूतिमाषविरोहितौ ॥५॥

जात्वादिकर्णौ रथवामपूर्वः स्यान्मन्तुतो रोह वृकाद्गुणास्तु ।
बृहाद्यमादग्न्युभयादिजातकुटीगुसूनाश्मरथा वतण्डः ।
स्थूणासुलाभिन्शकलाश्च गाथा ॥६॥

इन्द्रहूर्देवहूरेकलूः पिप्पलूशर्कराक्षौ अराराकास्तरिक्षुः ।
तलिक्षुस्तथोलूकपाराशरौ पिङ्गलः कुण्डिनी मुद्गलाऽगस्त्यः तण्डः मण्डुः ॥७॥

कतधूर्तशकाऽवटसङ्कृतयो जरमाणधनञ्जयसाङ्गिरसे
कपिबोधमथो कुरुकतविदभृच्छमीवच्चमसाभिजित्त्वनडुहः ॥८॥

मुशला साहित वल्गु मनायी मङ्क्षु तरुक्षजिगीषुकलूषाः ।
कत्थकसंमितवक्रवतण्डाः लिङ्गुकतौ कपिशण्डिलदल्भाः ॥९॥

अश्वाश्मानौ वीक्ष्यक्षान्तौ बैल्यग्रीष्मौ धर्म्यग्रीवे
स्यादात्रेये भारद्वाजेऽत्रायं भर्गस्त्रैगर्ते तु ॥१०॥

रामोदकाशूकितवातपाऽर्काः गोलाह्वपादौ पटतूलगोमिन्- ।
विश्वम्भरा रोहिणचक्रधूमाः विश्वानरः श्वन्नलिनानडुह्याः ॥११॥

खर्जूरभण्डितविदाः विषमः पवित्रः पिङ्गूलभण्डितविशालजडाः पविन्दाः ।
शङ्खोत्सशूद्रकशिवाश्वपलः श्रविष्ठो वाग्मिन्गिरी सनकदासनडार्जुनाः प्रहन् ॥१२॥

जनवतकाणौ भडितः खदिरप्रहतौ पुमांस्तु जातस्तु ।
सुमनाश्च दुर्मनाश्चेति शपात्रेये गणोऽश्वादिः ॥१३॥

विदोर्वकिन्दर्भकिलातधेन्वृष्टिषेणविश्वानरकाश्यपा उ- ।
पमन्युहर्यश्वकुवाचराः श्यावकः शरद्वत्प्रियकर्तभागाः ॥१४॥

कुशिकापस्तम्बभरद्वाजाः शिग्रुशमीकगोपवनाः स्युः ।
श्यामाकबिन्दुभाजनाः श्यापर्णाश्चाव्रतानहरिताश्चाष्टौ ॥१५॥

किन्दासवध्योषथीतराः स्युः पुत्रः मृदाकुर्वठरः परस्त्री ।
विष्णुर्पृदाकुर्दुहिता ननान्दा वृद्धः सृदाकुः परशुर्निषादाः ॥१६॥

मित्रयुश्च पुनर्भूश्च गविष्ठिरगविष्ठिलौ ।
ऋषेर्मात्रे कलसश्च प्रतिबोधरथन्तरौ च ॥१७॥ गणाः ।४॥

कुञ्जस्यापत्यं पौत्रादि कौञ्जायन्यः । [कौञ्जायन्यौ ।] कौञ्जायनाः । यञो ञ्फः । वृदन्तः कुञ्जादिः ॥

एवं गार्ग्यः । आङ्गिरसमपत्ये कपिबोधौ । एवं ड्यर्थेऽन्यः । वशवयौ तिति समासे ।

जत्वादिकर्णः । जतुकर्ण इत्यर्थः । रथवामपूर्वः वामरथ इत्यर्थः । रोह असुबन्तः । वृकां गणः । वृकगण इत्यर्थः । रोहवृकादन्ये । एवं बृहादग्निर्यमदग्निः । उभयजातः । दल्भाता गर्गादयः । वृदकरणमाकृत्यर्थम् । भिषजभण्डितविकनादयः गर्गादिः ॥

एवम् आश्वायनः । [आश्मायनः । वैक्ष्यायनः ।] आत्रेयेऽपत्ये भारद्वाजः । अत्रेति भारद्वाजे वाऽपत्ये । अयमात्रेयः । ड्यर्थेऽन्यः । पुमांस्तु । जातस्तु जातायनः पुमांश्चेत् । जातेयोऽन्यः । अश्वादिगणान्तः ॥

एवं वेदः । विदा शिग्रु आद्याः शिग्रुत अष्टौ । हयहरितादि ॥१६॥

**( १४६ ) आङ्गिरसे वतण्डी । ( २।३।१७।५। )** आङ्गिरसेऽपत्ये वतण्डी स्त्री निपात्यते । वातण्ड्यो ना गर्गादौ ॥

**( १४७ ) पौत्रादि तत् । ( २।३।१७।६। )** पौत्रादावपत्ये यदुक्तं तदनेन ॥

**सप्तम एष पादः ॥१७॥**

**( इति श्री बुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे द्वितीयाऽध्याये तृतीयः, आदितो वा सप्तमः, पादः ॥ )**

---

## [अथ द्वितीयाध्याये चतुर्थः पादः ॥]

**अण् योऽचि गोद्वेः पिदिहाण् धनादेः पत्युस्तिदादित्ययमाद्दितेश्च ।**
**ञ्योऽस्वात् पुरः स्थाम ति लोमपित्सु देवात् पृथिव्या ञ्ययञुत्सतश्चाञ् ॥२।४।१॥** इन्द्रवज्रा॥

**(१) अण् । [२।४।१।१]** अनन्तादद्व्यार्थेऽण् स्यात् ॥

**(२) योऽचि गोः । [२।४।१।२।]** अणादावजादौ गोर्यस्य वा, गोरपत्यं वा, गोरस्य देवता [वा], गवा चरति [वेत्यर्थेषु यप्रत्ययो भवति ।] गव्यम् । अचि किम् ? गोरूप्यः । अणादौ किम्। गवः । एवं सर्वत्र ॥

**(३) द्वेः पिदिहाण् । [२।४।१।३।]** द्वेः परां गोः [इति] द्विगोः समासादिहेत्यणधिकारे विहिते पौत्रादिद्विगुनिमित्तश्च यः अण् [यकारादिश्च प्रत्ययस्तस्य] श्लुक् स्यात् स्वार्थे । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः[1] [दशकपालम् । पञ्चेन्द्रः । दशेन्द्रः । यादेः । द्वयो रथयोर्द्विरथ्या वाडयं द्विरथः । त्रिरथः ॥

**(४) धनादेः पत्युः । [२।४।१।४।]** धनादे परो यः पतिशब्दस्तदन्ता अणादावजादावपत्याद्यर्थे अण्, प्रत्ययः स्यात् । धनपतेरपत्यं धानपतः । आश्वपतः । राष्ट्रपतम् । धान्यपतम् । प्राणपतम् ॥

**(५) तिदादित्ययमाद् दितेश्च ञ्योऽस्वात् पुरः । [२।४।१।५।]** पत्युत्तरपदाद् आदित्य-यम इत्येतेभ्यश्च पुरा विहितेऽर्थे ञ्यप्रत्ययो वा भवति । बृहस्पतेरपत्यं बार्हस्पत्यः । याम्यम् । आदित्यम् । दैत्यम् । दितेरपत्यं दैत्यः ।] अदितेश्चादित्यः । दितिग्रहणाद् दित्याः दैतेयः । — स्वात् पुरः किम् ? तस्येदम् । औष्ट्रपतम् । आदितीयम् ॥

**(६) स्थाम ति [२।४।१।६।]** तीति समासान्तस्थात् स्थाम्नोऽपत्यादौऽत् निपात्यते । अश्वत्थामः ॥

**(७) लोमपित्सु । [२।४।१।७।]** लोमान्तादन्निपात्यते पित्स्वपत्येष्वेव बहुषु । उडुलोम्नः पुत्राः उडुलोमाः । पित् किम् ? तस्येमे औडुलोमाः । बहुषु किम् ? औडुलोमिः ॥

---

1. The text from दश० to दैत्यः enclosed in square brackets has been smudged due to wet in of fresh writking in the Palm Leaf No. 159 a, rendering the letters almost undecipherable; the text is reconstructed here.

**(८) देवात्पृथिव्या ज्ययञ्** । [ २।४।१।८।] अपत्याद्यर्थे क्रमेण स्तः । दैव्यः । पार्थिवा स्त्री ॥

**(९) उत्सतश्चाञ्** । [ २।४।१।९।] ज्यअञ् । उत्सादेराभ्यां च तदर्थेऽञ् स्यात् । औत्सः । तथा दैवः । [पार्थिवः ।] दैवी । [पार्थिवी] वृत्तद्वयमत्र आर्या-

उत्सोदपानभरताः जगती च पङ्क्तिः ।

त्रिष्टुब्महानदमहानसबष्कयाश्च ।
पञ्चालधेनुबृहतीकुरुभल्लकीया
मध्यन्दिनोष्णिहरथन्तरकुम्भदंशाः ॥१॥

इन्द्रावसानककुभः सुवर्णः दंशे पृषा ग्रीष्ममहद्विकाराः।
पीलुर्महाप्राण उशीनरः स्यात् सत्त्वन्तु इन्द्रायुधकुण्डमाषाः ॥२॥

अपवदजनपदतरुणाः महिमदनुष्टुब्बृहत्त्वात् तलुनोऽपि ।
देशे उदस्थानः विनदः नदाविहो आदि ॥३॥ [॥१।]

**बाहीकबाह्येऽग्निकलेस्तु ढक्त्वात् स्त्रीपुंसत ञोञ् इह ते समूहः ।**
**वाऽश्वाच्छ भिक्षाखलपाशकेशपिद्भ्योऽणालिनौ ल्यण्यमकञहीनाः ॥२।४।२॥ वृत्तम् ॥**

**(१०) बाहीकबाह्ये** । [ २।४।२।१।] बहिषः टीकण्ण्यौ । तदर्थे निपात्यते । वाहिकी स्त्री ॥

**(११) अग्निकलेस्तु ढक् त्वात्** । [ २।४।२।२।] आभ्यां तदर्थे ढक् स्यात् । त्वात् पुरः । सर्वत्र आग्नेयः [अष्टाकपालः] । त्वात् किम् । अग्निवत् ॥

**(१२) स्त्रीपुंसत ञोञ्** । [ २।४।२।३।] आभ्यां तदर्थे अञ् स्यात् । तत्र किम् ? नागमः । स्त्रैणम् । पौंस्नम् । स्त्रैणी । [पौंस्नी ।] अत एव स्त्री च पुमांश्चेति अदन्तता । स्त्रीपुंसौ ॥

**(१३) इह ते** । [ २।४।२।४ ] प्राक्त्वादित्युक्तं तस्मिन्निह त्वप्रत्ययार्थे, भावे इत्यर्थः, ते भावप्रत्ययाः स्युः । ञोञ् वर्तते । स्त्रीणां भावः स्त्रीत्वम् । स्त्रीता । स्त्रैणम् । पुंस्त्वम् ॥

**(१४) समूहः** । [ २।४।२।५।] तस्येति षष्ठ्यन्तात् समूहेऽर्थे । अतो यथाविध्यणादयः स्युः । काकानां समूहः काकम् । तैत्तिरम् । खण्डिकादि तु भिक्षादौ । अनुपादानान्नादेरश्च ॥

**(१५) वाऽश्वाच्छः** । [ २।४।२।६।] तथाऽण् वा । अश्वीयम् । आश्वम् ॥

**(१६) भिक्षाखलपाशकेशपिद्भ्योऽणालिनौ ल्यण्यमकञहीनाः** [ २।४।२।७।] भिक्षेत्यादेः

तस्य समूहे आणाद्यादि क्रमेण स्यात् । तथा अहीनाः निपात्यन्ते । एष्विन्द्रवज्रे अथ दोधकं चार्या च षट्पात्—

भिक्षासहस्रे युवतिः पदातिः सेनाभिधाः क्षुद्रका मालवाश्चेत् ।
अङ्गारचर्मिन्वाडवाकरीषाः भस्मन्नथर्वन् हलखण्डिकाऽहन् ॥१॥

श्वगर्भिणीभिक्षुकबन्धबन्धक्षेत्राणि वर्मन् शुकदक्षिणाः स्युः ।
पदात्युलूकौ युगवादिरत्र वृक्षात् खलाड्डाककुटुम्बतो वृत् ॥२॥

पाशपिटाकजनाः नलधूमाङ्गारगलाः खलगोरथवाताः ।
पोटतृणे पिटकः शकटं स्याद् अत्र वनं भवतीति गणोऽयम् ॥३॥

केशब्राह्मणमाणवगणिकाकेदाराः वाडवा वृद्धगौरौ ।
क्रोष्ट्रोरभ्राः राजन्यमनुष्यकेदाराः वत्साजराजपुत्रोऽष्ट्राः ॥४॥

राजन्वृद्धौ गणे क्रतावहीनपृष्ठ्यौ वातूलगोत्रोक्षन् रथकट्याः ।
पार्श्वं ग्रामसहायात् तल् गजबन्धुजनाच्च वृत् ॥५॥

भिक्षाणां समूहो भैक्षम् । सेनासंज्ञा चेत् क्षत्रियद्वन्द्वाद् अण् । क्षौद्रकमालवी सेना ॥१॥ नागसगोत्राऽकञोडचित्ता वाऽणाद्यपवादः । युगवदिरत्रा । युगवरत्रा इत्यर्थः । वृत् । तथा खलिनी । [डाकिनी । कुटुम्बिनी ।] आकृतिगणत्वात् कुण्डलिनीत्यादि वृत् ॥२॥ तथा पाशादितो स्त्र्यार्थे । गणान्तः ॥३॥ तथा कैश्यः । उक्ताबाधयाऽचित्तादण् । कैशिकम् । केदारात् पिण्ड्यादिपाठाच्च । कैदार्यम् । कैदारिकम् । वृत् ॥४॥ तथा पिदपत्यन्मात्रं गोत्रमाह । गोत्रोक्षनित्यादि । दाक्षीणां समूहो दाक्षकम् । औपगवकम् । तैकायनकम् । आदिशब्दाद् औक्षकम् इत्यादि गणः । तथा क्रतावर्थेऽह्नां समूहः अहीनः । पृष्ठ्यानां पृष्ठ्यः क्रतुः । क्रतौ किम् ? पार्ष्ठिकम् । भिक्षादिभ्योऽण् । आह्नम् । वातानां वातूलम् । पाशादौ वात्या । गवां गोत्रा । रथानां रथकट्या । तथा अनागतपर्शूनां समूहः पार्श्वम् । गामादेः तल् । ग्रामता ॥५॥ ॥२॥

**ठण् हस्त्यनञ्धेनुकवच्यचित्ताद्ढञ् तत्कृतान्ते पुरुषाद् वधे च ।**
**हिते विकारौषधिवृक्षजन्तोर्वांशो जतोः षुक् त्रपुणश्चपादेः ॥२।४।३॥ वृत्तम् ॥**

**(१७) ठण् हस्तिननञ्धेनुकवच्यचित्तात् । [२।४।३।१।]** एषां समूहे ठण् स्यात् । हास्तिकम् । धैनुकम् । अनञिति [किम् ?] [अधेनूनां समूहः] आधेनवम् । अत एव तदन्तविधिः । गौधेनुकम् । वने हास्तिकम् । कवचिनां [समूहः] कावचिकम् । अचित्तात् । आपूपिकम् । शाष्कुलिकम् ॥

**(१८) ढञ् तत्कृतान्ते पुरुषाद्वधे च हिते । [२।४।३।२।]** पुरुषाड्ढञ् स्यात् तत्कृते तथाऽमुत्र समूहापेक्षायाम्, अतो विकारे तद्विकारे तद्वधे चकारात् समूहे च तद्धिते चार्थे । [पुरुषेण कृतं पौरुषेयम् । पुरुषस्य विकारः, पुरुषस्य वधः पौरुषेयः । पुरुषाय हितं] पौरुषेयम् ॥

**(१९) विकार । [२।४।३।३।]** असुबन्तः । वेति सञ्चनं, तस्य विकार इत्यर्थे यथाविध्यणादयः स्युः, मयड् वा । अश्मनो विकारः आश्मः । आश्मनः । अश्ममयः । भस्मनो [विकारो भास्मनः ।] भस्ममयः । मार्त्तिकः ॥

**( २० )- ओषधिवृक्षजन्तोर्वांशः । [ २।४।३।४। ]** एभ्यस्तस्य विकारे, अंशे वार्थे ठक्ञण् स्यात् । ओषधेः । दौर्वं भस्म । दौर्वं काण्डम् । [वृक्षस्य ।] कारीरं काष्ठम् । [कारीरं भस्म ।] मयड् वा । प्राणिभ्योऽञं वक्ष्यति । एभ्योऽतो विकारांशयोः, अन्यस्माद् विकार एव विधिः ॥

**( २१ ) जतोः षुक् । [ २।४।३।५। ]** तदर्थेऽण् सिद्ध एव । पुंस्त्वं शब्दमात्राश्रयणात् । जतुषां [विकारः] जातुषम् ॥

**( २२ ) त्रपुणः । [ २।४।३।६। ]** त्रपुण एवम् । त्रापुषम् । एतेऽञोऽपवादाः ॥

**( २३ ) चपादेः । [ २।४।३।७। ]** तद्विकारांशेऽणेव स्यान्नात्मपदम् । गणो दर्श्यते–

चपेक्षुगोधूममसूरबिल्वाः श्यामाक इन्द्रायुधकण्टकारी ।
त्रिकण्टकेन्द्रालिशकाण्डमुद्गाः गवेधुका बर्हिण पाटली च ।
कुटीरकर्पास्यथ वेणु पियूक्षा व्रीहि कर्कन्ध्वथ तालवाप्ये ।
हेमार्थमानादिह सप्तपाद् वृत् ॥१॥

चपो वृक्षविशेषस्तस्य चापः । गोधूमादेराच्छादनभक्ष्ययोर्मयड्वाऽस्त्यञोऽपवादः । गवेधुकायाः कठ इति मयटोऽपवादः । तालवापे धनुषीत्यर्थः । तालं धनुः । तालमयोऽन्यः । हेमार्थमानात् । मानवाचिहेमार्थादणेव । हाटकस्य विकारो मानं हाटको निष्कः । हाटकं कार्षापणम् । तापनीयं सौवर्णम् । हिरण्यम् । मानात् किम् ? हाटकमयी यष्टिः ॥३॥

**हैयङ्गवीनं च कचो ढञेणीकोशादुमोर्णादकञुष्ट्रतो वुञ् ।**
**शम्या लगक् पारशवाप्यकांस्या वाञ् शिंशपासीसगणाञ्जितोऽतः ॥२।४।४॥ वृत्तम् ॥**

**( २४ ) हैयङ्गवीनम् । [ २।४।४।१। ]** गोदोहस्य विकारे निपात्यते । नवनीतं घृतं च सद्यः पक्वं तदुच्यते ॥

**( २५ ) च कचः । [ २।४।४।१। ]** काद् अच् कच् । ततः कोपान्ताद् यथाविध्यण् स्यात् नाञ् । तर्कु । तार्कवम् । तैत्तिडीकम् । माधूकम् । मयट् च ॥

**( २६ ) ढञेणीकोशात् । [ २।४।४।३। ]** तयोः [ढञ्] । ऐणेयम् । [कौशेयम् ॥]

**( २७ ) उमोर्णादकञ् । [ २।४।४।३। ]** तयोः [अकञ्] स्यात् । उष्ट्रतो वुञित्युक्तेराभ्याम् अण्मयटौ च । उमा नामौषधिः [अतसी । तस्याः विकारोऽयवयवो वा] औमकम् । औमम् । उमामयम् । [ऊर्णायाः] और्णकम् । [और्णम् । ऊर्णामयम्] ॥

**( २८ ) उष्ट्रतो वुञ् । [ २।४।४।५। ]** अयमकञ् । अणञ्योः न प्राप्यः । अकञ् । औष्ट्रकम् ॥

**( २९ ) शम्या लगक् । [ २।४।४।६। ]** तयोरक् स्यात्, लगागमश्च । शामीलं काष्ठम् । [शामीला शाखा] ॥

**( ३० ) पारशवाप्यकांस्याः । [ २।४।४।७। ]** परश्वर्थं परश्वान्तस्याक्तिपासवो निपात्यते ।

विकारे अपाम् आप्यं यो दीर्घत्वं च । अब्मयं वा । कंसार्थं कंसीयम् । तस्य यञञौ । कांस्यम् ॥

**( ३१ ) वाञ् शिंशपासीसगणात् । [ २।४।४।८। ]** शिंशपागणात् तयोर्वा अञ् । पाक्षेऽण् । सीसगणादञ् नित्यं, पार्थक्यात् । मयूरसारण्यप्यत्र श्लोकः –

शिंशपापलाशखादिरोकाः स्यन्दनो विकङ्कतो यवासः ।
स्यात् करीरचेच्छिरीषाः पलाशेति सीसलोहकण्टकाराः ॥१॥

रोहितको वीधदारु पीतदारुत्रिकण्टकौ ।
रजतोदुम्बरौ प्राण्व्यनुदात्तादिर्विभीतकः ॥२॥

शिंशपादेर्वृक्षत्वाद् अणि प्राप्ते शैंशपं काष्ठं शिंशपामयम् । खदिरस्य ज्ञानेन खादिरः, [पालाशः] बाणः । स्यन्दनादेरनुदात्तादित्वानित्याञि प्राप्ते इति गणान्ते । तथा सैसः, सीसमयः । नाण् । प्राणी अनुदात्तादिः, प्राणिभ्यः । कापोतं मांसम् । कापोतमयम् । मायूरम् । तैत्तिरम् । उवर्णात् । दैवदारवम् । भाद्रदारवम् । अनुदात्तादेः । कापित्थम् । माहित्थम् । इत्यादि । ये त्वत्रानुदात्ताः कण्टककाररजत एवंविधाः पृथगुक्तास्ते मयड्बाधार्थम् ।

**( ३२ ) ञितोऽतः । [ २।४।४।९। ]** अतो विकारांशयोर्विहितात् ञितः पुनर्विकारांशयोरक् स्यात् । तत् ततोऽप्यके वा मयट् । एण्या विकार ऐणेयः । तद्विकारेऽप्यैणेयः । तस्याप्यैणेयः । ननु विकारविकारोऽपि विकार एव, अवयवावयवोऽप्यवयव एव । ततो विकारांशयोः प्रकृतेरेव सिद्धम् । सत्यं, प्रकृतेरवस्थान्तरं विकारः । स च निम्बस्य स्तम्भः विकारो वा, यूपो वा, भस्म वा नैव स्यात् । यत्तु नैव स्तम्भः, तद्विकारो यूपः, तदा नैव मयः । स्ताम्भो वा यूपः । यूपप्रकृति भस्म तदा नैम्बमयं स्ताम्भमयं वा, यौपं वा भस्म । एवं सर्वत्राण्विधौ । शिंशपादेरणञौ । तेन शैंशप स्तम्भः तद्विकारः शैंशपमयः । शैंशपो वा स्ताम्भो वा यूपः । तद्विकारः शैंशपमयं शैंशपं स्ताम्भमयं यौपं वा भस्म । यस्त्वाह-नैम्बविकारो नैम्बोऽणेव, तदशास्त्रीयम् । तत्र ऐणीकोशाड् ढञ् । वोमोणादकञ् । उष्ट्रान्नित्यम् । शम्या लगञोरञ् वा ढञ् । कंस्याद् यञ् । शिंशपादेः वाञ् । सीसादेर्नित्यम् । एते कृतोऽतोऽञ् । तत् ततोऽप्यकुदाहार्यः । कृतः किम् ? वैल्वमयम् । अतः किम् ? वैदमयम् । सर्वञ्णितामेतदेव फलमित्यन्ये ॥४॥

**क्रीतवन्मानतो द्रोर्वयोऽस्मिन् पयोगोश्च योऽतोऽञ् मयड् वा त्वना च्छादभ- ।**
**क्ष्ये शरादेः फले पुष्पमूले लुगिष्टोऽपि राजन्यकाणे पदे वादितो वुञ्विधौ ।**
**भक्त देशेऽभिधाने निवासेऽप्यदौरः कृतो टोऽस्ति तत् ॥२।४।५॥ षट्पदी ॥**

**( ३३ ) क्रीतवन् मानतः । [ २।४।५।१। ]** मानार्थात् क्रीतार्थास्ते तद्विकारांशयोः स्युः । शतस्य विकारः, शत्यम् । शतिकम् । नैष्किकम् । मयड् वा ।

**( ३४ ) द्रोर्वयोऽस्मिन् । [ २।४।५।२। ]** अस्मिन् विकारे द्रोर्वयः स्यात् । द्रुवयम् ॥

**( ३५ ) पयोगोश्च यः । [ २।४।५।३। ]** आभ्यां द्रोश्चैतयोर्यः स्यात् । मयड् वा गोः । पयस्यम् । गव्यम् । द्रव्यम् ॥

**(३६) अतोऽञ् मयड् वा त्वनाच्छादभक्ष्ये** । [२।४।५।४।] तयोर्यथाविधि मयड् वा स्यात् । आश्मनः । आश्ममयः । अनाच्छादनभक्ष्ये किम् ? कार्पासः आच्छादः । मौद्गः सूपः । अतोऽञ् कर्तव्यः । य । मयडन्तेभ्यः पुनर्विकारांशयोरञ् स्यात् । ततोऽपि ञित्त्वात् । द्रुवयस्य द्रौवयम् । तस्यापि द्रौवयम् । तथा मृत्तिकामयस्य मार्त्तिकमयम् । तस्यापि मार्त्तिकमयम् । तथा बैल्वस्तम्भः । तद्विकारो बैल्वमयो यूपः । तद्विकारो बैल्वमयं भस्म । नाण्मयटौ अविकारार्थादपि । गोमयम् । तस्यापि गोमयम् । अतोऽञ् । भावे मयटो मयः स्यादनिष्टः । तथा सीसादेरञं विधाय ञितोऽञ्विधानाद् अणो अणकौ न स्तः । ततोऽणं न विकारे मयटा भाव्यम् । तदन्तविकारे मयडनिष्टेरण् स्यादणोऽणे । अञो निषेधात् । पुनरनिष्टो मयट् स्यादत एवाऽञो नायम् ॥

**(३७) शरादेः** । [२।४।५।५।] तयोर्नित्यं मयट् । अत्रोपजातिः –

शरकुटीबल्वजसोमदर्भाः कोपान्तजन्तुन्यजशत्यजेकाच् ।
पिष्टो यवोऽनाम्नि तिलो मृतोड़ो व्रीहिः पुरोडाश इदं तृणं वृत् ॥१॥

शरस्य विकारः शरमयम् । कोपान्तजन्तुन्यच् । कोपान्तात् प्राणिवाचिनः आरैजाद्यचः । काकमयम् । न प्राण्यञ् । कोपान्तात् किम् । वासम् । त्यच् किम् ? सैकम् । त्यचोऽप्राणिनोऽपि वक्ष्यति । त्यजैकाच् । त्यदादे आदैजायचः एकाचश्च । एतन्मयम् । भवन्मयम् । शालिमयम् । तथा काष्ठमयम् । कोपान्तप्राणिनियमाच्च । संसारसम् । तथा वाङ्मयम् ॥ मृण्मयम् । तथा पिष्टयवादनाम्नि तिलाच्च । पिष्टमयम् । [यवमयम् । तिलमयम् ।] मृतादनाम्नीति नो सम्बध्यते । नात्रापवाद इत्यन्ये । व्रीहिमयः । पुरोडाशश्चेत् व्रैहोऽन्यः । छन्दोऽर्थम् ॥

**(३८) फले पुष्पमूले लुगिष्टोऽपि** । [२।४।५।६।] प्रकृतिविकारेंऽशे वा फलादौ विहितोऽणादि लुक् स्यात्, स चात्रेष्टो लक्ष्याविरोधेन । तद्यथा-

प्लक्षाद्यणोऽन्यस्य फले लुगस्त्री जम्ब्वा न वा स्त्री च हरीतकीभ्यः
लिङ्गं वचः प्रागिव पुष्पमूले फले च तत्पाकशुषां नबिष्टम् ॥१॥

प्लक्षादेरत एवाण् नाञ् । प्लक्षस्य फलं प्लाक्षम् । नैयग्रोधम् । अत्र तनुमध्या-

**प्लक्षः पर्शुकः स्यात् न्यग्रोधविहिन्यौ ।**
**अश्वत्थोऽपि च बैल्वः कृत्वा कृतितोऽन्यः ॥२॥**

अन्यस्याणादेः फले लुक् स्यात् स्त्रीनिवृत्तिश्च । आमलक्याः फलमामलकम् । बदरम् । कुवलम् । जम्ब्वाः फलेऽणो लुक् न वा, लुकि स्त्री च वा न वा । जाम्बवम् । जम्बु । जम्बू वा फलम् । हरीतकीभ्यः फलेऽणो लुक् स्त्री च नित्यम् पार्थक्यात् । हरीतक्याः फलानि हरीतक्यः फलानि । अत्र षट्पात् ।

हरीतकी च षट्काण्डी द्राक्षा गर्गरिका दरी ।
ऋक्षा शेफालिका काला दोही स्यात् कण्टकारिका ।
पाली श्वेतार्जुना दाडी दोडी कोशातकी गणः ॥३॥

आकृतित्वान्नखरजनीत्यादि । श्वेतार्जुनाभ्यां पाकी । श्वेतपाकी । अर्जुनपाकी । लिङ्गं वचः प्रागिव पुष्पमूले फले च अणादिलुकि । मल्लिकायाः पुष्पाणि मल्लिका । नवमल्लिका । जातिः । विदार्यमूलं विदारी । अंशुमती । बृहती । प्लक्षाद्यणोऽन्यस्यैव । पाटलानि पुष्पाणि । शाल्वानि मूलानि । फले । अतस्याः फलानि अतसी । तत्पाकशुषाम् । फलपाकनिमित्तः शोषो येषाम् । लिङ्गं वचः प्रागिव । व्रीहयः । पचाः । माषाः । मुद्गाः । तिलाः । नबिष्टम् । क्वचिदणादि लुकि, नपुंसकत्वं पुष्पादिसमानाधिकरण्यम् । कदम्बं पुष्पम् । अशोकम् । करवीरम् । पुष्पाद्यभिधेयेऽणाद्युत्पत्तौ नपुंसकत्वमस्त्रीत्वादिविधानं नानाविधिज्ञापनार्थम् ॥

**(३९) राष्ट्रं च । [२।४।५।७।]** तस्य राष्ट्रं जनपदो विषय इत्यर्थे यथाविश अणादयः स्युः । शिबीनां विषयो जनपदः शैबः । औदुम्बरः ॥

**(४०) राजन्यकाणे पदे वादितो वुञ्विधौ भक्त । [२।४।५।८।]** तस्य राष्ट्रमित्यर्थे एभ्यः क्रमेण वुञ्विधभक्ताः स्युः । त्रिषु वृत्तमार्या आर्यीये घट्पात्–

राजन्यदैवायन अर्जुनायनः बाभव्यदाक्षायणदाक्षिसम्प्रियाः ।
वैकर्णशैलूषविराटमानवाः स्यादात्मकामेय उदुम्बरस्तथा ॥१॥

शालङ्कायनतैतिलबैल्ववनायनाम्बरीपपुत्राः स्युः ।
ऊर्णादिगर्तनाभौ वसाति जालन्धरायण वृत् ॥२॥

काणेयः शैकयतः भौरिकिविलिजिकि चौपयतामस्मिन् ।
चैकयतश्चौपयतो भौरिक्याद्या गणे ज्ञेयाः ॥३॥

देवैपुकारिनडतुण्डशौण्डिशायण्डसौवीरशयाण्डमस्मिन् ।
सारस्यद्व्याक्षेः खडशूद्रदाक्षेस्त्र्याक्षीलजौलाद् दशमित्रतः पश् ।
चन्द्रायणो माणवधेनवौ स्तः विश्वाच्छपां डिस्त्विति षट्पदीयम् ॥४॥

राजन्यकः ऊर्णादिगर्तनाभौ । त्रिगर्तः । ऊर्णाभः । वृदन्तः । कालेयविधिगणः । देवभक्तः । ऐषुकारिभक्तः । सारस्यादिः पश्यदन्ता अत्र । सौरस्यायनः । विश्वात् माणवधेनवौ । वैश्वमाणवः । [वैश्वधेनवः] ॥

**(४१) देशेऽभिधाने निवासेऽप्यदौरः । [२।४।५।९।]** तस्य निवासोऽदूरभवो वेत्यर्थयोर्यथाविध्यणादिः स्याद् देशविषये नाम्नि गम्यमाने । निवसन्त्यस्मिन् निवासः । ऋजुनावानां निवासः आर्जुनावः । शैबः । औपुष्टः । विदिशाया अदूरभवं वैदिशं नगरम् । व्रैहिमतम् ॥

**(४२) कृतौ र्टः । [२।४।५।१०।]** टा च उपचरितौ तृतीयासप्तम्यौ तृतीयान्तात् कृतो निवृत्त इत्यर्थे देशे नाम्नि यथाविध्यणादि स्युः । सहस्रेण साहस्री परिखा । कुशाम्बेन कृता कौशाम्बी नगरी । हेतौ कर्तरि करणे वा यथायोगं डा ॥

**(४३) अस्ति तत् । [२।४।५।११।]** सप्तम्यत्र सम्बध्यते । तदिति प्रथमान्ता च सप्तम्यर्थे देशे नाम्नि यथाविध्यणादिः स्यात् तदस्ति चेत् । उदुम्बरा अत्र सन्ति औदुम्बरो देशः । पार्वतः ।

मत्वर्थापवादः । तदिति निवासादित्रयमयं च । तदेवं चतुर्ष्वर्थेष्वणादि यथायोगम् ।

ओरञ्मतो बह्वजतोऽथ कूपेषूदग् विपाशोऽपि च सङ्कलादेः ।
प्राक्शाल्वसौवीरस्त्रियां च देशे रोणी सुवास्त्वादिभ्योऽण् वदन्ति ॥१॥

यथोक्तसुबन्ताच्चातुरर्थिकोऽञ् स्याद् ओर् उवर्णात्, नाण् । तदत्रास्तीति । अर । कक्षतु कर्कटेलु । आरडवम् । [काक्षतवम् । कार्कटेलवम् । ] नद्याः परत्वान् मतुप् । इक्षुमती । द्रुमती । यो बह्वच् शब्दोऽतो विहितान्मतोस्तथाऽञ । ऐकटावतम् । ऐन्द्रकावतम् । बह्वचः किम् ? आहिमतम् । यावमतम् । अण् । अतो बह्वचस्तथा कूपेषु वाच्येषु । दीर्घवस्त्रेण निर्वृत्तः कूप दैर्घवस्त्रः । कापिलवस्त्रः । उदग्विपाशः । विपाश उत्तरे कूले कूपाः, तेषु वाच्येषु तथाऽञ् । दत्तेन कृतः कूपो दात्तः । गौप्तः । उदक् किम् ? दक्षिणतो विपाशः दात्तः, अण् । सङ्कलादेः । तथाऽञ् । तेन कृतं साङ्कलम् । अत्र दोधकोपजाती–

सङ्कलपुष्कलकुम्भनिधाना उडुप उद्वप उत्पुट लोमन् ।
राजभृतातगवेषनिवेशाः गोभृतपूतिकवेमनहानि ॥२॥

पूलाशकूलाशपलाशगम्भीरभल्लपालाः करुणः सुदत्तः
सुभूत्रगोलुन्दसुमङ्गलानि सुदक्षसद्योजसुनेत्रकाद्याः ॥३॥

प्राचि साल्वे सौवीरे च स्त्रीलिङ्गदेशवाचो यथोक्तम् । प्राचि ककन्देन कृता काकन्दी नगरी । माकन्दी । माणिचरी । जारुषी । एवं साल्वे । [विधूमाग्निना निर्वृत्ता] वैधूमाग्नी । सौवेरे । दात्तमित्री । एतेऽणोऽपवादाः । रौणीसुवास्त्वादिभ्योऽण् । तथाऽति विप्रसक्ताऽण् न पृथग् रोणी तदन्तार्थश्च । रौणः कूपः । आजकरोणः । सैन्धकरोणः । कूपेऽणि प्राप्ते सुवास्त्वादेरुवर्णकूपाण् च । सुवास्तोरदूरभवं सौवास्तवम् । अण् मतुबाधने । सौवास्तवी नदी । अत्रोपजाति–

सुवास्तुकर्कन्धुमतीविकर्णाः सैवालिकर्पूरिशिखण्डिनः स्युः ।
सक्थाऽहिगर्ता अथ कृष्णकर्णो वर्णः कुटीकर्ण च भण्डु खण्डु ॥४॥

कवतो वर्णकूपाञ् कृतेऽर्थे । ओः । त्रैशङ्कवम् । कार्कवाकवम् । तथा कार्णच्छिद्रकः कूपः । कार्णवेष्टकः । वदन्त्येतत् केचन । तदत्र चातुरर्थिकेनाणा सिद्धम् । अञणोस्तुल्यरूपत्वात् स्वरकृत एव विशेषः । तत्राह जयादित्यः अतिसूक्ष्मेक्षिकेयं [सूत्रकारस्य] । अतश्चातुरर्थिको विधिर्ज्ञेयः ॥५॥

**वलः शिखायाः नडशादतो डिद् बलादितो यादि तु साऽस्य राका ।**
**चैत्र्यादितष्ठक् कयदेवता चेन्मरुद्घृतुभ्यश्छयकौ घ शुक्रात् ॥२।४।६॥ वृत्तम् ॥**

**( ४४ ) वलः शिखायाः । [ २।४।६।१। ]** चातुरर्थिकः स्यात् । शिखावलं नगरम् ॥

**( ४५ ) नडशादितो डित् । [ २।४।६।२। ]** तथा वलः डित् स्यात् । नड्वलम् । शाद्वलम् ॥

**( ४६ ) बलादितो यादि तु । [ २।४।६।३। ]** भ्यसस्तसिति । बलाद्यादिभ्योऽष्टादशभ्यो

यादयोऽष्टादश चातुरर्थिकाः स्युः । वरणादेर्लुक् वा चातुरर्थिकः ॥१९ गणनाम १ यादी २ क्रमेण वृत्तेन अनुष्टुभाऽऽह । द्वाविंशतिं तेषु चतुर्भिराहु :–

बला १ ऽश्म २ सङ्काश ३ सुतङ्गमादेः ४ प्रेक्षा ५ तृणा ६ ऽऽरीहणवल्वयाचेः ८ ।
काश्य ९ शर्य १० प्रक्षादि ११ वराह १२ कर्णाः १३ सखा १४ डर्क १५ धूमे १६ क्षु १७
मुनि स्थलादेः १८ ॥१॥

य १ र २ ण्ये ३ अधि ४ इन् ५ स ६ वुञ्फण्ढणाः
९ क १० फण् ११ कञ् १२ फि १३ १४ छ १५ ।
छण् १६ मतुप् १७ वञौ १८ यथासंख्यं वरणादेर्लुगिष्ववत् ॥२॥

यरौ बलाश्मादित आर्ययाहुः ण्येकौ च सङ्काशसुतङ्गमादेः ।
वृत्तद्वयार्याभिरथाहुरिञौ प्रेक्षातृणादेरपि पञ्चपादा ॥३॥

वृत्तार्ययाहुर्वुञरीहणादेः वंचल्वजादेरपि दोधकेन ।
श्लोकोपजात्या इलकौ च काशशर्यादेश्च पक्षादिवराहकादेः ॥४॥

वंशोपजात्या क्रमशोऽपि एकक् कर्णादिसख्यादि परं च फिञ्ढञ् ।
वज्रोपजात्या छछणार्कधूमतः षट्पाद् द्विश्लौकैरपि षट्पदात् ॥५॥

इक्ष्वादितो दोधवितानकाभ्यां मनुष्वश्रुत्ये न तु निस्थलादेः ।
आर्यान्तिमाभ्यां वरणादितो लुक् एकोनविंशान्त इहत्य सोऽर्थः ॥६॥ ४ तमी ॥

बलवुलतुलपुलउलडुलधडाविद्योऽश्मोषयूथगुददर्भात् ।
कुण्डलकुलवृन्दनगरखण्डाशिखापीनतोगगणः ॥७॥

संकाशकश्मीरचिरन्तकूटाः चूडारयूपावनुनाशशीर्षौ ।
अस्मिन्नरस्त्री प्रगर्दिश्च तीर्थः स्याच्छूरसेनमगदिन्पचारौ ॥८॥

कम्पिलनासिकखण्डिकपन्थाः स्यात् सुपथिन् कलिबोधिकरश्च ।
पञ्जर चेत् सुपतिः पतितं वृत् ण्योऽथ सुतङ्गमखण्डितजीवाः ॥९॥

मुनिचित्तमहाचित्तौ श्वेतमहापुत्रविग्रहशुक्रश्वन् ।
वापिन्नार्जुनबीजा अजिरश्चास्मान् गणादिश्च ॥१०॥

प्रेक्षापुटौ सङ्कटबन्धुके स्तः पुटेक्कटौ च ध्रुवकाफलङ्के ।
न्यग्रोध वृच्चेन् तृणमूलवर्णाः पर्णं जनार्णौ चरणो वराणः ।
नडः सुवर्ण शवपञ्चपाद् वृत् ॥११॥

अरीहणोदण्डविपाशबिल्वाः भस्त्रा खरश्चित्रत्रिगर्तखाडाः ।
क्रोष्टुश्च ऐदायतसीसताभ्यां शिरीषकम्बूबधिराः सुयज्ञः ॥१२॥

जम्बूवत्काशकृत्स्नौ द्रुघणोदञ्चनखदिरविपथकवलाः ।
किरणभ्रगलरैवतशिंशपास्तथा शर्करा वृद्धिश्च ॥१३॥

बल्वजेक्ष्वटसङ्कटाश्वकूपवर्कपरिवापयवाषाः ।
कङ्कटकङ्कतगर्तशिरीषा शर्करया कुमुदोऽपि गणा वः ॥१४॥

काशपलाशपीयूक्षातृणवाशनदाद् बिस- ।
क़र्दमकण्टकाश्वत्थगृहगुहाचरणाद् इलः ॥१५॥

ऋश्योत्तराश्मन् परिगूढशर्करा निवातन्यग्रोध उ खण्डवीरणः ।
स्यात् स्थूलबाहुशरारडु नेर्गानबन्धौ परिवंशतः कवृत् ॥१६॥

पक्षाण्डरोमन्मकराः सकर्णकः कुत्सास्तिकुम्भाः सकलो निवातः ।
लोमन्शीकरकम्बलिकबिलकलाः पन्थपथिन्हंसकचित्रपरोणात् ॥१७॥

वराहबाहुखदिराः पिनद्धः स्थूलो बलाहश्च शिरीषभग्न-।
वेर्जग्धदग्धावपि शर्करा तु अतो वराहादिगणात् ककिष्टः ॥१८॥

कर्णो वसिष्ठार्कुरपाञ्चजन्याः जीवन्तकुन्तीकुलिशानडुह्याः ।
पाक्षायणोऽपि द्रुषदः स्फिकण्डीवतूश्च जित्वं च गणादतः फिक् ॥१९॥

सखा च भल्लः करवीरपालौ स्याच्चक्रवाकः छगलोऽप्यशोकः ।
दत्तोऽथ वायोरपि वासवाच्च वज्रपुरशीकरगोभिलो ढक् ॥२०॥

अर्कोत्करौ मूलनितान्तसम्फराः नैन्दाकनैवाकविशालसम्फलाः ।
अश्वत्थभस्त्राऽनिजशोकपिप्पलीक्षुद्राग्निशालातपशर्कराफलम् ।
चर्मन्ननेकौ च खलाजिनं वतः उत्कोशवृक्षौ तृणपर्णपिप्पलाः ॥२१॥ षट्पदी ॥

खदिरक्षारवेत्राणि शूर्पणायश्च त्रैणवः ।
कितवः पिचुको जन्यः नरादीनां कुगागमः ॥२२॥

नडेक्षुकाष्ठगोत्राणां बिल्वकपोतवेणुतः ।
वेतसप्लक्षयोरन्नित् कुञ्चातक्ष्णोरणाच्छ तु ॥२३॥

धूमकृशाश्वावरिश्म विशालौ रोमकवेश्मनसायसदास्यः ।
लोमशपूतरवर्चलकूटाः स्यात् पुरगः सुकरः सदृशारि-
ष्टावजितावनता[रसवेश]विविक्तसुखं सचुलासुरवृच्छण् ॥२४॥ षट्पदी ॥

इक्षुविसौ मधुवेणुकरीराः स्थाणुशमीकिशराशरुदारु ।
रिष्टमरुच्छकला अपि वेटा शक्तिरिहेष्टकया च समेता ॥२५॥

आसुतीशर्पणासन्दी अमुग्नद्यां च वेतसात् ।
निन्नडकुमुदाभ्यां च महिषाच्च गणान्मतुप् । ॥२६॥

मुनिस्थलदशग्रामौ शर्कराश्वत्थशाल्मली ।
कुमुदं गोमठः कूटः मधुकर्णः शिरीषो ठक् ॥२७॥

वरणाखलतिगोदाः शृङ्गी शाल्मली गया च तक्षशिला ।
कटुकबदरीशिरीषाः उज्जयिनी जनपदा काञ्ची ॥२८॥

आलिङ्ग्यायन पर्णी स्यात् शफण्डी मथुरोरशा ।
नाना स्याज्जनपदादौ शर्करा वा गणाल्लुक् च ॥२९॥

'यरौ बलाश्मादित आर्ययाहुः' इत्यादिभिश्चतुर्भिर्वृत्तैः क्रमेण गणानां छंदःसंख्या स्वे स्वे च प्रत्ययाः व्याख्याताः । पुनर्गणान्तेषु वृदादिः प्रत्ययोक्तिश्च स्पष्टार्थम् । तत् क्रमेणोदाह्रियते ॥

बलेन निर्वृत्ता बल्या तुल्या अश्मानोऽत्र देशे सन्ति, अश्मरः । ऊषरः ॥७॥ ण्यंकृते सांकाश्यकाश्मर्ये ॥८॥ एवं सौतङ्गमी नगरी ॥९॥ प्रेक्षा अत्र देशे सन्ति, प्रेक्षी । फलंङ्कः । फलक इत्यर्थः । ध्रुवका । केचिद् ध्रुवका इति वदन्ति । एवं तृणशः ॥११॥ र्यकृति आरीहणकम् । भस्त्रादेः वृञ् । तदन्ता अत्र लाघवार्थमित्थम् । भ्रास्त्रायणः । अतो वृक् । भ्रास्त्रायणकम् । आकृतिगणत्वात्। खण्डुवीरणदलतृसाम्परायणरायस्पोष इत्यादयोऽत्र द्रष्टव्याः ॥१२॥ तदत्रास्ति । बल्वजिकम् ॥१४॥ एवं काशिलम् ॥१५॥ ऋश्यकः । न्यग्रोधाद् ३ निपातः । नेर्धानबन्धौ निधानिबन्ध इत्यर्थः ॥१६॥ फक्कृते पाक्षायणम् । पथिन् पथश्च स्यात् ॥१७॥ तदत्रास्ति [कक्] । वाराहकम् । भग्नवेर्जग्धदग्धावपि । विभग्नः । [विजग्धः । विदग्धः] ॥१८॥ फिक्कृते कार्णायनिः ॥१९॥ एवं साखेयः । दत्तः । केवलं वायुवासवाभ्यां च । वायुदत्तः । [वासवदत्तः] । वृदकरणात् समूलाद्योऽत्र ॥२०॥ अर्को, अर्कीयः ॥२१॥ नडादीनां कगागमश्च । नडकीयो देश इत्यादि । अदन्तनलोपौ क्रुञ्चातक्ष्णोः क्रुञ्चकीयः । तक्षकीयः ॥२३॥ धूमोऽत्रास्ति देशे, धौमीयः । कृशाश्वेन कृतं, कार्शाश्वीयम् ॥२४॥ इक्षुमान् देशः । विसवान् ॥२५॥ अमुग्नद्यां चेति नद्यामभिधेयां मतुप् । यथायोगं देशे नाम्नि । उदुम्बरा अत्र सन्ति, उदुम्बरावती । मशकावती । पुष्कलावती । इक्षुमती । अमुक् किम् ? सुवास्त्वादि कजन्तः सुव्रततोऽणेव । सौवास्तवी [नंदी], तस्याकृतिगणत्वात् । भागीरथी, भैमरथीत्यादि । वेतसान्मतुप् डित् । वेतस्वान् । नडवान् । कुमुद्वान् । महिष्मान् नाम देशः ॥२६॥ तदत्रास्ते । मौनस्थलिकः । आकृतित्वाद् रथकारादि ॥२७॥ वरणादेश्चातुरर्थिकस्य लुक् स्यात् । इष्टवच्चेष्टम् । चात् फलादेरिव । लिङ्गं वचः प्रागिव, तद्विशेषणानां चाजातेः [पा. अ. १।२।५२] । वरणानामदूरभवं नगरं, वरणाः । नगरं ग्रामो वा । खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि । अत्र वचः प्राग्वत् । एवं गोदौ ग्रामः, इत्यादि नानादि बहुलं जनपदादावभिधेये देशे नाम्नि यश्चातुरर्थिकः सुभुगिभूवन् ग्रामसमुदायो जनपदः । पञ्चालानां निवासो जनपदः पञ्चालाः जनपदः । कुरवः । मत्स्याः । अङ्गाः । वङ्गाः । सुह्माः । पुण्ड्राः । नाना किम् ? उदुम्बराः सन्त्यत्र, औदुम्बरो जनपदः । वैदिशः । अनाम त्वाह । तद्विशेषणानां लिङ्गं वचस्तद्वदजातेः, जातिवर्जानां जातिविशेषणवर्जानां वा । पञ्चालाः रमणीयाः, बह्वन्नाः, सम्पन्नक्षीरतमाः, बहुनाल्पफलाः । गोदौ रमणीयौ, [बह्वन्नौ, सम्पन्नक्षीरतमौ, बहुनाल्पफलौ] । अजातेः किम् ? वरणा नगरं ग्रामो वा । गोदौ ग्रामः । यद् वा पञ्चालाः जनपदो रमणीयः, [बह्वन्न, सम्पन्नक्षीरतमः, बहुनाल्पफलः] । गोदौ ग्रामो

रमणीयः । ४ खलतिकं वनानि रमणीयानि । ४ वृत्तौ लिङ्गं वचोऽस्पष्टमिति । पञ्चालमथुरे । शर्करावत् । ततो लुडा नाद्यः, पाठसामर्थ्यात् ॥२८॥ शर्करादेः शार्करो वा । तथाऽर्कारीहणबल्वज-मुनिस्थलादिपाठात् । वुञ्कठण्छणण्लुगः स्युः । एवं षड्रूपाणि, शिरीषाद्यनेकत्र पाठात् तद्रूपम् । [शार्करिकम् । शर्करकम् । शर्करिकम् । शार्करीयम् । शार्करम् । शर्करा ।] सर्वेऽप्याकृतिगणाः ॥२९॥

**(४७) साऽस्य राका । [२।४।६।४।]** नाम्न्येव, सेति, प्रथमान्तात्, अस्येति षष्ठ्यर्थे, यथाविध्यणादयः स्युः, यत् तत् प्रथमान्तं, राका पौर्णमासी चेत् स्यात् । पुष्येण युक्ता पौषी । साऽस्य पौर्णमासी पौषो मासोऽर्धमासः, संवत्सरो वा । एषा तदन्तानां नाम । एवं माघः । वैशाखः ॥

**(४८) चैत्र्यादितष्ठक् । [२।४।६।५।]** तथैव नाम्नि बहुलमिति गणेऽण् वा । चैत्र्याद्यत्र चैत्री श्रवणा कार्तिक्यपि । फाल्गुन्या वाऽऽग्रहायण्यश्वत्थत एव । चैत्रिकः, चैत्रो वा मासः । [श्रावणिकः, श्रावणो वा । कार्तिकिकः, कार्तिको वा । फाल्गुनिकः, फाल्गुनो वा ।] एवं द्वाभ्यां नित्यम् । आग्रहायणिकः । [अश्वत्थिकः ।] अ लघुः । अत एव श्रवणाश्वत्थाभ्यामणो लुग् नाम्नि ॥

**(४९) कय । [२।४।६।६।]** को ब्रह्मा देवता चेद् अस्येत्यर्थे कय निपात्यते । इत् स्यात् । कायं हविः ॥

**(५०) देवता चेत् । [२।४।६।७।]** साऽस्य देवतेत्यर्थे यथाविध्यणादयः स्युः । इन्द्रो देवताऽस्य ऐन्द्रं हविः । द्वीन्द्रं गव्यम् । पाशुपतम् । आदित्यम् । शैवो मन्त्रः ॥

**(५१) मरुद्घृतुभ्यः छयकौ । [२।४।६।२।]** अत्रार्यागीतिः

ऋतुवायू पित्रुषसौ द्यावापृथिवी मरुत्वदग्नीषोमाः ।
वास्तोष्पतिः गृहमे शुनासीरच्चार्णबिन्दवाद्यत्र ॥१॥

अत्र मरुत्वदादि शुनासीरच्पर्यन्तो मनु आदि शब्दात् तार्णबिन्दवपैङ्गाक्षीपुत्रादेश्च तथा छः स्यात् । ऋत्वादेः [पृथिवी] पर्यन्ताच्च यक् । मरुत्वानिन्द्रः देवताऽस्य मरुत्वतीयः । यावत् तार्णबिन्दवीयः । पैङ्गाक्षीपुत्रीयः । तथा ऋतव्यः यावत् । शुनो वायुः, सीर आदित्यः, तौ देवतेऽस्य शुनासीर्य ॥

**(५२) घ शुक्रात् । [२।४।६।९।]** तथा । शुक्रियः ॥६॥

**छो वा महेन्द्राच्छतरुद्रतस्तावपान्नपादात् तृजपोन्नपातः ।**
**सोमात्ट्ण्यकालाद्भववान्महाराजाट्ठुण तथा प्रोष्ठपदात् तदस्मिन् ॥२।४।७॥ उपजातिः ॥**

**(५३) छो वा महेन्द्रात् [२।४।७।१।]** तथा घो वाऽण् च । महेन्द्रीयम्, महेन्द्रियम्, माहेन्द्रं हविः ।

**(५४) शतरुद्रतस्तौ । [२।४।७।२।]** घच्छौ तथा स्तः । शतरुद्रियम् । [शतरुद्रीयम्] ॥

**(५५) अपान्नपादात्तृच् [अपोन्नपातः । २।४।७।३।]** तौ स्तः । योऽस्यात् तृजस्य

स्यात् । अपान्नपाद् देवताऽस्य अपान्नप्त्रियम् । [अपान्नप्त्रीयम् ।] अपोनपातस्तथा । अपोन्नप्त्रियम् । अपोन्नप्त्रीयम् ॥

**(५६) सोमात् ट्ण्य [२।४।७।४ ।]** तथा । सौम्यः । सौमी ऋक् । टिड्यर्थः॥

**(५७) कालाद् भववत् । [२।४।७।५।]** कालवाचिनो भवार्थे, एते साऽस्य देवतेत्यर्थे स्युः । मासोऽस्य देवता मासिकम् । सांवत्सरिकम् । वासन्तकम् । प्रावृषेण्यम् ॥

**(५८) महाराजाट्ठण् तथा प्रोष्ठपदात् । [२।४।७।६।]** माहाराजिकम् । [प्रौष्ठपदिकम् ।] तथेति देवता अनुवृत्यर्थं नातोऽतः ॥

**(५९) तदस्मिन् । [२।४।७।७।]** तदिति प्रथमान्तात्, अस्मिन् वर्तत इत्यर्थे ठण् स्यात् । पुमस्तद्ग्रहणं नियतविषयार्थम् । नवयज्ञोऽत्र वर्तते नावयज्ञिकः कालः । पाकयज्ञिकः । यद्वाऽण् प्रकृत एव । पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः ॥७॥

**योद्धुर्निमित्ताद् विशरे प्रगाथे प्राक् छंदसो भावघञन्ततो ञः ।**
**स्याद् वर्ततेऽस्यां शमणायुधाद् द्रा रक्तं च रागाद् अकनीलपीतात् ॥२।४।८॥ इन्द्रवज्रा ॥**

**(६०) योद्धुर्निमित्ताद् विशरे । [२।४।८।१।]** योद्धनिमित्तवाचिप्रथमान्तात् षष्ठ्यर्थे संग्रामे वाच्ये यथाविध्यणादिः स्युः । अहिमाला योद्धारोऽस्य संग्रामस्य, आहिमालः। स्यान्दनाश्वः । स्त्रैणं युद्धम् । सुभद्राऽस्य निमितं सौभद्रः । गौरमित्रः आभ्यां किम् ? स द्रष्टाऽस्य । विशरे किम् ? सा निमित्तं वैरस्यम् ॥

**(६१) प्रगाथे प्राक्छन्दसः । [२।४।८।२।]** आदिभूताच्छन्दोनाम्नः प्रथमान्ता षष्ठे प्रगाथार्थे यथाविध्यणादिः स्यात् । पङ्क्तिरादिरस्य, पाङ्क्तः [प्रगाथः] । त्रैष्टुभः । आनुष्टुभः । जागतः । प्रगाथे किम ? पङ्क्तिरादिरस्यानुवाकस्य । प्राक् किम् ? अनुष्टुप् मध्येऽस्य । च्छन्दः किम् ? उदितं प्रागस्य ॥

**(६२) भावघञन्ततो ञः स्याद् वर्ततेऽस्याम् । [२।४।८।३।]** भावघञन्तात् प्रथमान्तात् ञः स्याद्, अस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे वर्तत इत्यर्थे । दण्डपातोऽस्यां दाण्डपाता तिथिः । आश्ववाहा । मौसलपाता । भौमी । भाव किम् ? प्रासादोऽस्यां वर्तते । घञ् किम् ? दण्डपतनमस्याम् ॥

**(६३) रमणायुधात् । [२।४।८।४।]** क्रीडासमर्थे आयुधवाचि प्रथमान्तात् ञः स्यात् । दण्डः प्रहरणमस्यां क्रीडायां, दाण्डा । मौष्टा । पादा । आयुधात् किम् ? जलसेचनमस्याम् । क्रीडायां किम् ? खड्गः प्रहरणमस्यां [सेनायाम्] ॥

**(६४) द्रा रक्तं च रागात् । [२।४।८।५।]** द्रेति तृतीयान्ताद् रागवाचिनो रक्तमित्यर्थे यथाविध्यणादिः स्यात् । कषायेण रक्तः काषायः पटः । कौसुम्भः । रागात् किम् ? काषायौ गर्दभस्य कर्णौ । हारिद्रौ कुक्कुटस्य पादाविति । उपमानात् । वर्णान्तरोत्पादो रञ्जेरर्थः ॥

**(६५) अकनीलपीतात्** । [२।४।८।६।] आभ्यामकौ स्तः । [नील्या रक्तं] नीलं [वस्त्रम् । पीतेन रक्तं] पीतकम् ॥८॥

**ठण् कर्दमाद् वा शकलाच्च रोचनाल्लाक्षाद्रथश्चावृतपाण्डुकम्बलात् ।**
**इन् सेन्दुभात् काल छ चार्थतोऽभिड्डित् साम दृष्टं च पितोऽङ्कवत्तथा ॥२।४।९॥ वृत्तम् ॥**

**(६६) ठण् कर्दमाद् वा शकलाच्च** । [२।४।९।१।] तथाभ्यां ठण् वा, अण् च स्यात् । कार्दमिकम् । [कार्दमम् । शाकलिकम् । शाकलम् ।] वस्त्रम् ॥

**(६७) रोचनाल्लाक्षात्** । [२।४।९।२।] तथा ठण् नित्यं, पार्थक्यात् । रोचनिकम् । [लाक्षिकम्] वस्त्रम् ॥

**(६८) रथश्चावृत** । [२।४।९।३।] असुबन्तः । टॉन्तात् परिवृतो रथः इत्यर्थे यथाविध्यणादिः स्यात् । वस्त्रैः परिवृतो रथः, वास्त्रः । चार्मणः । आवृतः सर्वावयवेष्टितः । तेन नेह । छात्रैः परिवृतो रथः । रथः किम् ? वस्त्रैः परिवृतो देहः ।

**(६९) पाण्डुकम्बलाद् इन्** । [२।४।९।४।] तथा पाण्डुकम्बली रथः । मत्वर्थीयेन सिद्धे नाण् ॥

**(७०) सेन्दुभात् काल** । [२।४।९।५।] असुबन्तः । इन्दुयुक्तनक्षत्रात् टॉन्तात् तेन युक्तः काल इत्यर्थे यथाविध्यणादिः स्यात् । पुष्येणेन्दुयुक्तेन युक्तः कालः, पौषी रात्रिः । माघमहः । सेन्दुः किम् ? कृत्तिकाभिर्युक्तो मुहूर्तः । भात् किम् ? चन्द्रमसा युक्ता रात्रिः । कालः किम् ? पुष्येण युक्तश्चन्द्रमाः । उत्तरत्राभिद्वचनादिह भेद एव प्रत्ययः ।

**(७१) छ चार्थतोऽभित्** । [२।४।९।६।] तथा सेन्दुभद्वन्द्वाच्छ स्यादभेदश्चेल्लुप्तचकाराद् भेदश्च विवक्ष्यते । ताभिर्युक्ता राधानुराधीया रात्रिः । पुष्यपुनर्वसुवीयम् अहः । अभेदे, अद्य राधानुराधीयम् ॥

**(७२) डित् साम दृष्टं च** । [२।४।९।७।] टॉन्ताद् दृष्टं सामेत्यर्थे यथाविध्यणादिः स्यात् । चात् डिच्चाडिच्च । कुञ्चेन दृष्टं साम, क्रौञ्चम् । बार्हस्पत्यम् । पाशुपतम् । औशनसम् । [डित्] औशनम् ॥

**(७३) पितोऽङ्कवत् तथा** । [२।४।९।८।] अपत्यान्ताद् यतो येऽङ्के उक्तास्ततस्तेन दृष्टं सामेत्यर्थे स्युः । औपगवेन दृष्टं साम, औपगवकम् । गार्गम् । दैवम् ॥९॥

**स्याद् वामदेव्यं प्रथमेऽण् कुमार्याः प्रोक्तं च वेदं परिवेत्त्यधीते ।**
**छण् खण्डिकोखाद् वरतन्तुतित्तिरेश्छागलेयी चरकात् कठाल्लुक् ॥२।४।१०॥ इन्द्रवज्रा ॥**

**(७४) स्याद् वामदेव्यम्** । [२।४।१०।१।] तथाऽऽयान्तं साम ॥

**(७५) प्रथमेऽण् कुमार्याः** । [२।४।१०।२।] प्रथमे अपूर्वेऽण् स्यात् कुमार्याः । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । अपूर्वपतिर्वा कुमारी पतिमुपपन्ना कौमारी भार्या । कुमार्यां भवः कौमारः [पतिः] तद्भार्या कौमारीति । न तदर्थः प्रतीयते ॥

**(७६) प्रोक्तं च** । [२।४।१०।३।] टॉन्तात् प्रोक्तमित्यर्थे यथाविध्यणादि 'पाराराष्ट्राद् यः' [पा. अ. ४।२।९३।] इत्यादि च शैषिकः स्यात् । उशनसा प्रोक्तम्, औशनसम् । बार्हस्पत्यम् ।

आग्नेयम् । आपिशलम् । पाणिनीयम् ॥

**(७७) वेदं परिवेत्त्यधीते । [२।४।१०।४।]** टन्तात् प्रोक्तं वेदं वेत्त्यधीते वेत्यर्थे यथाविध्यणादिपरे घादि यश्चात् । पिप्पलादेन प्रोक्तं वेदं वेत्त्यधीते वा पैप्पलादः । मैत्रायणीयः । चारायणीयः । प्रोक्ते वेदे वेदित्र्यध्येत्रोरेवानेन । प्रोक्ते वेदे किम् ? चरकेण प्रोक्ताः श्लोकाः. चारकाः । तान् विदन्ति चारकाः ॥

**(७८) छण् खण्डिकोखाद् वरतन्तुतैत्तिरेः । [२।४।१०।५।]** खण्डिकादेस्तथा छण् स्यात् । खाण्डिकीयः । [औखीयः । वारतन्तवीयः । तैत्तिरीयः] ॥

**(७९) छागलेयी च । [२।४।१०।६।]** तथैव छगलिनो ढिनुण् निपात्यते ॥

**(८०) चरकात् कठाल्लुक् । [२।४।१०।७।]** आभ्यां तदर्थिकाणिनोर्लुक् स्यात् । चरकाः । कठाः । चरको वैशम्पायनभवाः ॥१०॥

**कलापितोऽण्णिन्निति शौनकादेर्नर्षेश्च कल्पोऽप्यणथर्वणोऽसौ ।**
**तट्ठण् ऋतूक्यादिपदादितोऽकः षष्ठेः पथष्ट्ट् शततो लुगुक्तात् ॥२।४।११॥ वृत्तम् ॥**

**(८१) कलापितोऽण् । [२।४।११।१।]** भ्यसस्तस् । एभ्यस्तथाऽण् स्यात् । कालापाः । मौदाः । पैप्पलादाः । अत एवान्येषाम् । अत्र वृत्तम् –

कलापिमोदाविह पिप्पलादः सब्रह्मचारी कुथुमिन् शिखण्डिन् ।
सुपर्वणः सूकरसद्म लाङ्गलिन् जाजलिन् तैत्तिलिपीठसर्पिन् ॥१॥

एषां नलोपश्च । सामाण्याणिगहादि छेन बाधिते 'कालापिनेऽणि शौनकादीनाम्' सूत्रम् ॥

**(८२) णिन्निति शौनकादेः । [२।४।११।२।]** एभ्यस्तथा णिन् स्यात् । इति नानाविध्यर्थः । तथेह आर्यादिवृत्तं षट्पात्

शौनकवाजसनेयौ शाङ्र्गरवो रज्जुकण्ठकठशाठौ ।
खाडायनसाम्येयौ स्कन्दस्कम्भौ च वाष्येयः ॥१॥

स्याद् रज्जुभारः पुरुषांसकश्च कपायतालौ च ।
चकार एके त्रयो हरिद्रूलपतुम्बुरु स्युः । श्यामायनः स्यात् कमलोऽपा अलम्बिः ॥२॥

फुलिङ्गताण्डारुणयो ऋचाभः कल्पं वृषेः काश्यपकौशिकाच्च ।
स्याद् ब्राह्मणं चात्र पुराणतो नटभिक्षुसूत्रं च शिलालिपारा ।
शर्याच्च कर्मन्दकृशाश्वतो णिन् अन्ताद्यनु ब्राह्मणिनोऽपि गाथा ॥३॥

शौनकिनः कठाल्लुक् चात्रतो द्वाभ्यां विधिः । काटशाठिनः । तलवकारौ एके मन्यन्ते । अन्ये तु देवदर्शम् । वेदे किम् ? शौनकीया शिक्षा । त्रय इति कालापिकाः, हारिद्राविणः, छगलिनो, ढिनुण् निपातितः । वैशम्पायनशिष्याः । त्रय उदीच्याः श्यामायनिनः । कठकलापिभ्यां लुगणावुक्तौ । त्रयः प्राच्याः कामलिनः । त्रयो माध्यमाः ताण्डिनः । तथा नानारूपत्वाद् विधेः काश्यपकौशिकाभ्याम् ऋषिभ्यां प्रोक्तं वेदं च कलां च विदन्ति । काश्यपिनः । कौशिकिनः । ञ एव किम् ? काश्यपीय कल्पः । कल्पं किम् ? काश्यपीया पुराणसंहिता । तथा ब्राह्मणं पुराणेन

चिरन्तनऋषिवाचिना प्रोक्तं विदन्ति । शाट्यायनिनः । ऐतरेयिणः । ताण्डविनः । भाल्लविनः । पुराणात् किम् ? याज्ञवल्कानि ब्राह्मणानि । सुलभयानि च सौलभानि । छ इञोऽण् च न स्यात् । अत एव तुङ्गपुराणः पुरातनश्चात् । तथा शिलालिपाराशर्याभ्यां प्रोक्तं नटसूत्रं भिक्षुसूत्रं च । चकाराद् वेदवद् विदन्ति । णिन् यथासंख्ये न । शैलालिनो नटाः । पाराशरिणो भिक्षवः । वेदवद्भावाच्चरणात् संघाद् यकञ् । शैलालिनामिदं शैलालिकम् । पाराशरकम् । तथाऽन्तादीत्युक्ति-प्राधान्यादन्तं भिक्षुसूत्रम्, आदि नटसूत्रं, यथाक्रमं कर्मन्दकृशाश्वाभ्यां प्रोक्तं, वेदवद् विदन्ति इत्यर्थे । णिन् अणित् स्याद् इनित्यर्थः । छन्दोत्यर्थं वा तायः । कर्मन्दिनो भिक्षवः । कृशाश्वनो नटाः । तथैव कामन्दकम् । तथाऽनुब्राह्मणं वेत्त्यधीते वा एतावन्मात्रे इन्निपात्यते । अनुब्राह्मणी गाथा षट्पदी ॥

**(८३) न । [२।४।११।३।]** खण्डिकादिभ्यो वेदादेरन्यत्र तेन प्रोक्तमित्यर्थमात्रे प्रत्ययो न स्यात् । खण्डिकया प्रोक्ताः श्लोका वाक्यमेव ॥

**(८४) ऋषेश्च कल्पः । [२।४।११।४।]** विवक्षितानुकर्षश्चकारोऽत्र । पुराणऋषिवाचिनो र्यन्तात् प्रोक्तः कल्प इत्यर्थे णिन् स्यात् । पिङ्गेन प्रोक्तः पैङ्गी कल्पः । आरुणपराजी । प्रोक्ताल्लुगिति तदध्येतापि पैङ्गी । वेत्त्यधीत इति निवृत्त्यर्थं कल्प इति ॥

**(८५) अणथर्वणोऽसौ । [२।४।११।५।]** अथर्वणा प्रोक्तोऽसौ वेद इत्यण् । आथर्वणो वेदः ॥

**(८६) तत् । [२।४।११।६।]** तदिति द्वितीयान्तात् तं वेत्त्यधीते वेत्त्यर्थे यथाविध्यणादिः स्यात् । छन्दो वेत्ति, [अधिते वा] छान्दसः । नैमित्तिः । वैयाकरणः ॥

**(८७) ठण् क्रतूक्थादिपदादितोऽकः । [२।४।११।७।]** तथैव ठण् स्यात् । क्रतूक्थादेः । पदादेरकः । क्रतोः अग्निष्टोमाद्यर्थं शास्त्रं च तद् वेत्ति, अग्निष्टोमिकः । वाजपेयिकः । राजसूयिकः । वृत्ते आर्या षट्पाद् द्वयोश्चेति—

उक्थो निरुक्तो द्विपदी पुराणश्चाथर्वणो न्यासगुणानुकल्पाः ।
संघातलक्ष्येतरसंहिताः स्युर्ज्योतिर्यजुष्पार्षदयज्ञचर्चाः ॥१॥

लोकायतन्यायपदक्रमाः स्युः श्लक्ष्णोऽनुसूसंग्रहवृत्तयोऽपि ।
हेमन्तवर्षाशिशिरं वसन्तो गुणेतिहासानुगुणाः शरच्च ॥२॥

आयुर्वेदानुपदौ चरमप्रथमानङ्गधर्मत्रिक्षत्रादि ।
विद्या स्यादाख्यानाख्यायिकावाची ॥३॥
लुक् सर्वद्विगुसादेरकल्पादेश्च लक्षणकल्पसूत्रान्ततोऽतो णित् ।
पदोत्तरः पदाद् गणः पदशिक्षा च मीमांसाक्रमसामन्हला गणाः ॥४॥

सामलक्षणे औक्थिक्येऽत्रोक्थः, तं वेत्ति [अधीते वा] औक्थिकः । औक्थिक्यं वेत्तीत्यर्थः । न चातः प्रत्ययोऽनभिधानात् । पाठान्तोक्ताल्लुक् । आथर्वणिकः ॥१॥ अनङ्गादि विद्या । वायसविद्यिकः । अङ्गादेः अण् । आङ्गविद्यः । [धार्मविद्यः । त्रैविद्यः । क्षात्रविद्यः । ] आख्यानवाचिनः । यावत्क्रीतिकः । प्रैयङ्गविकः । आख्यायिकायाः वासवदत्तिकः । सौमनोत्तरिकः ॥३॥ लुक् स्यादण् सर्वद्विगुसादेः पदात् । सर्ववेदः । पञ्चव्याकरणः । ससंग्रहः । अकल्पादेः

लक्षणाद्यन्तात् । आक्षलक्षणिकः । मातृकल्पिकः । वार्त्तिकसूत्रिकः । अकल्पादेः किम् ? काल्पसूत्रः । अतो अणिवाण् वेत्यर्थः । पदोत्तरपदिकः । तथा पदकः । शिक्षक इत्यादि गणौ ।

**(८८) षष्ठेः पथष्ठट् शततः । [२।४।११।८।]** षष्ठिशतात् । पथस्तथा । ठडन्तं, वेत्ति [अधीते वा] । षष्ठिपथिकः । [षष्ठिपथिकी ।] शतपथिकः । [शतपथिकी] ॥

**(८९) लुगुक्तात् । [२।४।११।९।]** प्रोक्तार्थे योऽणादिस्तदन्ताद् वेत्त्यधीते वेत्त्यर्थे विहितो लुक् । पाणिनिना प्रोक्तं पाणिनीयम् । तद् वेत्ति, [अधीते वा] पाणिनीयः । आपिशला स्त्री । असावित्यनुवृत्तेरसौ वा । प्रोक्तार्थे लुक् क्वचित् । अथर्वणा प्रोक्तः, अथर्ववेदः । वशिष्ठोऽनुवाकः ॥११॥

**सूत्रादपि संख्याकादुद्धृतमत्रामत्रान्नियमे शेते स्थण्डिलतो भक्ष्यम् ।**
**संस्कृतमुख्यं शूल्यं ठणु दध्नो वोदश्वितः क्षीराड्ढक् पादः ॥२।४।१२॥ पुष्पविचित्रा ॥**

**(९०) सूत्रादपि संख्याकात् । [२।४।१२।१।]** संख्याया यो विहितः कस्तदन्तात् सूत्रवाचिनः, तद् वेत्त्यर्थे विहितो लुक् स्यात् । अष्टावध्यायाः परिमाणमस्य, अष्टकं सूत्रम् । तद् विदन्ति [अधीयते वा] अष्टकाः पाणिनीयाः । दशकाः वैयाघ्रपदीयाः । संख्या किम् ? कालापकाः । कात् किम ? चातुष्टयाः । अप्रोक्ताच्च ॥

**(९१) उद्धृतमत्रामत्रात् । [२।४।१२।२।]** अत्रेति सप्तम्यन्तात् पात्रवाचिनः, उद्धृतं भुक्तोच्छिष्टमित्यर्थे यथाविध्यणादिः स्यात् । शरावेषूद्धृत ओदनः, शारावः । कार्परः । अमत्रात् किम् ? पाणावृद्धृतः ॥

**(९२) नियमे शेते स्थण्डिलतः । [२।४।१२।३।]** नियमे व्रतेऽर्थे । तथा स्थण्डिले शेते । अण् । स्थाण्डिलो भिक्षुः । अव्रते वाक्यम् ॥

**(९३) भक्ष्यं संस्कृतम् । [२।४।१२।४।]** ङ्यन्तात् संस्कृतं, सत उत्कर्षाधानम्, इत्यर्थे यथाविध्यणादिः स्यात्, तत् संस्कृतं भक्ष्यं चेत् । भ्राष्ट्रे संस्कृता भ्राष्टा धानाः । पात्राः । अपूपाः । भक्ष्यं किम् ? फलके संस्कृता मालाः ॥

**(९४) ऊख्यं शूल्यम् । [२।४।१२।५।]** तयोः संस्कृते भक्ष्यमित्यर्थे स्तः । पिठरे शूले इव संस्कृतं पिठरः शूल्यम् । मयूरव्यंसकादित्वात् समासः ॥

**(९५) ठणु दध्नः । [२।४।१२।६।]** तथा । दाधिकम् । ३ निपातः ॥

**(९६) वोदश्वितः । [२।४।१२।७।]** तथा ठण् वा । औदश्वित्कम् । औदश्वितम् ॥

**(९७) क्षीरात् ढक् । [२।४।१२।८।]** तथा । क्षैरेयी यवागूः ॥१२॥ पादोऽष्टमोद्वितीयोऽध्यायः [समाप्तः] ॥

**[इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे द्वितीयाध्याये चतुर्थः, आदितो वाऽष्टमः, पादः ॥]**

—— • ——

# [ ॥ अथ तृतीयोऽध्यायः ॥ ]

## [ ॥ अथ प्रथमः पादः ॥ ]

**शेषे राष्ट्राद्घः खः पारावाराद्योऽपाक्प्राक्प्रत्यग्द्यू-।**
**दीच क्वादेस्त्यच्णोऽरण्याद् रूप्यान्ताद्दिक्प्राचो नाम्नि ।**
**मद्रादण् स्याद्राष्ट्रग्रामांशेऽर्धाद्योऽर्धाद्वरुण् सप्रजादेः ॥३।१।१॥ विद्युन्माला षट्पदी ॥**

( १ ) **शेषे** । [ ३।१।१।१। ] अपत्यादिभ्यः संस्कृतान्तेभ्योऽर्थेभ्योऽन्यः शेषः, तस्मिन् यथाविध्यणादिः स्यात् । चक्षुषा गृह्यते रूपं चाक्षुषम् । श्रावणः शब्दः । रासनो रसः । दार्शनं स्पार्शनं द्रव्यम् । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्णा औलूखला मुद्गाः । अश्वैरुह्यते आश्वो रथः । चातुरं शकटम् । शकटं वहति शाकटो गौः । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । च्छन्दोभिग्रथितः च्छान्दसो ग्रन्थः । अणोऽपवादानाह ॥

( २ ) **राष्ट्राद् घः** । [ ३।१।१।२। ] स्याच्छेषे जातादौ । राष्ट्रे जातो भवो वा राष्ट्रियः ॥

( ३ ) **खः पारावारात्** । [ ३।१।१३। ] समस्तव्यस्तविपर्यस्तात् खः स्याच्छेषे । अवारोऽविस्तस्य पारं राजदन्तादित्वात् पारावारः । तत्र जातादि । पारावारीणः । अपारीणः । अवारीणः । अवारपारीणः ॥

( ४ ) **योऽपाक्पाक्प्रत्यग्द्यूदीचः** । [ ३।१।१।४। ] यः स्याच्छेषेऽपागादेः । विपर्यस्तं ऽपाचि जातादिः । अपाच्यः । प्राच्यः । प्रतीच्यः । दिव्यः । औदीच्यः ॥

( ५ ) **क्वादेस्त्यच्** । [ ३।१।१।५। ] स्याच्छेषे । श्लोकोऽत्र

क्वकुत्रेहतसोऽमात्रान्निसो गते च नेर्ध्रुवे ।
ऐषमोह्यःश्वसोऽवात् क्वादेकदशको गणः ॥१॥

क्वत्यः । तसः । ततस्त्यः । कुतस्त्यः । त्रात् । तत्रत्यः । यत्रत्यः । निसो गते । निर्गतो वर्णाश्रमिभ्यः । निष्ट्यश्चाण्डालादिः । नेर्ध्रुवेऽर्थे नित्यः । इतो वा एपमस्त्यः । ऐषमस्तनः । ह्यस्त्यः । [ह्यस्तनः ।] श्वस्त्यः । [श्वस्तनः ।] शौवस्तिकश्च ॥

( ६ ) **णोऽरण्याद्रूप्यान्तात्** । [ ३।१।१।६। ] आभ्यां शेषे णः । आरण्याः सुमनसः । वार्करूप्यः ॥

( ७ ) **दिक्प्राचोर्नाम्नि** । [ ३।१।१।७। ] दिक्पूर्वपदादनाम्नि णः । पौर्वशालः । नाम्न्यण् ।

पूर्वेषुकामशमी स्त्री ॥

**(८) मद्रादण् स्यात् । [३।१।१।८।]** तथैव, न णः । पौर्वमद्री ॥

**(९) राष्ट्रग्रामांशेऽर्धात् । [३।१।१।९।]** जनपदस्य ग्रामस्य वांशाद् दिशोऽर्धाच्छेषेऽण् । तयोः पूर्वार्धजातादिः । पौर्वार्धः । दाक्षिणार्धः ॥

**(१०) यः । [३।१।१।१०।]** दिशोऽर्धात् तदंशे । पूर्वार्ध्यम् ॥

**(११) अर्धात् । [३।१।१।११।]** केवलार्थं परत्र व्याप्त्यर्थं च । आर्ध्यम् ॥

**(१२) ठञणसप्रजादेः । [३।१।१।१२।]** स्याच्छेषे ठञ् । जातिचतुष्कमत्र-

साद्यार्धकालाच्छरदस्तु श्राद्धे रोगातपे वा च निशाप्रदोषात् ।
तड् च श्वसः स्याद् भवतोश्च कन्थो देशात् पुरश्छे तु समानलोकात् ॥१॥

तत्प्राक्परोर्ध्वंदमऊर्ध्वदेहोऽध्यात्माधिभूतस्त्वधिदेववर्षे ।
यद्यन्तरः पर्यनुग्रामतो नीविजानुकर्णादुपतो भवेऽयम् ॥२॥

अर्थे च यज्ञद्वयजृगृत्क्रतोर्नामाख्याततो ब्राह्मण अध्वराच्च ।
अध्यायेष्वपेश्चरणात् पुरस्तोऽन्तो
दात्तबह्वजथमाच्च पौरोडाशात् पुरोडाशत एव ठण् स्यात् ॥३॥

भक्तौ महाराजतोऽदेशकालात् साधौ कथाद्यागत आयस्थानात् ।
अशुण्डिकादेर्ऋणतोऽग्रहायणीतोऽपि संवत्सरतो गणोऽयम् ॥४॥

साद्यर्धम् । अप्राच् अर्धम् । विद्यमानपूर्वपदादर्धात् । पौष्कराधिकः । दिगादेश्च । उत्तरार्धिकम् । तदंशवृत्तेश्च तयोः । पौर्वार्धिकः । तथा यथाकथञ्चित् कालवाचिनः । मासिकम् । सांवत्सरिकम् । कादम्बपुष्पिकम् । वैहिपलालिकम् । शरदः श्राद्धे पितृकार्य एव । शारदिकं श्राद्धम् । शारदोऽन्यः । रोगे आतपे वार्थे । वा । शारदिको वा । शारद एवान्यः । वैव । नैशः । प्रादोषिकः । श्वसः ठण् चात्र । तडागमश्च । शौवस्तिकम् । [श्वस्त्यः । श्वस्तनः ।] स्यादित्यतो नित्यम् । भवत इदं भावत्कम् । त्यदादेः छस् । भवदीयम् । शत्रन्तस्य तु भावतम् । कन्थोः । कन्थाया उवर्णान्ताच्च देशवाचिनः । कान्थिकः । वर्णौ वुञ् वक्ष्यति । ओः । शाबरजम्बुकः । नैषादकर्षुकः । देशात् किम् ? पटोश्छात्राः पाटवाः । पुरश्छे तु पूर्वदेशात् । छे । छविषये एव ठण् । आढकजम्बु । नापितवास्तु । प्राक् तु ग्रामौ । तत्र जातादिः । आढकजम्बुकः । [नापितवास्तुकः ।] छे किम् ? माल्ववास्तवः । एवं सामानिकः लौकिकः ॥१॥ तौ प्राक्परौ ययो तौ तत्प्राक्परौ । समानपूर्वपदात् । लोकान्ताच्चेत्यर्थे । सामानदैशिकः । ऐहलौकिकः । अतः परं भवेऽर्थे । और्ध्वन्दमिकः । [और्ध्वदेहिकः । आध्यात्मिकः । आधिभौतिकः । आधिदैविकः ।] वार्षिकम् । मकच्छणे देशाद्यर्थं भवेदत्र श्लोके । आदि अन्तर्यस्य ततोऽन्तः पूर्वात् । गेहस्यान्तर्भवः, आन्तर्गेहिकः । आन्तःपुरिकः । एवं पारिग्रामिकः । ग्रामं सर्वतोभव इत्यर्थः । एवम् औपनीविकः । [औपजानुकः । औपकर्णिकः ।] भवेऽर्थेऽयं श्लोकः, तत्प्रकारजार्थस्य प्राक्श्लोकार्थत्वात् । अन्ये यदिदे च पूर्वे तु

शेषे ॥२॥ अर्थे चेति विषयसप्तम्या वाच्यानाक्षिपति । एवं सर्वत्र । तेनास्यां पञ्चपद्यां सूत्रवाचिनः षष्ठ्यन्तात् तस्यार्थस्य व्याख्याऽतः । चकारात् तत्रभवोश्चेत्ययोश्च नाण् । यज्ञात् । न च यज्ञस्थोऽत्र भावो नाम याज्ञिकः । नावयज्ञिकः । पाकयज्ञिकः । एवं द्व्यच् । ऐष्टिकः । पाशुकः । ऋक् । आर्चिकः । ऋत् । ऋदन्तात् । चातुर्होतृकः । क्रतुः । आग्निष्टोमिकः । वाजपेयिकः । राजसूयिकः । यज्ञांशत्वात् क्रतुः स्पष्टार्थम् । एवं नामिकम् । आख्यातिकम् । नामाख्यातिकम् । इत्यादि । असन्तोदात्तत्वार्थम् । ऋषिवाचिनोऽध्यायेष्वेव वाच्येषु । वाशिष्ठिकोऽध्यायः । वैश्वामित्रिकः । अध्याये किम् ? वाशिष्ठी ऋक् । पुरस्तः पुरः परात्, चरणात् । पौरश्चरणिकः । अन्तोदात्तत्वाद् बह्वचः । षात्वणत्विकम् । नातानतिकम् । समासस्येत्यन्तोदात्तः । बह्वचः किम् ? सौपम् । तैङम् । अन्तोदात्तात् किम ? सांहितम् । उदात्तादयो विसर्जनीयवत् प्रसिद्धाः । पुरोडाशः पिष्टः पिण्डः । पौरोडाशः । ताभ्यां ठण्, नाण्, बहुलार्थत्वाद् गणानाम् । पौरोडाशिकः । पुरोडाशिकी । पञ्चपात् ॥३॥ भक्ताविति । तद्वत् प्रथमान्तात् सभक्तिः सेव्योऽस्येत्यर्थे । [स्रुघ्नो भक्तिरस्य स्रौघ्नः ।] महाराजात् । तथा देशकालवर्जितात् तदन्याचित्तवाचिनश्च ठक् स्यान्नाण् । माहाराजिकः । आपूपिकः । पायसिकः । साधाविति । तद्वत् तत्र साधुरित्यर्थे कथाद्यच्च पठ्यते ततष्ठक् स्यान्नाण् । कथायां साधुः प्रवीणः काथिकः इत्यादि । अत्र षट्पदी-

कथाविपक्षाज्जनवादवेणुसङ्ग्रामसङ्घातनिवाससक्तु- ।
प्रवासमांसौदनवृत्त्यपूपायुर्वेदजल्पसगुडोपवासाः ।
इक्षुर्जनेवादगणौ वितण्डा गुणो जनोवाद च सङ्ग्रहाद्याः ॥५॥

विपक्षाच्च कथा विकथा । आगते । तद्वत् । शुण्डिकादिवर्जादायस्थात् स्वामिग्राह्यांशोत्पत्ति-स्थानात् तत आगत इत्यर्थे ठक् स्यान्नाण् । स्थ लघु । शुल्कशालाया आयातः शौल्कशालिकः । आकरिकः । शुण्डिकादेरणेव । शौण्डिक इत्यादि । अत्रानुष्टुप्-

शुण्डिक उपदानश्च कृकणस्थण्डिलौ तथा ।
उपतीर्थस्तथा भूमि तृणपर्णौ गणः स्मृतः ॥६॥

ऋणादेः शेषे । आर्णिकः । [आग्रहायणिकः । सांवत्सरिकः ।] आश्वत्थिकोऽपि ॥१॥

**परावराभ्यामधमोत्तमाद् यो बल्ह्युर्दिपर्देः ट्यणु कापिशीतः ।**
**वा प्राणिरङ्कोर्मणाश्छमध्यान्मग्मितपृथिव्याश्चरणे निवासे ॥३।१।२॥ उपजातिः ॥**

**( १३ ) परावराभ्यामधमोत्तमाद् यः । [ ३।१।२।२। ]** परादेः परादर्धाच्छेषे य एव स्यात् । परार्ध्यम् । [अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् ॥]

**( १४ ) बल्ह्युर्दिपर्देः ट्यणु कापिशीतः । [ ३।१।२।२। ]** एभ्यः शेषे ट्यणु स्यात् । बा[ल्हा]यनः । [बाल्हायनी । और्दायनः । और्दायनी । पार्दायनः । पार्दायनी । कापिश्यायनः । कापिश्यायनी ।] टि स्त्र्यर्थः । कापिशायनी द्राक्षा । ३ निपातः ॥

**( १५ ) वा प्राणिरङ्कोः । [ ३।१।२।३। ]** ट्यण् अण् वा स्यात् । राङ्कवायणी, राङ्कवी वा

गौः । प्राणिवृत्तेः किम् ? राङ्कवः कम्बलः । कच्छादिवुञ् तु नृतत्स्थे । राङ्कवको नरः ॥

**(१६) ममणाः छमध्यात् । [ ३।१।२।४। ]** म मण् आ एते स्युः शेषे मध्याच्छश्च । मध्यमः । माध्यमः । युक्ते उचितेऽर्थे अः । मध्यो वैयाकरणो, नातिहीनोत्कृष्टः । मध्यं काष्ठं, नातिह्रस्वदीर्घम् । मध्या स्त्री । छः । मध्यीयः ॥

**(१७) मक् । [ ३।१।२।५। ]** मध्यस्थः, मगागमश्च । मध्यमीयः ॥

**(१८) मित् पृथिव्याः । [ ३।१।२।६। ]** पृथिव्याः परान्मध्यस्थोऽत्र मक् च मित् सर्वलुक्, श्रुतत्वात् पृथिव्याः । पृथिवीमध्यादागतः मध्यमीयः ॥

**(१९) चरणेऽण् निवासे । [ ३।१।२।७। ]** तथैव चरणवाच्येऽण् स्यान्न च्छोऽस्य निवास इत्यर्थे । पृथिवीमध्ये निवास एषां मध्यमाः, त्रयो वैशम्पायनशिष्याः ॥२॥

**द्वैप्योऽन्वप्वि ग्रामात् खञ्यौ वाहीकेभ्योऽण् नदादेः ।**
**दूरादेत्यः थोऽन्तःस्थादेरग्रान्तादेश्चेमन् पश्चात् ॥३।१।३॥ विद्युन्माला ॥**

**(२०) द्वैप्योऽन्वप्वि । [ ३।१।३।१। ]** समीपं चेद् द्वीपो य्वो निपात्यते । द्वैप्यः । अन्वप्वि किम् ? यमुनाद्वीपे जातो द्वैपको व्यासः ॥

**(२१) ग्रामात् खञ्यौ । [ ३।१।३।२। ]** शेषे स्तः । ग्रामीणः । ग्राम्यः ॥ कत्र्यादौ ढकञ् । ग्रामेयकः ॥

**(२२) वाहीकेभ्योऽण् । [ ३।१।३।३। ]** शेषे स्यात् । षट्पादद्वयं, वृत्तमिहादिमार्ये

वाहीक गोष्ठी च पटच्चरो तेकी गोमती यक् सकलादितोऽपि ।
गोत्रादिकोऽप्रास्तरतद्व्रचोऽतो हेमन्तवर्षर्तु च सन्धिवेला ।
संवत्सरे पर्वफले त्रयोदश्याद्याश्च सन्ध्याध्वनि पौर्णमासी ॥१॥

कोपान्तकच्छान्तपरं ञ्ठ रङ्कुकश्मीरशाल्वाः कुरुकर्णवर्णाः ।
गन्धारकम्बोजविरूपकाश्च द्वीपानुषङ्गोऽजपादसिन्धू ।
कुलं त्वनूपच्च अमी तु देशे ग्रीवा भवेऽर्थे च मुहूर्तशिक्षा ॥२॥

संवत्सरोपात्तनिमित्तयज्ञाः न्यायो निरुक्तः पुनरुक्तचर्चे ।
श्लक्ष्णं तथोत्पादक्रमोत्तरौ च ॥३॥

विद्या क्षेत्राङ्गवास्तोश्च च्छन्दोतो भाष नाम च ।
विचितिर्विजितश्चेति निगमोपनिषत्पदः ।
व्याख्यानर्गयनं चेति उरसा त्वकृतस्तथा ॥४॥

पलदीपरिखातत्वान् कर्पट्टकलकीटशूरसेनाः स्युः ।
उदयानो यकृल्लोम कमलिदा चेति बहुकीटम् ॥५॥

वाहीके जातादिः । वाहीकेऽतत्स्थे प्राप्ते गोष्ठ्यादेः रोपान्तेतो वुञ् । यज्ञादेर्वृद्धादेरुक्ता-वपत्याट्ठकिञ । क्रत्वादेः कालाट्ठञि । कोपान्तादेर्देशवाचिनो राष्ट्राद् वुञ्यञ्येञन्ताः । शाकल्याच्छात्राः शाकलाः । गोकक्षाः । शकलादिः गर्गाद्यन्तर्गणः । यञि कसेणुच्छात्राः । शाकलीयाः । गोत्रात् पौत्राद्यन्तादिञ् । दाक्षाः । पान्नागाराः । यौधिष्ठिराः । प्राच्यभरतद्व्यचो विहिताद् इञो न तु । चैदीयाः । पौष्कीया । काशीयाः । वाशीयाः । अत इत्यकारमात्राद् इञः, न णादेः । औपगवीयाः । गोत्रात् किम ? दाक्षीयाः । हेमन्तस्य तु इञ् वाऽण् ठञ्वा । हैमनम् । हैमन्तम् । हैमन्तिकम् । ऋतुभ्यः । शैशिरम् । वासन्तम् । गैष्मम् । वर्षा । ठञुक्तः । वार्षिकम् । भात् । पौषः । तैषः । एवं सान्धिवेलम् । पर्वफलयोः । सांवत्सरम् । सांवत्सरिकोऽन्यः । त्रयोदशी । आदि । चतुर्दशी । पञ्चदशी । अमावाश्या । अमावास्या । प्रतिपत् । एभ्योऽण् । एवं कोपान्तात् । ऋषिकः । मारिषिकः । आश्मकः । इक्ष्वाकुः । ऐक्ष्वाकः । एवं काच्छ इत्यादि । अनूपत्वान्तः । काच्छः । आजवाहः । रोत्यनृतत्स्थे वुञ् वक्ष्यति । अमी तु देशे वाच्ये । आभ्यां च । माघीप्रस्थः । माहिषीप्रस्थः । कषतीरम् । पल्वलतीरम् । न च्छः । षट्पदीद्वयम् । ग्रीवाऽत्र भवे, न शेषे । ग्रीवायां भवं ग्रैवम् । नेदेहासाद्यः, नदीकत्वादिपाठात् । ग्रैवेयम् । ग्रैवेयकम् । अर्थे चेति तद्वत् । तत्र भवः, तस्यार्थो वा व्याख्यान इत्यर्थयोरेचवद्व्चोऽन्तोदात्ता ठञि प्राप्ते । मौहूर्त इत्यादि । विद्या केवला । क्षेत्राङ्गवास्तुपूर्वाच्च क्षेत्रविद्या । [अङ्गविद्या । वास्तुविद्या ।] छन्दः केवलम् । अतः परं भाषादिचतुष्टयं च । छन्दोभाषा । [छन्दोनाम । छन्दोविचिति । छन्दोविजिति ।] एभ्योऽण् । उरसा कृत इत्यर्थे । औरसः पुत्रः । तथेति प्राग्वच्छेषे । पलद्यादेः । पलद्यां जातादि पालद इत्यादि । अन्ये उदीच्यग्रामाद् बह्वचोऽन्तोदात्तादञिति । शैवपुरम् । माण्डवनगरम् । व्यावृत्तावण् स्वरार्थम् । अनुदीच्यात् । माथुरम् । अबह्वचः । ध्वजी । ध्वाजम् । अन्तोदात्तात् [किम् ?] शार्करीधानम् । तत्रौत्सर्गिक एवाण् । पलद्यादेश्च । किन्तु वाहीकग्रामात् ञिकठञोर्बाधनार्थम् ॥

**(२३) नद्यादेः । [३।१।३।४।]** ठक् शेषे । गाथेह गीतिस्तु—

नदी मही काशफरी वाचा वाणारसी काशहरी च वामा ।
कामस्थली स्याद् वडवा वृषेत पामा च शाल्वा च पुरसेनकी च ।
ग्रावा च दार्वा गिरि धातकी च स्यात् खादिरी कोशवनानि गाथा ।१।

कौशाम्बी श्रावस्ती पूर्वनगर्यौ भवे तु दृति कुक्षि ।
वस्त्यस्त्यहिकलशितः साधौ पथ्यतिथिवसतितः स्वपतेः ॥२॥

नादेय इत्यादि । भवे तु तत्र भवे तु इत्यर्थे दृत्यादेः दार्तेयः । [कौक्षेयः । वात्स्येयम् । आस्तेयम् । आहेयम् । कालशेयम् । साधौ । तत्र साधुरित्यर्थे अतः । पाथेयः । [आतिथेयः । वासतेयः । स्वापतेयम् ॥]

**(२४) छोऽन्तस्थादेः । [३।१।३।५।]** शेषे । इह वृत्तमार्यास्तिस्रोऽथ गाथादिमनुष्टुबार्ये-

अन्तस्थकाठेरणि भौजि सौविदन्ताग्रवाराटकिपूर्वपक्ष- ।
अहिंसिवाल्मीकिसमाङ्गसौङ्गि आमित्रिखाडायनि एकवृक्ष ॥१॥

विषमोत्तममगधगहा एकपलाशान्तरेष्वनीकाः स्युः ।
इष्वग्रासुरिशैशिरिकामप्रस्थाग्निशर्मि स्यात् ॥२॥

आध्यश्व्येकग्रामेऽपरपक्षक्षैमवृद्धयो व्याडिः ।
सौवेरणिस्त्वनुत्तर एतेऽवस्यन्दनान्यौ च ॥३॥

शाखोऽधमोत्तमसमानात् पार्श्वैकमुखतस्तश्चेत्कः ।
स्वपरजनदेवराज्ञं णिन् माध्यामवेत्रवेणूनाम् ॥४॥

प्रस्थोत्तरपदाभ्यां छोऽजिह्वाकात्यहरितकात्यतस्त्यज्झलादेजाद्यचो देशात् ।
कटाद्येङाद्यश्च पुरो नृनाम्नो वा भवतः सित् जिह्वामूलाङ्गुलेर्भवे ॥५॥

छे ग्रामकन्थापलदहृदन्तात् कखोपधाया नगरान्ततोऽपि ।
गर्तान्तिपर्णकृकणाद् भरद्वाजात् पर्वताद् वा त्वनरे त्वतस्ते ॥६॥

रेवतिकौदामधिभ्यां स्वापिशिवैजवापितः ।
क्षैमवृद्ध्यौदवाहिभ्यां गौरग्रीवेः फिवुञि ॥७॥

ग्रन्थे सीतान्वेषणयमसभशिशुक्रन्देन्द्रजननेभ्यो-।
ऽदेवासुरराक्षोऽसुरो गुणमुखयत्कार्थेभ्यो गाथा ॥८॥

अन्तस्थीय इत्यादि । शाखः अधमादिः । अधमशाखः । [उत्तमशाखः । समानशाखः ।] पाश्वैकमुखेभ्यः तसोऽन्त इल्लुक् च । पार्श्वतीयः । [एकतीयः । मुखतीयः ।] कडागमश्च स्वादेः । [स्वकीयः । [परकीयः । जनकीयः ।] णि । मध्यमादेः । कट् च । माध्यामकीयः । [वैत्रकीयः । वैणुकीयः ।] प्रस्थोत्तरपदाभ्यां णि च्छः स्यान्न काः । प्रास्थीयः । [औत्तरपदीयः ।] त्यत्लपदान्ते आत्वे एव । आद्यच् यस्य तस्माच्च । त्यच् प्रत्याहारः । जिह्वाकात्यहरितकात्यवर्जितात् । तदीयः । किर्मीयः । तथा शालीयः । एतिकायनीयः । गोरक्षीयः । औपगवीयः । आदि किम् ? साभासन्नयनः । अत् किम् ? हलादेरपि यथा स्यात् । नेह । जैह्वाकाताः च्छात्राः । [हारितकाताः] अत एवापत्यान्तादिवदुत्तरपदात् । पाणिनीयाः । घृतरौढीयाः । कम्बोजवारणीयाः । देशात् पुरः । प्राग्देशवाचिकटाद्येङाद् य च । कटनगरीयः । कटग्रामणीयः । तथा एणीपचनीयः । गोनर्दीयः । यात् किम् ? देवदत्तो [नाम] वाहीकेषु ग्रामः । क्रोडः । उदर्कः । देवदत्तः । एङादचो मनुष्यनाम्नो वा । देवैदत्तीयः । देवदत्तः । भवतः छः सित् । भवदीयः । जिह्वामूलाङ्गुलेः । तत्र भवः इत्यर्थे, न शेषे । जिह्वामूलीयः । [अङ्गुलीयः ।] पट्पदी ॥५॥ छे । छविषये छ एव नान्यः ग्रामाद्यन्तात् । दाक्षिग्रामीयः । [दाक्षिकन्थीयः । दाक्षिपलदीयः । दाक्षिहृदीयः ।] गोमयहृदीयः । कखोपान्तात् । आरीहणकीयः । शाल्मलिकीयः । अश्वत्थकीयः । आष्टकं नाम मरुदेशे । आष्टकीयः । राष्ट्रात् । ब्राह्मणकीयः । तथा कौटिशिखीयः । आयोमुखीयः । नगरगर्तान्तात् । दाक्षिनगरीयः । वृकगर्तीयः । श्वाविद्गर्तीयः । रोहिद्गर्तीयः । कृकणपर्णाभ्यां भारद्वाजदेशाभ्याम् । कृकणीयः । [पर्णीयः ।] भारद्वाजात् किम् ? कार्कणः । [पार्णः ।] एवं पर्वतीयो नरः । अनरे तु वा एव । पर्वतीयं, [पार्वतं] फलम् । रेवतस्य स्वमित्यर्थे इतः अपत्यात् वुञि प्राप्ते । रेवतिकीयः । ग्रन्थे । अतः परेभ्यो

द्वितीयान्तेभ्यः तमधिकृत्य कृतो ग्रन्थ इत्यर्थेऽणि प्राप्ते । सीतान्वेषणीयो ग्रन्थः इत्याद्याकृतिगणत्वात् । प्रद्युम्नागमनादेः तथा अदेवासुरादेः चार्थे रः । नार्थो द्वन्द्वः रिदरिति प्रत्याहारार्थः । ततः काकोलुकीयः । शब्दार्थसम्बद्धीयः । वाक्यपदीयं प्रकरणम् । अदेवासुरादेः किम् ? दैवासुरः । [राक्षोऽसुरः ।] गुणमुखाद्यणित्यर्थः ॥ गाथार्याः ॥८॥

(२५) **दूरादेत्यः** । [३।१।३।६।] शेषे । दूरत्यः ॥

(२६) **अग्रान्तादेश्चेमन्** । [।३।१।३।७।] अग्रिमः । अन्तिमः । आदिमः ॥

(२७) **पश्चात्** [।३।१।३।८।] इमद् । पश्चिमः । पृथक्क्यणर्थम् ॥

**दक्षिणाकुतःपुरस्त्यणौत्तराहः खञण् च युष्मदस्मदोर्ङ्कैकतायाम् ।**
**तौतवौ ममश्च कत्रितो ढकञ् वृजिमद्रितः को देशकाशितो ञिठठञ् ॥३।१।४॥ यवमती ॥**

(२८) **दक्षिणाकुतःपुरस्त्यण्** । [३।१।४।१।] भ्यस् लुक् । एभ्यः पश्चाच्च शेषे त्यण् । दाक्षिणात्यः । कौतस्त्यः । तसः त्यप् च । कुतस्त्यः । पौरस्त्यः । पाश्चात्यः ॥

(२९) **औतराहः** । [३।१।४।२।] उत्तरादाहञ् शेषे ॥

(३०) **खञण्च युष्मदस्मदोर्ङ्कः** । [३।१।४।३।] आभ्यां शेषे खञ् अण्वा त्यदादि छश्च स्यात् तयोर्ङ्कान्तश्च । यौष्माकीणः । यौष्माकम् । [आस्माकीनः । आस्माकम् ॥]

(३१) **एकतायां तौतवौ ममश्च** । [३।१।४।४।] एकत्वे तौ क्रमेण तव मम च । तयोर्ङ्कान्तश्च तयोः । तावकीनम् । मामकीनम् । तावकः । मामकः ॥

(३२) **कत्रितो ढकञ्** । [३।१।४।५।] षट्पादिह-

कत्रिचर्मण्वतीग्रामकुड्याकुडवशौण्डकः ।
पुष्करपुष्कलोम्भिश्च कुण्डिना नगरीकुलाः ।
ग्रीवाकुक्षेश्च भूपार्थाशिपु माहिष्मती गणः ॥१॥

कात्र्ययकः । कुण्डया कुडव कौण्डेयकः । कुलग्रीवाकुक्षेः । क्रमेण श्वनि भूषणे असौ । कौलेयकः । [ग्रैवेयकः । कौक्षेयकः ॥]

(३३) **वृजिमद्रितः कः** । [३।१।४।६६।] शेषैव, न राष्ट्राद् वुञ् । वृजिकः । [मद्रकः ॥]

(३४) **देशकाशितो ञिठठञ्** । [३।१।४।७।] देशवाचिकाश्यादेः शेषे ञिठठञौ स्तो न च्छादि । अस्मिन्नपि वृत्तषट्पात्

काशिः सुधामित्रहिरण्यसंवाहगोवासनदैवदत्ताः ।
सौधावतानो युवराजदासग्रामोपराजाच्युतमोदमानाः ॥१॥

स्याद्धस्तिकर्पूः करणं सुनामन् सांयाति सारङ्गि च दासमित्रः ।
सायान्तकावी अपि सिन्धुराजः पूर्वादिकालादपि देवराजात् ।
वाहीकग्रामाच्छ उशीनरे वा स्याच्छोममित्रादपि सङ्कुलादात् ॥२॥

काशिका । काशिकी । देशात् किम् ? काशीयाः छात्राः । उदीच्यात् । दैवदत्तिकः । [दैवदत्तीयः] वाहीकात् तत्तदञो न पार्थक्यात् । दैवदत्तः । जसावृत्तेः पूर्वादि पूर्वपदात् कालात् । पौर्वकालिकः । और्ध्वकालिकः । आपत्कालिकः । [और्ध्वकालिकी । आपत्कालिकी ।] ठञङ्यर्थः । वाहीकग्रामाच्छ विषये । शालक्ये जाता शाकलिका । शाकलिकी । वोशीनरेषु ग्रामात् । आह्वजाले भवा, आह्वजालिका । आह्वजालिकी । आह्वजालीया । आकृतित्वाद् अरिन्दमादेः ॥४॥

**धूमादितो वुञ् तनट्टिच्चिरं प्रगे प्राह्नेऽव्ययाद् वाऽच्त्र परुत्परारे-।**
**श्चिरात्तथा प्रावृष एण्य जातः ठोऽत्रापि लुग्नाम्नि तु कादि भादेः ॥३।१।५॥ उपजातिः ॥**

**( ३५ ) धूमादितो वुञ् । [ ३।१।५।१। ]** शेषे देशवाचिनः । वसन्तषट्पाच्च वितानवंशाः पट्पार्दवितानै इह

धूमार्जुनायनशशादनशाष्पघोषा आनर्तराजगृहमुज्जयिनी विदेहः ।
मापस्थलीपवरमित्रकुलान्तरीपा आवर्तपयलपडाण्डपरेतगता ॥१॥

नौन्त्रोः समुद्रादवयापट्टारः सौवीरतस्तीर्थकुलाद्व्याहावः ।
दाण्डायनस्थल्यरुणौ च कुक्षिः त्र्याहावसंस्थाय च धार्तराज्ञी ।
अञ्जीकुलः मद्रकुलावसेयो पाटेयसाकेतकषायवल्ली ॥२॥

दक्षिणापथभक्षाली आराज्ञी भद्रकस्थली ।
सत्रासहयवासाहे द्वीपश्च साहकस्थली ॥३॥

प्रावीण्यनिन्द्ये नगरादरण्यत अध्यायन्यायाच्च विहारकुञ्जरे ।
वा गोमयेऽथापि युगन्धरात् कुरोः साद्यग्निकच्छादथ वक्त्रवर्ततः ॥४॥

कच्छनृतत्स्थतोऽपदाति साल्वः वर्णौ तु कन्था च सगोयवाग्वोः ।
छे धन्वराष्ट्रार्थबहुत्वयोलः सादेः वहप्रस्थपुरा पात्तैः ।
प्राच्यात् कृलालादिकृते वसन्तग्रीष्मात्तदाग्येऽथ सदाश्वयुज्याः ॥५॥

भक्तौ राज्ञः पितो वा स्वे वाऽशिष्यदण्डमाणवे ।
मिद्विद्यायोनिबन्धादागते उश्चरणाज्व्यचि ॥६॥

ग्रीष्मावरसमाद् वर्णे संवत्सराग्रहायणी ।
भ्यामश्वत्थकलापिभ्यां यवबुसादञित्तथा ॥७॥

धौमक इत्यादि । नौन्त्रोः समुद्रात् । सामुद्रिका नौः । नरश्च । एवं सौवीरार्थः । तीर्थकुलाभ्याम् । असौवीरेऽण् । इतो देशेऽपि । प्रवीणे निन्द्ये चार्थे नगरात् । प्रवीणा हि नागरकाः

भवन्ति । एवं चौरा हि [नागरका भवन्ति ।] कत्यादौ । नागरेयकः । अनयोः किम् ? नागरोऽत्र । अरण्यात् न्रादिष्वर्थेषु । आरण्यको नरोऽध्यायो न्यायः पन्था विहारो हस्ती वा । गोमयेऽर्थे वाऽणेव । आरण्यको, [आरण्यो] गोमयोऽध्यः । अध्यायादौ च वा, नरे नित्यम् । तदत्राथशब्दात् । युगन्धरात् कुरोश्च वुञ् अण् वा । यौगन्धरकः [यौगन्धरः । कौरवकः । कौरवः । कच्छादित्वात् ।] नृतत्स्थे नित्यम् । कौरवको ना । तद्वासश्च । अपि किम् ? नातो वासादि सपूर्वपदादग्न्यादेः देशे । कालाग्नकः । भारुकच्छकः सैन्धुवक्त्रकः । चाक्रवर्तकः । कच्छ च । कच्छाद्यन्तयजत्वान्नरे तत्स्थे चार्थे । काच्छको नरः । तद्वासो वा । अन्यत्र काच्छः । कच्छादौ नृतत्स्थे साल्वात् सिद्धेऽपदातावेव । पदातिस्तु साल्वः । वर्णु नदस्तदासन्नो देशोऽपि, तत्र । काच्छको गौः । वर्णौ किम् । कान्थिकः । अत्र स इति पुंनिर्देशात् साल्वः गोयवाग्वोरर्थयोः । च्छन्दोऽर्थं व्यत्ययः । साल्वको गौः । साल्विका यवागूः । साल्वोऽन्यः । छे । छविषये धन्वार्थात् । पारधन्वकः । ऐरावतकः । राष्ट्रार्थात् । आहिसारकः । आदर्शकः । श्यामायनकः । व्यक्त्यर्थोऽर्थः । आहिसारगर्तकः । बहुत्वात् । बहुवचनविषयाद् राष्ट्रार्थात् । अङ्गेषु भवः, आङ्गकः । वाङ्गकः । दार्वकः । चार्वकः । आजरुन्दकः । अन्रादेव । त्रैगर्तकः । अच्छेऽपीदम् । बहुत्वात् किम् ? एकत्वद्वित्वार्थान्न । वर्तनीषु तु जातो वार्तनः । देशभेदाद् बहुत्वम् । णे लः यकारादलपतो योपान्तात् । शाङ्काश्यकः । काम्पिल्यकः । सादेः । सप्राक्पदाद् वहादेः । पैलुवहकः । फाल्गुवहकः । मालाप्रस्थकः । शोणाप्रस्थे प्राग्देशे भवः शौणाप्रस्थकः । हास्तिनपुरकः । वाहीकग्रामादपि । वानप्रस्थकः । नान्दीपुरकः । कौमुदीवहकः । दाशरूप्यकः । छे किम् ? शैवपुरम् । रूपान्तैः । रेफोपान्तादीकाराच्च प्राग्देशवाचिनच्छे । पाटलिपुत्रकः । रैवतककः । काकन्दकः । माकन्दकः । प्राच्यात् किम् ? दासमित्रीयः । छे किम् ? । दाशपुरः । इतः परं प्रत्येकार्थे बहुलार्थत्वाद् गणानां नाण् । कुलालाद् वुञ् कृतार्थे । तृतीयान्तात् तेन कृत इत्यर्थे नाम्नीष्यते । कुलालेन कृतं कौलालकम्, इत्यादि । नाम्नि किम् ? कौलालः श्लोकः । अत्र पञ्चपदी-

कुलालचाण्डालनिषादसेनासिरिन्ध्रकर्मारवधूश्वपाकाः ।
ब्रह्मञ्च रुद्रो निषादो रुरुश्च स्याद् देवराजो वरुटोऽपि पर्षत् ।
स्तः कुम्भकारानुडुहौ च गाथा ॥८॥

उप्ते । तत्रोप्तमित्यर्थे वुञ् च । आभ्यां वसन्ते उप्तं सस्यं, वासन्तकम् । ठञणौ च । ग्रैष्मकम् । ग्रैष्मम् । ठ नित्यम् । आ[श्विनी]युक्ता पौर्णमासी आश्वयुजी । अश्विनीत्यर्थः । तत्रोप्ता आश्वयुजा माषा । पट्पदी ५ ॥ भक्तौ । प्रथमान्तात् सोऽस्य भक्तिः । सेव्यत इत्यर्थे । क्षत्रियवाचिनः अपत्यान्ताच्च । वेति बहुलम् । नकुलो भक्तिरस्य नाकुलकः । साहदेविकः । पितः । गार्गकः । औपगवकः । ग्लौचुकायनकः । दाक्षकः । न च । पाणिनीयः । पौरवीयः । स्वे वेति । अपत्यान्तात् भक्तौ चोदाहृतम् । तस्य स्वमित्यर्थे च । गार्ग्यस्य स्वं, गार्ग्यम् । तत्स्वम् । अशिष्यदण्डमाणवं किम् ? गोकक्षस्य शिष्याः, गौकक्षाः । दाक्षेर्दण्डमानवाः दाक्षाः । पान्नागाराः । रैवतिकीयाः । निदिति । विद्यया योन्या वा कृतसम्बन्धा, ये च तद्वाचिनः, तत आगत इत्यर्थे । उपाध्यायदागतम् औपाध्यायकम् । आचार्यकम् । शैष्यकम् । मातामहकम् । पैतामहकम् । मातुलकम् । मित्करणमेतदर्थोपलक्षणार्थम् । तेन मितः प्रकृतेर्यः प्रत्ययः स विद्यायोनिसम्बन्धाद् द्रष्टव्यः । यः

प्रागुक्तो वुञ् स मितो विद्यायोनिसम्बन्धात् । उः । ऋवर्णान्ताद् आगतेऽञ् वक्ष्यते । होतृकम् । मातृकम् । ञ्व्यचीति । षष्ठ्यन्तात् तस्याम्नायसमूहवर्गा इत्यर्थे नडादेः कुग्युक्तः, तदर्थे चरणवाचिनो वुञ् क्रोचश्चिदेतदर्थः । कठानामाम्नायः संघः धर्मो वा । काठकः । मौदकः पौप्पलादकः । ग्रीष्मवरसमाद् वुञ् ऋणे इति सप्तम्यन्तात् कालवाचिनो देयमृणमित्यर्थे । संवत्सराग्रहायणीभ्यां वा । वात्र सम्बध्यते । अश्वत्थादे रञित् । वुञात्र गित्यर्थे । ग्रीष्मे देयमृणं ग्रैष्मकम् । अवरासमा । अवरसमम् । तिष्ठद्ग्वादौ । आवरसमकम् । एवं सांवत्सरिकम् । [सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् ।] कालात् ठञ्वुञौ । यस्मिन् काले अश्वत्थाः फलन्ति, मयूराः कलापिनो भवन्ति, यवानां बुसमुत्पद्यते, स तथा देयमृणम्, अश्वत्थकम् । [कलापकम् । यवबुसकम् ।]

**( ३६ ) तनट्टिच्चिरं प्रगे प्राह्णेऽव्ययात् । [ ३।१।५।२। ]** एभ्यः शेषे तनट् स्यात् । टित् । मुमन्ते निपातनात् । चिरे जातादि । चिरन्तनम् । प्रगेतनम् । अव्ययात् । सायं भवः सायन्तनः । प्राक्तनः । दिवातनः । कालादेव । स्वर्भवः सौवरः ॥

**( ३७ ) वाऽच् । [ ३।१।५।३। ]** अपराह्नपूर्वाह्णाद् अच् वाऽत्र पठ्यते । ततः शेषे तनट् स्यात् । कालात् ञ् वा । अपराह्णेतनी । [पूर्वाह्णेतनी ।] आपराह्णिकम् । [पौर्वाह्णिकम् ॥]

**( ३८ ) त्नः परुत्परारेश्चिरात् । [ ३।१।५।४। ]** एभ्य कालेभ्यः शेषे त्नः स्यात् । परुत्नः । [परारित्नः । चिरत्नः ।] टित्तनो वा ॥

**( ३९ ) तथा प्रावृष एण्यः । [ ३।१।५।५। ]** तथेति शेषे स्यात् । प्रावृषि भवः प्रावृषेण्यः । इतः परस्तु नियतेऽर्थे ॥

**( ४० ) जातः ठोऽत्र । [ ३।१।५।६। ]** अत्र प्रावृषि जातः इत्यर्थे ठः स्यान्नैण्यः । प्रावृषिकाः ॥

**( ४१ ) अपि । [ ३।१।५।७। ]** जातोऽत्रेत्यनुकर्षार्थोऽपिः । अत्रापि सप्तम्यन्ताज्जातेत्यर्थे यथाविध्यणादि घादिश्च स्यात् । स्रुघ्ने जातः, स्रौघ्नः । औत्सः । राष्ट्रियः । [अवार-]पारीणः । जातः किम् ? स्रुघ्ने भुङ्क्ते शेते इत्यादि ॥

**( ४२ ) लुग्नाम्नि तु कादि भादेः । [ ३।१।५।८। ]** नक्षत्रादेस्तत्र जात इत्यर्थे कादयः स्युः । त्विति बहुलम् संज्ञागतौ लुक् च । गाथेहानुष्टुभौ च-

मूलप्रदोषार्द्रपथिस्तु पन्थोऽपराह्णपूर्वाह्णजावस्करात् कः ।
काणामीभ्योऽपकराच्च सिन्धोः काल्लुग्विशाखाबहुलानुराधा ।
स्थानान्तगोशालपुनर्वसुभ्योऽपि तिष्यहस्तात् खरशालतोऽपि ॥१॥

रेवतीरोहिणी चित्राभ्यः स्त्रियां तज्जमृगशिरः ।
वत्सशालाभिजिदश्च वुञ्च नृभिषजो न वा ॥२॥

टातौ फल्गुन्यषाढाभ्यां श्रविष्ठाषाढतस्तु छण् ।
निदण्वा वुञ् शरदस्तु अधोऽवसो डमो गणाः ॥३॥

मूले जातः मूलकः । आद्रकः । भान्नाण् । प्रदोषकः । न वाञ् । पथिन् पथः स्यात् । पन्थकः । नाण् । अपराह्णकः । [पूर्वाह्णकः ।] वाऽचो नः । तन ञौ । अवस्करकः । नाण् । का इति । क अ एतौ स्तः । अमावस्या । वद्‌भिस् पर्यायार्थम् । अमावस्यकः । अमावस्यः । आमावस्यकः । [आमावस्यः ।] त्रयोदशाद् य एव । आमावास्यः । आभ्यां क अण् च स्तः । अपकरकः । सिन्धुकः । अण् च । [सैन्धुकः । आपकरः ।] नाणेत् । कच्छादिसिद्धौ नृतत्स्थवुञ् लुक् स्याज्जातार्थे । अणादि विशाखादेः । विशाख इत्यादि ।ट्याङोर्लुगणादि लुकि । रेवत्यादिः स्त्रियां लुक् । रेवत्यां जाता रैवती । [रौहिणी] गौरादिङी चित्रा । तदिति स्त्रियो नात्र रेवत्यादेः । मृगशिर आदेश्च । लुग्वाऽण् वा जातार्थे । रेवतिः । रैवतः । [रोहिणी । रौहिणः । चित्रा । चैत्रः । मृगशिराः मार्गशीर्षः । टअत् । एतौ क्रमेणाभ्यां स्तः । फल्गुनी । अषाढा । स्त्री लुग्वा । फाल्गुनः । आषाढः । श्रविष्ठाषाढाभ्यां छण् । लुग्वा । श्राविष्ठीयः । श्रविष्ठः । नाण् । टिदण् । बहुलं भात् । शातभिषः । शातभिषजः । वुञ् शरदः, न ऋत्वण् । शारदकाः दर्भाः मुद्गाश्च, नाम । अधस् [अवस्] आभ्यां डमः स्यात् । अधमः । अवमः । अनाम्नि यथाप्राप्तमेव । मौलः । आपराह्णिकः । [पौर्वाह्णिकः ।] पूर्वाह्णेतनः । [अपराह्णेतनः ।] यावत् शारदं सस्यम् ॥५॥

**क्रीताप्तसंभूतकृता अभिज्ञः साधूप्तपुष्यत्त्विह पच्यमानम् ।**
**कालादृणं देयमृणन्मृगस्तु भक्ताण्ण साधुर्ण्यण पर्षदो यक् ॥३।१।६॥ इन्द्रवज्रा ॥**

**( ४३ ) क्रीताप्तसम्भूतकृता अभिज्ञः । [ ३।१।६।१। ]** ङ्यन्ताद् यथाविध्यण्घादी स्तः क्रीत्याद्यर्थे । स्रुघ्ने क्रीतः लब्धः संभवति कृतः कुशलो वा स्रौघ्नः । [माथुरः । नादेयः ।] राष्ट्रियः । [पारीणः ।]

**( ४४ ) साधूप्तपुष्यत्विहपच्यमानं कालात् । [ ३।१।६।२। ]** कालवाचिनः अण्घादी स्तः साध्वादौ । हेमन्ते साधुः हैमन्तः, हैमनो वा प्रावारः । शैशिरमनुलेपनम् । हेमन्ते उप्यन्ते [हैमन्ताः] हैमनाः [वा] यवाः । ग्रैष्माः शालयः । वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः । ग्रैष्म्यः पाटलाः । शरदि पच्यन्ते शारदाः शालयः । ग्रैष्मा यवाः ॥

**( ४५ ) ऋणं देयम् । [ ३।१।६।३। ]** ङ्यन्तकालाद् यथाविध्यण्घादी स्तः, देयमृणमित्यर्थे । मासे देयं मासिकम् । सांवत्सरिकम् । ऋणं किम् ? मासे देया भिक्षा ॥

**( ४६ ) ऋणन्मृगस्तु । [ ३।१।६।४। ]** ङ्यन्तकालाद्यथाविधि तौ स्त ऋणन्निति व्याहरति मृग इत्यर्थे । निशायां व्याहरति मृगः नैशः, नैशिकः । प्रादोषः । प्रादोषिकः । [मृगः] किम् ? निशायां व्याहरत्युलूकः ॥

**( ४७ ) भक्ताण्ण साधुः । [ ३।१।६।५। ]** भक्ते साधुरित्यर्थे णः स्यात् । भक्ताः शालयः । तण्डुलाः साधुर्योग्यः प्रवीणो वा ॥

**( ४८ ) ण्यण पर्षदः । [ ३।१।६।६। ]** सः साधुरत्रेत्यर्थे । पार्षद्यः । पार्षदः ॥

**( ४९ ) यक् । [ ३।१।६।७। ]** ङ्यन्तात् साधुरित्यर्थे [य] स्यात् । कर्मणि साधुः, कर्मण्यः । शरण्यः । वे[मन्यः] । सामन्यः । पित्र्यः । कित् ऋजर्थः ॥६॥

**कखञ्भयेदंयुगतोऽपि कर्मठो भवो दिगादेर्यखयौ कवर्गतः ।**
**शब्दे च मध्यन्दिन ठोऽन्तरःपुरात् स्थाम्नाजिनाल्लुग् दनुशीरतो ञ्य तु ॥३।१।७॥ उपजातिः ॥**

(**५०**) **कखञ्भयेदं युगतोऽपि ।** [**३।१।७।१।**] भ्यस् तस् । इदंयुगादौ च साधुरित्यर्थे कखञौ क्रमेण स्तः । वृत्तं तथा पञ्चपदीह-

जयाश्मपादाः शकुनिश्च जायाकर्पत्सरु हलादपिशाचहृादाः ।
पन्थः पिचण्डो [निचयाचयौ च नयः शकुन्य]शनी च [चयश्च ।]
स्याद् वासुदेवार्जुनतस्तु भक्तौ ॥१॥

युगेदंसंसमात् सर्वविश्वपञ्चमहापरे ।
जनः कुलं पराऽमुष्यपरस्यात् शर्ववर्मणः ।
कृते कृञेति पञ्चपात् ॥२॥

जये साधुः, जयकः । अश्मकः । पथिन् पथः, पन्थकः । भक्ताविति सभक्तिकस्येत्यर्थे । वासुदेवकः । [अर्जुनकः ।] इदंसंममेभ्यो युगः । [इदंयुगः । संयुगः । ममयुगः ।] एवं सर्वादेः जनः । सर्वजनः । [विश्वजनः । पञ्चजनः । महाजनः ।] परादेः कुलम् । परकुलम् । अमुष्यकुलम् । परस्यकुलम् । लाघवार्थमित्थम् । ऐदंयुगीन इत्यादि । कृते । शर्ववर्मणा कृत इत्यर्थे खञ् स्यात् । अञित् खमात्रं च । शार्ववर्मीणः ॥

(**५१**) **कर्मठः ।** [**३।१।७।२।**] कर्मणि साधुरित्यर्थे स्यात् ॥

(**५२**) **भवः ।** [**३।१।७।३।**] ङ्यन्ताद् भव इत्यर्थे यथाविध्यण्घादी स्तः । स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः ॥

(**५३**) **दिगादेर्यः ।** [**३।१।७।४।**] ङ्यन्ताद् भवे । अत्र षट्पात्

दिग्वर्गपूगान्तरपक्षधाय्याः साक्षिन्नुखालीकपथिन्रहोऽन्ताः ।
गणाद्यमित्राः वनकालमेघाः न्यायानुवंशौ च वेशोऽकालः ।
आकाशदेहांशमुखं जघन्योदक्ये च छन्दोर्थ उरःकृते च ॥१॥

दिशि भवो दिश्यः । वर्ग्यः इत्यादि । देहांशात् । दन्त्यम् । ओष्ठ्यम् । पृथग् मुखात्, प्रधानार्थम् । जघनादप्रधानार्थं यान्तम् । छन्दोर्थ उदक्यात् । उदिक्या नामार्थम् । रजस्वला एवमर्थे इति । छन्दसामर्थः व्याख्यानमित्यर्थे । छन्दस्यो ग्रन्थः । कृते च । छन्दसा कृत इत्यर्थे च नाम्नि, छन्दस्यः । अनाम्नि, छान्दसः । तथोरसा कृतः, उरस्यः पुत्रः, औरसश्च ॥

(**५४**) **खयौ छ वर्गतः ।** [**३।१।७।५।**] ङ्यन्ताद् भवे स्युः । पुनर्वर्गो ङ्यः तदन्तार्थम् । तद्वत् खछौ च । विष्णुवर्गीणम् । विष्णुवर्ग्यः । विष्णुवर्गीयः अर्जुनवर्गीणः । [अर्जुनवर्ग्यः । अर्जुनवर्गीयः । वासुदेववर्गीणः । वासुदेववर्ग्यः । वासुदेववर्गीयः ॥]

(**५५**) **शब्दे च ।** [**३।१।७।६।**] वाच्येऽत्र भवेऽतश्छ एव । वर्गीयः ॥

**(५६) मध्यन्दिनः । [ ३।१।७।७। ]** मध्ये भव इत्यर्थे स्याच्छः । अतोऽन्यः, मध्यन्दिनीयः ॥

**(५७) ठोऽन्तरःपुरात् । [ ३।१।७।८। ]** अन्तःपुरादित्यर्थः । ङ्यन्ताद् भवे ठः स्यात् । आन्तःपुरिकः । आन्तःपुरिका ॥

**(५८) स्थाम्नाजिनाल्लुक् । [ ३।१।७।९। ]** भवे विहितः । अश्वत्थामा । अजाजिनः । तदन्ताद् विधिः ॥

**(५९) दनुसीरतो ञ्य तु । [ ३।१।७।१०। ]** दिदव्ययीभावाद् अनुसीरादौ भव इत्यर्थे [ञ्यः] स्यात् । तथा पञ्चपदीह-

अनोः सीरगङ्गौ पथः शीतसूपौ तिलः माषवंशौ यवः स्थानसीरे ।
कलापोऽप्युपादोष्ठसीरौ मुखोलूखलौ स्याद्धनुश्चापरे पाञ्चजन्यम् ।
चतुर्मासगम्भीरतः पञ्चपात् स्यात् ॥१॥

अनौ परे सीरादयो ञ्यठण्यन्ताः गृह्यन्ते । अनुसीर । [अनुगङ्ग । अनुपथ । अनुशीत । अनुसूप । अनुतिल । अनुमाष । अनुवंश । अनुयव ।] उपस्थानादि । उपस्थान । [उपसीर । उपकलाप ।] परे औष्ठादि । पर्योष्ठ । [परिसीर । परिमुख । पर्युलूखल । परिहनु ।] पाञ्चजन्यम् । स्यान्तं च्छन्दोर्थम् । अनुसीर्यमित्यादि । चातुर्मास्यं यज्ञे इष्यते ॥७॥

**ङोऽर्थश्च सूत्रात् तत् आगतश्च वैदूर्यमुष्ठञ्च पितोऽङ्कवद् वा ।**
**पित्र्यं मयड्रूप्यनृहेतुतो भूपज्ञातमु टां कृतवातपादण् ।**
**ग्रन्थेऽधिकृत्याम् चलुगेतिदूतः पन्थाश्च निष्क्रामति गोपुरं तु ॥३।१।८॥ इन्द्रवज्राषट्पदी ॥**

**(६०) ङोऽर्थश्च सूत्रात् । [ ३।१।८।१। ]** ङः षष्ठ्यन्तात् सूत्रभूताच्छब्दात् तस्यार्थो व्याख्यानश्च तत्र भवश्चेत्यर्थे ङ्योर्यथाविध्यण्घादी स्तः । सुपां व्याख्यानं सौपम् । तैङम् । सौपो ग्रन्थः । [तैङो ग्रन्थः ।] सुप्सु भवः सौपः । [तिङ्सु भवः तैङः ।] सूत्रात् किम ? पाटलीपुत्रस्य व्याख्यानी सुकोशला ॥

**(६१) तत आगतश्च । [ ३।१।८।२। ]** पञ्चम्यन्ताद् आगत इत्यर्थे यथाविधि तौ स्तः । स्रुघ्नादागतः स्रौघ्नः । राष्ट्रियः । ततो मुख्यात् किम् ? स्रुघ्नादागच्छन् वृक्षमूलादागतः ।

**(६२) वैदूर्यम् । [ ३।१।८।३ ]** असुबन्तं विदिशः आगतेऽर्थे ॥

**(६३) उष्ठञ्च । [ ३।१।८।४। ]** ऋत उः ऋवर्णान्तात् विद्यायोनिसम्बन्धादागतेऽर्थे ठञ् स्यात् । हौतृकम् । वैयाख्यातृकम् । पैतृकम् । स्वासृकम् ॥

**(६४) पितोऽङ्कवत् । [ ३।१।८।५। ]** अपत्यान्तादागतेऽर्थेऽङ्कवद् वुञादि स्यात् । औपगवादागतम्, औपगवकम् । शाकलम् । गार्गम् । वैदम् । दाक्षम् ॥

**(६५) वा पित्र्यम् । [ ३।१।८।६। ]** पितुरागतेऽर्थे वा ॥

**(६६) मयड्रूप्यनृहेतुतः । [३।१।८।७।]** नृवाचिभ्यो हेतुवाचिभ्य आगत इत्यर्थे प्रत्येकं मयट्रूप्यौ वा स्तः । देवदत्तमयम् । देवदत्तरूप्यम् । दैवदत्तम् । सममयम् । [समरूप्यम् ।] समीयम् ॥

**(६७) भूः । [३।१।८।८।]** भवतीति भू । असुप् पञ्चम्यन्तात् प्रभवतीत्यर्थे यथाविध्यणादी स्युः। हिमवत उपलभ्यते, हैमवती गङ्गा । दारदी सिन्धुः ॥

**(६८) उपज्ञातमु टा । [३।१।८।९।]** टेति तृतीयान्ताद् यथाविधि तौ स्तः । उपज्ञातं विनोपदेशेन ज्ञातमित्यर्थे । उ निपातः । पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम् । चान्द्रमसमसंज्ञकम् ॥

**(६९) कृत । [३।१।८।१०।]** टान्तात् कृत इत्यर्थे यथाविधि तौ स्तः । चन्द्रेण कृताः, चान्द्राः श्लोकाः । पातञ्जलं महाभाष्यम् । वैश्वकर्मः प्रासादः । क्षौद्रं मधु भ्रामरम् । वारटम् । सारधम् ॥

**(७०) वातपादण् । [३।१।८।११।]** तथा वातपमधुनश्छो नाम्नीष्यते । [वातपम् ।] वातपीयोऽन्यत्र ॥

**(७१) ग्रन्थेऽधिकृत्याम् । [३।१।८।१२।]** अमिति द्वितीयान्तात् तमधिकृत्य कृतो ग्रन्थ इत्यर्थे यथाविधि तौ स्तः । सुभद्रामधिकृत्य कृतो ग्रन्थः । सौभद्रः । सौमित्रः ॥

**(७२) च लुक् । [३।१।८।१३।]** एतदर्थोऽणपि लुक् स्यात् । आख्यायिकेभ्यो विवक्षार्थत्वाच्चकारस्य लिङ्गं वचः प्रागिव । वासवदत्ता । सुमनोत्तरा । उर्वशी । आख्यायिका । न च । भैमरथी ॥

**(७३) एति दूतः पन्थाश्च । [३।१।८।१४।]** एति गच्छति दूतः पन्था चेत्यर्थेऽमः यथाविध्यण्घादी स्तः । स्रुघ्नं गच्छति दूतः, पन्था वा, स्रौघ्नः । राष्ट्रियः । एतौ किम् ? स्रुघ्नं गच्छति सार्थः ॥

**(७४) निष्क्रामति गोपुरं तु । [३।१।८।१५।]** द्वारमभिनिष्क्रामतीत्यर्थे यथाविध्यणघादी स्तः । स्रुघ्नमभिनिष्क्रामति कान्यकुब्जस्य द्वारं स्रौघ्नम् । द्वारं किम् स्रुघ्नमभिनिष्क्रामति पुरुषः ॥८॥

**कालोऽस्य सोढः स निवासदेशः प्राग्बान्धवीयोऽद्रिच्छशस्त्रजीविनः ।**
**शालातुरीयोऽण्य तु सिन्धुशण्डिकादेर्ढञ्तुदिवर्मतितस्तु भक्तिः ॥३।१।९॥ उपजातिः ॥**

**(७५) कालोऽस्य सोढः । [३।१।९।१।]** स इति प्रथमान्तात् कालादस्य सोढो जितोऽभ्यस्त इत्यर्थे यथाविध्यण्घादी स्तः । निशाध्येयमपि निशाध्ययनम्, तत् सोढमस्य, नैशः । नैशिकः ॥

**(७६) निवासदेशः । [३।१।९।२।]** प्रथमान्तान्निवासोऽस्य देश इत्यर्थे यथाविध्यण्घादी स्तः । निवास असुप् । स्रुघ्नो निवासऽस्य स्रौघ्नः । [माथुरः ॥]

**(७७) प्राग्बान्धवीयः ।** [३।१।९।४।] प्राग्बान्धवानां निवासो देशः, प्राग्बान्धवीयोऽभिजन इति रूढः । स स्रुघ्नोऽभिजनोऽस्य, स्रौघ्नः । राष्ट्रियः ॥

**(७८) अद्रिच्छ शस्त्रजीविनः ।** [३।१।९।४।] प्रथमान्ताद् अद्रिवाचिनः छः स्यात् सोऽभिजनोऽस्य शस्त्रजीविन इत्यर्थे । हृद्गोलोऽद्रिरभिजनः एषाम्, हृद्गोलीयाः । अन्धधर्मीयाः । अद्रि किम् ? सांकाश्यकाः । आयुधजीविनः किम् ? अर्क्षोदाः ब्राह्मणाः अद्रिच्छ असुबन्तौ ॥

**(७९) शालातुरीयः ।** [३।१।९।५।] शलातुरोऽभिजनोऽस्येत्यर्थे छण् ॥

**(८०) अणा तु सिन्धुशण्डिकादेः ।** [३।१।९।६।] सिन्ध्वादिशण्डिकादी अभिजनाद् अनयोरित्यर्थे यथाक्रमम् अण्ण्यौ स्तः । अत्र वृत्तेऽनुष्टुप्-

सिन्धूरसौ सङ्कुचितावसानौ किष्किन्धगन्धारदरतु शाल्वः ।
कश्मीरवत्सोद्धरणौ च कम्बोजावासकोष्ठाः शककाण्डकारौ ॥१॥

किन्नरवर्वरपर्वतकर्णाः कंसकिमेदुरवर्ण च सिंहो -।
ऽर्धासनगब्दिकतक्षशिलाग्रामण्यथवा मधुमच्च गणोऽयम् ॥२॥

शण्डिकसर्वसेनौ च सर्वकेशः शकः शटः ।
कुचवारावहौ बोधः भरशङ्खौ गणः स्मृताः ॥३॥

सिन्धुबान्धवीयोऽस्य सैन्धवः । औरस इत्यादि । कृच्छ्राद्युक्तानां नृतत्स्थवुञ् न । राष्ट्राख्यवाहीकग्रामाणां ञिकवञौ न । तथा शाण्डिक्य इत्यादि ॥

**(८१) ढञ् तुदिवर्मतितस्तु ।** [३।१।९।७।] तौ बान्धवीयावस्येति ढञ् । द्वंद्वैकत्वाद् ह्रस्वनिर्देशः । तौदेयः । वार्मतेयः ॥

**(८२) भक्तिः ।** [३।१।९।८।] सेव्यः । सौम्येत्यर्थे यथाविध्यण्घादी स्तः । स्रुघ्नो भक्तिरस्य स्रौघ्नः ॥९॥

**तन्नामराज्ञः सकलोऽबि राष्ट्रवद् ङस आम्नायसमूहधर्माः ।**
**आथर्वणो(ञ्यश्च) नटतः स्वमह्लाऽऽप्येऽश्वात् खजन्नाद्य यवादितो भूः ॥३।१।१०॥ वृत्तम् ॥**

**(८३) तन्नामराज्ञः सकलोऽबि राष्ट्रवत् ।** [३।१।१०।१।] राष्ट्रवज्जनपदवत् सकलः प्रकृतिप्रत्ययप्रयोगः स्यात्, तन्नामराज्ञः राष्ट्राख्यक्षत्रियाभिधायि शब्दात्, अबीति अप्प्रत्याहार-गृहीतप्रत्ययविषये, सोऽस्य भक्तिरित्यर्थे । अङ्गा जनपदो भक्तिरस्य, आङ्गकः । वाङ्गकः । सौह्मकः । पौण्ड्रकः । तद्वद् अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः । [वाङ्गकः । सौह्मकः । पौण्ड्रकः ।] सकलः किम ? प्रकृतेरप्यतिदेशार्थम् । मद्रस्यापत्यं माद्रः । वार्ज्यः । सोऽस्य भक्तिः । मद्रकः । वृजिकः । अबि किम् । पञ्चालानां ब्राह्मणा भक्तिरस्य पञ्चालाः । तन्नाम्नां किम् ? अनुषण्डो जनपदः । पौरवो राजा, सोऽस्य भक्तिः पौरवीयः ॥

**(८४) ङस आम्नायसमूहधर्मा आथर्वणः ।** [३।१।१०।२।] ङसः षष्ठ्यन्तात्

तस्याम्नायादि । आथर्वणो निपात्यते । अथर्वणा प्रोक्तो वेद आथर्वणः । तद् वदन्ति, आथर्वणिकाः । तेषामाम्नायादिः आथर्वणः ॥

**(८५) [ञ्यश्च] नटतः । [३।१।१०।३।]** तथा नटादीनामाम्नायादिरित्यर्थे ञ्यः । *चकारश्चरणा[द् धर्माम्नाया] वीत्यर्थम् । नाट्यम् । औक्थिक्यम् । नटयवादिद्वितयेऽप्यनुष्टुप्*

नटौक्थिकौ च छन्दोगो याज्ञिकबह्वृचौ यवात् ।
यवकात् षष्टिकाद्वोमाभङ्गमाषतिलाणुतः ॥ गणौ ॥१॥

**(८६) स्वम् । [३।१।१०।४।]** षष्ठ्यान्तात् तस्य स्वमित्यर्थे यथाविध्यणघादी स्तः । उपगोः स्वम् औपगवम् । राष्ट्रियम् ॥

**(८७) अह्नाप्येऽश्वात् खञ् । [३।१।१०।५।]** एकेनाह्नाऽश्वस्यागमः [इत्येतदर्थे] । आश्वीनोऽध्वा ॥

**(८८) अन्नात् । [३।१।१०।६।]** धान्यवाचिनस्तस्य भूः क्षेत्रमित्यर्थे खञ् । भूः सम्बध्यते । मुद्गानां क्षेत्रं मौद्गीनम् । कौलत्थीनम् ॥

**(८९) य यवादितो भूः । [३।१।१०।७।]** यवादेः क्षेत्रमिति [अर्थे] यः स्यात् । यव्यम् । यवक्यम् । उमादेर्वा । खञ् । उम्यम् । औमीनम् ॥१०॥

**स्याच्छाकटं शाकिनः शालिव्रीहेर्ढञ्जल्पजनात् करणं मताद् यः ।**
**ल्वूद्वाहविरोधमरो ललाटात् कर्णात् तदलङ्करणं हि कण्ठात् ॥३।१।११॥ उपस्थिता ॥**

**(९०) स्याच्छाकटं शाकिनः । [३।१।११।१।]** षष्ठ्यन्तात् तस्य क्षेत्रमित्यर्थे । इक्षूणां क्षेत्रम् इक्षुशाकटम् । इक्षुशाकिनम् । मूलशाकटम् । [मूलशाकिनम् ॥]

**(९१) शालिव्रीहेर्ढञ् । [३।१।११।२।]** तथा शालेयम् । [व्रैहेयम् ।] व्री लघुश्रुतः ॥

**(९२) जल्पजनात् करणं मताद् यः । [३।१।११।३।]** जनस्य जल्पः, मतस्य करणमित्यर्थे यः स्यात् । जन्यः । मतं ज्ञानम्, तस्य करणं मत्यम् । भावः, कारकं वा ॥

**(९३) ल्वूद्वाहविरोधमरः । [३।१।११।४।]** अर् । अदेवासुरादिद्वन्द्वर् प्रत्याहारः । तस्योद्वाहो विरोधो वा वैरमित्यर्थे लित् च ल्वुः स्यात् । अत्रीणां च भरद्वाजानां च विवाहः, अत्रिभरद्वाजिका । कुरुकाशिका । बाभ्रवाणां च शालङ्कायनानां वैरं बाभ्रवशालङ्कायनिका । काकोलूकिका । अदेवासुरादि किम् ? दैवासुरम् । [राक्षोऽसुरम् । दैत्यासुरम् ।] लित् स्त्र्यर्थम् ॥

**(९४) ललाटात् कर्णात् तदलङ्करणं हि कण्ठात् । [३।१।११।५।]** तदेषामलङ्करणं हीत्यर्थे ल्वुः स्यात् । ललाटिका । [कर्णिका । कण्ठिका] ॥११॥

**ठञ् सीरहलाद् वोढा स न शकटादण् ढञ्यौ तु धुरोऽदेकात् ख उत्तरसर्वात् ।**
**स्याद्दक्षिणतो युग्यादीन्यञ्यञिञोऽण् सङ्घे लक्षणघोषाङ्कात् शाकलतो वा ॥३।१।१२॥**
**पुष्पविचित्रा ॥**

**( ९५ ) ठञ् सीरहलात् । [ ३।१।१२।१।]** तस्य स्वे । सैरिकम् । [हालिकम् ।] द्वैहलम् । द्वैसीरम् ॥

**( ९६ ) वोढा स न । [ ३।१।१२।२।]** तयोर्वोढेत्यर्थे च स न स्यात् । सीरस्य वोढा सैरिकः । द्वैहलिकः । [द्वैसीरिकः ।] द्विगोरप्यलुगर्थं स न ॥

**( ९७ ) शकटादण् । [ ३।१।१२।३।]** वोढाऽस्येत्यर्थे । शाकटः, द्वैशाकटः गौः ॥

**( ९८ ) ढञ्यौ तु धुरः । [ ३।१।१२।४।]** वोढेत्यर्थे । धौरेयः । धुर्यः ॥

**( ९९ ) अदेकात् । [ ३।१।१२।५।]** एकधुरे वोढेति अः स्यात् । एकधुरः ॥

**( १०० ) खः । [ ३।१।१२।६।]** तथा । एकधुरीणः ॥

**( १०१ ) उत्तरसर्वात् स्याद् दक्षिणतः । [ ३।१।१२।७।]** एभ्यो धुरस्तथा । उत्तरधुरीणः । सर्वधुरीणः । दक्षिणधुरीणः ॥]

**( १०२ ) युग्यादीनि । [ ३।१।१२।८।]** युग्यादीनि बहुलार्थं यान्तानि निपात्यन्ते । वृत्तत्रयं चेह-

युग्यस्य प्रासङ्ग रथस्य वोढा सीताहलाभ्यां समितं च कर्षः ।
दृश्यं पदं चात्र वशं गतः समानोदरेऽथो शयितः सतीर्थे ॥१॥

वसेत् प्रियो वा हृदयस्य बन्धनं धर्मेण प्राप्योऽर्थपथाऽनपेतः ।
न्यायाच्च लब्ध्वा तु धनं गणं च मूलैरनाम्यो वयस्य च तुल्यः ॥२॥

अस्याद्दृढं मूलमुद्गमाषाः नौतुलाभ्यां विषेण समिते च मध्ये ।
कर्ता च तद्विध्यति सामिधेन्याङि धेनुष्यजन्याग्निःषुक् तु गार्हपत्यः ॥३॥

युगादीनां वोढा तान् वहतीत्यर्थे यः स्यात् । युग्यः, [प्रासङ्ग्यः, रथ्यः] गौः । प्रासङ्गं वत्सदमनकाष्ठम् । सीतायाः सीतया वा समितं हलस्य कर्ष इत्यर्थे । सीत्यः । हल्यः । तदन्ताच्च । परमसीत्यः । द्विहल्यः । पदं दृश्यतेऽत्रेत्यर्थे पद्यः कर्दमादिः । एवं सूक्तोक्तविभक्त्यन्तात् । वशं गतः वश्यः । समानोदरे शयितः समानोदर्यः । सोदर्यो वा । सतीर्थे वसेत् । समानतीर्थे वसतीति सतीर्थः । हृदयस्य प्रियो वा, बन्धनं वा । हृद्योदेशः, [हृद्यं] वनं च । इष्टार्थत्वान्निपातस्य प्रायो नाम्नीतः । नात्र । हृदयस्य प्रियः पुत्रः । हृदस्य बन्धनो हृद्यो वशीकरणमन्त्र एव । धर्मेण प्राप्यः धर्म्यः । अर्थपथन्यायाच्च धर्माच्चानपेतः । अर्थ्यः । [पथ्यः । न्याय्यः । धर्म्यः ।] धनं गणं च लब्ध्वा । धन्यः । [गण्यः ।] भिस् छन्दोऽर्थम् । मूलैरनाम्योऽनभिभवनीयः । मूल्यः पटः । पटाद्युपादानसमानफलः [इत्यर्थः ।] वयसा तुल्यः वयस्यः । मूलेन तुल्यः । मूल्यः पटः । अनाम्नि तु, मूलेन नाम्यं काष्ठम् । वयसा तुल्यो रिपुः । मूलमेषामद्दृढं श्लथम् । मूल्याः मुद्गाः, माषाः । नौतुलाविषः क्रमेण तार्यसमितवध्येषु । नाव्या नदी । नाव्यं जलम् । तुल्यः पटः । तुलापरिच्छिन्न इव तुल्यो ना । विष्यः । तदिति द्वितीयान्तात् कर्ता विध्यतीत्यर्थे । पद्याः शर्कराः । उरस्याः ।

कण्टका: । कर्ता किम् । चौरं विध्यति धनुषा । कर्ता व्यधनक्रियाया जनक: स्वतन्त्रो गृह्यते । आधीयतेऽनेन आधानी, समिधामाधानीति षेण्यण् । सामिधेन्यो [मन्त्रः] । सामिधेनी ऋक् । आङीति आङन्ता धेनुष्या । धेनोः षुग् । पीतदुग्धेति प्रसिद्धा । जनीं वधूं वहन्ति जन्याः, जामातुर्वयस्यानां नाम । गृहपतिना युक्तो गार्हपत्योऽग्निः । नाम्न्येव ॥

**(१०३) अञ्यञिञोऽण् सङ्घे लक्षणघोषाङ्कात् । [३।१।१२।९।]** अञ्यञ्इञन्तानां सङ्घादिरित्यर्थेऽण् स्यात् । वेदानां सङ्घादिः वैदः । गार्गः । दाक्षः । वाऽपत्याद् वुञ् ॥

**(१०४) शाकलतो वा । [३।१।१२।१०।]** शाकलेन प्रोक्तं वेदं विदन्ति, शाकलाः । [तेषां सङ्घः शाकलः, शाकलकः । शाकलं लक्षणम् । शाकलकं लक्षणम् । शाकलो घोषः । शाकलको घोषः । शाकलोऽङ्कः । शाकलकोऽङ्कः] ॥१२॥

**[कौपिञ्जलाद्धास्तिपदाद् वहित्रादग्नीध्रपत्रादण्यरथाच्च सादेः ।]**
**छो यो गवाद्योः पृथुकादितो वा तस्मै विकारे प्रकृतिस्तु चर्माञ् ।**
**उपानहाञ्योऽर्थर्षभाच्छदिर्बलेर्ढञ्तु सः स्यात् परिखा डिडस्तत् ॥३।१।१३॥ षट्पदी ॥**

**(१०५) कौपिञ्जलाद्धास्तिपदात् । [३।१।१३।१।]** [कौपिञ्जल हास्तिपद] तयोः स्वमित्यण् । कौपिञ्जलः । [हास्तिपदः ।] न अपत्याद् वुञ् ॥

**(१०६) वहित्रात् । [३।१।१३।२।]** वहतृ च । इन् निपात्यते । अण् स्यात् । वोढुः स्वं वाहित्रम् । सांवहित्रम् ॥

**(१०७) अग्नीध्र । [३।१।१३।३।]** अग्नीध् तस्य स्वं वेश्म चेद् रः स्याद्, अण् चैके । अग्नीधः शरणम् अग्नीध्रम् आग्नीध्रं वा निपात्यते ॥

**(१०८) पत्रादण् । [३।१।१३।४।]** नवाचिनः स्वमित्यण् । अश्वस्येदं वहनीयम् आश्वम् । औष्ट्रम् । औष्ट्रपतम् ॥

**(१०९) य रथाच्च । [३।१।१३।५।]** यानपूर्वाद् रथात् स्वेऽण् । आश्वरथम् । रासभरथं चक्रम् । छ च । रथस्य स्वं रथ्यं [चक्रम्] ॥]

**(११०) सादेः । [३।१।१३।६।]** सप्राक्पदात् तथा । सादेरापादम् । [परमरथ्यम् । उत्तमरथ्यम्] ॥

**(१११) छः । [३।१।१३।७।]** अतः परेष्वर्थेषु ।

**(११२) यो गवाद्योः । [३।१।१३।८।]** अतः परेष्वर्थेषु गवादेरुवर्णान्ताच्च य एव स्यात् । इहोपपातिः-

गोस्रग्घविः कूपपदाक्षराणि बर्हिर्युगौ नाभि नभं नडूधः ।
विषाष्टिके कम्बलनाम्नि मेधा स्याच्छवन् शुनूद्वा च खरस्खदो वृत् ॥१॥

गवे हितं गव्यम् । श्रव्यम् । नाभि नभं च । नभ्यं काष्ठम् । अञ्जनम् । अक्षश्च । देहांशाद्ये

तु नाभ्यं [तैलम्] । नङ् स्याद् ऊध डिदन्तार्थः । ऊधन्यः [कूपः] । कम्बलम् । अत्र नाम्नि स्यात् । कम्बल्यम् । ऊर्णापलशतम् । श्वन्, शुन् स्याद्, ऊद् वा । शुन्यम् । शून्यम् । गोर्योऽचि सिद्धे तदन्तार्थम् । सुगव्यम् । द्विगव्यम् । तथा ओः । शङ्कव्यं दारु । पिचव्यः कार्पासः । चरव्यास्तण्डुलाः ॥

*[(११३) **पृथुकादितो वा । [३।१।१३।९।]** यः स्यात् । पृथुकादयोऽपूपाद्यन्तर्गताः । तेभ्योऽन्नविकारार्थेभ्यः । पृथुक्यम् । पृथुकीयम् । अपूप्यम् । अपूपीयम् । तण्डुल्यम् । तण्डुलीयम् ॥

(११४) **तस्मै विकारे प्रकृतिस्तु । [३।१।१३।१०।]** तस्मै तदर्थं विकारे विकृतिवाचिने सति प्रकृतिस्तु प्रकृतावभिधेयायां यः स्यात् । अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु । पिचव्यः कार्पासः ॥

(११५) **चर्माञ् । [३।१।१३।११।]** चर्मणो विकृतिवाचिनः प्रतिपदिकाद् अञ् स्यात् । वारध्रं चर्म । संगव्यं चर्म । वारत्रं चर्म ॥

(११६) **उपानहाञ्ञ्योऽथर्षभात् । [३।१।१३।१२।]** उपानह् ऋषभ इत्येताभ्यां तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये ञ्यः स्यात् । औपानह्यो मुञ्जः । आर्षभ्यो वत्सः । चर्मण्यपि । औपानह्यं चर्म ॥

(११७) **छदिर्बलेढञ् तु । [३।१।१३।१३।]** आभ्यां तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये । छादिषेयाणि तृणानि । बालेयास्तण्डुलाः । चर्मण्यपि । छादिषयं चर्म ॥

(११८) **सः स्यात् । [३।१।१३।१४।]** स्यादिति सम्भावनायां लिङ् । तदस्मिन् स्यादित्यर्थे सम्भावनेऽलमिति चेदित्यादिवाच्ये ढञ् स्यात् । प्राकारीया इष्टकाः । प्रासादीयं दारु ॥

(११९) **परिखा । [३।१।१३।१५।]** तदस्मिन् स्यादित्यर्थे परिखाशब्दात् ढञ् स्यात् । पारिखेया भूमिः ॥

(१२०) **ङि ङस्तत् । [३।१।१३।१६।]** ङीति सप्तमी । ङसिति षष्ठी । तदस्मिन् तदस्य स्यादित्यर्थे ढञ् स्यात् । प्राकारीयो देशः । प्रासादीया भूमिः ॥१३॥

**हितं चतुर्थ्यन्ताद् यवादेर्यः पितो णो वा सर्वाज्जनात् खः ।**
**महतश्च ठञभितः खः पञ्चविश्वा चरकाच्च माणवात् ।**
**खञ् स्वात्मभो-]*गादिति पाद पञ्चपात् ॥३।१।१४॥**

(१२१) **हितं चतुर्थ्यन्तात् । [३।१।१४।१।]** [तस्मै] हितमित्यर्थे यथाविधि छयौ स्तः । वत्सेभ्यो हितो वत्सीयो गोधुक् । गव्यम् । पटव्यम् । पृथुक्यम् ॥

---

★ The text-portion in square brackets is reconstructed by the Editor, since it is missing in all the four Mss. (from 114 to 120 H.)

**(१२२) यवादेर्यः ।** [ ३।१।१४।२।] तथा । यव्यम् । प्राण्यम् । गार्दभ्यम् । औष्ठ्यम् । चक्षुष्यम् । अनुष्टुबत्र-

यवप्राण्यङ्गमाषेभ्यस्तिलब्रह्मवृषादपि ।
तथा रथखलाभ्यां च हितेऽर्थे यो विधीयते ॥१॥

न राजब्राह्मणादाचार्यवृष्णः हितेच्छोः । तेभ्यो वाक्यमेव च । राज्ञे हितम् । [ब्राह्मणाय हितम् । आचार्याय हितम् । वृष्णे हितम् ॥]

**(१२३) पितः ।** [ ३।१।१४।३।] तथा [ष्य्योऽजावे] स्यात् । अजथ्या । अविथ्या । पिदस्त्र्यर्थः ॥

**(१२४) णो वा सर्वात् ।** [ ३।१।१४।४।] तथा छो वा । सार्वः । सर्वीयः ॥

**(१२५) जनात् खः ।** [ ३।१।१४।५।] तथा सर्वादेर्हितः कर्मधारयात् । सर्वजनीनः । हितः किम् ? सर्वजनीयः ॥

**(१२६) महतश्च ढञभितः ।** [ ३।१।१४।६।] तथा सर्वाच्च जनात् । माहाजनिकः । सार्वजनिकः । भितः किम् ? महाजनीयः ॥

**(१२७) खः पञ्चविश्वात् ।** [ ३।१।१४।७।] तथा पञ्चजनीयः । [विश्वजनीयः ॥]

**(१२८) चरकाच्च माणवात् खञ् ।** [ ३।१।१४।८।] हिते । चारकीणः ॥

**(१२९) स्वात्मभोगादिति ।** [ ३।१।१४।९।] तथा । आत्मनीनः । मातृभोगीणः । भोगो देहः । विवक्षार्थत्वादितेर्नोऽनित् । भोगान्ताच्चैव विधिः । पाद असुप् नवमः । पञ्चपादियं गाथा ॥१४॥

**[ इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे तृतीयाध्याये प्रथमः, आदितो वा नवमः, पादः ।]**



## [ ॥ अथ तृतीयाध्याये: द्वितीय: पाद: ॥ ]

**ठञ् सङ्ख्यादेश्चार्हादशतलुक: संशयादितो नाना ।**
**तद्गन्ता ठट् च पथ: पान्थो डेॆऽलं न वा योग्यम् ॥३।२।१॥ आर्या ॥**

(१) **ठञ्** । [ ३।२।१।१। ] इत्यापादम् ॥

(२) **संख्यादेश्चार्हादशतलुक:** । [ ३।२।१।२। ] अर्हतीति वक्ष्यति । तमभिज्ञाप्य येऽर्थास्तेष्वत: परं संख्यादे: शतादन्यस्मात् केवलाच्च लुगन्ताद् यथाविधि प्रत्यय: स्याद् [इति] अधिकृतं वेदितव्यम् । मासिकम् । द्वैमासिकम् । आर्हात् किम ? सेनां समवैति सैन्य: । द्विसैनिक: । अशतात् किम् ? द्विशतम् । अलुगन्तात् किम् ? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । तेन क्रीतम् । द्विशौर्पिकम् ॥

(३) **संशयादितो नाना** । [ ३।२।१।३। ] बहुलार्थो ठञ् । संख्यादे: केवलाच्चार्हत: परं केवलात् । वृत्तत्रयं षट्पदी च वृत्तविताने प्रथमं वितानं वृत्तं च षट्पादपि वृत्तमत्र-

तत्संशयात् कर्तृगते तुरायणं चान्द्रायणं वर्तयते करोति वा ।
पारायणं चेति तु शब्ददर्शनं तद् योजनं गच्छति कोशयोजनात् ॥१॥

शतं विहाराभिगमार्हशक्तिषु कान्तारवार्युत्तरशङ्कुजङ्गला ।
अजास्थलाद्यादि प्रथमेन चाहृतं यज्ञे तु दानं यदि वाऽस्य दक्षिणा ॥२॥

डेॆऽलं निवे: सर्ग उपाच्च वास: प्राह्न्यामधातौ समा निपात: ।
स्यात्यादिनो योग परावनाभा: संष्येषसंतामुशक्तयो च गौ: ॥३॥

गोदानमादित्यव्रतं महानाम्न्यादीश्चरन्त्यस्य च ब्रह्मचर्ये ।
कालो रमेभूतरितोऽप्यधीष्ट: भाव्यर्चनिवृत्तरथापि युज्यम् ॥४॥

ई: श्लेष्मवातादथ सन्निपातात् पित्तात् समामोऽर्हति च्छेदभेदम् ।
कर्पं प्रविप्रादपि शीर्षच्छेदं संवे: प्रयोगं त्वथ नर्त्तदोहम् ॥५॥

विरगं च विराग: स्यात् संप्रश्नं चेति पृच्छति ।
सुखरात्रं सुखशाय्यं सुस्नातं च सुखाशयम् ॥६॥

गच्छत्याक्रन्दमाथान्तं पदव्यनुपदं तथा ।
परदाराद् गुरुतल्पं ढञकौ तु प्रतिपथ: ॥७॥

आहेतिपर्याप्तप्रभूतिनित्यशब्दं च माशब्दमुकार्यशब्दम् ।
रक्षोञ्छती तं मृगपक्षिमत्स्यान् हन्तीति तिष्ठेत् परिपन्थमत्र ॥८॥

समवैति समजार्थान् गृह्णाति सादि वा पदम् ।
प्रतिकण्ठललामार्थं धर्माधर्मं चरति टार् ॥९॥

जयन्ति दीव्यन्ति जितं खनन्ति सहोऽम्भओजोभिरु वर्तते च ।
परेर्मुखं पार्श्वममुं प्रतिस्तं लोमेपकूलाद्धितमेर्सभक्ष्याः ॥१०॥

दिष्ट्यास्ति नास्त्यस्त्यस्य मतिस्त्वदेशः कालेष्वधीते निकटं स्मशाने ।
अत्रोपकोशावसथे वसन्ति वृक्षादिमूले कठिनान्ततो डौं ।
प्रस्तारसंस्थानपणेति चेत् तं डोऽवक्रयो धर्म्यमथेति गाथा ॥११॥

लालाटिकः क्रौक्कुटिकोऽत्र साधुः कुल्माषमांसौदनवेणुसक्तू-
संग्रामसंघातगुडानि वासोऽपूपे प्रवासेऽप्युपवास एव ॥१२॥

तदिति द्वितीयान्तात् । संशयं करोति, स्थाण्वादिः संशयं गतो वाऽऽपन्नो वाऽभ्रादिः, सांशयिकः, स्थाणुर्ना वा । तुरायणादीन् वर्तयतीत्यर्थे तौरायणिकः । [चान्द्रायणिकः । पारायणिकः ।] एवं वाक्यार्थेषु । शब्ददर्शनं करोत्येव । तद् रमन्तं योजनं गच्छति ॥१॥ क्रोश-योजनात् परं शतं गच्छति, विहरति वा, अभिगमनमर्हति वा, तद्गन्तुं शक्तो वा । कान्तारादिपूर्वपदं पन्थानं गच्छति, तेनाहृतो वा । आद्यकृत्यर्थः । यज्ञे न्विति सप्तम्यन्तात् । यज्ञवाचिनो दीयते इत्यर्थेऽस्येति षष्ठ्यन्तस्य दक्षिणा वा । अग्निष्टोमे दीयते आग्निष्टोमिकम् । तस्य दक्षिणा, आग्निष्टोमिकी । द्वैवाजपेयकम् । [द्वैवाजपेयिकी ।] डौंऽलमिति चतुर्थ्यन्तात् प्रभवतीत्यर्थेऽत्र वृत्ते-

निवेः सर्गः उपाद् वासः प्राच्च उपवासः ।
वासाद्यानां हान्ताः समः परे संवासेव्यादि ॥१३॥

निसर्गाय प्रभवति नैसर्गिक इत्यादि । गोदानादिरुचः । अध्ययनाय व्रतं तदुच्यते । रमन्तादतस्तं चरतीति । गौदानिकः । [आदित्यव्रतिकः । माहानामिकः ।] अस्त्येषां वा ब्रह्मचर्यम् । गौदानिकम् । [आदित्यव्रतिकम् । माहानामिकम् ।] आद्याकृत्यर्थः । काल इति प्रथमान्तात् कालवाचिनोऽस्येति षष्ठ्यर्थे ब्रह्मचर्ये वाच्ये । तथा रमिति द्वितीयान्तात् कालात् षष्ठ्यर्थस्य शश्वद् विनि ब्रह्मचर्ये गम्यमाने । मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । द्वितीयेऽर्थे, मासस्य बटोर्ब्रह्मचर्यं मासिको बटुः । द्वैमासिकः । रमे इति द्वितीयाचतुर्थ्यन्ताद् यथासम्भवं भूताय वर्षे, तं भूतो भावी तस्मै भूतोऽधीष्ट इत्यर्थे । भूतः स्वसत्तया व्याप्तः कालः । भावी तादृगेवानागतः । भृतो वेतनेन क्रीतः । सत्कृत्य व्यापारितोऽधीष्टः । मासं भूतो भावी वा मासिको व्याधिः । मासाय भृतोऽधीष्टः मासिकः कर्मकरः, उपाध्यायो वा । अर्चेति तृतीयान्तात् कालान्निवृत्तिरित्यर्थे । रेफो भूरिति प्रत्याहारार्थम् । अह्ना निवृत्तम् आह्निकम् । आर्धमासिकम् । टान्तात् कालाज्जय्याद्यर्थे । मासेन शक्यते जेतुं मासिको व्याधिः । द्वैसांवत्सरिकः । एवं [मासेन] लभ्यः पटः मासिकः [पटः] । [मासेन] कार्यं [मासिकं] चान्द्रायणम् । [मासेन] सुकरः प्रासादः [मासिकः प्रासादः ।] अत्रेति

लोके, सर्वलोके च, वित्तो वेदित इत्यर्थे ङि इति श्लेष्मादीनां शमनं कोपनं चेत्यर्थे । सदार्ह इति नित्यं छेदादीनर्हतीत्यर्थे । कर्षं केवलम् । प्रविप्रादपि । प्रकर्षम् । [विप्रकर्षम् ।] संवेः प्रयोगम् । संप्रयोगः । [विप्रयोगः ।] सुखरात्रादीन् पृच्छतीत्यर्थे । [सौखरात्रिकः । सौखशाय्यिकः । सौस्नातिकः । सौखशायनिकः ।] अतोऽसंख्यादेः आक्रन्दादीन् गच्छतीत्यर्थे । माथः पथिकपर्यायः । दाण्डमाथिकः । प्रतिपथं गच्छन्तीति च ढञौ स्तः । नानार्थत्वात् । प्रतिपथिकः । [प्रातिपथिकः ।] पर्याप्तादीन् आहेत्यर्थे । तं रक्षति उञ्छति वेत्यर्थे । सांनिवेशिकः । बादरिकः । मृगादीन् हन्तीत्यर्थे शफतत्पर्यायविशेषयोर्ग्रहणार्थम् । हारिणिकः । सौकरिकः । नैयङ्कुकः । तथा शाकुनिकः । मायूरिकः । तैत्तिरिकः । नैमिषिकः । शाफरिकः । परिपन्थं हन्ति तिष्ठति वेत्यर्थे । [पारिपन्थिकः ।] समाजार्थान् समवैति । सामाजिकः । सामूहिकः । सामवायिक । सांनिवेशिकः । पदादीन् गृह्णातीत्यर्थे । पादिकः । सादि वा । पौर्वपदिकः । [औत्तरपदिकः ।] एवं धर्ममधर्मं वा चरतीत्यर्थे । टारिति तृतीयान्तात्, चरित भक्षयति गच्छतीति वेत्यर्थे । [धार्मिकः । अधार्मिकः । [दध्ना संस्कृतं भुङ्क्ते] दाधिकः । [शकटेन गच्छति] शाकटिकः । टर्न्तादेव । अक्षैर्जयति दीव्यति, जितोऽर्थो वा [आक्षिकः ।] कुद्दालेन खनति [कौद्दालिकः ।] रुच्छन्दोऽर्थम् । करणे टर्न्तेन हनखनजितसहोऽम्भओजो वर्तत इत्यर्थे निपातः । परिपूर्वं मुखं पार्श्वं च वर्तत इत्यर्थे त एवादिन् अनुप्रतिपूर्वान् लोम- ईप कूलान् अवर्तत इत्यर्थे क्रियाविशेषणे रम् । स इति प्रथमान्ताद् भक्ष्यवाचिनः, एरिति चतुर्थी तस्मै हितमित्यर्थे । अपूपभक्षणं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति । दिष्ट अस्ति नास्ति एभ्यः प्रथमान्तेभ्योऽस्य मतिरित्यर्थे । दिष्टमिति मतिः । प्रमाणानुपातिनी अस्य दैष्टिकः । [आस्तिकः । नास्तिकः ।] अध्ययनाय निषिद्धे देशे काले वर्तत इत्यर्थे । श्माशानिकः । चातुर्दशिकः । निकटादिषु वृक्षमूले च वसतीत्यर्थे । ङौ इति सप्तम्यन्तेषु कठिनादिषु । वांशकठिनिकः । [प्रास्तारिकः । सांस्थानिकः ।] पणेन चेद् व्यवहरतीत्यर्थे व्रती चेत् । [आपूपिकः । मौदकिकः ।] ङः इति षष्ठ्यन्ताद् अवक्रयः पिण्डकः । शुल्कशालायाः अवक्रयः, शौल्कशालिकः । आकरिकः । आपणिकः । तस्य धर्म्यं न्याय्यमिति च । शौल्कशालिकम् । [आकरिकम् । आपणिकम् ।] कोपादिचिह्नाय ललाटं पश्यति सेवको योऽनुपश्लिष्टः, कार्येषु वा नोपयुज्यते स, लालाटिकः [सेवकः ।] कुक्कुटिपातोऽल्पदेशः कुक्कुटी, तां पश्यति, पादपाते चक्षुः संयम्य गच्छतीत्यर्थे । दाम्भिकक्रियायां वा कुक्कुटीमाचरतीति वा । कौक्कुटिको भिक्षुः । अत्रेति कुल्माषादौ साधुरित्यर्थे । अत्राञ् आकालिको टिद् वा ॥१२॥

**(४) तद्गन्ता ठट् च पथः । [ ३।२।१।४।]** तं पन्थानं गच्छतीत्यर्थे ठट् स्यात् । पथिकी [स्त्री] ॥

**(५) पान्थः । [ ३।२।१।४।]** तथा नित्यो णो निपात्यते ॥

**(६) ङेऽलं न वा योग्यम् । [ ३।२।१।५।]** योगायालं प्रभवतीत्यर्थे यो न वा ठञ् वा । योग्यम् । यौगिकम् ॥१॥

**कार्मुक काले कार्यं देयं भववत् प्रवासतोऽण्डिर् टः ।**
**पथा कथा च हस्त्यौ शोभत इति कर्मवेषाद् यः ।३।२।२।**

(७) **कार्मुक** । [३।२।२।१।] कर्मणेऽलमित्युकञ् ॥

(८) **काले कार्यं देयं भववत्** । [३।२।२।२।] कालवाचिसप्तम्यन्तात् कार्यं दीयत इत्यर्थे यो भाव इव प्रत्ययाः स्युः । मासे कार्यं दीयते च मासिकम् । त्रैमासिकम् । प्रावृषेण्यम् । सायन्तनम् ॥

(९) **प्रवासतोऽण्ङिर्** । [३।२।२।३।] ङिर् सप्तम्यन्तात् प्रवासादेस्तथाऽण् स्यात् । अत्रोपजातिः-

प्रवाससंग्रामनिवेशनाष्ठञि पथस्थलादेः मधुके मरीचे ।
संघाततीर्थाग्निपदानि नित्यो व्युष्टेश्च निक्रामणपैलुमूलम् ॥१॥

प्रवासे कार्यं दीयते वा प्रावासम् । पथः स्थलादेष्ठञीतैवविषये । स्थलपथं गच्छति, तेन हतो वेत्यर्थे स्थालपथं मधुकं मरीचं वा । स्थालपथिकोऽन्यः । निष्कामणेति निष्क्रमण इत्यर्थः ॥

(१०) **टः पथा कथा च हस्त्यौ** । [३।२।२।४।] टान्ताभ्यां यथा कथा च हस्ताभ्यां प्रत्येकं कार्यं दीयत इत्यर्थे क्रमेण यो निपात्यते ॥

(११) **शोभत इति** । [३।२।२।५।] अर्थे टान्तात् ठञ् । कर्णवेष्टकाभ्यां शोभते, कार्णवेष्टिकिकं मुखम् । वास्त्रयुगिकं शरीरम् ॥

(१२) **कर्मवेषाद् यः** । [३।२।२।६।] तथा कर्मण्यं शौर्यं, वेष्यो नटः ॥२॥

**सोऽस्य प्राप्तः समयादृत्वाद्यण् कालतो य दीर्घः ।**
**प्रयोजनमेकागाराच्चौरे लुक् स्वस्तिवाचनादिभ्यः ॥३।२।३॥**

(१३) **सोऽस्य प्राप्तः समयात्** । [३।२।३।१।] स इति प्रथमान्तात् समयात् प्राप्तोऽस्येत्यर्थे ठञ् स्यात् । सामयिकं कार्यम् । उपनतकालम् [इति] सामयिकशब्दार्थः ॥

(१४) **ऋत्वाद्यण्** । [३।२।३।१।] तथैव । स तु प्राप्तोऽस्य, आर्त्तवं पुष्पफलम् । औपवस्त्रम् । प्राशित्रम् । तृच्, आकृतिगणः ॥

(१५) **कालतो यः** । [३।२।३।३।] तथा । काल्यस्तापः । [काल्यं] शीतम् वा ॥

(१६) **दीर्घः** । [३।२।३।४।] कालो दीर्घोऽस्येति ठञ् । कालिकमृणम् ॥

(१७) **प्रयोजनम्** । [३।२।३।५।] अस्येत्यर्थे प्रथमान्तात् ठञ् । इन्द्रमहः प्रयोजनमस्य, ऐन्द्रमहिकः । गाङ्गामहिकः ॥

(१८) **एकागाराच्चौरे** । [३।२।३।६।] ऐकागारिकः चौरः । चौरे किम् ? एकागारं प्रयोजनमस्य भिक्षोः ॥

(१९) **लुक् स्वस्तिवाचनादिभ्यः** । [३।२।३।७।] एते प्रयोजनमस्येत्यर्थे ठञ् लुक् ात् । स्वस्तिवाचनम् । शान्तिवाचनम् । पुण्यवाचनम् । आकृतिगणः ॥३॥

**चूडास्वर्ग्योत्थापनतोऽण्यच्छ देवव्रतादितच्चरति डिन् ।**
**इ्वुश्चाष्टाचत्वारिंशत इञ्ञ्यश्चतुर्मासात् ॥३।२।४॥**

(२०) **चूडास्वर्ग्योत्थापनतोऽण्यच्छ । [३।२।४।१।]** ह्यन्तणार्थं न एते प्रयोजनमस्येत्यर्थे क्रमेण अण्यच्छाः स्युः । द्वितयेऽनुष्टुप् अन्ये तु वृत्तम्-

चूडा च द्वादशाहश्च श्राद्धश्च मन्थदण्डयोः ।
विशाखाषाढतः स्वर्ग्यकाम्यायुषि धनं यशः ॥१॥

उत्थापनारोहणवेशनं संप्रानोरनो रोहणवाचनावु- ।
पस्थानं वारभणानञादेः समापिपूरः विशिप्रपदेश्च ॥२॥

चौडः । क्रमेण वैशाखो मन्थः । आषाढो दण्डः । तथा स्वर्ग्यः । [काम्यः । आयुष्यः । धन्यम् । यशस्यः ।] तथा, उत्थापनीयम् । [अनुप्रवचनीयम् ।] सम्प्रानोः परं वेशनम् । संवेशनम् । [प्रवेशनम् । अनुवेशनम् ।] तथा, अन्वारोहणम् । अनुवाचनम् । संवेशनम् इत्यादि । अनञादेः । नञ्वर्जिता अनन्यपूर्वपदानाप्यादेः । इट्निर्देशात् प्रकृतेः । [व्याकरणसमापनं प्रयोजनमस्य] व्याकरणसमापनीयम् । प्रपापूरणीयम् । गृहप्रवेशनीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् । पृथग्वेशनाय पूर्वपदार्थे । आकृतिगणाश्चामी ॥

(२१) **देवव्रतादितच्चरति डिन् । [३।२।४।२।]** तदित्येतच्चरतीत्यर्थे डिन् स्यात् । देवव्रती । तिलव्रती । अवान्तरदीक्षी । आकृतिगणः ॥

(२२) **इ्वुश्चाष्टाचत्वारिंशतः । [३।२।४।३।]** ड्वुडिन् च स्याद् अष्टाचत्वारिंशतं वर्षादीनि व्रतं चरतीत्यर्थे । अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ॥

(२३) **इञ्ञ्यश्चतुर्मासात् । [३।२।४।४।]** चतुर्मासेषु भवतीति चातुर्मास्यं, तानि चरतीत्यर्थे इञ्ञ्यौ स्त । ड्योश्च इलुक् च ञ्यः स्यात् । चातुर्मासी । चातुर्मासकः । इदादेजर्थः । अन्यस्त्वाह- इड्य इति वाच्ये ञ्यग्रहणमनादैजर्थम् । चातुर्मासी ॥४॥

**भूर्तच्च मासाद् यखञौ वयोर्यो द्विगो षषो वा ण्य ठखत्समायाः ।**
**द्विगोश्च संवत्सरात्र्यहोभ्यः लुग्वर्षतः प्राणिनि ठः शताद् यः ।**
**आर्हादमाने तु ठडर्धकंसात् त्रिंशड्ड्वुकोऽनाम्नि तु विंशतेः कः ॥३।५।२॥ षट्पदी ॥**

(२४) **भूर्तच्च मासाद् यखञौ वयः । [३।२।५।१।]** भूरिति तं भूतो भावी, तस्मै भृतोऽधीष्टः, तेन निवृत्तौ, ऊर्, यथासम्भवम्, एष्वर्थेषु विधिः । तदिति द्वितीयान्तम् । मासं भूतो भावीति यखञौ स्तः, वयश्चेद् गम्यते । मास्यः । मासीनः । वयः किम् ? मासिको व्याधिः ॥

(२५) **यो द्विगोः । [३।२।५।२।]** मासात् तथैव । द्विमास्यः । अध्यर्धमास्यः । अर्धपञ्चमास्यः ॥

(२६) **षषो वा ण्य । [३।२।५।३।]** षडादेर्मासात्तथैव ण्य च य वा ठञ् च यज्ञे । षाण्मास्यः । षण्मास्यः । षाण्मासिकः ॥

**(२७) ठ । [३।२।५।४।]** तथा ण्यो वा । षण्मासिकः । अठञोऽर्थं पृथक् ॥

**(२८) खत् समायाः । [३।२।५।५।]** तं भूतादौ । [समाम् अधीष्टो, भृतो, भूतो भावी वा] समीनः ॥

**(२९) द्विगोश्च । [३।२।५।६।]** तथैव । चकारो वानुकर्षार्थः । तेन ठञ् च । द्विसमीनः । द्वैसमिकः ॥

**(३०) संवत्सररात्र्यहोभ्यः । [३।२।५।७।]** एतदन्ताद् द्विगोः भूतादौ खत् ठञ् च स्यात् । द्विसंवत्सरीणः । द्विसांवत्सरिकः । त्रिरात्रीणः । त्रैरात्रिकः । द्व्यहीनः । द्वैयह्निकः । अह्नः खे एव नित् । समाहारे । द्वार्हनम् । द्वैयह्निकम् ॥

**(३१) लुग्वर्षतः । [३।२।५।८।]** वर्षा[न्ता]द् द्विगोः भूतादौ खञ् ठञ् च लुक् । द्विवर्षीणः । द्विवर्षिकः । द्विवार्षः । भाविनि, द्वैवर्षिकम् ॥

**(३२) प्राणिनि । [३।२।५।९।]** अर्थे भूतादौ लुग् नित्यं, पार्थक्यात् । सार्धपञ्चवर्षः दारकः । प्राणिनि किम् ? द्विवर्षीणो व्याधिः ॥

**(३३) ठः शताद्यः आर्हादमाने तु । [३।२।५।१०।]** आर्हाद् योऽर्थो मानवर्जितस्तत्र शतात् ठयौ स्तः । शतेन क्रीतं शत्यं, शतिकं वस्त्रम् । अमाने किम् ? शतं परिमाणमस्य शतकं स्तोत्रम् । द्विशतकम् ॥

**(३४) ठडर्धकंसात् । [३।२।५।११।]** आर्हीयेऽर्थे । अर्धेन क्रीतः अर्धिकः । कंसिकः ॥

**(३५) त्रिंशड्ड्वुकोऽनाम्नि तु विंशतेः । [३।२।५।१२।]** आभ्यामार्हीये ड्वुः स्यात् तथा । त्रिंशतम् । [विंशकम् ।] नाम्नि तन्मानमस्य । त्रिंशत्कः । [विंशतिकः ॥]

**(३६) कः । [३।२।५।१३।]** तथाभ्याम् । त्रिंशत्कः । [विंशतिकः] ॥५॥

**संख्यातोऽतिशतोऽद्वतोष्टिवसनोऽण्वा शूर्पतो विंशति-**
**कात् खः स्याद् द्विगुतोऽपि लुक् च सुवर्णाद् वा द्वित्रिबह्वादिनि-।**
**ष्काद् बिस्ताच्छतमानोऽण् च सहस्रात् कार्षापणाट् ठट् प्रति**
**यः शाणाद् द्वित्रितोऽण् शताद् य पणतो माषाच्च पादात् सदा ॥३।२।६॥**

**[शार्दूलविक्रीडितम् ।]**

**(३७) संख्यातोऽतिशतः । [३।२।६।१।]** संख्यायाः, अत इति अत्प्रत्याहार-गृहीताध्यर्धशब्दाद् अर्धादिपूरणप्रत्ययान्ताच्च औपदेशकत्यतशदन्तवर्जितात्, आर्हीयेऽर्थे को वा स्यात् । दशभिः क्रीतः, दशकः । पञ्चकः । बहुकः । कतिकः । गणकः । अध्यर्धकः । अध्यर्धपञ्चमकः। अतिशत् किम् ? साप्ततिकः । पाञ्चाशत्कः ॥

**(३८) अद्वतोष्टि । [३।२।६।२।]** अत्वतसदन्तसंख्याया आर्हीयस्य कस्य दित् इटि इडागमो वा स्यादित्यर्थः । तावता क्रीतः, तावतिकः । तावत्कः । यावतिकः । [यावत्कः ॥]

( ३९ ) **वसनोऽण्** । [ ३।२।६।३ ] ङसि नावृत्तेः वसनादण् स्यादार्हीये । वासनः ॥

( ४० ) **वा शूर्पतः** । [ ३।२।६।४। ] तथाऽञ् वा । शौर्पम् ॥

( ४१ ) **विंशतिकात्** । [ ३।२६।५। ] तथाऽण् नित्यः । विंशतिकः ॥

( ४२ ) **खः स्याद् द्विगुतोऽपि** । [ ३।२।६।६। ] तदन्तात् तथा । द्विविंशतिकीनम् ॥

( ४३ ) **लुक् च** । [ ३।२।६।७। ] द्विगुनिमित्त आर्हीयो लुक् स्यात् । द्विकंसम् । [त्रिकंसम् । अध्यर्धकंसम् ।] द्विशूर्पम् । [त्रिशूर्पम् । अध्यर्धशूर्पम् ॥]

( ४४ ) **सुवर्णाद् वा** । [ ३।२।६।८। ] आर्हीयष्ठलुक् ॥ र्णा लघुश्रुतिः । द्विसुवर्णम् । द्विसौवर्णिकम् । अध्यर्धसुवर्णम् । अध्यर्धसौवर्णिकम् ॥

( ४५ ) **द्वित्रिबह्वादिनिष्काद्बिस्तात्** । [ ३।२।६।९। ] द्वित्रिबहुपूर्वान्निष्कबिस्तात् तथा ठञ् लुग्वा । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । [बहुनिष्कम् । बहुनैष्किकम् । [द्वि]बिस्तम् । [द्विबैस्तिकम् । त्रिबिस्तम् । त्रिबैस्तिकम् । बहुबिस्तम् । बहुबैस्तिकम् ॥

( ४६ ) **शतमानतोऽण् च सहस्रात्** । [ ३।२।६।१०। ] द्विगोस्तथा लुग्वाऽण् । स्रा लघुः । द्विशतमानम् । द्विसहस्रमानम् । [द्विशातमानम् । द्विसाहस्रमानम् । द्विगोः किम् ? शातमानः । [साहस्रः ॥]

( ४७ ) **कार्षापणाट्टट्** । [ ३।२।६।११। ] तथा ठञ् लुग्वाऽत एव टट् । द्विकार्षापणम् । [त्रिकार्षापणम् । अध्यर्धकार्षापणम् ।] द्विकार्षापणिकम् । [त्रिकार्षापणिकम् । अध्यर्धकार्षापणिकम् ।] टिद्ङ्यर्थः । द्विगोः किम् ? कार्षापणिकः ॥

( ४८ ) **प्रतिः** । [ ३।२।६।१२। ] कार्षापणः स्याट्ठडि परे वा । प्रतिकी ॥

( ४९ ) **यः शाणात्** । [ ३।२।६।१३। ] तथा लुग्वा । पञ्चशाण्यम् । पञ्चशाणम् ॥

( ५० ) **द्वित्रितोऽण्** । [ ३।२।६।१४। ] शाणात् तथा यो वाऽण्वा लुग्वा स्यात् । द्विशाण्यम् । द्वैशाण्यम् । द्विशाणम् । [त्रिशाण्यम् । त्रैशाण्यम् । त्रिशाणम् ॥]

( ५१ ) **शताद् यः** । [ ३।२।६।१५। ] तथा लुग्वा । द्विशत्यम् । [त्रिशत्यम् । अध्यर्धशत्यम् ।] द्विशतम् । [त्रिशतम् । अध्यर्धशतम् ॥]

( ५२ ) **पणतो माषाच्च पादात् सदा** । [ ३।२।६।१६। ] यणाद्यन्ताद् द्विगोरार्हीयेऽर्थे यः स्यान्नित्यम् । द्विपण्यम् । [त्रिपण्यम् । अध्यर्धपण्यम् । द्विमाष्यम् । त्रिमाष्यम् । अध्यर्धमाष्यम् । द्विपाद्यम् । त्रिपाद्यम् । अध्यर्धपाद्यम्] ॥६॥

**खारीकाकण्याः कप् क्रीतं टाँ ङसें वापः पात्राट्ठट् स्यात् ।**
**संयोगोत्पातौ हेतुर्यो द्व्यज्भ्यानश्चादेः पुत्राच्छः ॥३।२।७॥ विद्युन्माला ॥**

( ५३ ) **खारीकाकण्याः कप्** । [ ३।२।७।१। ] आभ्यामार्हीये कप् स्यात्, तदन्ताद्

द्विगोश्च । खार्या क्रीतं खारीकम् [काकणीकम् ।] द्विखारीकम् । [द्विकाकणीकम् ।] पिदहूस्वार्थः ॥

**(५४) क्रीतं र्टा ।** [३।२।७।२।] र्टान्तात् क्रीतमित्यर्थे यथाविधि ठञादि स्यात् । प्रस्थेन क्रीतं, प्रास्थिकम् । शतिकम् । शत्यम् । पञ्चखारीकम् । र्टैतिकरणात् किम् ? द्वाभ्यां, क्रीतम् । प्रस्थाभ्यां, प्रस्थैर्वा क्रीते न, संख्यानवगतेः । अवगतौ स्यात् । दिकम् । मौद्‌गैः क्रीतं, मौद्गिकम् ॥

**(५५) र्ङो वापः** [।३।२।७।३।] षष्ठ्यन्ताद् वाप इत्यर्थे तथा । उप्यतेऽत्रेति वापः । प्रस्थस्य वापः, प्रास्थिकः सस्यः । [द्रौणिकः ।] खारीकः ॥

**(५६) पात्राट्टट् स्यात् ।** [३।२।७।४।] तथा पात्रस्य वापः । पात्रिकी भक्तिः ॥

**(५७) संयोगोत्पातौ हेतुः ।** [३।२।७।५।] षष्ठ्यन्ताद्धेतुरित्यर्थे ते स्युः स चेद्धेतुः प्राणिनां शुभाशुभस्य सूचकः । संयोग उत्पातो वाऽद्भुतः स्यात् । शतस्य हेतुर्धनपतिना संयोगः, शत्यः । साहस्रः । शतस्य हेतुर्वा साक्षिस्पन्दनं शत्यम् । [शातिकम् । साहस्रिकम् ।] साङ्ग्रामिकम् [इन्द्रधनुः] । एतौ किम् ? शतस्य निमितं ना ॥

**(५८) यो द्व्यज्भ्यानश्वादेः ।** [३।२।७।६।] षष्ठ्यन्तात् द्व्यचो भ्यसा बह्मवर्चः सगोश्च, तौ हेतौ अस्येत्यर्थे यः स्यात् । धनस्य हेतू तौ धन्यः । स्वर्ग्यः । यशस्यम् । आयुष्यम् । ब्रह्मवर्चस्यः । गव्य [इति गो-]र्यो[ऽची]त्यन्ये । अनश्वादेः किम् ? यथाप्राप्तमेव तः । तनुमध्यमत्र-

अश्वाश्म गणोमा वर्षा वसु भङ्गा ।
उर्णापि च संख्या मानानि गणोऽयम् ॥१॥

आश्विकः । संख्या पञ्चकः । सप्तकः । शत्यः । मानानि – प्रास्थिकः । खारीकः ॥

**(५९) पुत्रात् ।** [३।२।७।७।] तथा । पुत्र्यः ॥

**(६०) छः ।** [३।२।७।८।] तथा । पुत्रीयः ॥७॥

**डिः सर्वभूमेः पृथिवीत ईशज्ञातोऽप्यणत्रैरुपदायवृद्धिः ।**
**तच्छुल्कलाभादपि दीयते डदर्धाट्ट भागाद् य च बल्वजादि ।**
**भारं वहत्यावहतीति हर्ता द्रव्यं क वस्नं ठ पचोऽण् च द्रोणम् ॥३।२।८॥ षट्पदी ॥**

**(६१) डिः सर्वभूमेः पृथिवीत ईशज्ञातोऽप्यण् ।** [३।२।८।१।] डिरिति सर्वभूमौ पृथिव्यां चेश्वरो विदितो वापि शब्दात् तयोर्हेतुः संयोग उत्पातो वेत्यर्थयोरण् स्यान्न ठञ् । सार्वभौमः । पार्थिवः ॥

**(६२) अत्रैरुपदायवृद्धितच्छुल्कलाभादपि दीयते ।** [३।२।८।२।] अत्र एरिति अत्रास्मै वा दीयत इत्यर्थे । तदिति प्रथमान्ताद् यथाविधि ठञादि स्यात् तत्प्रथमान्तं चेदुपदा उत्कोचो वा। आयो वा ग्रामादौ स्वामिग्राह्यो भागः । दत्तातिरिक्तोत्तमर्णग्राह्या वृद्धिर्वा । रक्षानिर्वेशो [राज]भागः शुल्कं वा । मूल्यातिरिक्तो लाभो वा स्यात् । पञ्चात्रास्मै वोपदीयते पञ्चकः । शत्यः । साहस्रः ।

ग्रामो ना वा ॥

**( ६३ ) डदर्धाट्ठः । [ ३।२।८।३ ]** तथा डत्प्रत्याहारपूरणान्ताद् अर्धाच्च ठः स्यात् । पञ्चम उपपञ्चम उपपद्यतेऽस्मै वा दीयते, पञ्चमिकः । द्वितीयिकः । अर्धिकः ॥

**( ६४ ) भागाद् य च । [ ३।२।८।४। ]** तथा च ठः । भाग्यम् । भागिकं शतम् । भागिका विंशतिः । भागार्धयो रूपकार्थे रूढिः ॥

**( ६५ ) बल्वजादि भारं वहत्यावहतीति हर्ता । [ ३।२।८।५। ]** बल्वजादिभारभूतम् । बल्वजा आदयो यस्य तं भारं वहतीति हरतीत्यर्थे ठण् स्यात् । श्लोकोऽत्र-

> बल्वजकुटजस्थूणामूलवंशाश्मन्निक्षवः ।
> खट्वाऽश्वाऽक्षाश्च चेद् भारास्तदादिर्वा स इष्यते ॥१॥

बल्वजादीन् भारभूतान् वहत्यादि बाल्वज इत्यादि । यद्वा बाल्वजभारिकः कौटजभारिक इत्यादि ॥

**( ६६ ) द्रव्यं क वस्त्रं ठ । [ ३।२।८।६। ]** तौ वहति कठौ । द्रव्यकः । वस्त्रिकः ॥

**( ६७ ) पञ्चोऽण् च द्रोणम् । [ ३।२।८।७। ]** पच इति कर्तृनिर्देशात् । द्रोणं पचतीति अण् च ढञ् च स्यात् । द्रौणी । द्रौणिकी । द्विद्रोणी सा ॥८॥

**अवहरन्ति च सम्भवतीति तमचितिपात्रत आढकतः ख वा ।**
**द्विगुकृतात् खठटौ कुलिजाच्च लुक् भृतिवस्त्रांशतदस्य न मानमु ॥३।२।९॥ द्रुतविलम्बितम् ॥**

**( ६८ ) अवहरन्ति च सम्भवतीति तम् । [ ३।२।९।१। ]** तमिति द्वितीयान्ताद् एतेष्वर्थेषु यथाविधि ठञादिः स्यात् । अन्ति च्छन्दोऽर्थम् । प्रस्थमवहरति, पचति वा, उपसंहरति पचति वा, सम्भवति वा चेदनतिरेकं कलयति, प्रास्थिकः । खारीकः ॥

**( ६९ ) अचितपात्रत आढकतः ख वा । [ ३।२।९।२। ]** तथा एभ्यः खः वा ठञ् वा । अचितमवहरति, आचितीना । आचितिकी । एवं । [पात्रीणा । पात्रिकी । आढकीना । आढकिकी ॥]

**( ७० ) द्विगुकृतात् खठटौ । [ ३।२।९।३। ]** द्विगुभूताचितादेः तथा खठटौ वा स्तः । ठञ् च ठलुक् । द्वे अचितेऽवहरति, [सम्भवति, पचति], द्व्याचितीना । द्व्याचितीकी । द्व्याचिती । एवं द्विपात्रीणा । द्विपात्रिकी । द्विपात्री । [द्व्याढकीना । द्व्याढकिकी ।] द्व्याढकी ।

**( ७१ ) कुलिजाच्च लुक् । [ ३।२।९।४। ]** द्विगुकुलिजात् तमवहरति [सम्भवति पचति] खठटौ वा स्तः । ठञ् च लुक् च वाऽतश्च । द्विकुलिजिनी । द्वैकुलिजिकी द्विकुलीजी । द्वैकुलिजिकी ॥

**( ७२ ) भृतिवस्त्रांशतदस्य । [ ३।२।९।५। ]** तत्प्रथमान्ताद् अस्य भृतिर्वस्त्रं मूल्यम् अंशो वेत्यर्थे यथाविवक्षादि स्यात् । पञ्च भृतिरस्य, पञ्चकः [कर्मकरः ।] शत्यः । साहस्रः । खारीकः ।

[पञ्चास्य वस्त्रं पञ्चकः पटः । शत्यः । साहस्रः । पञ्चास्यांशाः पञ्चकं नगरम् । शत्यम् । साहस्रम् ॥]

**( ७३ ) न मानमु । [ ३।२।९।६। ]** अम्यमानमित्यर्थे प्रथमान्ताद् यथाविधि ठञादि स्यात् । उ निपातः । नेति लुका सम्बध्यते । द्विगोर्लुग्न स्यात् । प्रस्थः परिमाणमस्य, प्रास्थिकः, शत्यः, [साहस्रिकः, खारीकः,] राशिः । खारशतिकः । खारसाहस्रिकः । वार्षशतिकः । [वार्षसाहस्रिकः ।] षष्टिर्जीवितमानमस्य षाष्टिकः । साप्ततिकः । द्विषाष्टिकः ॥९॥

**संख्याकसूत्राध्ययनाख्यसंघे पञ्चद्दशद्वर्ग उ डट् च स्तोमे ।**
**चत्वादिरिंशं डणि त्रैंशमर्हेद् यज्ञं घ दण्डादि य तौ च पात्रम् ।**
**कच्छ्रीर्त्विजीनादि च लाति लुक्कः ॥३।२।१०॥ पञ्चपात् ॥**

**( ७४ ) संख्याकसूत्राध्ययनाख्यसंघे । [ ३।२।१०।१। ]** संख्यायाः यः क उक्त उपलक्षणत्वान्नकादि कप्वा स तदस्य मानमित्यर्थे सूत्रादौ वाच्ये । अष्टावध्यायाः परिमाणमस्य, अष्टकं पाणिनीयं सूत्रम् । [त्रिकं] काशकृत्स्नम् । अध्ययने पञ्चकः पाठोऽधीतः । सप्तकः । पञ्चावृतयो वाराऽस्य पञ्चकमध्ययनम् । आख्येति संख्याज्ञा । द्वन्द्वैकत्वाद्ध्रस्वत्वम् । कृत्वा पुनर्द्वन्द्वैकत्वम् । स्वार्थे पञ्चैव पञ्चकम् । [पञ्चकाः] शकुनयः । त्रिकाः शालङ्कायनाः । षष्टि दिनानि पाकमानमेषां षाष्टिका व्रीहयः । संघे [प्राणिसमुदाये] । पञ्चकः संघः । अष्टकः । तदस्य मानमित्येव सिद्धत्वाद् एतत्पादवर्जं वृत्तम् । एवं ह्यन्ये । पक्तिः । विंशत्यादि शतान्त ठनि निपात्यते, लोकादेव सिद्धेः, अयुतादिवत् ॥

**( ७५ ) पञ्चद्दशद्वर्ग उ । [ ३।२।१०।२। ]** पञ्च दश वा मानमस्य वर्गस्य । उ निपातः । डश्च कश्च निपात्यते । पञ्चत् पञ्चको वा, दशत् दशको [वा] वर्गः । वर्गः किम् ? पञ्चकः संघः ॥

**( ७६ ) डट् च स्तोमे । [ ३।२।१०।३। ]** प्रथमान्तान्मानमस्य स्तोमस्येति ड स्यात् । स्तो लघुश्रुतिः । पूगे वा पाठः । पञ्चः, पञ्चदशः स्तोमः । पञ्चदशी रात्रिः ॥

**( ७७ ) चत्वादिरिंशं डणि त्रैंशम् । [ ३।२।१०।४। ]** इष्टविषयत्वान्निपातस्य ब्राह्मणाख्यायां चत्वारिंशत् त्रिंशद् वोऽध्याया मानमेषामित्यर्थे ऽणि परे निपात्यते । चत्वादिरिंशं, चत्वारिंशम् इत्यर्थः । चत्वारिंशानि त्रैंशानि वा ब्राह्मणानि कानिचित् । चत्वारिंशकोऽन्यः ।

**( ७८ ) अर्हेत् । [ ३।२।१०।५। ]** तदिति द्वितीयान्ताद् अर्हतीत्यर्थे यथाविधि ठञादि स्यात् । श्वेतच्छत्रमर्हति, श्वैतच्छत्रिकः । वास्त्रिकः । शत्यः । दैशिनिकः । नेहासामर्थ्यात् । भोजनं शयनं वाऽर्हति ॥

**( ७९ ) यज्ञं घः । [ ३।२।१०।६। ]** तथा यज्ञीयः ॥

**( ८० ) दण्डादि यः । [ ३।२।१०।७। ]** तथा [दण्डा]दिभ्यः । द्विदण्ड्यः । वृत्तं त्विह-

दण्डोदकौ स्तो मुसलार्घमेधाः कशा च पर्के मधु शीर्षच्छेदे ।
वधो युगो मेघ कडङ्गरा तु स्थालीबिला स्यादथ दक्षिणारः ॥१॥

रोऽन्तो कडङ्गरादित्रयं करिति प्रत्याहारः ॥

**(८१) तौ च पात्रम् । [३।२।१०।८।]** अर्हति तौ घयौ स्तः । पात्रियः । पात्र्यः ॥

**(८२) कच्छे । [३।२।१०।९।]** [कर्प्रत्याहारान्तर्गत-]कडङ्गरादीन् अर्हते छः । कडङ्गरीयः [गौः । स्थालीबिलीयाः तण्डुलाः । दक्षिणीयो भिक्षुः] ॥

**(८३) आर्त्विजीनादि च । [३।२।१०।१०।]** निपात्यते । श्लोकोऽत्र

आर्त्विजीनश्च शालीनः कौपीनोऽधृष्टाकार्ययोः ।
सख्ये साप्तपदीनं स्यादार्त्विजीनादयः स्मृताः ॥१॥

ऋत्विजमर्हति खञ् । शालामर्हति प्रवेष्टुमधृष्टेऽर्थे । कूपं चाकार्ये । सप्तपदान्यर्हति प्राप्ततया यत्तैरवाप्यते तत् सख्यं चेत् । साप्तपदीनश्च सखा ॥

**(८४) लाति लुक्कः । [३।२।१०।११।]** परार्थम् ॥१०॥

**डतेत्यसौ वा ग्रहणेऽप्यवृद्धेः गर्ह्यं दशैकादशरं कुसीदम् ।**
**ठङ् पारिषद्यः समवैति सेनां ढञ् वा चरे ठट् श्वगणेन पर्पे ॥११॥ उपजातिः ॥**

**(८४) डतेत्यसौ । [३।२।११।१।]** डेन पूरणान्तेन लाति गृह्णातीत्यर्थे कः स्यात् । लुक् वासौ डत् । षष्ठेण रूपेण [ग्रन्थ] गृह्णाति षट्कः [देवदत्तः ।] पञ्चको ना । विवक्षार्थत्वाद् इतेर्ग्रन्थविषयं ग्रहणम् ॥

**(८५) वा ग्रहणेऽपि । [३।२।११।२]** डता लातीत्यर्थे ग्रहणेऽभिधेये स्वार्थे कः स्यात् । डल्लुक् च वा । द्वितीयेन रूपेण [ग्रन्थं] गृह्णाति, द्वितीयकेन । द्विकेन । द्वितीयकम् । द्विकं [ग्रहणम्] । चतुष्कम् । चतुर्थकम् ॥

**(८६) अवृद्धेर्गर्ह्यम् । [३।२।११।३।]** तद् गर्ह्यं निन्द्यं च गृह्णातीति ठञ् । द्विगुणं गृह्णातीति, द्वैगुणिकः । त्रैगुणिकः वधृषिं वृद्धिं लाति, वार्द्धुषिकः । अवृद्धेः किम् ? वृद्धिं लाति ॥

**(८७) दशैकादशरं कुसीदं ठङ् । [३।२।११।४।]** रमन्ताद् दशैकादशात् कुसीदं च लातीति ठट् । दश च ते एकादश चेति ठट् [दशैकादशम् ।] अत एव स दत्ता, दशैकादशिकः ॥

**(८८) पारिषद्यः । [३।२।११।५।]** तां समवैतीति ञ्यः ॥

**(८९) समवैति सेनां ठञ् वा । [३।२।११।६।]** सैन्यः । सैनिकः ॥

**(९०) चरे ठट् श्वगणेन । [३।२।११।७।]** श्वगणेन चरतीति ठट् ठञ् वा । श्वागणिकः । [श्वागणिकी ॥]

**(९१) पर्पे । [३।२।११।८।]** चरति ठङ् नित्यम् । श्लोकोऽत्र-

पर्पजालपलव्यासव्यालाश्वत्थाः रथस्तथा ।
आकर्षपञ्चपादाश्वाः शक्तिघासावितीतरे ॥१॥

पर्पिकः ॥११॥

**टीं संस्कृतं कूपधतोऽण् कुलत्थात् संसृष्टमौद्गं लवणं च चूर्णिन् ।**
**बाह्वादिभिर्जीवति व्रातत: खञ् वस्त्रायुधाच्छः क्रयविक्रयाट्ठः ॥३।२।१२॥ इन्द्रवज्रा ॥**

(९२) **टीं संस्कृतम्** । [३।२।१२।१।] टीन्तात् संस्कृतमित्यर्थे ठ्ञ स्यात् । दध्ना संस्कृतं, दाधिकम् । शाङ्र्गवैरिकम् । मारीचिकम् ॥

(९३) **कूपधतोऽण् कुलत्थात्** । [३।२।१२।२।] कवर्गोपान्तकुलत्थैः संस्कृतमित्यण् । दार्दरिकः । मोद्गः । सारथः । कौलत्थः ॥

(९४) **संसृष्ट** । [३।२।१२।३।] टीन्तादुपस्तिक्तमित्यर्थे ठञ् । दाधिकम् । सौपिकम् ॥

(९५) **मौद्गं लवणं च चूर्णिन्** । [३।२।१२।४।] तथैभ्योऽण् लुगिनः स्युः ॥

(९६) **वाहादिभिर्जीवति** । [३।२।१२।५।] इति ठञ् । अत्र पञ्चपात्-

वाहोपवाहोपनिषत्स्फिगर्धवाहोपहस्ता उदवस्तिशक्ति ।
वेशमन्धनुर्दण्डसुखादिशय्या स्यात् प्रेषणं वेतनजालपादाः ।
वेशोऽप्युपस्थानमथोपदेशः ॥१॥

[वाहिकः ।] धनुर्दण्ड एकः द्वौ वा । [धानुर्दण्डिकः । धानुष्कः । दाण्डिकः ।] सुखादिशय्या । सुखशय्येत्यर्थः ॥

(९७) **व्रातत: खञ्** । [३।२।१२।६।] व्रातानां कर्म व्रातम् । तेन जीवति [इति: खञ् । व्रातीनः ॥

(९८) **वस्त्रायुधाच्छः** । [३।२।१२।७।] तथा । वस्त्रीयः । [आयुधीयः ।] वस्त्रान्नान्ये ॥

(९९) **क्रयविक्रयाद् ठः** । [३।२।१२।८।] तथा । क्रयिकः । [विक्रयिकः ।] क्रयविक्रयिको वा । वस्त्रायुधानुवृत्तेः, वस्त्रिकः । [आयुधिकः] ॥१२॥

**हरतोत्पुटैः कौटिलिकष्ठ वीज्भिः टो नौ द्व्यचश्च प्लवते कृतोऽक्ष-**
**द्यूतैरिमोऽब्भावघणोऽपमित्यात् कण् याचिताच्चञ्चुचणौ च वित्तः ॥३।२।१३॥ वृत्तम्॥**

(१००) **हरतोत्पुटैः** । [३।२।१३।१।] उत्पुटादिभिर्हरतीति ठञ् ॥

(१०१) **कौटिलिकः** । [३।२।१३।२।] कुटिलिकया हरतीत्यण् ॥

(१०२) **ठ वीज्भिः** । [३।२।१३।३।] वीजादिभिर्हरतीति टित् ठः स्यात् । द्वितयेऽपि षट्पाद्-

उत्पुटोत्सङ्गपिटाकाः पिटकोडुपमुवुयः ।
वीवधविवधज्वीच्चांशेशीर्षेऽशशीर्षतः ।
भारो भस्त्राकरणं स्याद् भरटाद्याकृतिगणौ ॥१॥

औत्पुटिकः यावद् वैवधिकः । वीवधविवधच् वीच्प्रत्याहारः । एतौ समानार्थौ पथि पर्याहारे च वर्तेते । उत्पुटादि । वीच् । वीवधिकः । [वीवधिकी ।] विवधिकः । [विवधिकी । ठञपि । वैवधिकः । वैवधिकी ।] टिङ्खर्थः । अंशे शीर्षे । एभ्यः परो भारोऽत्र । अंशभारः । [अंशेभारः । शीर्षेभारः । शीर्षभारः ।] अंशेभारिक इत्यादि ।

**(१०३) टो नौ द्व्यचश्च प्लवते । [३।२।१३।४।]** तथा तरतीत्यर्थे । नावा प्लवते तरतीति नाविकः । घटिकः । प्लविकः । बाहुकः । नौ द्व्यचश्चेति चकारः पृथगर्थः । तेन तृतीयान्तात् प्लवत इत्यर्थे ठञ् स्यात् । काण्डप्लविकः । औडविकः ।

**(१०४) कृतोऽक्षद्यूतेः । [३।२।१३।५।]** एभिः कृतो निर्वृत इत्यर्थे ठञ् । [अक्षद्यूतेन निर्वृतं वैरम्,] आक्षद्यूतिकम् । आर्येह-

अक्षद्यूतगतागतकण्टकमर्दनमतो गतानुगताः ।
यातापयातपादस्वेदनजङ्घाप्रहारादि ॥१॥
आदि जङ्घाप्रहताद्यर्थः ॥

**(१०५) इमोऽब्भावघणः । [३।२।१३।६।]** आभ्यां कृत इत्यर्थे इमः स्यात् । क्रयिमम् । तरिमम् । पाकिमम् । त्यागिमम् । सेकिमम् । अट्टिमम् । अप् घण् किम् ? पचनेन निवृत्तम् । भाव किम् ? शरेण कृष्टम् ॥

**(१०६) अपमित्यात् कण् याचितात् । [३।२।१३।७।]** आभ्यां कृते कण् । आपमित्यकम् । [याचितकम् ॥]

**(१०७) चञ्चुचणौ च वित्तः । [३।२।१३।८।]** टान्ताद् वित्तः प्रतीत इत्यर्थे स्तः । विद्यया वित्तः, विद्याचञ्चुः । विद्याचणः । केशचञ्चुः । [केशचणः] ॥१३॥

**ङेर्योऽर्घपादातिथिदेवतान्तात् तद्दीयते वौदनतोऽण् च भक्तात् ।**
**नित्यं नियुक्तोऽत्र ठः साद्यगारादाकालिकोऽणिद्दविलेपकादेः ॥३।२।१४॥ वृत्तम् ॥**

**(१०८) ङेर्योऽर्घपादातिथिदेवतान्तात् । [३।२।१४।१।]** ङेरिति चतुर्थ्यन्ताद् अर्घादेर्यः स्यात् तस्मै इदमित्यर्थे । अर्घ्यं, [पाद्यं] जलम् । अतिथेरात्वं च निपातनात् । आतिथ्यम् । एवम् अग्निदैवत्यम् । वायुदैवत्यम् ॥

**(१०९) तद्दीयते । [३।२।१४।२।]** तदिति प्रथमान्ताद् अस्मै दीयते नित्यमव्यभिचारेणेत्यर्थे ठञ् स्यात् । अग्रभोजनमस्मै नित्यं दीयते, आग्रभोजनिकः । आपूपिकः । यामिकः । आग्रहारिकः । मांसोदनिकः ॥

**(११०) वौदनतः । [३।२।१४।३।]** तथा । औदनिकः । [औदनिकी ॥]

**१११) अण् च भक्तात् । [३।२।१४।४।]** तथा ठञ् च । भाक्तः । [भाक्तिकः ॥]

**(११२) नित्यं नियुक्तोऽत्र । [३।२।१४।५।]** अत्रेति सप्तम्यन्तान्नियुक्तोऽधिकृत इत्यर्थे ठञ्

स्यात् । शुल्कशालायां नियुक्तः, शौल्कशालिकः । दौवारिकः ॥

**(११३) ठः साद्यगारात् । [३।२।१४।६।]** तथाऽऽगारान्ताच्च । कोष्ठागारिकः । देवागारिकः । भाण्डागारिकः ॥

**(११४) आकालिको वा । [३।२।१४।७।]** आद्यन्तावुत्पादविनाशौ सम्यगभावस्य, आ तं कालं भवतीति वेत्यर्थे आकालिकोपनिपात्यते, स चेत्यलक्षितो वा । आकालिकः स्तनयित्नुः । आकालिकी, आकालिका वा, विद्युत् । यस्मात् कालाद् गृहदाहो वृत्तः श्वस्तनेऽपि दिने आ तं कालं स्याद् आकालिकोऽनध्यायः ॥

**(११५) अणिद्दविलेपकादेः । [३।२।१४।८।]** ऋवर्णविलेपकादीनां धर्म्यं न्याय्यमित्यर्थेऽण् स्यात् । होतुर्धर्म्यं, हौत्रम् । औद्गात्रम् । एवं वैलेपिकः । वेः । परं भाजितृशस्तृ स्याद् इत् । इर्लुक् । विभाजयितृ । विशासितृ । अनयोः क्रमेण णियोर्लुक् । वैभाजित्रम् । वैशस्त्रम् । वृत्तं त्विह-

विलेपिका स्यान्महिषी पुरोहितोऽनुलेपिकाभाजितृशास्तृसेरीत् ।
स्याद् याजमानोऽप्यनुचारकोऽपि प्रजापतिः स्यान्मणिपाल्यथो वृत् ॥१॥

धर्म्यमत्र सम्बध्यते ॥१४॥

**धर्म्यं शीलं णेश्छत्राः कर्मवृत्तं ड्रोऽध्याये ठो बह्वजादेः स शस्त्रम् ।**
**स्याच्छक्त्यादेष्टीक पारश्वधः स्याच्छिल्पं चाण् वा मड्डुकाज्झर्झराच्च ।**
**ठोः शीरादेः पण्य वा पञ्चपादवृत् ॥३।२।१५॥ शालिनी पञ्चपात् ॥**

**(११६) धर्म्यम् । [३।२।१५।१।]** ड्रोऽत्र षष्ठ्यन्ताद् धर्म्यं धर्मादनपेतमित्यर्थे ठञ् स्यात् । शुल्कशालायाः धर्म्यं, शौल्कशालिकम् । आपणिकम् ॥

**(११७) शीलम् । [३।२।१५।२।]** सोऽत्रापि । स इति प्रथमान्ताद् अस्य शीलं स्वभाव इत्यर्थे ठञ् स्यात् । अपूपाः भक्षणं शीलमस्य, आपूपिकः । भक्षणादिक्रिया तच्छीलं च तद्धितवृत्तावन्तर्भवति ॥

**(११८) णेश्छत्राः । [३।२।१५।३।]** सूत्रत्वात् पुंनिर्देशः । जम्भणार्थं छात्रादयः शीलमस्येत्यर्थे णः स्यात् । गुरुच्छिद्रछादनाच्छत्रं शीलमस्य च्छात्रः शिष्यः । प्राद्यन्तरः परः स्थाः । आस्था, संस्था, उपस्थेत्यादि । तथाऽवस्था । वृत्तमत्र-

छत्रं बुभुक्षा कृषि कर्म शिक्षा चोक्षा उपस्थान चुरा पुरोदाः ।
भिक्षा च सत्यांनृतविश्वधा तपः प्राद्यन्तरः स्था विशिको गणोऽयम् ॥१॥

**(११९) कर्मवृत्तं ड्रोऽध्याये । [३।२।१५।४।]** प्रथमान्तात् षष्ठ्यर्थे ठञ् स्यात्, तत् प्रथमान्तं चेद् वृत्तमध्ययनविषयं स्यात् । एकमन्यत् कर्म पपाठ रूपमध्ययने वृत्तमस्य, ऐकान्यिकः । अध्ययने किम् ? एकमन्यत् कर्म स्खलितं गमने वृत्तमस्य ॥

(१२०) **ठो बह्वजादेः** । [३।२।१५।५।] बह्वच्पूर्वपदात् तथा ठः । द्वांदशान्यिकः । त्रयोदशान्यिकः ॥

(१२१) **स शस्त्रम्** । [३।२।१५।६।] प्रथमान्ताद् अस्य प्रहरणमित्यर्थे ठञ् स्यात् । तोमरः प्रहरणमस्य तौमरिकः । आसिकः । धानुष्कः ॥

(१२२) **स्याच्छक्त्यादेष्टीक** । [३।२।१५।७।] तथाऽतः टित् ईकः स्यात् । शाक्तीकः । याष्टीकः । आम्भसीकः । ऐषीकः । टिद् ङ्यर्थः । आकृतिगणः ।

(१२३) **पारश्वधः स्यात्** । [३।२।१५।८।] परश्वधः प्रहरणमस्येत्यण् । [पारश्वधिकः ॥]

(१२४) **शिल्पं च** । [३।२।१५।९।] प्रथमान्ताद् अस्य शिल्पं कौशलमित्यर्थे ठञ् स्यात् । मृदङ्गवादनं शिल्पमस्य, मार्दङ्गिकः । पाणविकः ॥

(१२५) **अण् वा मड्डुकाज्झर्झराच्च** । [३।२।१५।१०।] तथाऽण् च । माड्डुकः । [माड्डुकिकः । झार्झरः । झार्झरिकः ॥]

(१२६) **ठोः शीरादेः** । [३।२।१५।११।] एते गन्धाढ्याः पण्यमस्येत्यर्थे ठः स्यात् । आर्येह-

अत्रोशीरहरिद्राकिशरनरदनलदगुग्गुलुस्थगलाः ।
तगरो हरिद्रुपर्णी शलालुनो वा गणो ज्ञेयः ॥१॥

उशीरकी । शलालुनः छ च ठञ् वा । शलालुकः । [शालालुकः । पण्या सुप् वा पृथगर्थः । प्रथमान्तादस्य पण्यमिति सूत्रार्थे ठञ् स्यात् । अपूपाः पण्यमस्य, आपूपिकः । लावणिकः ॥

पञ्चपादियं गाथा । वृदिति दशमः पादः ॥१५॥

**[इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे तृतीयाध्याये द्वितीयः, आदितो वा दशमः, पादः ।]**



## [ ॥ अथ तृतीयाध्याये तृतीयः पादः ॥ ]

**सञ्ज्ञातमभ्रेभ्य इतेच्च मात्रट् मानं द्विगोर्लुक पुरुषादणूर्ध्वम् ।**
**वा हस्तिनोऽपि द्वयसट् च दघ्नट् शनशच्छतेर्डिन् इयतुः कियान् यत् ॥३।३।१॥ वृत्तम् ॥**

**( १ ) सञ्ज्ञातमभ्रेभ्य इत । [ ३।३।१।१। ]** प्रथमान्तादभ्रादेरस्य सञ्ज्ञातमित्यर्थे इत स्यात् । अत्रापि चतुर्हतार्याः ससङ्गतादौ-

अभ्रनिद्राबुभुक्षानिशारोगावेगप्रचारव्रणव्याधितन्द्राः
पिपासागलोत्कण्ठदेहाः सुखद्रोहदुःखं भरः तारका कंटकाऽङ्गार च ॥१॥

किसलयसूचकौ कुसुमं करुः कुवलकुड्मलनिष्क्रमणं तथा ।
पल्लवमूत्रपुरीषविचारं च सुकुसल गर्भ न जन्तुषु ॥२॥

श्रद्धोत्कर्षोच्चाराः प्रलयजिगीषा पुष्प च गणोऽयम् ।
सङ्गतचतुरवडवबुधवातालसलवणं रसो वृच्च ॥३॥

तारकितं च नभः । निद्रितो ना । कण्टकितो वृक्षः । यावत् पुष्पितः ॥

**( २ ) इच्च मात्रट् मानम् । [ ३।३।१।२। ]** प्रथमान्तादस्यमानमित्यर्थे मात्रट् स्यादिच्च लुक् न चोक्ते । पञ्च मानमस्य पञ्चमात्रम् । वितस्तिमात्रम् । पटः प्रदेशमात्रः । शमित् । [शमः प्रमाणमस्य शमः ।] इच्च । पलं घृतम् । दिष्टिः वितस्तिः पटः ॥

**( ३ ) द्विगोर्लुक् । [ ३।३।१।३। ]** एतदर्थे द्विगोर्निमित्तो लुक् स्यात् । द्विपलम् । द्विप्रस्थी ॥

**( ४ ) पुरुषादण् ऊर्ध्वं वा हस्तिनोऽपि । [ ३।३।१।४। ]** आभ्यां तथो मानेऽण् वा, यथाप्राप्तं वा । पौरुषम् । हास्तिनम् । पुरुषदघ्नम् । [हस्तिदघ्नम् । पुरुषद्वयसम् । हस्तिमात्रम् ।] पुरुषमात्रम् ॥

**( ५ ) द्वयसट् च दघ्नट् । [ ३।३।१।५। ]** तथोर्ध्वमाने स्तो वा । ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रं जलम् । जानुदघ्नी नदी । तावद्दघ्नी । [तावद्द्वयसी । तावन्मात्रा ॥]

**( ६ ) शनशच्छतेर्डिन् । [ ३।३।१।६। ]** तथा वा । पञ्चदशमानमेषां पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः । विंशिनोऽङ्गिरसः । पञ्चदशमात्राः ॥

**( ७ ) इयतुः कियान् । [ ३।३।१।७। ]** इदं किं च मानमस्येत्यर्थे । इयतु । कियतु ।

नदिन्नुमर्थं निपात्यते । इयान् कियानिति छन्दोऽर्थम् । इयती । [कियती ।] इयन्मात्रम् । [कियन्मात्रम् ॥]

**(८) यत् । [३।३।१।८।]** उत्तरार्थम् ॥१॥

**एतत्तदोदावतु द्वित्र्युभेभ्योंऽशष्टाऽय संख्या कति वा तयोऽस्याः ।**
**क्रेयं च मूल्यं मयट्टच्छते सहस्रेऽधिकास्मिन् शतिशद्दशान्ताः ॥३।३।२॥ वृत्तम् ॥**

**(८) यदेतत्तदोदावतु । [३।३।२।१।]** वानथ । यावान् । [तावान् । एतावान् ।] यावती । [तावती । एतावती ।] यावन्मात्रम् । [तावन्मात्रम् । एतावन्मात्रम् ॥]

**(९) द्वित्र्युभेभ्योंऽशष्टाऽय । [३।३।२।२।]** एभ्यः सोऽस्यंशो अवयव इत्यर्थे टालक्षितः, टिदित्यर्थः, अयः स्याद् वा । टातये वा । द्वावंशौ अवयवौ अस्य, द्वयम् । त्रयम् । द्वितयम् । त्रितयम् । उभयो मणिः । उभये देवमनुष्याः ॥

**(१०) संख्या कति वा । [३।३।२।३।]** क मानमेषामिति डतिर्वा । कति विप्राः । कियन्तो वा । वा नातः ।

**(११) तयोऽस्याः । [३।३।२।४।]** अस्याः संख्यायाः सोऽस्यांशः टितयः स्यात् । पञ्चांशाऽस्य, पञ्चतयः संघः । चतुष्टयी रज्जुः ॥

**(१२) क्रेयं च मूल्यं मयट् । [३।३।२।५।]** संख्यायाः सोंऽशो गुणः क्रेयं मूल्यं चेत्यर्थे टिन्मयः स्यात् । उदश्वितः द्वौ भागौ क्रेयमस्य यवभागस्य । द्विमयाः यवा उदश्वितः । त्रिमयाः । यथा यवानां द्वौ भागौ मूल्यमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । त्रिमयम् । चतुर्मयम् । क्रेयमूल्ये किम् ? द्वौ भागौ क्षीरस्यैकः शर्करायाः । अंशः किम् ? द्वौ व्रीहियवौ मूल्यमस्योदश्वितः । कुतो नात्र द्वौ यवांशौ मूल्यमेषामुदश्वितामिति समुदितानां, यवांशसंख्या-सम्बन्धाभावात् । प्रत्येकसम्बद्धे स्यात् । द्वौ उदश्विदंशौ क्रममेयं यवानां, द्विमयायवा उदश्वितः । नेह । एको यवांशो मूल्यमस्योदश्वितः, एकस्यांशांशिकल्पनाभावात् । समता तु गम्यते । द्वौ यवांशौ अध्यर्धमुदश्वितः, अध्यर्धं वा यवानाम् । द्वौ उदश्विदंशाविति अमानांशानां तदंशाप्रतीतेः ॥

**(१३) टत् शते सहस्रेऽधिकास्मिन् शतिशद्दशान्ताः । [३।३।२।६।]** संख्या-ऽधिकाऽस्मिन् शते सहस्रे वाच्ये टत् स्यात् । विंशतिरधिकास्मिन्, विशं शतम् । [विंशं सहस्रम् ।] शतसहस्रं वा । एकविंशम् । [द्वाविंशम् । त्रयोविंशम् ।] त्रिंशं शतम् । त्रिंशं सहस्रम् । एकत्रिंशम् ।] एकादशम् । [द्वादशम् । त्रयोदशम् ।] शन्सिद्धेः दशत्र केवलार्थम् । द्वे तदन्ते च । एतदन्ता किम् ? षडधिकाऽत्र । शते [सहस्रे] किम् ? एकादशाधिकास्यां विंशतौ । संख्यायाः किम् ? गोविंशति रधिकात्र गो शते । नेह । एकादशपणा अधिका अत्र कार्षापणशते, विजातीयानामाधिक्यानवगतेः । टिदुत्तरार्थम् ॥२॥

**ङः पूरणं षट्चतुरः कतेः थुक् पित्ततपयाद् विंशतितस्तमड् वा ।**
**शतादिसंवत्सरमासतोऽर्धमासाच्च षष्ट्याद्यतदादि नो मट् ॥३।३।३॥ वृत्तम् ॥**

**(१४) डः पूरणम् । [३।३।३।१।]** षष्ठ्यन्तसंख्यायाः पूरणमित्यर्थे डट् स्यात् । एकादशानां पूरणः, एकादशः । द्वादशी । संख्यायाः किम् ? द्वाद्वशीनां मुष्टिकानां पूरणो घटः ॥

**(१५) षट्चतुरः कतेः थक् पित्तत्पयात् । [३।३।३।२।]** ततोऽनन्तरकतेः पयः तत्पयः । कतिपयाचेत्यर्थः । एषां डटि थुगागमश्च । षष्ठः । [चतुर्थः । कतिथः । कतिपयथः । पिदस्त्र्यर्थः ॥

**(१६) विंशतितस्तमड् वा । [३।३।३।३।]** भ्यसस्तस् । विंशत्यादेः पूरणमिति तमड् डट् वा । विंशतितमः । विंशः । [एकाविंशतितमः ।] एकविंशः । [त्रिंशतितमः ।] त्रिंशः । अष्टापञ्चाशत्तमः । [अष्टापञ्चाशः ॥]

**(१७) शतादिसंवत्सरमासतोऽर्धमासाच्च । [३।३।३।४।]** तथा तन्नित्यम् । शततमः । लक्षतमः । एकशततमी । संवत्सरतमो दिवसः । [मासतमो दिवसः । अर्धमासतमो दिवसः ॥]

**(१८) षष्ट्याद्यतदादि । [३।३।३।५।]** अतदादि असंख्यादि ङसि लोपाद् असंख्यापूर्वषष्ट्यादेस्तथा । षष्टितमः । नवतितमी । तदादेः । एकषष्टः । एकषष्टितमः ॥

**(१९) नो मट् । [३।३।३।६।]** [नान्तादेः] तथा [मट्] पञ्चमः । दशमी । असंख्यादेः किम् ? एकादशः । अष्टादशः ॥३॥

**तुर्यस्तुरीयो बहुपूगसंघाद् गणादिथोऽतोष्टित पिच्च तीयत् ।**
**द्वेस्त्रेस्तृभावस्त्वतलौ नञो या वाऽसङ्गतादेः इमनिः पृथुभ्यः ॥३।३।४॥ वृत्तम् ॥**

**(२०) तुर्यस्तुरीयः । [३।३।४।१।]** चतुर्णां पूरण इत्यर्थे निपात्यते ॥

**२१) बहुपूगसंघाद् गणादिथः । [३।३।४।२।]** बह्वादेः पूरणे टित् तिथट्टिथः स्यात् । परः *पिदस्त्र्यर्थोऽत्रापि । बहुतिथः । [पूगतिथः संघतिथः गणतिथः ।]* वह्वीनाम् । बहुतिथी ॥

**(२२) अतोष्टित पिच्च । [३।३।४।३।]** अत्वन्तसंख्यायाः पूरणे टित् इथ स्यात् पित् । यावतिथः । तावतीनां पूरणी, तावतिथी ॥

**(२३) तीयत् द्वेः । [३।३।४।४।]** तथा । द्वितीयः । तुटत् प्रत्याहारार्थः ॥

**(२४) त्रेस्तृ । [३।३।४।५।]** तथा । त्रेस्तीयत्, तृ चादेशः तृतीया ॥

**(२५) भावस्त्वतलौ । [३।३।४।६।]** षष्ठ्यन्ताद् भाव इत्यर्थे च त्व तल् च स्यात् । शब्दस्य प्रवृत्तिनिमित्तं भावः । भवतोऽतोऽभिधानप्रत्ययाविति । शुक्लस्य पटस्य गुणस्य वा भावः, शुक्लत्वम् । शुक्लता । गुणो गुणजातिश्च भावः । गोत्वम् । [गोता ।] गोजातिः । पावकत्वम् । दण्डित्वम् । राजपुरुषत्वमिति क्रियादिसम्बन्धित्वम् । देवदत्तत्वम् । चन्द्रत्वम् । सूर्यत्वम् । अवस्थाविशेषं सामान्यम् । आकाशत्वम् । अभावत्वमिति, उपचरते भेदसामान्यम् ॥

**(२६) नञो या । [३।३।४।७।]** नञ्तत्पुरुषाद् अस्य भावे त्वतलावेव स्तः । अमृदुत्वम् । [अमृदुता ।] अपतित्वम् । [अपतिता ।] नञ् किम् ? बार्हस्पत्यम् । यत् किम् ?

सिति, अपटुत्वम् । आपटवम् ॥

**(२७) वाऽसंगतादेः । [३।३।४।८।]** न यितस्तौ । असंगतत्वम् । [असंगतता ।] आसंगत्यम् । [अचतुरत्वम् । अचतुरता । आचतुर्यम् । अलवणत्वम् । अलवणता । आलवण्यम् । अलसत्वम् । अलसता । आलस्यम् ॥]

**(२८) इमनिः पृथुभ्यः । [३।३।४।९।]** वा भावे । प्रथिमा । पार्थवम् । पृथुत्वम् । [म्रदिमा । मार्दवम् । मृदुत्वम् ।] हरिणीप्लुताऽनुष्टुबत्र-

पृथुबालमहद्गुरुसाधवो बहुलपण्डिमकिञ्चनस्वादुनी ।
पटुखण्डजराशुलधूनि च प्रियमृदूरवचण्डतनूऋजूः ॥१॥

क्षिप्रक्षुद्रौ च दीर्घश्च ह्रस्वमन्दौ तथा बहु-।
होडपाकाश्च वत्सश्च महिखण्डौ च केचन ॥२॥ ॥४॥

**दृढादितोऽण्यट् च पुरोहितादेः कर्मापि यो दूतवणिक्सखिस्तेः ।**
**ज्ञातेः कपेर्ढञ् वुञणौ मनोज्ञहोतृत्विजादेश्छ तु ब्रह्मणस्त्वम् ॥३।३।५॥ वृत्तम् ॥**

**(२९) दृढादितोऽण्यट् च । [३।३।५।१।]** तथेमन्यत्व वा । ते अत्र-

दृढवर्णकृशोचितपण्डिता लवणमूर्खजडाम्रभृशदृढाः ।
बधिरोष्णमिहाम्ल च वर्णतः परिवृढो मधुरोऽपि च मूक च ॥१॥

चक्रशीते च वियातमतिलातमनस्तथा ।
शारदश्च समस्यान्तं मनोमती तथा गणः ॥२॥

दार्ढ्यम् । द्रढिमा । दृढत्वम् । [दृढता ।] वर्णतः । कार्ष्ण्यम् । [कृष्णिमा । कृष्णत्वम् । कृष्णता ।] शौक्ल्यम् । [शुक्लिमा । शुक्लत्वम् । शुक्लता । ] वेः परे यातादि । शारदन्ताः समो मनोमती । [वियातः । विमतिः । विलातः । विमनाः । विशारदः । संमनः । सम्मतिः ॥]

**(३०) पुरोहितादे : कर्मापि । [३।३।५।२।]** भावे, अपीति कर्मणीत्यर्थेऽण् यट् च वा । इहापि वंशस्थदोधकवृत्तानि द्वयमार्ययोश्च-

पुरोहितग्रामिकधूर्तदण्डिकाः विराधयाराधयचौरखण्डिकाः ।
समस्थमध्यस्थनिपातचर्मिका अनीश्वरब्राह्मणमाणवाऽसाः ॥१॥

राक्षसवाडवदुष्पुरुषाः स्युः बालिशनिष्कुलिकपुरुषाः स्युः ।
पूतिकसूचिकसारथिकाः स्युः छत्रिकसाञ्जलिकाञ्जनिकाः स्युः ॥२॥

वंशादिसंवेशिविपातकर्मिकाः क्षेत्रज्ञसंभाषिनश्च जानिकाः ।
कविः स्तेनो विशर्मप्रतिकौ विशस्ति अन्यस्थपत्यन्तगुणोऽर्हतोर्नुम् ॥३॥

एकद्वित्र्यन्येभ्यो भावो राजन्नधिश्च तिश्चति ।
चपलनिपुणोपराधयपिशुना दायादशीर्षघातिन् स्यात् ॥४॥

विषमस्थः परमस्थः गणपतिबहुषकुशलगडुलाः स्युः ।
विषिका शिलिकाऽपराधयमधिपत्याद्याकृतिगणः ॥५॥

पुरोहितस्य भावः कर्म वा, पौरोहित्यम् । पुरोहितत्वम् । [पुरोहितता ।] ब्राह्मण्यम् । [ब्राह्मणत्वम् । ब्राह्मणता ।] पत्यन्तगुणाभ्याम् । सैनापत्यम् । प्राजापत्यम् । जाड्यम् । जडिमा । जडत्वम् । [जडता ।] मौढ्यम् । [मूढिमा । मूढत्वम् । मूढता ।] अर्हतो नुमागमोऽण्यटि । आर्हन्त्यम् । अर्हत्वम् । अर्हत्त्वम् । एकादेः परो भावः । [एकभावः । [द्विभावः । त्रिभावः । अन्यभावः ।] राजन् केवलः । अधिसु अधिश्च परः । [सौराज्यम् । आधिराज्यम् । अधिराजत्वम् । अधिराजता ॥]

**( ३१ ) यो दूतवणिक्सखिस्तेः । [ ३।३।५।३। ]** भावकर्मार्थे वा । स्तेनः स्ते निपात्यते । दूत्यम् । दूतत्वम् । वाणिज्यम् । [वणिजत्वम् ।] सख्यम् । [सखित्वम् ।] स्तेयम् । [स्तेनत्वम् ।] पुरोहितादौ च स्तैन्यम् ॥

**( ३२ ) ज्ञातेः कपेर्ढञ् । [ ३।३।५।४। ]** तयोर्वा । ज्ञातेयम् । [ज्ञातित्वम् । ज्ञातिता ।] कापेयम् । [कपित्वम् । कपिता ॥]

**( ३३ ) वुञणौ मनोज्ञहोतृत्विजादेश्छ तु । [ ३।३।५।५। ]** एषां क्रमेण वुञणस्थाः वा स्युः । वृत्तं च षट्पात् प्रथमे, द्वितीये स्याद् दोधकं पञ्चपदी च आर्या ऋत्विग्विशेषास्तृतीयेऽस्त्वतो न ।

मनोज्ञकल्याणप्रियाभिरूपमेधाविछात्राद्यनु छान्दसः स्यात् ।
दिवो युवन् श्रोत्रियविश्वधूर्ताः ग्रामाच्छतामुष्यकुलाच्च पुत्रः ॥१॥

ग्रामखण्डादहोरूपाद् योपान्ताद् गुरुपोत्तमात् ।
असुप्रख्यात्तु लिद्वद्वाद् अपत्यचरणात् तथा ।
श्लाघाक्षेपावगतेषु वात्रामुष्यकुलादिवृत् ॥२॥

होतृयुवन्यजमानप्रशास्तृभ्रातृकमण्डलुकन्दुककुस्त्रम् ।
सुष्ठुवधूश्रवणस्थविराः स्युः दुष्ठुकुतूहलश्रोत्रिय इज्यः ॥३॥

स्त्री भातृहृद्भिर्हृदयं च दुःसोः सुब्रह्मचारिन्वृषलानृशंसु ।
क्षेत्रज्ञमध्वर्यु च हायनान्तोन्नेता परिव्राजकजन्तुजाति ।
तकोऽकवीकः प्रविहर्तृ गाथा ॥४॥

परिगणको रथगणको निपुणः पिशुनो वयोर्थ उद्गातृ ।
चपलकृतकौ कुशलं पुरुषः सुभगेषु मात्रवृत् ॥५॥

मानोज्ञकम् । मनोज्ञत्वम् । प्रियाभिभ्यां रूपम् । प्रैयरूपकः । [आभिरूपकः] ग्रामादेः पुत्रः । ग्रामपुत्रः । [शतपुत्रः । अमुष्यपुत्रः । कुलपुत्रः ।] योपान्तात् । गुरुपोत्तमात् । रामणीयकम् । [रमणीयत्वम् । रमणीयता ।] साहायकम् । साहाय्यम् । योपान्तात् किम् ?

विमानत्वम् । गुरुपोत्तमात् किम् ? क्षत्रियत्वम् । असुप्रख्यात् किम् ? सुप्रख्यत्वम् । [सुप्रख्यता ।] सौप्रख्यम् । द्वन्द्वाद् वुञ् लित् स्यात् स्त्र्यर्थः । गौपालपशुपालिका । शैष्योपाध्यायिका । कौत्सकुशिकिका । अपत्यचरणवाचिभ्यां श्लाघादिविषये लिद्वुञ् । गार्गिकया गार्ग्यत्वेन वा श्लाघते [आक्षिपति । अवगच्छति ।] एवम् अत्याकुरुते । अधिक्षिपति । एवं ताम् अवगतः प्राप्तो ज्ञातत्वाद् वा । एवं काठिकया [श्लाघते । अधिक्षिपति । अवेतः ॥] हौत्रम् । होतृत्वम् । [होतृता ।] यौवनम् । [युवत्वम् । युवता । श्रोत्रियशब्दे इल्लुग् यः । श्रौत्रम् । दुःसोः परे स्त्र्यादयः । दुःस्त्री । सुस्त्री । दुर्भ्रातृ । सुभ्रातृ । दुर्हृद् । सुहृद् । दुर्हृदयः । सुहृदयः । निर्हृदयं चेति हृदयादसमासे चेत्यर्थः । हायनात् । द्वैहायनम् । [द्विहायनत्वम् । द्विहायनता ।] त्रैहायनम् । [त्रिहायनत्वम् । त्रिहायनता ।] औन्नेत्रम् । उन्नेतृत्वम् । [उन्नेतृता ।] जन्तुजातेः । आश्वम् । [अश्वत्वम् । अश्वता ।] औष्ट्रम् । [उष्ट्रत्वम् । उष्ट्रता ।] तकोऽकवीक इति । तको ल[घ्व]क्षरात् पराद् अकवीकः कविवर्जितः, [तादृशाद्] इगन्तात् । शौचम् । शुचित्वम् । [शुचिता ।] पार्थिवम् । [पृथुत्वम् । पृथुता ।] प्रथिमा । पैत्रम् । पितृत्वम् [पितृता ।] वयोऽर्थ । कौमारम् । [कुमारत्वम् । कुमारता ।] कैशोरम् । [किशोरत्वम् । किशोरता ।] वार्करम् । पुरुषः । निदसमासार्थः । सुभगमन्त्रेऽर्थे । ऋत्विजादेरिति ऋत्विग्विशेषेभ्यो न स्वरूपतः । आच्छावाकीयम् । आच्छावाकत्वम् । मैत्रायणीयम् । [मित्रायणत्वम् । मित्रायणता ।]

**( ३४ ) ब्रह्मणस्त्वम् । [ ३।३।५।६।]** ब्रह्मण ऋत्विग्विशेषस्य भावः कर्म वेति त्वमेव स्यात् । ब्रह्मत्वम् ॥५॥

**णोऽन्नं च लब्धा ख यथामुखादेर्गामभ्यमित्रं छ य चाध्वनो टी-।**
**ऽयः शूलदण्डाजिन ठञ् तु कामी प्रायो वनादेः क इहाभिधान्नम् ॥३।३।६॥ वृत्तम् ॥**

**( ३५ ) णोऽन्नं च लब्धा । [ ३।३।६।१।]** अन्नमिति द्वितीयान्ताल्लब्धेत्यर्थे ण अ स्यात् । एवं सूत्रोक्तस्तुवन्तावद्विधिः । आन्नः । आन्नाः ॥

**( ३६ ) ख यथामुखादेः । [ ३।३।६।२।]** बहुलार्थे । वृत्तं च षट्पादिह-

यथामुखं सम्मुखमत्र दृश्यं सर्वान्नमत्याप्रपदं च सर्वा- ।
दङ्गं च पत्रं पथिकर्मपात्रं व्याप्नोति बद्धानुपदं तु नेयः ॥१॥

अयानयं चानुभवेत् परम्परं पुत्रपौत्रं च परोवरं च ।
अत्यन्तकामं तदवारपारं गाम्याशितंग्वद्यनुग्वागवीनाः ।
अलंकर्म चालंपुरुषाऽषडक्षं समासमीना पुनरद्यश्वीनम् ॥२॥

यथामुखं सन्मुखं च दृश्यते अत्र वा कर्दमादौ, यथामुखीनः । [सम्मुखीनः ।] सर्वान्नमत्तीति, सर्वान्नीनः । आप्रपदं सर्वाण्यपराण्यङ्गादीनि च व्याप्नोतीति पदाग्रं प्रपदम् । आप्रपदं व्याप्नोतीति, आप्रपदीनः पटः । सार्वङ्गीणः तापः । सर्वपत्रीणः सारथिः । सर्वपथीनो रथः । सर्वकर्मीणो ना । सर्वपात्रीण ओदनः । अनुपदं बद्धा, अनुपदीना उपानत्, पदप्रमाणा । अयानयीनः शारः । परं च परतरं च परम्परम् । परं च वरं च परोवरं, निपातनात् ।ताननुभवतीति च परम्परीणः ।

[पुत्रपौत्रीणः । परोवरीणः ।] अत्यन्तादीन् गामीति, अत्यन्तीनः । [अत्यन्तकामीनः ।] तदिति शैषिकवत् । अवारीणः । [पारीणः । अवारपारीणः ।] आशिता गावोऽत्र, आशितङ्गुः, निपातनात् । ततोऽद्यलाच्च स्वार्थे आशितम् । गवीनमरण्यम् । राजाधीनः अनुगुः । अलङ्गामीतीष्यते । अनुगवीनो गोपालः । ग्वा लघुः । आ गोप्रदानात् कर्म करोतीति, आगवीनः कर्मकरः । अलं कर्मणे । अलं पुरुषाय । न सन्त्यत्र षडक्षाण्यस्य, अषडक्षं, ततः स्वार्थे तद्धितार्थवृत्तितश्च । अलंकार्मीणो ना । [अलम्पौरुषीणो ना ।] षडक्षीणो मन्त्रः । समांसमां विजायते, समांसमीना गौर्वडवा च । अद्य श्वो वा विजायते भवति वा, अद्यश्वीनो [गौः] ।

**( ३७ ) गामभ्यमित्रं छ । [ ३।३।६।३। ]** अभ्यमित्रमलंगामीत्यर्थे छ स्यात् । अभ्यमित्रीयः ॥

**( ३८ ) य च । [ ३।३।६।४। ]** ख च तथा । अभ्यमित्र्यः । अभ्यमित्रीणः ॥

**( ३९ ) अध्वनः । [ ३।३।६।५। ]** यखौ तथा । अध्वन्यः । अध्वनीनः ॥

**( ४० ) टाऽयः शूलदण्डाजिन ठञ् तु कामी । [ ३।३।६।६। ]** टेति अयःशूलादिना [तृतीयासम-]र्थात् कामी अन्विच्छतीत्यर्थे ठञ् स्यात् । आयःशूलिकः । राभसिक इत्यर्थः । दाण्डाजिनिकः । दाम्भिक इत्यर्थः ॥

**( ४१ ) प्रायो धनादेः कः । [ ३।३।६।७। ]** स्यात् । प्रायो बहुलार्थे । अत्र गाथे-

कामो धने हिरण्ये च अंशं हारी नवोद्धृतः ।
तन्त्रात् सिद् ग्रामणी सोऽस्य कार्यकारणतो ज्वरे ।
शृङ्खलं बन्धनं चोष्ट्रे संज्ञायां ब्रह्मणोष्णितः ॥१॥

स्वाङ्गेषु सक्तौदरिकोऽलसे च सस्येन जातो वनपे तु वज्रः ।
पादे जयादौ पथकोऽध्यनूदः पार्श्वाभ्यभीभिः कमितोष्णशीतात् ॥२॥

धने [हिरण्ये] कामो वाञ्छेत्यर्थे । धनकः । [हिरण्यकः ।] अस्य अंशं हरत्यवश्यम्, अंशको दायादः । तन्त्रको नवोद्धृतः पटः । स इति प्रथमान्तादस्य ग्रामणीरित्यर्थे, सिच्छः स्याद् अक् सपूगादित्यर्थः । देवदत्तो ग्रामणीरेषां, देवदत्तकाः । यज्ञदत्तकाः । कार्यकारणभूतात् प्रथमान्ताद् अस्येत्यर्थे ज्वरे वाच्ये । शीतं कायमस्य शीतकः । उष्णको ज्वरः । कारणाद् द्वितीयो दिवसो हेतुरस्य द्वितीयकः । तृतीयकः । विषपुष्पाणि हेतुरस्य, विषपुष्पकः । कोशपुष्पकः । ज्वरः किम् ? द्वितीयो दिवसो हेतुरस्य भोजनस्य । शृङ्खलं काष्ठमयं बन्धनमस्योष्ट्रस्य, शृंखलकः करभः । नाम्नि । ब्राह्मणको देशः । उष्णिका, अल्पान्ना यवागूः । नदी वा । स्वाङ्गेषु सक्त इत्यर्थे । केशेषु सक्तः, केशकः । दन्तकः । तद्रचनाप्रतिबद्धः । सुप् समुदायार्थम् । दन्तौष्ठकः । नखकेशकः । उदरे सक्तोऽलस एव, औदरिको निपात्यते । तद्भरणनिष्ठोऽविजिगीषुरित्यर्थः । अलसः किम् ? उदरकः । सस्येन जातः, सस्यकः खड्गः । सस्यको मणिः । सर्वतः सारेण निष्पन्न इत्यर्थः । नयादौ विज्ञ इत्यर्थे नयकः । [पादकः । जयकः ।] आद्याकृत्यर्थः । एवं पथिकः । अधि-अनु-उदोः बहुलार्थे । अधिरूढो वृद्ध इत्यर्थे । अध्यारूढः खार्यां द्रोणः, अधिकः । अध्यारूढा खारी द्रोणं, द्रोणाधिका

खारी । अनुकामयते, अनुकामः । उन्माना इत्यर्थे उक्तः । पार्श्वाभ्यभीरिति । अभेः किम् ? दीर्घत्वं निपातनात् । पार्श्वेन कमितान्विच्छतीत्यर्थे पार्श्वकः । अप्रगुणेन पथा अर्थान् अन्विच्छतीत्यर्थः । अभिकामयते अभिकः । अभीकः । पुनरुष्णमर्थान्तरार्थम् । उष्णं शीतं यथा भवत्येवं कारीत्यर्थे, उष्णको दक्षः । शीतकोऽलसः ॥

**(४२) इहाभिधान्नम् । [३।३।६।८।]** प्रथमान्तात् प्रायोऽन्नमस्मिन्नित्यर्थे कः स्यात्, अभिधा संज्ञा चेत् । गुडापूपाः प्रायोन्नमस्यां पौर्णमास्यां, गुडापूपिका । तिलापूपिका । कृसरिका । त्रिपुटिका ॥६॥

**कुल्माषतोऽणिद्वटकोर्चितादेः टीं श्राद्धमिन्ठौ पुनरद्य भुक्तम् ।**
**नाश्योऽन्यक्षेत्रे घ इतीन्द्रियं ङीं मत्वडिरस्तीति उदन्वदादि ॥३।३।७॥ वृत्तम् ॥**

**(४३) कुल्माषतोऽण् । [३।३।७।१।]** तथा । कौल्माषी पौर्णमासी ॥

**(४४) इद्वटकः । [३।३।७।२।]** तथा । वटकिनी स्यात् ॥

**(४५) अर्चितादेः टीं । [३।३।७।३।]** प्रथमान्ताद् अर्चितादेः टींति तृतीयार्थे इन् स्यात् । आर्या च वृत्ते इह च—

अर्चितपरिकल्पिताभ्यां निपठितगणितात् तथानुगणिताच्च ।
अनुपठितनिकथिताभ्यां व्याकुलितादेश्च गाथेयम् ॥१॥

पूर्वात् सपूर्वादवधारिताच्चान्वेष्टा च द्रष्टाऽनुपदी च साक्षी ।
निराकृत्तो [पकृताच्च] गृहीतात् संरक्षितेष्टादवकीर्णपूर्तात् ॥२॥

आसेविताधीतश्रुतोपदेशादितायुक्ततः संकल्पिताऽवकल्पितात् ।
आम्नाततो व्याकुलितादुपाकृतात् स्यात् पर्यनो रक्षितयुक्ततोऽपि वृत् ॥३॥

अर्चितोऽनेन, अर्चिती देवे गुरौ वा । पूर्वात् । पूर्वकृतमनेन भुक्तं पीतमिति वा पूर्वी । सपूर्वात् । कृतं पूर्वमनेन कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । क्रमेण अनुपदी अन्वेष्टा चेत्, साक्षी गवादीनां द्रष्टा चेत् । नाम्नोऽन्यत्र । साक्षाद्द्रष्टा । पूर्ती श्राद्धे । आसेविती क्रियायाम् । अधीती व्याकरणे । उपाकृतात् उपकृती मित्रे । एवं पर्यनोः क्रमेण । परिरक्षिती । अनुयुक्ती ॥

**(४६) श्राद्धमिन्ठौ पुनरद्य भुक्तम् । [३।३।७।४।]** श्राद्धमनेनाद्य भुक्तमित्यर्थे इन्ठौ स्तः । श्राद्धी । श्राद्धिकः ॥

**(४७) नाश्योऽन्यक्षेत्रे घः । [३।३।७।५।]** ङ्यन्तात् क्षेत्राद् घः स्याद् अन्यक्षेत्रे नाश्यः, चिकित्स्य इत्यर्थे । क्षे लघुः । क्षेत्रियो व्याधिः, यो जन्मान्तराङ्गे नाश्यः । क्षेत्रियं विषं, संक्राम्यान्ययोगे नाश्यम् । क्षेत्रियाणि तृणानि, सस्यार्थे क्षेत्रे जातानि विनाश्यानि । क्षेत्रियः पारदारिकः ॥

**(४८) इतीन्द्रियम् । [३।३।७।६।]** इन्द्र आत्माऽतो घो निपात्यते । इन्द्रस्य लिङ्गम्, इन्द्रेण दृष्टं, सृष्टं, जुष्टं, दत्तं वेत्यर्थः ॥

**(४९) ङ्गौ मत्वङिरस्तीति । [३।३।७।७।]** अस्य [अस्मिन्] वाऽस्तीत्यर्थे प्रथमान्तान्मतुः स्यात् । गावोऽस्य सन्ति, गोमान् । श्रीपर्णी अस्मिन्नस्ति, श्रीपणीमान् पर्वतः । लट् किम् ? भूतभाविनीभिर्गोमान् । इतिशब्दो लौकिकविवक्षानियमार्थः ॥

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां मत्वादयो भवन्त्यमी ॥१॥

[भूम्नि] गोमान् । [निन्दायां] उदङ्गिणी कन्या । [प्रशंसायां] रूपवान् । [नित्ययोगे] कण्टकिनो वृक्षाः । [अतिशायने] गुणवान् । [संसर्गे] दण्डी । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । पीतः । इत्यर्थ आदौ वर्णपाठात् न लुग्वाच्यः । रसादेस्त्वत एव रसावान्, रूपवान् । मतुरेवेति नियमोऽप्युपयुक्तः । रसी रसिकः, रसवान् । रूपी, रूपिकः रूपवान् । गन्धी, गन्धिकः, गन्धवान् इत्यादिदर्शनात् । अद्रव्यवाचिजातेः पृथग्दृष्टेः, गोजातिरस्यास्ति गोमानिति न स्यात् । जातिमतो गोरन्यस्याभावाद् गुणवतः पटस्येव पिण्डादेः स्वकृतनाम्नः प्रतिपत्तुमशक्तिः ।

**(५०) उदन्वदादि । [३।३।७।८।]** तदर्थमतोः कृतघाद्यादेशो निपात्यते । इह षट्पात्-

उदन्वदष्ठीवद्षा रुमण्वान् ज्योत्स्नातमिस्रे च मलीमसः क-।
क्षीवन्तु चक्री च तु आमयावी जर्जश्वञ्जर्जश्वलस्वामिनीशे ।
चर्मण्वती नाम्नि मतोः सुराज्ये राजन्वदित्यादि तु षट्पदीयम् ॥१॥

नाम्नि सर्वत्र । उदकमत्रास्ति उदन्वान् उदधिः । अष्ठीवान् । चक्रीवान् गर्दभः । रुमण्वान् पर्वतः । ज्योतिस्तमश्चास्ति, ज्योत्स्ना चन्द्रप्रभा । तमिस्रा रात्रिः । तमिस्रः पक्षः । मलीमसः मलवान् । कक्षीवान् नाम ऋषिः । विनि दीर्घत्वम् । आमयावी । जर्जरजर्क वाऽस्याति जर्जश्वन्, जर्जश्वलः । स्वामिन ईश्वरेऽर्थे । चर्मण्वती नदी । नाम्नि मतोर्वः च स्यात् पचादेः । कपीवती । मणीवती । अत्रत्योप्यपवादे विधिः । पाशानासन्दीवान् । सौराज्येऽर्थे राजन्वान् । राजन्वती पृथ्वी । नाम्नि किम् ? उदकवान् । अस्थिवान् । लवणवान् । ज्योतिष्मान् । तमस्वती गुहा । मलवान् । कल्कवान् । चक्रवान् । आमयी । उर्वान् । अनिशोऽश्ववान् । चर्मवान् । असौराज्ये राजवान् ॥७॥

**मोपान्तरुष्मादयवादि मो वः काण्डाण्डभाण्डात् स च ईर प्रज्ञा-**
**ज्योत्स्नाजटानौबलसिध्मलोमपामादितो णाण्पिलेठेन्लशाः नः ॥३।३।८॥ वृत्तम् ॥**

**(५१) मोपान्तरुष्मादयवादिमो वः । [३।३।८।१।]** मकार अवर्णोपान्ताद् झयम्, अवर्णान्ताज्झयोऽयवादेमतोर्मः वः स्यात् । दाडिमीवान् । अहर्वान् । झयः । अग्निचिन्वान् । मात् । इदंवान् । किंवान् । वृक्षवान् । शालावान् । अयवादेः किम् ? श्लोकोऽत्र-

यवकृम्यूर्मिभूमिभ्यः ककुत्पाशेक्षुशिम्बितः ।
बन्धुबिन्दुद्रुकान्तिभ्यश्चारोश्चेत्याकृतिगणः ॥१॥

आत् । यवमान् । मुपान्तात् । कृमिमान् । [ऊर्मिमान् । भूमिमान् ।] झयः । ककुद्मान् । पूर्वेण नाम्नि । पाशामान् । इक्षुमतीत्यादि ॥

**( ५२ ) काण्डाण्डभाण्डात् स च ईर । [ ३।३।८।२।]** मत्वर्थेऽत इरः स्यात् । स च मतुः । काण्डीरः । [अण्डीरः । भाण्डीरः ।] काण्डवान् ॥

**( ५३ ) प्रज्ञाज्योत्स्नाजटानौबलसिध्मलोमपामादितो णाणिलेठेन्लशाः नः । [ ३।३।८।३।]** गणेभ्योऽष्टभ्यः क्रमणे मत्वर्थेऽणाद्याष्टौ स्युः । मतुश्च । एषु च पञ्चपादौ स्याद् दोधकं पञ्चपदी च वृत्तम् -

प्रज्ञार्चयाद्ये सहवृत्ति श्राद्धे ज्योत्स्नातमिस्त्रे त विपादिका स्यात् ।
तपः सहस्त्रे नखरं विसर्प्पः लुक् शर्करा वा सिकता च देशे ।
स्यात् कुण्डलं कौतुप पञ्चपाद् वृत् ॥१॥

जटाघटापिच्छसचोऽपि कद्रः प्रज्ञोदकोरो ध्रुवकाश्वफेनः ।
तुन्दोदरव्रीहिपिचण्डवृद्धौ स्वाङ्गाद्यवश्यादथ पञ्चपादवृत् ॥२॥

तोकरणं च खदा च कुमारी वृद्धनपूलशिखाश्च बलाका-।
ऽऽयामशिखाचलयामपताकोत्साहनडा उदवासकपी स्तः ॥३॥

व्यायाममालावलमेखलाः स्युः वीणा च संज्ञा वडवाऽष्टकाः स्युः ।
अरोहकर्मन्परिणाहचर्मन् सहस्त्रचर्मन्त्रवरोहणानि ।
पर्णाङ्गतुम्बादलवीभमत्र ॥४॥

सिध्मोदके फेनहनू च मांसः निष्पावनाभी मणिसक्तुजीवाः ।
वत्सांसतः स्नेहबले च वर्णः स्वाङ्गादुलः स्याद्धमनेश्च पार्ष्णेः ॥५॥

ललाटदन्ताद् बलवाततो द्रः स्यात् क्षुद्रजन्तोरुपतापहेतोः ।
घटाजटाकालगडोस्तु निन्द्ये प्रज्ञा च पांसुश्च गणाद् विवृत्तेः ॥६॥

लोमन्मुनी बभ्रुहरी स्त्रुचश्च रोमन्तरू वल्गुकपी गणोऽयम् ।
पामन् च श्लेष्मन् वलिसष्पिसामन्शाकीपलाल्या इव हेमवामन् ।
अङ्गाच्छुभे विष्वज इत्परोऽच्च लक्ष्म्याऽकड् च उ च षट्पदीयम् ॥७॥

प्रज्ञार्चाभ्यां सहवृत्तिश्राद्धे स्त आद्ये गणो गण आकृत्यर्थः । प्रज्ञ स्त्री । प्रज्ञावान् । मतुः सर्वेषु । ज्योत्स्नस्त्री । असो विन्मुक्ते । तापसः । तपस्वी । तपस्वान् । साहस्त्रः । बलादाविन् च । सहस्त्री । सहस्त्रवान् । नादन्ता ठः । शर्कराः सिकता च । देशे वा । व्यचसत् प्रत्याहारार्थाः । अतोऽह्लुक् च वा । शार्करः । [सैकतः ।] शर्करावान् । [सिकतावान् ।] शर्करादेशः प्राग्वल्लिङ्गसंख्ये । स च जटादौ च । शर्करिलो देशः । [सिकतिलो देशः ।] कुतुपादणि, कौतुपः । उक्तश्छन्दोऽर्थम् ॥१॥ जटिलः स तु उदाहृतः । फेनसिध्मादौ च । फेनिलः । फेनलः । तुन्दादि च वृत्पर्यन्तः तुन्दत् प्रत्याहारः । सव्रीह्यादौ च तुन्दिलः । तुन्दिकः । तुन्दी । वृद्धौ सत्यां स्वाङ्गात् । अण्डा वृद्धाः सन्त्यस्य, अण्डिलः । [अण्डिकः । अण्डी । अण्डवान् ।] नासिलः । [नासिकः । नासी । नासावान् ।] शुण्डिलः । [शुण्डिकः । शुण्डी । शुण्डावान् ।] नाविकः । [नौमान् ॥

वली न ठः ॥ सिध्मलः । यथासंख्यं वत्सांसाभ्यां स्नेहे बले नित्यं चेष्यते । वत्सलो गौः, स्नेहवान् । अंसलो ना बलवान् । अन्यत्र वत्सादनी गौः । अंसवान् दुर्बलः । पर्णलः । स्वाङ्गादिति प्राण्यङ्गादाकारान्तात् । चूडालः । जटालः । प्राणि किम् ? शिखावान् प्रदीपः । अङ्गं किम् ? इच्छावान् । आतः किम ? हस्तवान् । इचामतोऽनयोः । धमनीलः । पार्ष्णीलः । धमनिवान् । [पार्ष्णिवान् ।] डित ऊलडन्तः स्याल्ललाटादीनाम् । ललाटूलः । [दन्तूलः । बलूलः । वातूलः ।] क्षुद्रजन्तोः । यूकालः । मक्षिकालः । उपतापहेतोः । विचर्चिकालः । मूर्च्छालः । घटादे निन्द्येऽर्थे । घटालः । [जटालः कालालः । गडालः ।] प्रज्ञालः । [प्रज्ञिलः । प्रज्ञावान् । प्राज्ञः ।] पांसुलः ॥६॥ लोमश इत्यादि ॥७॥ पामनः । शाकीपलाल्याः इनान्तः । शाकिनम् । [पलालिनम् ।] अङ्गात् शुभकल्याणेऽर्थे । अङ्गनः । विष्वजः सत्कः परोऽच् । परपदमकृत्सन्धीत्यर्थः, इल्लुक् स्यात् । विषुणम् । लक्ष्म्याऽचान्तः कड् च उ च । लक्ष्मणः । कल्हणः ॥८॥

**ठेन्द्व्याद्यचोऽतोऽस्य न वेति व्रीहितः केशादितो वो मरुतस्तपर्वणः ।**
**मेधारथाद्वेर विनस्त्रजाद्यमायातः फलाद्बर्हमलादिनारकः ॥३।३।९॥ वृत्तम् ॥**

**(५४) ठेन्द्व्याद्यचोऽतोस्य न वेति । [३।३।९।१।]** द्व्याद्यचोऽनेकाचोऽदन्तस्येति तदस्यास्तीत्यर्थे ठइनौ स्तः, मतुश्च । न वेति बहुलार्थे । दण्डोऽस्यास्ति दण्डिकः । दण्डी । दण्डवान् । द्व्याद्यचः । किम् ? श्ववान् । अतः किम् ? बुद्धिमान् । अस्य किम् ? दण्डवती शाला । बहुलार्थोऽयम् ।

घणाद्यतान्न तौ पाकस्नेहे शब्दचयस्वनात् ।
स्तो भोगतरहारेभ्यः संयमाद् वैजवादितः ।
जातेर्नाऽतण्डुलादिभ्यो नाकार्यादिः कृतोऽपि तौ ॥१॥ षट्पदी ॥

घणादिप्रत्ययान्तात् पाकादेः न तौ ठेनौ । पाकवान् । [स्नेहवान् । शब्दवान् । चयवान् । स्वनवान् ।] स्तो घणाद्यन्तादपि भोगादेः । भौगिकः । भोगी । भोगवान् । इत्यादि । जातेर्न तौ । सिंहवान् । व्याघ्रवान् । अतण्डुलादिभ्यः किम् ? तण्डुलिक । [रसिकः । रूपिकः । कृत् पूर्वाचार्यसंज्ञा । कृदन्तादपि कार्यादिवर्जितान्न तौ । कारकवान् । पाचकवान् । द्रव्यवान् । धनवान् । अकार्यादेः किम् ? कार्यी । [हार्यी । तण्डुली ।] धनादुत्तमर्णे । धनी । इत्यादि ॥

**(५५) व्रीहितः । [३।३।९।२।]** व्रीह्यादेः अ[दन्तस्य च] तस्यास्ति [इत्यर्थे] ठेनौ मतुश्च स्युः । पुगस्येति निवृत्त्यर्थः । इहानुष्टुप् -

व्रीहिशीर्षाच्च मायाया अर्थार्थान्तादसन्निधौ ।
तुन्दत्केसमाषेभ्य एवमाद्याकृतिगणः ॥१॥

व्रीहिकः । [शीर्षिकः । मायिकः ।] अर्थतदन्तादसंनिहितेऽर्थे । अर्थी [प्रत्यर्थी ।] ध्यानार्थी । असंनिधौ किम् ? अर्थवान् । तुन्दत् प्रत्याहारः । तुन्दी इत्याद्युक्तम् । किन्तु तत्र व्रीहेरर्थादेव । शालिलः । अत्र शब्दार्थाभ्याम् । शाली । [शालिकः ।] शालिमान् ॥

**( ५६ ) केशादितो वः । [ ३।३।९।३। ]** तथा । मतुश्च । इहापि आर्या-

केशहिरण्यकुमाराः बिम्बकुररौ मणीष्टके ।
राजीगाण्डजकात् संज्ञायामर्णस इच्चाकृतिगणोऽयम् ॥१॥

केशवः । व्रीह्यादौ च । केशी । [केशिकः । केशवान् ।] गाण्ड्यजकात् संज्ञायाम् । गाण्डिवं गाण्डीवं वा । अजकवं [धनुः ।] अर्णसोऽन्त इत् लुक् च । अर्णवः ॥

**( ५७ ) मरुतस्त पर्वणः । [ ३।३।९।४। ]** तथाऽऽभ्यां त स्यात् । मतुश्च । मरुतः । पर्वतः । [मरुत्वान् । पर्ववान् ॥]

**( ५८ ) मेधाद्रथाद् वेरः । [ ३।३।९।५। ]** तथा । इर वा । यथाप्राप्तं वा । मेधिरः । मेधावान् । मेधावी । रथिरः । रथवान् । रथी ॥

**( ५९ ) विनस्स्त्रजाद्यमायातः । [ ३।३।९।६। ]** मत्वर्थे विन् वा स्याद् असन्तसञ्ज्ञा, आद्य इत्यनन्तरसूत्रे । मेधाशब्दः । माया एभ्यः । यशस्वी । यशस्वान् । तपस्वी । [तपस्वान् ।] स्रग्वी । [स्रग्वान् ।] मेधावी । [मेधावान् । मेधिरः ।] मायावी । [मायावान् ।] मायी ॥

**( ६० ) फलाद्बर्हमलादिन । [ ३।३।९।७। ]** तथा वा । शृङ्गाच्च । फलिनो वृक्षः, फली । [फलवान् ।] बर्हिणः [बर्ही ।] बर्हवान् । मलिनः । [मली । मलवान् ।] मलीमसश्च । शृङ्गिणः । [शृङ्गी । शृङ्गवान् ॥]

**( ६१ ) आरकः । [ ३।३।९।८। ]** उत्तरार्थः ॥९॥

**शृङ्गाच्च वृन्दाद्धिमनिद्रतो यालू इन् सुखादेर्वलितुण्डिवट्याः**
**भः कंशमः स्यात् ततियुस्तुयस्बाः कृष्यूषतोऽर्शोनवयज्ञतोऽपि ॥३।३।१०॥**

**( ६१ ) शृङ्गाच्च वृन्दात् । [ ३।३।१०।१। ]** तथा आरकः स्यात् । शृङ्गारकः । वृन्दारकः ॥

**( ६२ ) हिमनिद्रतो यालू । [ ३।३।१०।२। ]** एतदादिभ्यां तथा य आलु एतौ वा स्तः । द्वन्द्वैकत्वान्निद्राशब्दो ह्रस्वः । श्लोकोऽत्रार्धः-

हिमाद् गुणात् तथा रूपो[ष्णतृप्रेभ्य आहतात् ।
कृपाहृदयशस्ताच्च ॥१॥

हिम्यः पर्वतः ।] रूप्यो गौः । अनयोः किम् । रूपवान् । एवं निद्रालुः । निद्रावान् । [रूपालु । रूपवान् । उष्णालु । तृपालु । कृपालु । हृदयालु ।] स्पृहयालु । इत्यादि ॥

**( ६३ ) इन् सुखादेः ] [ ३।३।१०।३। ]** तथेनेव बहुलम् । सूत्रं तथा कृष्यादौ वृत्तत्रयार्याः -

सुखप्रतीपौ कृपणास्रसोढाः कृच्छ्राम्रदुःखं करुणा च तिप्रम् ।
अलीकशीर्णौ हलमालनिन्द्ये सर्वादिशीलानि टितो वयश्चेत् ॥१॥

बाहूरुपूर्वो बलधर्मशीली वर्णान्ततो नाम्नि तु दन्तहस्तः ।
मन्मान्तवर्णात् करतोऽतदंशाद् द्वन्द्वामनिन्द्यादपि जन्तुवृत्तेः ॥२॥

कत् स्यादतीसारपिशाचवाताद् देशे तमालोत्पलपद्मपुष्कराः ।
मण्डूकशालूकनडाः करीषः बिसं मृणालं विहगः कपित्थः ॥३॥

कर्दमकुमुदवयाशाः हिरण्यशिरीषी गणः ।
कृषिभ्रातृपरिवत्पुत्रोत्सङ्गाः दन्तशिखा श्रुतिरजो वृच्च ॥४॥

सुखप्रतीपीत्यादि । हलमालौ निन्द्येर्थे । हली [माली] दल इति वा पाठः । दली । सर्वपूर्वात् । सर्वबीजी । सर्वधनी । सर्वकेशी । शीली । इनपूरणान्ताद्वयश्चेद् गम्यते । पञ्चमो मासः, संवत्सरो वाऽस्यास्ति । पञ्चमी वालः । दशमिनावुष्ट्रः । वयः किम् ? पञ्चमवान् ग्रामरागः । बाहुऊरुपूर्वो बलः । बाहुबली । ऊरुबली । धर्माद्यन्तात् । साधुधर्मी । धर्मशीली । ब्राह्मणवर्णी । नाम्नि दन्तादेः । दन्ती । [हस्ती] करी च गजः । मनु एतदन्तात् । प्रथिमिनी स्त्री । दामिनी । सोमिनी । होमिनी । तथा वर्णी ब्रह्मचारी । नाम्नि किम् ? दन्तवान् । द्वन्द्वाद् आमादिति । रोगान्निद्याच्च जन्तुवृत्तेः । प्राणिस्थादित्यर्थः । अतदंशाद् अप्राण्यङ्गात् । अप्यनुकर्षार्थः । द्वन्द्वात् । कटकवलयी । शङ्खनूपुरणी । रोगात् । कुष्टी । ज्वरी । निन्द्यात् । ककुदावर्ती । काकतालुकी । जन्तुस्थात् किम् ? पुष्पफलवान् वृक्षः । अतदंशात् किम् ? स्तनकेशवती । अतः किम् ? चित्रकल टिकावती । अतिसारादेः । इनि । कगागमश्च । अतिसारकी । [पिशाचकी । वातकी ।] देशेऽर्थेऽतः । तमालिनी । पुष्करिणी । देशे किम् ? पुष्करवान् हस्ती । यावच्छिरीषी ॥

**(६४) वलितुण्डि वट्याः भः कंशमः स्यात् । [३।३।१०१४।]** भः । वलिभः तुण्डिभः । वटिभः । कम्भः । शम्भः ॥

**(६५) ततियुस्तुयस्बाः । [३।३।१०१५।]** तथाऽऽभ्यां स्युः । कन्तः । [शन्तः ।] कन्तिः । [शन्तिः ।] कंयुः । [शंयुः ।] कन्तुः । [शन्तुः ।] कंयः [शंयः ।] कम्बः [शम्बः] सित् पदसंज्ञार्थः ॥

**(६६) कृष्यूषतोऽर्शोनवयज्ञतोऽपि । [३।३।१०१६।]** जसन्त द्वन्द्वात् तथा तौ गणचतुष्टयात् क्रमेण भावतो वल अत् ठञ् स्युः । कृष्या युक्तः, कृषीवलः । वले दीर्घः । रजस्वला स्त्री ॥ त्रितये त्रयः स्युः श्लोकाः -

ऊषाखमुष्कपाण्डुभ्यो मुखकुञ्जनगात् पशोः ।
मधुपांशुसुखे कश्रा उदन्तस्योत्लते गणः ॥१॥

अर्शो लवणतुण्डामं जटाऽभ्रपलिताधमाः ।
स्वाङ्गाद्धीनाच्चतुरो रोवर्णादुर्णाद् घटादिवृत् ॥२॥

नवयज्ञो भवेदेकः पाकयज्ञस्तथापरः ।
निष्कादेः शतसहस्रादेरेकगोपूर्वतो गणः ॥३॥

जखरः । महत्कण्ठविवरमस्याति खरः कच्छ्वा । उरन्तश्च । कच्छुरः । दन्तस्यान्त उरुन्नतेऽर्थे । उन्नता दन्ताः सन्त्यस्य, दन्तुरः । अर्शांसि सन्त्यस्य अर्शसः । लवणः ओदनः । स्वाङ्गात् हीनात् । काणः । खञ्जः । हीनात् किम् ? शिखावान् । चतुरः । उरसः । वर्णात् । शुक्लो गुणोऽस्यास्ति, शुक्लः पटः । पीतः । वर्णात् किम् ? रूपी । रूपिकः । रूपवान् । रसी । [रसिकः । रसवान् ।] गन्धी । [गन्धिकः । गन्धवान् । यत्राभिन्नरूपेण तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् । नावयाज्ञिकः । [पाकयाज्ञिकः ।] निष्कादेः शतसहस्रात् । नैष्कशतिकः । एकगोपूर्वादत् । ऐकवस्त्रिकः । ऐकगविकः । ऐकविंशकः । समासान्तात् । गौशतिकः । गौलक्षिकः । अतः किम् ? गोविंशतिमान् । न च, बहुलत्वात् । एकद्रव्यवान् । गौशकटिकः । गोभिः क्षेत्रभूताभिस्तद्वान् । गोक्षेत्रवान् । क्वचिच्चैषां प्रयोगः । कृषिमत् क्षेत्रम् । रजस्वान् वायुः । तथा ऊषवान् घटः । मधुमान् वृक्षः । कुञ्जवान् गिरिः ॥१०॥

**वलोच्छ्रोऽवद्युद्रुतो म गोमिन् वाग्मी च पूज्येऽपर आलजाटौ ।**
**ऊर्णाहंशुभंभ्यः स्यु छः सूक्तसाम्नोर्लुग्वानुवाकेऽध्ययनेऽणकौ स्तः ॥३।३।११॥ वृत्तम् ॥**

(६७) **वलोच्छ्रो ठञ् ।** [३।३।११।२।] इत्युक्तम् ॥

(६८) **द्युद्रुतो मः ।** [३।३।११।२।] तथा । द्युमः । [द्रुमः ।] द्रु लघुः ॥

(६९) **गोमिन् वाग्मी च पूज्ये ।** [३।३।११।३।] तथा पूज्येऽर्थे निपात्यते । भद्रबाहुगोमी । वाचो ग्मिन् । वाग्मी ना । पूज्ये किम् ? गोमान् ॥

(७०) **अपर आलजाटौ ।** [३।३।११।४।] तथा वाचोऽपरे पूज्यान्निन्द्येऽर्थे आलच् आट एतौ स्तः । चिच्छन्दोऽर्थम् । वाचालः । वाचाटः । बह्वसम्बद्धभाषकः ॥

(७१) **ऊर्णाहंशुभंभ्यः स्युः ।** [३।३।११।५।] तथाऽतो युः स्यात् । सित् पदसंज्ञार्थम् । ऊर्णायुः । अहंयुः । शुभंयुः, कल्याणवान् ॥

(७२) **छः सूक्तसाम्नोः ।** [३।३।११।६।] वाच्ययोः प्रथमान्तात् तथा च्छः । अच्छावाक्शब्दोऽत्रास्ति, अच्छावाकीयं सूक्तम् । मित्रावरुणीयम् । यज्ञायज्ञीयम् । साम । अनुकरणप्रधानत्वादनेकपदादपि । अस्यवामीयम् । कयाषुभीयम् ॥

(७३) **लुग्वाऽनुवाकेऽध्ययने ।** [३।३।११।७।] अनयोर्वाच्ययोर्मत्वर्थो च्छो लुग्वा स्यात् । अत एव छः । गर्दभाण्डशब्दोऽत्रास्ति, गर्दभाण्डः । अनुवाकोऽध्यायो वा, गर्दभाण्डीयः । दीर्घञ्जीवितः । [दीर्घञ्जीवितीयः ।] पलितस्तम्भः । [पलितस्तम्भीयः ।] स्कम्भः ॥

(७४) **अणकौ स्तः ।** [३।३।११।८।] तथा तयोः परगणाभ्यां क्रमेण ॥११॥

**विमुक्ततो गोषदतस्त्विवेतद् देवादितस्त्रार्डिरमेर्तुदेये ।**
**सम्पत्कृञस्भ्वस्य वशे च सात् कित्त्वभूतभावेऽभिविधीतरेऽत्यैः ॥३।३।१२॥**

**वृत्तम् ॥**

(७५) **विमुक्ततो गोषदतस्तु । [३।३।१२।१।]** तौ तथा । वृत्तमनुष्टुबाद्याषट्पाद्द्वितीये तु-

विमुक्तदेवासुरसोमपूषन् रक्षोसुरेडापरिसारकाः स्युः ।
वयोदशार्णौ वसुमांस्तथाग्नाविष्णुर्महित्री उपसादकश्च ॥१॥

पत्नीवन्तु हविर्वांश्च सत्वन्नूपसदौ तथा ।
पतत्रि च मरुत्वांश्च वृत्रहत्यादिको गणः ॥२॥

गोषद्मातरिश्वानौ रक्षोहणाञ्जनप्रभूताः ।
देवीरापः कृशानु च देवीधीयप्रपूर्तकौ ।
अस्याखरेष्टः कृष्णो देवस्यत्वेच्चेत्ववृत् ॥३॥

वैमुक्तोऽनुवाकोऽध्यायो वा, इत्यादि ॥ तथा गोषदकः । मातरिश्वकः । इत्यादि ॥

(७६) **इवे वत् । [३।३।१२।२।]** इवार्थे सुपो वत् स्यात् । राजेव वर्तते, राजवत् ना । प्रासादवत् कुट्यामास्ते । तद्वत् स्थूलः गोमान्, वा जडवत् ॥

(७७) **देवादितस्त्रा ङिरम् । [३।३।१२।३।]** ङिरमिति सप्तमी द्वितीयान्ताद् देवादेर्बहुलं त्रा स्यात् । देवेषु देवत्रा वसति । देवान् देवत्रा गच्छति । एवं, मनुष्यत्रा । पुरुषत्रा । मर्त्यत्रा । आकृतिगणः ॥

(७८) **एर्तु देये सम्पत्कृञस्भू । [३।३।१२।४।]** एरिति चतुर्थ्यन्ताद् देयेऽर्थे सम्पदादिभिर्योगे त्रा स्यात् । देवाय देयं सम्पद्यते, देवत्रा सम्पद्यते । एवं करोति, स्यात्, भवति ॥

(७९) **अस्य वशेचसात् कित्तु । [३।३।१२।५।]** षष्ठ्यन्ताद् वशेऽधीनेऽर्थे, चकाराद् यथोक्तचतुर्थ्यन्ताच्च सम्पदादियोगे सात् स्यात् । स च कित् । अत् स इत्येतदर्थम् । राज्ञोऽधीनः राजसात् सम्पद्यते, [करोति, स्यात्, भवति ।] तथा देवाय देयं देवसात् सम्पद्यते, [करोति, स्यात्, भवति] ॥

(८०) **अभूतभावेऽभिविधीतरेऽन्त्यैः । [३।३।१२।६।]** अभिविधिरभिव्याप्तिरंशः । इतरः कार्त्स्न्यम् । तत्राभिविधीतर इति व्यस्तसमस्तार्थे अवस्था । ततोऽवस्थान्तरेणाभूतेऽस्य भावस्तदात्मता । तत्राभिविधावेकदेशेन प्रकृतिविकारेऽर्थे विकारवाचिनः सम्पदादियोगे सात् कित् स्यात् । अशुक्लः पटः, एकदेशेन शुक्लः सम्पद्यते [करोति, स्यात्, भवति], शुक्लसात् सम्पद्यते [करोति, स्यात्, भवति ।] अग्निसात् शस्त्रम् । उदकसात् लवणम् । अभूतभावे किम् ? शुक्लं करोति । नात्र प्रकृतिर्विवक्षिता । विकारात् किम् ? प्रकृतेर्मा भूत् । सुवर्णं कुण्डलीकरोति । सम्पदादिभिः किम् ? अशुक्लः शुक्लो जायते । अभूतभावस्य सम्पदा योगे किम् ? अदेवगृहे देवगृहे सम्पद्यते । आधारस्याभूततद्भाव आधेयस्य सम्पदादिभभिर्योगः ॥

(८१) **इतरेऽन्त्यैः । [३।३।१२।७।]** कार्त्स्न्ये प्रकृतेः सर्वात्मना विकारेऽर्थे भूतभावेऽन्त्यैः सम्पद्वर्जैरस्कृञ्भूभिर्योगे विकार आत् कित् स्यात् । भस्मसात् करोति । एवं स्यात्, भवति । यत्र प्रकृतिः सर्वाप्येकदेशेन विक्रियते सोऽभिविधेः सर्वात्मना द्रव्यविकारे तु कार्त्स्न्यम् ॥१२॥

**च्विस्तद्विकारादिह द्व्याद्यचो डाऽव्यक्तानुवादाड्ड्लुगितौ त्वदच्च ।**
**द्वित्त्वे तलुगनश्च सुखादितः क्रा स्यादानुलोम्यादिषु पाद एषः ॥३।३।१३॥ वृत्तम् ॥**

**( ८२ ) च्विः । [ ३।३।१३।१। ]** तथान्त्यैर्योगे । शुक्लीकरोति, [शुक्लीस्यात्, शुक्लीभवती] वस्त्रम् । उदकीकरोति लवणम् । तथा भस्मीकरोति, [भस्मीस्यात्, भस्मी-भवति] ॥

**( ८३ ) तद्विकारादिह । [ ३।३।१३।२। ]** अभूततद्भावे यदुक्तं तद् विकारवाचिनो द्रष्टव्यम् । तथोदाहृतम् । अन्ये त्विह भूतभावाभिविधीतराभावेऽपि च्विः । घटीकरोति, [स्यात्, भवति ।] समीपीकरोति, [स्यात्, भवति ।] अन्तिकी च [करोति, स्यात्, भवति ।] तत्स्थ्यतच्छस्यम् ॥

**( ८४ ) द्व्याद्यचो डाऽव्यक्तानुवादात् । [ ३।३।१३।३। ]** द्व्याद्यचोऽव्यक्तानुकरणभूतात् डा स्यादन्त्यैर्योगे । पटपटाकरोति [स्यात्, भवति ।] दमदमास्यात् [भवति, करोति ॥]

**( ८५ ) इलुगितौ त्वत् । [ ३।३।१३।४। ]** अस्यैव अत् डि लुक् स्यादितौ परे । पटत् इति पटिति । झटिति करोति । द्व्याद्यचः किम् ? श्रदिति । अव्यक्तानुवादात् किम् ? जगदिति । इतौ किम् । पटदत्र । अत् किम् ? मरुदिति । डित्वं जस्त्वं मा भूत् । तुङा निवृत्यर्थ इतौ ॥

**( ८६ ) अच्च द्वित्वे । [ ३।३।१३।५। ]** अस्यैव द्विर्वचनेऽत् कार्यो अत्वलुक् वा स्यादितौ । पटत्पटदिति । पटत्पटिति । द्वित्वे किम् ? पटिति ॥

**( ८७ ) तलुग्नश्च । [ ३।३।१३।६। ]** अस्यैव द्वित्वे डाप्रत्ययोऽन्तस्य इतौ च तलुक् स्यात् । पटपटाकरोति । [पटपटाभवति । पटपटास्यात् ।] पटत्पटिति ॥

**( ८८ ) सुखादितः क्रा स्यादानुलोम्यादिषु । [ ३।३।१३।७। ]** सुखादेर्डा स्यात् कृञो योगे, आनुलोम्यादिष्वर्थेषु । इहापि वृत्ते-

स्यादानुलोम्येऽत्र सुखप्रियाभ्यां शूलाच्च पाकेऽशपथे तु शल्यात् ।
निष्कोषणे पायनप्रातिलोम्ये स्यान्निष्कुलात् स्यात् समयाच्च दुःखात् ॥१॥

निष्पत्रतोऽतिव्यथने सपत्रान् मद्राच्च भद्राद् वपने द्वितीय-।
तृतीयशम्बाच्च कृषौ तु बीजात् तथैव संख्यादिगुणाद् गणोऽयम् ॥२॥

सुखा[करोति । प्रिया]करोति आनुलोम्ये आराध्यचित्तानुवर्तने । [आनुलोम्ये] किम् ? सुखं करोत्यौषधम् । एवं शूलाकरोति मांसम् । पाके किम् ? शूले करोति । सत्याकरोति ॥ वणिग् भाण्डं, मयैतद् ग्राह्यमिति । तथ्यं करोति । अशपथे किम् ? सत्यं करोति ॥ निष्कोषणाद्यर्थेऽक्रमेण निष्कुलादेः । निष्कुलाकरोति दाडिमम् । निर्बीजं [करोति] । समयाकरोति कालयापनं [करोति] । दुःखाकरोति चित्तपीडनं [करोति] । एषु किम् ? निष्कुलं [शत्रुं, समयं, दुःखं कदन्नं] करोति ॥ निष्पत्रा[करोति, सपत्रा]करोति मृगं व्याधः । परपार्श्वनिष्क्रा[न्त]शरं सशरं च । अतिव्यथने किम् ? निष्पत्रं [सपत्रं] करोति वृक्षम् ॥ मद्रा[करोति । भद्रा]करोति । वपने मङ्गल्यमुण्डने । [वपने] किम् ? मद्रं [भद्रं] करोति ॥ द्वितीयादेः कृषौ द्वितीया[करोति । तृतीयाकरोति । शम्बा]करोति । द्विस्त्रिप्रतिलोमं बीजान् कर्षतीत्यर्थः । कृषौ किम् ? द्वितीयं करोति ॥ संख्यादेर्गुणात् । तथैव कृषौ । द्विगुणा [करोति] । त्रिगुणाकरोति । द्विस्त्रिः कर्षति ॥१३॥

**पाद एषः । एकादशः ॥**

**[ इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे तृतीयाध्याये तृतीयः, आदितो वैकादशः, पादः । ]**

## [ ॥ अथ तृतीयाध्याये चतुर्थः पादः ॥ ]

**कण्ड्वादियक्क्यङ् च करोति शब्दान् क्विप् कर्तृवादाचरतीति गल्भात् ।**
**ङित्क्लीबहोडाद्ङिसमोऽम्वतः क्यच् स्वाप्यात् सकाम्येच्छति सन्तु मो वा ॥३।४।१॥ वृत्तम्॥**

**(१) कण्ड्वादि यक्क्यङ् च करोति शब्दान् । [३।४।१।१।]** चकारोऽनेकत्र सम्बध्यते । कण्ड्वादि[भ्यो धातुभ्यः] च करोत्यर्थे यक् स्यात् । शब्दादीन् करोत्यर्थे क्यङ् च णिञ् च स्यात् । तथा करोत्यर्थे, क्वचिदन्यार्थे च । वृत्तार्यमाद्ये-

कण्डूषिरे मन्तुहृणी नृसुड्यमः वेट्लाङ्गिरो वल्गुमहीत्वरायसः ।
मेधोषसौ भिष्णभिषजः सुभूयस् रेखा च लेखा च लेलेले स्तः ॥१॥

अल्लुक् कुसुम्भसम्बरमगधारुणपम्पसारराणां तु गद्-।
ददुःखसुखेषु च चरणतुरणभुरणसपराणाम् ॥२॥

कण्डूं करोति कण्डूतिः । अन्ये तु कण्ड्वादेर्यक् [पा. अ. ३।१।२७; जै. २।१।१५]। कण्ड्वादि । यक् स्वार्थे । कण्डूया । कण्डूयिनम् । कण्डूतिः । कण्डूयति । [कण्डूयते ।] अस्य [कण्डूञ, हृणीञ्, महीञ्, लाङ्] ञितस्तिङ् ङितस्तङ् । वेट्लाट् । वेयते । [लायते ।] वेड्लाडते । वेट्यति । लाट्यति । अत्लुक् भान्तः कुसुम्भादीनाम् । कुसुम्भ्यति इत्यादि । आकृतिगणः । भरण भुरण इत्यादि । [अत्र] सत्रिवृत्तगाथाऽन्ये-

शब्दाभ्रशीकाकलहानटाद्या नीहारकोटासुदिनानि पोटा
सोटाद्गमादुर्दिनवैरमेघान् कम्वादि चित्रं ङि करोति चित्रे ॥३॥

नमस्तपोऽतद्वरिवश्च मुञ्चति बाष्पोष्मलालात् प्रथफेनधूमौ ।
रोमन्थमाविर्भवतीति हत्वा डि कक्षकष्टाद् गहनाच्च सत्रतः ॥४॥

पापे क्रमे दुःखसुखे तु भुङ्क्ते सोढप्रतीपौ करुणाश्रुकृच्छ्रा-।
ऽलीकांश्च तृपं कृपणं तथास्त्रं कर्तृभृशादेरपि हल्लुगच्छैः ॥५॥

भृशोत्सुकौ पण्डितशीघ्रमद्राः मन्दाण्डरौ नीलशुची च वध्रः ।
रेहत् तु शश्वच्चपलौ च वेहद् ओजश्च वर्चोहरितौ नृषच्च ।

दुरुत्स्वभिभ्योऽपि मनोऽप्यतद् वा डा लोहितेभ्योऽप्सरओजसोः सः
लुग्वान्विवादाचरतीति गाथा ॥६॥

शब्दं करोति शब्दायते । अट्टायते । अटाट्यायते वा यावत् कण्ड्वायते । आद्ये तदर्थान्यार्थः । चित्रं करोति । ङि चान्तः । चित्रे आश्चर्येऽर्थे । चित्रीयते । चित्रे किम् ? चित्रं करोति । करोतिः शब्दादिषु सम्बध्यते । नमस् तपस् वरिवसश्च करोतीति च ङ तदन्तादङ् च स्यात् । नमस्यति देवान् । तपस्यति । वरिवस्यति । गुरून् परिचरति । मुञ्चत्युद्वमतीत्यर्थे बाष्पादीन् । बाष्पायते । [उष्मायते । लालायते । प्रथायते । फेनायते । धूमायते । ] रोमन्थं वर्तयति हत्वा दंष्ट्रयेति रोमन्थायते गौः । हत्वा किम् ? रोमन्थं वर्तयति कीटः । ङें चतुर्थ्यन्तात् । कष्टादेः । पापे क्रमे । क्रमणेऽर्थे । कष्टाय कर्मणे क्रामति, पापं कर्तुमिच्छतीत्यर्थे । कष्टायते । [कक्षायते । गहनायते । सत्रायते । शत्राद् भासस्तस् । एतदर्थान्यार्थः । दुःखादीन् भुङ्क्तेऽनुभवतीत्यर्थे । दुःखायते यावद् अश्रायते । तथेत्येतदर्थ्यान्यार्थः । कर्तुः भृशादेरस्यन्तात्, च्व्यर्थे क्य स्यात् । हल्लुक् च । अभृशो भृशो भवति, भृशायते । रेहत् रेहायते । ओजस् ओजायते । दुर उत् सु अभि एभ्यः परं मनस् । अदुर्मना दुर्मना भवति, दुर्मनायते । [उन्मनायते । सुमनायते । अभिमनायते ।] अप्येत्येतदर्थान्यार्थः । यद् वाषानतरेभ्यो डा लोहितादिभ्यस्तथैव क्यट्, तदन्तात् तद् वा स्यात् । डान्तात् । पटपटायति । तद् वा । वेति व्यवस्थायां च । तद्युक्तवत्येव कर्तरि । मदमदायति । तथा लोहितायति । [लोहितायते ।] भ्यस् एतदर्थेऽन्यार्थः । निद्रायति । [निद्रायते ।] धर्मायति । [धर्मायते ।] इवादुपमानात् कर्तुः क्य स्यादाचरतीत्यर्थे । अप्सरसो ओजसोर्लुक् चान्तः सः सकारान्तस्यान्यस्य वा । तद् वा न वर्तते । श्येन इवाचरति श्येनायति काकः । पुष्करायते कुमुदम् । अप्सरायते । ओजायते । पुनरोजोऽर्थविशेषार्थम् । पाययते । पयस्यते । किन्न क्ये पदार्थम् । ङितङर्थम् ॥

**( २ ) क्विप् कर्तृवदाचरतीति । [ ३।४।१।२।]** कर्तुरुपमानादाचारे क्विप् स्यात् । अश्व इवाचरित । अश्वायति । गवति । रायति । न्यवति वाचा । दधयति । मधयति । दध्या । किदङ शेऽर्थः । पिन् प्रितोरित्यर्थः । नामत्वान्न पिति, लुक् च ॥

**( ३ ) गल्भात् ङ्तिक्लीबहोडात् । [ ३।४।१।३।]** तथेभ्यः क्विप् ङित् स्यात् । गल्भते । [क्लीबते । होडते ।] यद् वोक्तानां मध्ये यो ङित् स्यात् । क्यङित्यर्थः । गल्भायते । [क्लीबायते । होडायते ।]

**( ४ ) ङि समोऽम्वतः क्यच् । [ ३।४।१।४।]** आधारादाप्याच्चोपमानादाचरतीत्यर्थे क्यच् स्यात्, अम्वतः मान्तादिवर्जितात् । प्रासादे इवाचरति, प्रासादीयति । कुट्याम् । पयङ्कीयति मञ्चके । पुत्रमिवाचरति, पुत्रीयति छात्रम् । प्रावारीयति कम्बलम् । अम्वादेः किम् ? किमिवाचरति । स्वरिविचित्क्यचीत्यर्थम् ॥

**( ५ ) स्वाप्यात् स काम्येच्छति । [ ३।४।१।५।]** स्वस्याप्यमिच्छतीत्यर्थेन स इति क्यच् काम्य च स्यात् । आत्मनः पुत्रमिच्छति, पुत्रीयति, पुत्रकाम्यति । वस्त्रीयति । [वस्त्रकाम्यति ।] स्वस्य किम् ? राज्ञः पुत्रमिच्छति । अचन्तः किम् ? किमिच्छति ॥

**( ६ ) सन् तुमो वा । [ ३।४।१।६।]** परार्थम् ॥१॥

**भ्वादेरिवेतः सहने तिजोऽनिट् कितश्चिकित्सावचगुप्क्षिपेताम् ।**
**दान्शानिमानो यङरुच्छुभो भृशाभीक्ष्णययोः सूत्र्यसृसूत्र्यटोऽर्णोः ॥३।४।२॥ वृत्तम् ॥**

**( ६ ) भ्वादेरिवेतः । [ ३।४।२।१।]** तुम इति भूप्रभृतेः तुमर्थवृत्तेरिच्छतीत्यर्थे सन् वा स्याद्

वाक्यं वा क्वचिदिच्छाभावेऽपीवार्थे । भवितुमिच्छति, बुभूषति । कर्तुमिच्छति, चिकीर्षति । प्रतीषिषति । इवेश्च । मर्तुमिच्छतीव, मुमूर्षति । अश्मा लुलुविषति । कूलं पिपतिषति । अतुमः । भोजनमिच्छति । इच्छति किम् ? भोक्तुं जानाति ॥

अत इ द्विरावर्तते । अतः परस्मात् । अतः स्वार्थिक सनन्तात् तुमर्थादिच्छतीत्यर्थे सन् स्याद् वा । तितिक्षिषतीत्यादि । अतः किम् ? चिकीर्षितुमिच्छति । भ्वादेरित्याशास्त्रं पञ्चमीनिर्देशात् । क्वचित् प्रथमान्तादपि प्रत्ययः परः स्यात् । क्वचित् पर्यायं स्यात् सन् च । भवादिषु सप्तत्रिशम् ।

सूक्तस्तदर्थे सति भावप्रत्यये तादृक्तदिद्वा पुनरौजसुक्ताः ।
त्वन्तास्तदन्त्यार्थवृत्तो णितो वा चान्ता पुरोऽन्त्यस्य चितो न चोक्तम् ॥१॥ वृत्तम् ॥

भूरोणृलुण्ठौ णिदिजीववाच्छिः महार्ह अर्चा लछलाछिवृञ्दाण् ।
चितीः शुचो जिः फलफुल्लशूलं रहत्यजौ ग्लै पुषतृमृषः क्षै ॥२॥

जैक्षैक्षियः मन्थगडिश्रुमूर्च्छाः दृशिर्कमुर्गृवृतुतृस्तुस्फूर्च्छाः ।
स्मृध्यैल्यमुष्ठाः खिटमाक्षिवाक्षिकाक्षिल्लुटोऽलञ्तसिमन्थिभूषाः ॥३॥

मडिन् कुटिः वटिः कदिः क्रदि क्लदि ऊदिण् च पूष षूः ।
पुडिच्युटः खलस्खलौ लघिन्मुडिन्रदच्कृषः ॥४॥

स्वर्जाजौ धूपतपौ भयलजलजिलाजिलाजातर्जाम्लैः ।
ईषोच्छौ निक्षचुबी दध्यवरक्षाः गूपुः पीलः ॥५॥ आर्या ॥

चट्चूषपाः [पाने] खै खदने शिघि घ्राणे त्वक्षूच्च ।
तक्षूरथ लक्षपक्षः सूर्क्ष्येर्क्ष्यईर्ष्याः दृहिपूषबृंहिलः ।
श्रिषुश्लिषुप्रुषुप्लुषुचित्प्रषूअषूहाः ॥६॥

चमुच्छमुजमुखादृभक्ष तु अदजिमगल च गुचु ह्तौ ।
ग्लुचुकुजुखुजुलञ्चुमूष च जिषुणिषुविषु[पृषु] सेचने च्युतिरे ।
मिषुपिषुवृषुउक्षपिवि च मिविमिहगृधृणिवि चोन्मदे ॥७॥ भद्रिकाषट्पदी ॥

म्रेट्मेड्लोड्रोड् शोष ओखृराखृलाखृ-।
द्राखृध्राखृपैशुठिश्च ओतिवै जडि वचश्च ॥८॥

पीवमीवतीवणीव हावने तु चुल्लचिल्लचुड्ड चेति ।
खर्ददंशल् व्याप्य इन्धि शाखृश्लाखृ ॥९॥ समानीद्वयम् ॥

उखनखणखवञ्चुः चञ्चुवल्ग्यर्दतञ्चुः मखरखलखमञ्चुः त्वञ्चुप[ड्य]ञ्चुसश्चिः ।
इखिरखिलखि म्लुञ्चुम्रुञ्चुलग्यगिग्लुञ्चुः यगिमगिरगिचर्बः पर्बचर्बेगिमर्बाः ॥१०॥

खगिरगिलिशकर्बः खर्बगर्बेटषर्बाः तगिरिगिचरबर्बः षेवृतिक्राटचेल्राः ।
त्रकिशिखिवृजवृञ्जिः स्मङ्गिवभ्राऽभ्रमभ्राः शटपटकिटतृक्षाः सृक्षजिकासमीमृः ॥११॥

द्रमकटहयहर्या अड्डुतुड्डुतृक्षाजाः चपिरिविरविधिर्वि शोणृपेलृसृभेषृः ।
हुड्डुशवषिधुवेलृखेलृखेलृकेलृ[श्च] क्ष्वेलृः रफरिफदुशुऋच्छपेलृफेलृम्लुचुश्च ॥१२॥ मालिनीत्रयम् ॥

पैशृकनीपिशृपेसृ च रंहिः व्रञ्जिवजव्रजचेलृशुरुण्ठिः ।
त्वञ्जिरिवेह्[श्च] खलश्च वल्लाः धोर्ऋतिलव्रजसेलृ च लुण्ठिः ॥१३॥

हयहर्यः शशफक्कशवाः ध्रजस्कन्दिरवत्सरखोलृदुपाश्च ।
तृक्षखजीशुकखोर्ऋसृप्लृषिधगम्लृखनोऽस्य हिसेश्च सर्वार्थौ ॥१४॥ तोटकद्वयम् ॥

कुथिपुथिलुथिमान्थक्रथपादत्रयोर्वी मथिखदतुजितुर्वीषिन्भुथुर्वीसृभूहिर् ।
शवपिवतुपतुम्पक्रम्प दुर्वीदुहिर् स्यात् लुवितुवितुजिधूर्वीतुम्फतुर्वीत्रुफश्च ॥१५॥ मालिनी ॥

कषशिषऋषसृंरुसृम्भुवः झषचषनषजर्त्सर्संसुवः ।
रुषरिषशिषजूषचूषचषतुफसृभुञ्जिफलादलास्फुटिनः ॥१६॥ भद्रिका ॥

वर्हतुहिर्शमुगित्यश्च शब्दे नर्दवनध्वनगर्दघुषिर्च ।
कर्दवणध्वणबुक्कणमूनिक्षीजवजष्टनकूजवृहिर्वा ॥१७॥

म्लेच्छमदौ पठजल्पजपाः स्युः द्राक्षिरपौ लपजर्जरठाश्च ।
ध्राक्षिगजौगृजगर्जमुजाः स्युः ध्वाक्षितुष ह्लसचर्चठाश्च ॥१८॥ दोधकद्वयम् ॥

रसमिस्रक्रिक्विदाशुगाः खणवणभणरुर्फकैकणाः ।
लटविटकुचगैणदाऽणरैसृजिमृजि च णमुजगुन्दयः ॥१९॥ भद्रिका ॥

ष्ट्यैस्त्यैक्वणध्मास्तृ च घुट्यमोऽडना गुर्वी चल्येजृत्वगि कम्पने स्तः ।
दुर्जीवने व्याधिकठौ तकिश्च कर्जव्यथे वर्ज चर शौतृ गर्वे ॥२०॥

उच्छी विवासे चप सान्त्वने स्यात् शै श्रै तु पाके चरणे कटेद्वरू ।
युच्छ प्रमादे वट वेष्टने द्रै प्रै स्वप्नहप्त्योः हट चदि दीप्तौ ॥२१॥

कुच्कुञ्चर्हुर्च्छाह्व तु वक्रतायां ष्वन्जश्च दैपृशुन्धसुधाः डुनन्दि ।
श्च्युतिर्श्चुतिर्च क्षरणे यगादिर्भटवृतौ शीलणिशौ समाधौ ॥२२।

धाराधृ हूर्च्छे ज्ञटमक्षपूलशोणृक्षमवृज्चृषुश्लोकृ भास-
ने जुतृ अल्पे चुटचुड्डुचुड्यः [पर्बफर्ब]पूर्व पूरणे ॥२३॥

मुर्वीचुच्यावभिषवे जषो रोगे कुब्याच्छादने कितमठ वासे ।
ह्रीच्छयौच्छ सम्बद्धेंऽशे विदि षट् वर्णे नीलः ।
कुप्यालस्ये जजजजि युद्धे स्याताम् ॥२४॥ जलधरमाला ॥

युगिजुगिवुगि वर्जे वक्ष रोषे इदीशे षपषच समवाये तूष तुष्टौ कुड्ड चुद्यै ।
ष्ठिवुक्षिवु निरसने क्ष्मीलस्मीलमीला निमेषे हिविदिविजिवि तृप्तौ तूल निष्कर्षणे स्यात् ॥२५॥
मालिनी ॥

म्ना अभ्यासे कटु कार्कश्ये चेष्टायां उदि आवृत्तौ ।
कूलो मूलप्रतिष्ठायां जभजंभी तु मैथुने ॥२६॥

रोड़ृ रौड़ृ शिट तौड़ृ षिट सूक्ष्य अनादरे ट्वौ स्फूर्ज्जा वज्रनिर्घोषे स्याच्चहः परिकल्कने ।
एठहेठ विबाधायां बलात्कारे हठो रुठ उपघाते लुठो लुठि च शलक्रीड़ृ हृषुघृषुः ॥२७॥

तक्कककखहसाः गग्घघग्घश्च परिदेवने ।
क्लिदिन् षणस्तु सम्भक्तौ मन्थप्रेषे खजश्चटः ॥२८॥

माङ्गल्यशास्त्रे च षिधू गतौ च एभ्योऽतङाना मचमुञ्चि च दाने ।
श्रन्भु प्रमादे दध धारणे स्यात् ह्लादी सुखे भन्दि च गाधृ ग्रन्थे ॥२९॥

प्यैङ् प्यायी वृहिमहि दक्ष स्फाय्येध वृद्धौ शोके मठि कठ्याहासे ष्मिङ् ।
भाम क्रोधे कुक वक आदाने स्तः दैन्ये ग्लै पृ पचपचि वृक्लीकृत्यम् ॥३०॥

जलधरमाला ॥

स्वर्द स्वद स्वाद तु शिक्षदीक्षः ऊहो गुपः पूङ् स्यदि वन्दि गाहः ।
स्पर्धश्चाकिरेकृशकि तिजक्षमूष् मञ्चिमानौ वठिवण्डिवेष्टाः ॥३१॥

तेपृकेपृशलगेपृटुवेपृघटकम्पयः ।
प्रुङ्लभौ गल्हगर्हौ च ईहचेष्टौ लजिभृजील् ॥३२॥

वल्भग्लसुग्रसवस्तु ईक्षेषलोकृलोचृ च ।
नाथृनाधृविथृवेथृभिक्षास्तु तेवृदेवृ तु ॥३३॥

देतायृत्रैङः तुडितण्डि ताडने कोपे चडि घसिघुषिच्कमुर्मुदः ।
श्वैत्यै श्विदि वा वृतु लोटने कलः क्ष्मायी विधूनने मकि मण्डने त्रपूषुः ॥३४॥

कडि क्षीबृ मदे स्कुदि आप्रवणे ग्रथिवंकिणसाः कुटिले [च भुजो] ।
शडि भुण्डिरुजाभरणे मलमल्ल वृतौ कचमूङ्बध बन्ध इषौ शसि साङ् ॥३५॥

कुर्दखुदौ उर्दगुर्दास्तु क्रीडायां ज्यै व्रते स्त्रृ च ।
प्रसादे स्नेहने वर्षः ष्टुभ स्तम्भे भये भ्यसः ॥३६॥

ष्टभिस्कभि प्रतिबन्धे हेड़ृहोड़ृ अनादरे ।
अधाष्ट्र्ये क्लीबृ गल्भस्तु वषड्घूर्णघुण भ्रमे ॥३७॥

दाने ददो वृक्ष वृतौ रभस्त्वाप्लाव्ये तु वाड़ृ धुक्षधिक्षक्लेशाः ।
अन्वेषणे ग्लेषृ तु गण्डि मन्थे निद्राक्षये द्राहृ कुडिस्तु दाहे ॥३८॥

प्लेवृषेवृसेवृकेवृखेवृगेवृपेवृमेवृग्लेवृम्लेवृ च शीकृ सेचने तु ।
वहृजेहृ च ह्वलवेहृयत्यमुष्य श्रंसने तु लम्बितृङ् ॥३९॥ समानी ॥

आयासे द्राघृ शैथिल्ये श्रथि मेधृ निपातने ।
ऊयी तु तन्तुसन्ताने वलवल्ल तु संवृतौ ॥४०॥

षूदक्षेवृतिपृ क्षारे राधृलाधृ समर्थने ।
कको लौल्ये वृको वर्णे स्युर्जभीजृभजृम्भयः ॥४१॥

युतृजुतृकचिवर्चभ्राजृभ्रेजृ च कासृ भासृ तु वा ।
घिणिघुणिगूहूग्लहूघृणि ग्रहणे स्तुत्यां पणपनौ तु ॥४२॥ आर्या ॥

ककिवकितिकृढौकृत्रौकृध्रजवस्कचररघिलघिटीकृत्रङ्किशेलृश्रकिच्युङ् ।
श्वकिटिकृमदिसेकृट्रेषृज्यङ्पेशृणषृशलकिस्रकिवयरेवृशौणृघिखञ्जिहिण्डि-॥४३॥

पवपयवयरेपृप्लिहिईजेऽजिमेपृश्वचतयचयएषृप्लुङ्मयाटाभिगाङ्द्रुङ्-
ऋजरयदयअंहिप्लक्षपत्लृधुपंडिखविरविरभिरेभृहादपर्दाभिकल्ला-।
शचलभिभडिक्नूयीडुकृत्रुङ् णेषृरेषृगुध्वुकुङ ङिति एते धिकृरास्कासृ भाषाः ॥४४॥

श्लोकृलोषृगोषृहुडिपिण्डयो भल्लवल्ह द्राङृ ध्राङृट्वलभलग् च
शल्भशीभृशाडृकत्थश्लाघलो हदो विडुष्ठि षट्पदीद्वयं चारु ॥४५॥

द्युतशुभरुच दीप्तौ ञिष्विदा मोचने स्यात् रुटलुटलुठ घाते ञिमि वा स्नेहने स्यात् ।
णभतुभगथुश्रम्भुक्षुभ्रु वर्णे स्थिता स्यात् इह घुट परिवर्ते ध्वंसुभ्रंशुश्च श्रंसुः ॥४६॥ मालिनी ॥

वृत्स्यन्दूवृधुसृधुघोऽपि सामर्थ्ये तु कृपू गणौच् ।
घटस्खदप्रथो दक्षग् क्षजिष् दुःखव्यथौ भये ॥४७॥

क्रदकदिक्रदिकन्दिल् कृपायां क्रप ञित्वरः ।
प्रसस्ततौ म्रदे मर्दे षितश्चापि तङानिनः ॥४८॥

ज्वरः कगेवन् गड सेचने नटः ह्वगे ह्लगे संवरणे स्थगे षगे च ।
हेड वेष्टे हसने कखे तथा लगे रगे द्वावपि सङ्गशङ्कयोः ॥४९॥

वटभट परिभाषे ष्टक च त्वच विघाते कणागरण अक गतौ ।
अणवणषण दाने श्रथ चन क्रथच् क्लथ कूथग् ॥५०॥

दीप्तौ ज्वलोऽन्ये चलने चलि ह्मल स्यान्नॄ नये मारणतो षद्लृक् तु ।
ज्ञा ऊर्जने षद्मदी हर्षदैन्ये जिह्वाविलोडे लडि स्वन्वनौ तु ।
श्रा दृ स्मृ पाकेऽथ भये स्मृतौ मित् ॥५१॥ पञ्चपात् ॥५१॥

जृषुजनक्नुसुरञ्जि च मन्ता ज्वल्ह्वलनम्ह्मलग्लावनुस्थावम् ।
वा अप्रतिकं चम अमो शमोऽदक् स्खद्यमितोऽव परेः परिवेषे ॥५२॥

फणो गतौ वृत्वतङानि राजृः भाजृट् तथा भ्राशृट् च श्लाखृटुर्दित् ।
तङानिनः स्वन्स्यमुतौ स्वनोऽत्र षमष्टमौ विक्लवभाव इष्टौप् ॥५३॥

क्वथः कथे मथे बलः क्षरभ्रमुच्चला हलः
विलेखने टलट्वलौप् हुलचझलच् पत्लृ व्यथेषु ॥५४॥

ष्वल स्थाने जलो धान्ये णलो गन्धे पुलस्तते ।
कुलो बन्धौ वमुर्वम्वा द्विदुद्गारेऽतङानिनः ॥५५॥

षहः क्रुशो बुध्वारसुरमुयमु रुहकशख्-।
सम्पर्चने पृचः षडृ हिंसने शाडृ शातने ॥५६॥ वृत्

हिक्काव्यक्ते शब्देट् शृधुमृधु उन्दे असाऽष दीप्तौ तु ।
वेणृ च चते चदे टोः याचृत् खनु धावु ह्वञ्भृञ्वृञ् धृञ् ॥५७॥

अलञु प्रोथृ पर्याप्तौ उबुन्दि नृ निशामने ।
माहृ माने लषः कान्तौ णिदृ णेदृ [तु] कुत्सने ॥५८॥

चीपृरिवृझषचीवृ आदाने याचु पूजने ।
मिदृमेदृमिधृमेधृमेवृलः पथः बाधने ॥५९॥

रञ्ज रागे शपाक्रोशे चष भ्लक्ष तु भक्षणे ।
दाशृदासृ तथा दाने रेट्टस्तु परिभाषणे ॥६०॥

गुहू संवरणे दान खण्डने ज्ञान तेजने ।
णीञ् प्रापणे त्वष दीप्तौ अचु अञ्चु व्ययागमौ ॥६१॥

भेषृ भये श्रिञ् षच सेवने तु भ्रेषृस्तु कम्पे डुपचष् तु पाके ।
यजो वहो व्येञ् वरणे टुवप् ह्वेञ् वेञ् स्पर्धतन्तौ तु विभाषिताः स्युः ।
वसो निवासे वद व्यक्तवाचि टुओश्वि गत्यामतङानिनो वृत् ॥६२॥ [षट्पदी ॥] [भ्वादि]

अदो हनः षंसिषसौ शये स्तः वशद्युक्रान्ताभिगमे यु मिश्रे ।
क्ष्णु तेजने णुष्णु तु टुक्षु भक्षुः शब्दे तु इण् वीखिक तु स्मृतौ भाट् ॥६३॥

माः ष्णाः ख्याः प्साऽदिवा या द्राख् दाप् प्रा लवनपूरणे ।
श्रा पाके रक्षणे पा रा लाऽऽदाने वृज्विदोमृजूः ॥६४॥

वचो भुव्यसु रुदिर् स्यात् श्वसाऽन प्राणने ञिष्वप् ।
भक्षे जक्षञ्च चकासृ दित् जागृ शासु दरिद्राच्च यङिदेकेऽतङानिनः ॥६५॥

चक्षिङ् सुवाचीरकसिखिदासः षूङ् शीङ् वृजीरिड्वसपाठवस्त्रे ।
आङ्शासुइष्टौ णिसि चुम्बने स्यादीड स्तुतौ ईश तु ईश्वरत्वे ॥६६॥

दीधीङ्शिजिद्युपृजिपृचीच्तु वेवीङु तुल्ये ह्नुङपह्नवे तु ।
शुद्धौ णिजि ष्णु द्विष ष्टुञ्दुहो ब्रूञ् पा रक्षणे उपचये दिहस्तु ॥६७॥

लिहोऽदि तद्वा-हु पृ दानपूर्त्योरोहाग्ञिभीह्रकसघृभसद् वा ।
ह्री तु त्रपायां किकितौ तु वित्तौ विषघ् जनेऽरन्तुर धन् परस्मै ॥६८॥

विजिर्विचिर्वा भिदि पोषणेऽपि णिजि तु ढांसौ विष्लु टुर्टुतो वा ।
दाञ् चाञ् नृञौ मा तु विभाषिताः स्युरोहाङ् गतौ माङतङानिनौ वृत् ॥६९॥ अदादि ॥

दिवु श्रुवुख्वा षिवु तन्तुसन्ताने ष्ठिवुक्षिवुष्णस्तु निराकृतौ तु ।
त्रासद्प्लुषादे क्रथि पूतिभावे दो खण्डने छाव तनूकृतौ सौ ॥७०॥

षोऽन्तक्रियायां जृषज्वृष जीर्णे त्रसीः नृतीः प्लीमतिमष्टिनार्द्रे ।
व्रीडक्षिपौ स्तो युद्य हिंसने तु ईषख् स्फुटस्तु व्यध ताडने तु ॥७१॥

षहषुहौ तथा शक्तौ संसिद्धो राधसाध तु ।
षुषः शुषो दुषो मर्षे शकनालिङ्गने श्लिषः ॥७२॥

ष्विदा क्षुध शुन्धषिधौ रधो द्दपो हिंसाविमुक्त्योस्तृप तु द्रुहष्णिहः ।
मुहो णसोऽप्युद्गिरणे ष्णुहर्शसु क्षमू क्लमुश्चापि मदी दमुः श्रमुः ॥७३॥

भ्रमुस्त्वतृप्तौ च तमुच्, गृधुश्च रुचुवृशुभशुलुटः क्षुभश्चुः ।
हृषस्तृषः क्रध्रुषकुप् तु लुभ्रुतुभोञ् नभः स्तो गुप आकुलत्वे ॥७४॥

प्लुष दाहे कुश क्लेशे क्षेपे डिप विसऽसु तु ।
यसु यत्ने जसु मोक्ष तृभ्स्तम्भे रीञ् तृषा वसु ॥७५॥

पृषपुसी विभागे तसुदसु तु उपक्षये वृशो वरणे ।
युप रुप लुप तु विमोहे तुस मुस उत्सर्गखण्डनयोः ॥७६॥

उच समवाये ञिमिदा स्नेहने आर्दे क्लिदू मसी माने ।
ष्टुप समुच्छ्राये कृश तु ञिक्ष्विदा मोचनेऽतद्वृत् ॥७७॥

षू गर्भमोक्षे वरणे पुनः प्रीङ् लीङ् श्लेषणे रीङ् स्रवणे क्षये दीङ् ।
धीङादरे मीङ् हनने गतौ डीङ् तापे तु ह्ङेदित ईङ् यदख्माङ् ॥७८॥

प्री पीङ् पाने बुधाऽनापुरी तृप्तौ दीपी कासृ द्युत तु जनीः सूरीग् वा ।
तूरीगूरीग् पुनरपि तूरीघुरीग् विद् सत्तायां मन सृजः ज्वरीर्वा शुघुघुङ् ॥७९॥

क्लिशोपतापे वरणे वृत् स्याद् युजः समाधौ लिश अल्पभावे ।
कामे रुधोऽनोः पत वेश्वरत्वे दाहे चुरी तङ् णह बन्धने तु ।
शकस्तृषो रञ्जशपोऽपि पूतौ ईशुश्चिरिश्चेति विभाषिता वृत् ॥८०॥ दिवादि ॥

षुञभिषवे षि शि बन्धनिशामनयोः धूञ् कृञ् कम्पे ञितो चिवृप्नुरि डुमिञ् ।
स्तृबृहौ तिक रिक् च कृविच् चिरि दाश षघ द्रुह रिञ् जि गितः ॥८१॥

धिवितृपौ स्मृ पृ पालनप्रीत्योः दन्भु ऋधुः शक्लृराप्लृ तु राध ।
साधहिखिङ्ञितृषाः टुदु तापे तिञ्रिगावतङानि अशूङित् ।
आक्रमणे ष्टिघ पञ्चपदीवृत् स्वादि ॥८२॥

तुद व्यथायां दिश सर्जने कृषः भ्रस्जस्तु पाकेऽथणुद क्षिपौ मुच्लृ ।
लाभे विद्लृ शाषि च लिप् लृप्लृस्तिङः कृती खिदश्चावयवे पिशर् तथा ॥८३॥

लिश् विच्छ ऋष् क्षिश्च द्रुण रिष् जुड् ऋच्छ ध्रुवेल पिशो गमने ।
रिफ मिछ् दृप तुन्फतृहौ शरि गित् ष्टुहुवः सृजप्रच्छमृशेषुविशः ॥८४॥

तृफतृन्फशुभोंहतृतौ गुफगुम्फदृभी ग्रथने तुफतुन्पत्रुटी ।
तुपतिम्प गतौ दृपदृन्फमिछा रुजिशुन्भशुभौर् हिल हावकृतौ ॥८५॥

व्रश्चूखुरण् संवरणे त्वचोग्रीः उछि विवासे धि तु धारणे षुञ् ।
उब्जार्जवे घुर्णघुणौ षुसुरेशे वृहूद्यमे स्याद् ऋच तु स्तुतौ च ॥८६॥

उज्झौत्सर्गे किलमिषु श्वैत्ये स्याद् धृङ् कृ विक्षेपे मिल टुमस्जो शुद्धौ ।
संस्पर्शे स्पृशछुप जुषी चेष्टे उभउन्भे शिलषिलउञ्छि उञ्छे ॥८७॥

तुणभुजौ तु कौटिल्ये तु मुण ज्ञाने पुणः शुभे ।
तिल स्नेहे बिलो भेदे चिल पृणश्विधौ विधौ ॥८८॥

कुणकुरघुरघः पुरोऽग्रगे क्षुर लिख तु लुभो विमोहने ।
मृडमृडः सुखने णिलो गहने षद्लृ शद्लृ चल चर्चझर्झजर्जाः ॥८९॥

तुणकुट चुण चुटत्रुटखुरछुर छिदि मुट कुट णुः स्फलस्फरौ ।
द्रुडजुडत् विधूनने तु धू तुट लुट पुट श्लेषणे गुजघ् ॥९०॥

स्फुटव्यचो गुड रक्षणे डिपड् विड्मोचने गुः कुड्भ्रुडि मज्जने ।
कलि कृपायां तुट चातङानिनो गुरुद्यमे कूकुकुघोऽपि वृत्तङः ॥९१॥ सोऽयं कुटादिः ॥

ओलस्जी ओलजी व्रीडे जुषी प्रीत्यौ दृङादरे ।
मृङभावे विजी भीतौ पृङ् व्यायामे तङो गणः ॥९२। [तुदादि ।]

रुधिर्भिदिर्छिदिविचीर् क्षुदियुजिर्वेति ।
छिदिस्तृदिरुद्गितावुदिद् विभाषिताः शिष्लुः पिष्लृः ॥९३॥

पृचीर्वृजीर्भुजो भञ्जो तुह हिंसिओविजी तन्तुसङ्कोचने तञ्चू ।
उन्दी क्लेदेऽप्यतः खिदः विचारे विदञिद ञिइन्धीट् तङाना वृत् तु ॥९४॥ षट्पदी ॥ [रुधादि ॥]

तनु विस्तारे दाने षणु अदने [तृणु] क्षणु क्षिणु ऋणु गृ स्यात् ।
घृणूदित् डुकृञ् तु तद् वा मनुर्वनुर्याचने तङ् वृत् ॥९५॥ तनादि ॥

डुक्री द्रु भी प्री यु षि बन्धने क्नु धु[षि] पाके आप्रवे श्री स्कु पू तु लू स्तृञ् ।
धू कम्पने कृद्रु तु ञिद् वृञस्तिङ् ली श्लेषणे ल्यी च मृ शृ स्पृगो दृः ॥९६॥

ज्या जृ तु नृ गृघथ रेषणे री ब्ली व्री तु भर्त्से च भृ पूरणे पृ च ।
ज्ञा ग्रन्थमन्थोऽशमुषक्षुभोऽथ क्रथक्लिशू तूध्रस उञ्छने स्यात् ॥९७॥

व्री वरणे भ्री भरणे बन्ध मृड तौ श्रन्थ मोचने स्यात् ।
गुध विष रोषवियोगे कुष निष्कर्षे मृद क्षोदे ॥९८॥

क्षिषु णभ तुभगाभीक्ष्ण्ये इष खच भूतौ ।
प्रुषप्लुष स्नेहेऽतङो वृङ् संभक्तौ तङानाः क्र्यादयश्चेति ॥९९॥ [क्र्यादि ॥]

स्तेये चुरलुण्ठौ स्फुटिः परिहासे ओलण्डि दुल उत्क्षेपे शुल्क तु सर्जे ।
क्षान्तौ कृपिरल्पत्वे पुट्ट पुल वृध ऊर्जायुषि धूसः कान्तिकरणे स्यात् ॥१००॥

नक्क धक्क पसि नाशने कुण्डि कुन्द्रि जसि रक्षणे पलः ।
वेष्टने गुडिः बलो भृतौ तथा शोषणे शुठि लडोपसेवने ॥१०१॥

पूरणे पृ चलनेऽपि घृट्ट पषोऽर्दने लुबि तुबि चुबि ।
चल वारणे छद खट्ट संवृत्तौ हर्षणे श्रथ तु मूल रोहणे ॥१०२॥

संशब्दने कृत तु शूर्प माने दाने श्रणः पूर्व निकेतने तु ।
गर्धाभिकाङ्क्षे क्षजि कृच्छ्रजीवे आलस्यभव्ये शुठि भण्डि चेष्टौ ॥१०३॥

व्ययुत्सर्गे तुलोन्माने प्रतिष्ठायां तिलो धृषन् ।
व्रज मार्गणसंस्कारे सर्जने ज्ञापि मिज्यमः ।
परिवेषे चपः कल्के पर्डि पिण्डिश्च षट्पदी ॥१०४॥

चितिमडिचुदो लक्षं भक्षः श्लिष प्रथ सञ्च उ
बुलमुटतङो म्रक्षश्छर्दः कुविच् क्षलवण्टिरु ।
विल कल डिंतौ मानच् पूजः कडिच्खडखण्डयः
घृ तिज नट तु ष्टुप सान्त्वस्त एव रुट वृषः ॥१०५॥

कीट चूर्ण वच टङ्किपत्रयः वर्णचूर्णजुडपुस्तपुश्च थौ ।
स्मिङ् स्मिटाट्टलषट्ट नादरे वर्धपिच्छचुटचुट्टिकुट्ट तु ॥१०६॥

तिल मिन्दि स्निहाः चक्कचुक्कपीडाः ।
श्वठश्वठिछृपिश्चर्चपथिश्वर्तशठस्त्वकेड तु दिवन् ॥१०७॥

गजमार्जह्लपम्लेच्छश्वल्कवल्कपरिघ्रिजः ।
लुष बर्ह जस क्रथ षट्ट तृजि त्विजिशोगृ ॥१०८॥

पुंसोऽभिर्दे बुधि षट्ट घाते संघातनीले पिडि पूल वर्णत् ।
हर्षे रभि भिन्दि दह व्ययं तु नाशे तुप स्वक्ष भृतौ बलोऽतङ् ॥१०९॥

मत्रितत्रिचितकुत्सवन्चुरुतर्जभर्त्स तु दस् दशर्मदस् ।
निष्कतूण परिमाणपूरणे गृयु मन् विद इहेदृशः क्वचित् ।
गृ विज्ञाने वस्तगर्धार्दने किक्कहिक्कग् वितर्के स्यमः ॥११०॥

कूण सङ्कोचने स्यात् समालोचने गूर कुस्मो लल ।
भ्रूण ईप्साशयोः कूटपक्ष प्रतारणस्तुतौ ।
छेदन आलम्भने त्रुटदलौ संहतौ ।
स्याद् दुःतापने कुड्तडः षट्पदी ॥१११॥

चर्च मुच त्रस अञ्चु भर्जार्ज ज्ञा जस लिगि मुद कृप च्यु पाठ ।
प्रयोग निषेध विशेष श्राणन यत्न नियोग चिन्ता चित्रण ।
संसृजि कल्कन हासे वित्तिनिमीलनयोः चर कण षट्पदी ॥११२॥

मोक्षस्तसिभूषौ दूषोऽन्धस अर्हः शब्दे जभि रोगेऽम् चुक्को व्यथने वा ।
आविष्करणे क्षित् शब्दे लिश शिल्पे स्नेहे वश यद् वा स्यान्मारणच्छेदे ॥११३॥

स्वादे रकलक रगलग पशपसपष बन्धने चट स्फुट तु ।
सङ्के घट हिंसार्थाः शृधु प्रहासे घुष विशब्दे ॥११४॥

आङः क्रन्दे च सातत्ये प्रतियत्ननिकारयोः ।
यती निरः प्रतिदाने आस्वादस्तु सकर्मकात् ।
दल पुरीश् रुजग् त्वसुग्रहणे पुष धारणे ॥११५॥ षट्पदी ॥

पट पुट लुट पुष् स्यात् तुञ्जि पिञ्जि त्रसिश्च
घट घटि कुशि लुञ्जि मोक्ष भञ्जि क्रसि वृध् ।
णद कुप गुप लोठृः तर्क वृद् वर्ह वल्ह
लघि दसि बृंहिद् विच्छ धूप चीव णि स्वादः ॥११६॥ इतोऽदन्ताः ॥

वाक्यप्रबन्धेऽत् कथ खेट भक्षे गोमोपलेपे पतु पाल खिद् वा ।
महध्वन स्तेने अगवेषजजः खोटं चह सूत्र वरस्पृहौ स्तः ॥११७॥

भाम क्रोधे चट पट ग्रन्थे कूटकेतश्रामाः ।
कुल गुण आमन्त्र्ये स्युः संख्याने वा कलगण स्यामः ॥११८॥

रह त्यागे स्वर क्षेपे मेघ शब्दे गद स्तनौ ।
वेल कालोपदेशे तु प्रतियत्ने चरः पषट् ॥११९॥

पल्पूल पवनलवने दौर्बल्ये सारकृपपस् तथा ।
कुमारक्रीडायां पैशुन्ये सूचः वासोपसेवायाम् ॥१२०॥

सभाज प्रीतिसेवायां भाज पृथक्कर्मणि तु ।
शीलो उपधारणेऽतङ् तु पदस्त्वन्वेषणे मृगङ् ॥१२१॥

संग्राम शूरवीरौ द्रुसूत्रोऽर्थन्मूत्र अंस तु ।
पारतीरौ पुणो भक्ष सुखदुःखे रसो व्ययः ॥१२२॥

युद्धविक्रान्त्यवमोक्षयाञ्चा श्रवण लक्षणे ।
समाप्तौ चूर्णः पारुष्ये तत्क्रिया स्वाद चेतसि ॥१२३॥

अञ्च दृष्ट्युपसंहारे दण्ड दण्डनिपातने ।
कत्र गात्र तु कौटिल्ये कुहन् विस्मापने तथा ॥१२४॥

छेदोंऽसस्तु समाघाते स्थूलडु परिबृंहणे ।
चित्रः चित्रकृतौ दृष्टौ सत्र सन्तानकर्मणि ॥१२५॥

गर्व माने डु लाभक्षिपौ मिश्र सम्पर्चने छिद्रकर्णौ तु भेदो स्तुतौ ।
स्तोम संसर्गपापे पुटाघे तथा रूप रूपक्रियायां गृहीतौ गृहन् ॥१२६॥

जलवटेदितौ अज् वा प्रकाशनविभागयोः ।
वर्ण वर्णक्रियादौ तु अङ्कोऽङ्ग पदलक्षणे ॥१२७॥

वा युज् यतः संयमने शिषोंऽशे वेः स्याद् विशेषे तृप प्रीणने तु ।
वियोगसम्पर्चनयोः रियो ली द्रवीकृते क्षेपण ईर खिच्च ॥१२८॥

मी आङ्सदः खित् परितर्कणे जुषः श्रद्धोपतापे तनु कित् तु दैर्घ्ये ।
प्राप्तौ भुवस्तङ् दृभ श्रन्थ ग्रन्थ सन्दर्भणे आप्लृ तु लम्भने स्यात् ॥१२९॥

वचो वृजी जॄः वृषु चीक श्रीका वृषा सह स्युः छदगर्दमर्दः ।
श्रथ क्रथ हिंसि तु मन् च मानः कठिर्मृजुर्दीप्तिभये चृदी भृदी ॥१३०॥

तिर्तङ् मृषोश्छुन्धवदार्चमर्चाः प्री तर्पणे धूञ् तप कम्पदाहे ।
हेतौ क्रियार्थाच्च सुपस्तदर्थे एभ्योऽतङाना अदितश्चुरादित् ॥१३१॥ चुरादिः ॥

तृभूत्चुत् प्रत्याहारार्थः **॥ धातवः समाप्ताः ॥**
सुपस्तदर्थे । अत्र गणः -

सूत्रं च मुण्डं लवणं च मिश्रं श्लक्ष्णं करोत्येव व्रतमतङ् वा ।
आचक्षते तांश्च करोति वा तान् तैस्तैरतिक्रामति सत्यवेदा- ।
र्थानां तथाऽऽपश्वतरौ तकौ लुक् श्वेताश्व गालोडित आह्वरादित् ॥१३२॥ षट्पदी ॥

वर्णादितं भूति च कूलतो टोऽन्यार्थे च तं लुक् च कृतः स भूद्रप् ।
कालावधावाङि दथापि चित्रे नक्षत्रयोगे ञि दिशाऽनयान्ये ॥१३३॥

गृह्णाति वर्णं च कलिं हलिं त्वच् कृतं च तूस्तानि विहन्ति मार्ष्टि ।
लोमानि भाण्डट् च समाचिनोति अङ्गट् निरस्ये परिधावने वा ।
सम्मार्जने चीवर ङो विमोक्षे पाशाच्च रूपं पुनरीक्षते हि ॥१३४॥

वस्त्रं समाच्छादयतीति कूलैः गृह्णाति संनह्यति चर्मणा तु ।
श्लोकैरु[पस्तौत्यु]पयाति सेनया चूर्णैरवध्वंसयतीति दर्शितम् ॥१३५॥

भावादितोऽर्थस्य गतौ षडुक्ति द्वौ क्रो ञिदादिः स तिङादिसिद्धेः ।
उक्तश्च योऽभूच्च मतान्तरेष्टो नोक्तोऽन्यदथोऽपि समोऽत्र चित्रम् ॥१३६॥

अत्रानेकार्थत्वाद् धातूनां सर्वार्थः प्रदर्शयितुं न शक्यते । अतः शास्त्रोपयोग्येव कश्चिदर्थः प्रदर्श्यते । स च यावच्च सभायाम् 'असु भुवि, कपि चलने, चल कम्पने' इत्याद्युच्यते तावद् वरम् । 'असु सत्तायां, कपि कम्पने, चल चलने' इत्याद्युक्तस्यादिष्टश्चायमर्थः । 'डुपचष् पाके, डुकृञ् करणे' इत्याद्युक्तेः । स च यावत् प्रत्येकमुच्यते तावद् वरं भावप्रत्ययान्तार्थ इत्युक्तं स्यादित्यालोच्याह-

सूक्तस्तदर्थे सति भावप्रत्यये । प्रथमैकवचने निर्दिष्टे धातुरेकोऽनेको वा विवक्षित भावप्रत्यये दत्ते सति तस्यैव योऽर्थः, तदर्थे प्रत्येकं ज्ञेयः । यथा भू भावे । णिदि जीव वाच्छिः, क्रमेण निन्दने ज़ीवने वाञ्छायाम् । नुम्णीत् इत्यर्थः । इदित् तद् वा तादृक् यादृग्भावप्रत्ययेनोक्तार्थत्वेन वा प्रतीतार्थः, तादृग्गणान्तरादावनुक्तार्थोऽपि तदर्थः प्रागर्थो ज्ञेयः, यथा माङ्गल्ये शास्त्रे च षिधू, पुनः षिधू त्रयोऽत्र षिधू तदर्थ एव । तथा षद्लृ हिंसने, शद्लृ शातने स्यात् पुन षद्लृशद्लृ तदर्थे, तथा तदिद् वा । उक्तार्थो यदनुबन्धः कश्चित् तदिति तदन्योऽपि तदर्थे प्रागर्थे ज्ञेयः । यथा तुणभुजौ कौटिल्ये बाधित्वा कुटि च कौटिल्य एव । एवं गच्छादे ऊणुः । स्तृहूभौ । स्तृ विदाच्छादे । उभौ तडतडौ च स्तः । त्विष दीप्तौ । घुणु दिवीत्यादि वा समुच्चये । पुनरौजसिक्ताः । त्वन्तास्तदन्त्यार्थवृतः प्रथमाद्विवचनान्ताः, अव्ययत्वशब्दान्ताश्च, तेषां तन्निर्दिष्टानामन्त्यस्य धातोर्भावप्रत्ययान्तरस्यार्थे पूर्वेऽपि वर्तन्ते, इति तदन्त्यार्थवृतः । यथा 'ओणृलुञ्चौ लुञ्चने, ऋदित् । अनगिद्दितोणौ च ट्युपान्तेऽत्र गित्यर्थः । मा भवानोणिणित् । तथा महार्ह अर्थाः, अर्चायां त्वन्ताः । चमु छमु जमु झमु खाद भक्ष तु भक्षणे । लछ लाछि तु लाञ्छने । उ निपातः । णितो वा । तदन्त्यार्थवृतो, यथा शिघि घ्राण घ्राणे । स्फूर्ज स्मृत्यैल् व्याने । वा समुच्चये । तथा वान्ताः पुरः । अव्ययवान्ताः पूर्वस्योक्तार्थस्यार्थे वर्तन्ते । तथा तक्षकल्लहसा इति हसने । गग्घ गग्घश्च हसन एव । तथा जिप् णिष् विष् सेचने। व्युतिर् मिष् पृष् उक्षिपिञ्चि वा सेचने । तेषां त्यस्य चितः । प्रतीतार्थोत्तरधात्वर्थे पूर्वे विवर्तन्ते । यथा पुडि-शुठः मोटने । कृषः कर्षणे । न चोक्तम् । उक्तार्थत्वात् सूक्ताद्युक्तं कार्यं न स्यात् । उखणखवखवञ्चुरित्यादि । सूक्तोऽपि खिङ् गतावुक्तस्तादृक्षः । आदेतश्च । णभभुजौ कौटिल्ये च । रुधादौ भुजो भोजने, उक्तार्थोऽपीत्यादि ॥१॥

फलफुल्लशूलं सूक्तं फलने फुल्लने । शूले रुजायाम् । रहत्यजौ ओदन्तश्च त्यागे । ग्लैः ग्लानौ। पुष-तृ-मृषुः । सूक्तः । पुष्टौ, तरणे, मर्षणे । उदितः । क्त्वो वेट् । मृष्ट्वा । मर्षित्वा । क्षै परैर्युज्यते ॥२॥

जै-क्षै-क्षियः क्षै च क्षु सूक्तः कृपे । मन्थगडिश्रुमूर्च्छाः । सूक्तः मन्थने विलोडने । गण्डे वदनैकदेशे । श्रवणे । मूर्च्छायाम् । आदीदितः क्तस्य नेट् । मूर्षः । दृशिर् दर्शने इरितोऽत ह्र लुडि वाङ् । अदर्शत् । अद्राक्षीत् । क्रमुः क्रमणे । गृवृतुतृस्तु । ऋदितुत्वन्तः ताडने । स्फूर्च्छा स्मृध्यैल् । लित् ध्याने । स्फूर्च्छा आदित् । यमु यमने उपरमे । ष्ठा स्थाने गतिनिवृत्तौ । खिटमाक्षिवाक्षिकाक्षिल् । डिङ् कांक्षायाम् । लुट् लोटने । अलञ् तसि-मथि-भूषाः । जसुक्ताः भूषायाम् । ञिद्युलेऽर्थातनङर्थः । मन्थिर्मथिरित्येके ॥३॥

मडिन् सूक्तः मण्डने । इदित् तुमर्थः । डित् फलवत्यपि तिङर्थः । कुटि कुटने । वण्टि वण्टने । कदि क्रदि क्लदिञ् च, लित्, क्रन्दने आह्वाने च । षूष षू ऊदन्तः प्रसवे । पुडिच्युटः मोचने चित् । खलस्खलौ स्खलने । लघिन लङ्घने, शोषणेऽतिक्रमणे च । मुडिन् मण्डने । इदित् । द्वितौ तद्द्वित् । रदच् कृषः कर्षणे । चित् ॥४॥

स्वर्जार्जौ अर्जने । धूपतपौ सन्तापे भय आदिः जसुक्तः तर्जने । म्लै म्लानौ । ईषोच्छौ ओदन्तो उञ्छने । एवं निक्षचुबी चुम्बने । दधि-अव-रक्षाः जसुक्ताः रक्षणे । गुपू गोपने ज्वदितो वेट् । गोप्ता । गोपिता । पीलः पीलने ॥५॥ आर्या ॥

चट्चूषपाः जसुक्ताः पाने, दित् ट्यर्थः । खै खदने । शिघि घ्राणे । लित् । त्वक्षूच्च तक्षूः तक्षणे चेत् जदित् । अथ लक्षपक्षः सूक्तः लक्षणे । पक्षे पक्षपरिग्रहे । सूक्ष्र्येक्ष्येईर्ष्याः जसुक्ताः ईर्ष्यायाम् । दृहिपूषबृंहिल् । लित् बृंहणे । श्रिषु आदि तु दहने । पञ्च उदितः, द्वौ शुद्धौ, चिदन्त्यार्थार्थः ॥६॥

तथा चमु आदि गलचान्तः भक्षणे । ग्रुचु आदि मूषचान्तं हृतौ स्तेये । जिषु आदि णिविचान्तं सेचने । उन्मदे उन्मादे ॥७॥

म्रेट्टृ आदि ओखादि शोषे शोषणे । ओतिवै उद्वाने शोषणे एव । ओदित् । क्तो न । आदि दाने । प्रधानाः । केशाः । जडि स्थौल्ये । वचश्च वी विदि च ॥८॥

चुल्लचिल्लचुड्ड भावने । खर्ददंशल् लित् दशने । व्याप्ये व्याप्तौ इन्ध्यादि ॥९॥

उखनखेत्यादि च्छन्दः पञ्चकान्तो पादे खित् । गम्लृ स्वत इति यावत् । गम्लृ गतौ । उखतः उखादेरारभ्य स खिदन्यखितो गत्यर्थार्थः । अस्य हिंसस्य सर्वार्थो गतौ हिंसायां च सर्वोऽर्थः । संयोगे लघु सर्वत्र यथायोगम् ॥१०-१४॥

कुथि आदि तृतीयदोधकादिपादे शमुगित्यन्तं हिंसेरर्थं हिंसायाम् । गिदन्यगितो हिंसार्थार्थः । अथानन्तरं शब्देऽर्थे नर्दवनादि चतुर्थवृत्तादिपादे स्तृचघुट्यन्तम् । घिदन्यघितः शब्दार्थार्थः । युच्छन्दोर्थम् । इत्युक्तार्थास्तथापि स्पष्टीक्रियन्ते । अडगुर्वी च उद्यमे । एजृत्वगि कम्पने ।

व्याधिकठतकि दुर्जीवने । कर्जखर्ज व्यथने । शौटृ गर्वे ॥१५-२०॥

उच्छी विवासे । चप सान्त्वने । शै श्रै पाके । कटेद्वरू वरणे । एदित् । अह्लैदिक्षणतसो विशेषणार्थः । कटे कटीत् । युच्छ प्रमादे । वट वेष्टने । द्रैप्रै क्रमेण स्वप्नदृप्त्योः । हटचन्दि दीप्तौ ॥२१॥

कुचादि वक्रतायां कौटिल्ये । कुचुवत् कुञ्चु रुदित् । हुर्च्छा आदित् । ष्वन्जस्तु त्वन्तः परिष्वङ्गे, नित्तिङर्थः । दैप् सुञ्चसुधाः जसुक्ताः शुद्धौ । दैप् पित् । दोऽपु इत्यर्थः । टुनन्दि नन्दने । ट्वित् । ट्वितोऽथुः । नन्दथुः । श्च्युतिरुश्चुतिर् च क्षरणे । इरित् । यगादिः कण्ड्वादिपक्षाद् वेत्यादि । यगादि आपरन्तोऽत्र साधुः । कूडयति । शब्दायत इत्यादि तिङादि यथा तङादि । भट भृतौ । शील णिश समाधौ ॥२२॥

धाराधृ हुर्च्छने । झटादि पियन्तं सङ्घे सङ्घाते । झत् झदन्यः सङ्घातार्थः ॥२३॥

मुर्वी आदि बन्धने । ह्रीच्छादि प्रकटम् । विदि आदि प्रकटम् ॥२४॥

युग्यादि वर्जने । वक्ष रोषे । इदीशे । इदि ऐश्वर्ये । षप षच एकैकसमावाये । तुष तुष्टौ । तुष्ट इत्येके । तदा तुष्ट तुष्टौ । ष्टिवु आदि निरसने, दैन्यकरणे । निरसन एव । शेषं प्रकटम् ॥२५॥

म्नादिश्लोकद्वयं प्रकटम् ॥२६-२७॥

*एठ हेठ विबाधायाम् । हेठ हेठन् वा पाठः । नित्तिङर्थः । हठ बलात्कारे ।* रुठ लुठ उपघाते । शलक्रीडृ सूक्तः शलने क्रीडायाम् । हृषुः हर्षे । धृषुः धर्षणे ॥२७॥

तक्ककखहसाः, गग्घो घग्घश्च हसने । क्लिदिन् परिदेवने । इदित् नित् । षण सम्भक्तौ । खज चट क्रमेण मन्थने प्रेषणे ॥२८॥

माङ्गल्येत्यादि वृत्तं प्रकटम् । किन्त्वेभ्योऽतङाना परस्मैपदानि कर्तरि भवन्ति । भवति । सेधति ॥२९॥

प्येङादि एधान्तं वृद्धौ । पै शोषणे । प्यैङ् वृद्धाविति विशेषणार्थे ङित् । भन्दीदित् । ष्मिङ् आहासे इषद्धसने । शेषं प्रकटम् ॥३०॥

स्वर्दादि त्वन्तमास्वादने । सूक्तोऽतः क्रमेण शिक्षायां दीक्षायाम् ऊहने गोपने पवने स्पन्दने वन्दने गाहने स्पर्धने अङ्कने । रेकृ शकि ओदन्त शङ्कायाम् । तेजने क्षमायाम् । मञ्चिमानौ मत्याम् । वठिवण्डिवेष्टाः जसुक्ताः वेष्टने ॥३१॥

तेप्रादि कम्पने । प्रुङ् लभे लाभे । षिड्भ्योऽस्त्रियां भावे । लभात् क्रियाऽन्वितः, लाभेन कृतं लब्धिममम् । गल्हगर्हौ च गर्हायाम् । ईहचेष्टौ चेष्टायाम् । लजिभृजील् लित् भर्जने ॥३२॥

वल्भादि ग्रसने । ईक्षादि आलोचने दर्शने । नाथ्रादि भिक्षणे । तेवृ देवृ तु देवने ॥३३॥

देतायृत्रैङः त्राणे । एवं घंसिघुषिच्कमुः । चित् सुक्तः कान्तौ । मुदः मोदने । कलः

कलने । त्रपूषुः विदुदित् त्रपायाम् । शेषं प्रकटम् ॥३४॥

कडीत्यादि प्रकटम् । इषौ शसि साङ् । आङः शसि इषौ आशंसने ॥३५॥

कुर्दादिश्लोकद्वयं प्रकटम् । किन्तु गल्भस्तु प्रगल्भे । वषट् दीप्तौ । घूर्ण घुण च भ्रमणे ॥३६-३७॥

दान इत्यादि सुगमम् । रभस्तु आरम्भे राभस्ये । धुक्षादि क्लेशने ॥३८॥

प्लेव्रादि सेचने । वृषच् चित् । वेह्लादि अमुष्येत्यन्त्यस्य यतीमतोरर्थे, प्रयत्ने इत्यर्थे । लबितृङ् श्रंसने । तृङ्च्छन्दोर्थम् । सर्वत्रेदितः ॥३९॥

आयास इत्यादि श्लोकद्वयं सुगमम् । जभीजृभजृम्भयः जसुक्ताः जृम्भणे ॥४०-४१॥

युत्रादि त्वन्तः भासे । वेति दितौ वा पाठः । दीप्तौ । घि यादि ग्रहणे पण पन स्तुतौ । पण व्यवहारे च ॥४२॥

कक्यादिपंडिखान्तम् । इख गतौ । अव्यादिभाषान्ताः जसुक्ताः भाषणे शब्दार्थे । किन्तु गुघ्वुकुङ ङित एते । गुङ् घुङ् उङ् कुङ् इत्यर्थः । तङानि । षृङितां पाठः हलादेस्तद्वतोऽदितो युङरिह्याद्यर्थः भेदोऽर्थेऽन्यो यथा पैप्यैङ् ॥४३-४४॥

श्लोकादि पिण्डने । अत्रादिभलगन्तम् । गित्तु हिंसने । शल्भादि श्लाघलोऽन्तः लित् जसुक्तः श्लाघायाम् । विडुर्जाति सप्तम्यन्तं पुरीषोत्सर्गे हदः ॥४५॥

द्युतादि गतार्थम् । ञिमिदा ञिमेदेत्यर्थः । ञीत् आदिच्चेत्यर्थः । ञिमदादितोऽस्मिन्निति वर्तमाने ञीतः । क्तः मिन्नः ञिष्विदा स्विन्नः । णभतुभग । गिद्धिंसने । श्रम्भु विश्रम्भे । क्षुभु क्षोभे । ध्वंसादि सूक्तः ध्वसने भ्रशने श्रंसने ॥४६॥

वृत्स्यन्दू । वृत् सूक्तः, वर्तने स्यन्दने वर्धने । सृधुघोऽपि घ्रिच्छदोपि कृच्छ्रार्थः । कृपू सामर्थ्ये । गणोच् । गणो ओद् वा औच् प्रत्याहारार्थः । द्युतादि द्युच् । दादि वृच् । घटस्खदप्रथः सूक्तः घटने चेष्टायाम् । स्खदने प्रथने । घटादि मित् । तेन तग्नितः णौ । घटयति । इण्नुमौ । तग्दीर्घो वा । इण् णस्यरेणौ परे तग्वा । अघटि । अघाटि । घटं घटम् । घाटं घाटम् । एवं यावत् फण गतौ । फणयति । गष्टौ किम् ? फाणयति । एवमर्थविशेषे घटादिप्रयोजनम् । क्षजिष् षिद् गतौ । दक्षग् गिद्धिंसायाम् । षिद्वृत्तेर्गतौ च पाठात् । अदाक्षि । दुःखव्यथौ भये । चलने चान्ये । तदा खिदनुवृत्तिः ॥४७॥

क्रदादि । लित् क्रन्दने वैक्लव्ये । क्रप कृपायाम् । ञित्वरः त्वरणे, ञित् । प्रसः ततौ विस्तारे । म्रद मर्दने । षितश्चापि । पिद्वद्यदि षितोऽर्थे । घटासूदेत्यादि । तङानिनः पूर्वे ॥४८॥

ज्वरादिच्छन्दो द्वयं सुगमम् । किन्तु ज्वरः ज्वरे रोगे । ज्वरयति । कगेवन् । अनुक्तार्था सुप् नातोऽर्थनियमो, यदाह-'कगेवनु च नोच्यतेऽर्थविशेषे । नट नाट्ये नृतौ । ह्रगे आदि संवरणे । श्रथादि गिद्धिंसायाम् । क्रथच्चेति चित् चान्तं च ॥४९-५०॥

दीप्तो ज्वल: चलन्येवान्ये । चलने चलि: । ह्मल चलने । चलयति । चालयत्यन्यत्र । नृ नये । मारणतो षद्लृक् । ज्ञा ज्ञपयति । मारयति । तोषयति । दर्शयति चेत्यर्थः । अन्यत्र ज्ञापयत्यर्थम् । विज्ञापयति प्रभुम् । ऊर्जने षद्, बले प्राणने च । षदि षदयति । अन्यत्र षादयति । छदिरन्ये । मदि हर्षदैन्ययो: । लडि जिह्वाविलोडने । स्वन्वनौ ध्वाने शब्दे । स्वन अवतंसन इत्येके । श्रा दृ स्मृ क्रमेण पाके भये स्मृतौ । अन्यत्र पठिता अत्र मित्त्वार्थम् । श्राति श्रायति वा । श्रपयति । [दरति । दरयति । दारयति । स्मरति । स्मरयति । स्मारयति ।] पाकादौ किम् ? श्रापयति । दारयति । विस्मारयति । धात्वन्तरमित्येके । दृ दरति । मित् घटादि । मित् तथोदाहृतम् ।।५१।।

अन्यत्र पतितोऽत्र मिदर्थो जृषादि । जरयति । जृणातेस्तु जारयति । जननी च जनयति । जनन भाषायामिति । जनी एवेत्येके । क्रशयति । मृगरम णल्लापे सति दीर्घप्राप्ते: । रजयति मृगान् । वस्त्रं तु रञ्जयति । मन्ता: मित: । मरयति । भ्रमयति । ज्वलादि वा मिदप्रतीति, अप्राप्तौ मति । प्रादौ तु यथाप्राप्तम् । ज्वलयति । ज्वालयति । ह्वलयति । [ह्वालयति ।] नमयति । [नामयति ।] ह्मलयति । [ह्मालयति ।] ग्लपयति । [ग्लापयति ।] वनयति । [वानयति ।] स्थपयति । [स्थापयति ।] वमयति । [वामयति ।] प्रादेर्नित्यम् । प्रज्वलयति । [प्रज्वालयति । प्रह्वलयति । प्रह्वालयति । प्रणमयति । प्रणामयति । प्रह्मलयति । प्रह्मालयति ।] प्रग्लापयति । प्रस्थापयति । कत्वनानो रमितो मान्ता अपि । कामयते । आचामयति । आमयति । शमोऽदृक् । अदृगदर्शने च शमो मित् । शमयति रोगम् । दर्शने तु निशामयति रूपम् । अन्ये त्वाहुर्दर्शने । नञा यागान्तमित् तथापि सोऽर्थ: । स्खद्यमितोऽवपरे: । परिवेषो क्रमेण अवपरेरेव । प्रादे: परात् स्खदे: यमेस्तु परिवेषणेऽर्थे मित्त्वम् । अवस्खदयति । [अवस्खादयति ।] आभ्यां किम् ? प्रस्खादयति । स्खदयति । एवं यमयति । आयमयति । परिवेषे किम् ? यामयति । नियामयति । नञा योगादुदाहरणयोगाद् व्यत्ययमाहुरन्ये ।।५२।।

फण गतौ वृत् । फणो मित् गतौ धातुश्च । सामान्येनान्यत्र पठितस्यात्रपाठो धात्वर्थं च । फणति । फणयति । गतौ च मित्रेच्छन्त्यन्ये । फाणयति । तथा पृत् पूर्वाथमतो गणो गतौ फण पाठ: । वृद्गणो वा समस्तघटादिसमाप्त्यर्थ: । अतङानि पूर्वोक्तम् । राजृश्च । राज्रादि टिद् दीप्तौ । ऋदिताम् अव्या: द्वित: । राजते । अरराजत् । भ्राजथु: । तङानिनो भ्राजादयो राजृश्चातो राजेस्तिङ् । स्वन् स्यम् उतौ उदितौ । ध्वनोऽत्र । अत्रेति त्रयोऽपि ध्वने शब्देऽर्थे । षमष्टमावुक्तार्थौ पित् ।।५३।।

ज्वल: ज्वलने दीप्तौ, [क्वथ:] कथे क्वथने निष्पाके । मथे मथने विलोडने । बल: श्वसने प्राणने । क्षरादि चिच् चलने । हल विलेखने । टलट्वलौ प् पित् वैक्लव्ये । हुलादि खिद्गतौ चिन्तोऽत्यार्था: । हुल हिंसायाम् ।।५४।।

ष्वलादि सुगमम् । कुलो बन्धौ बन्धुषु सांस्त्याने च । कुलं कौलति । वमुर्वम् वा ट्विद् उद्गारे । वम् ट्वित्, वोदिद्, उद्गिरणेऽर्थे । अतङानिन: पूर्वे ।।५५।।

सूक्त: षह सहने । कुश आक्रोशे । बुधिर् बोधने । इरित् बुध इन्नि वा । रसुरमुद्वयं वोदिदित्यर्थ: रमणे । यमु नियमे उपरमे । रुह रोहणे । कशख् खिद् गतौ । पृच द्व्यर्थ: सुखार्थ: । वृत् ज्वलाद्यर्थ: । ज्वलादितो ण इत्यर्थ: ।।५६।।

हिक्कादि व्यक्तम् । वेणृ च दीप्तौ ज्ञाने । चते आदि त्वन्तेट् याञ्चायाम् । चते चदे एदित् । याचृ ट्वित् ऋदित् । खनादि सूक्तः खनने धावने गतौ । उदितौ । हरणे भरणे वरणे पोषणेऽर्थे ॥५७॥

*अलञ् तादृग् भूषायाम् । उबुन्दिर् निशामने आलोचने उदिरितौ* । बुन्दति । अबुन्दत् । शेषः सुगमो यावड्डुपचष् पाके । ड्वित् । षित् । किन्तु मिदृ आदि लित् जसुक्ताः मेधायाम् । लोगिति वा पाठाद्धिंसायां च । सूक्तौ यजः यजने दाने । वहः वहने प्रापणे । व्येञ् संवरणे । टुवप् सूक्तः वपने ट्वित् । ह्वेञ् वेञ् क्रमणे स्पर्धने तन्तुसन्ताने । विभाषिताः पूर्वे विभाषः, अन्येषूक्ताः । टुओश्वि टुओदित् । वृद्यजादिद्यर्थः ॥५८-६२॥ भ्वादित्यर्थश्च । भ्वादयः समाप्ताः ॥

सूक्तो अदः अदने । हन हनने । षंसिषसौ शये स्वप्ने । वश द्युः क्रमेण क्रान्तौ अभिगमने । यु मिश्रणे । क्ष्णु तेजने । णु स्तुतौ ष्णु तु त्वन्तः प्रस्रवणे । टुक्षु भक्षुः शब्दे । द्वित् चिदन्त्यार्थः । इण् वीख् खिद्गतौ । ण्वित् इणो याऽर्थः । इक स्मृतौ । कित् । इकानामित्यर्थः । भाट् टित् दीप्तौ ॥६३॥

मादिः सूक्तः माने स्थाने आख्याने । प्सा अदिति अदने । वा या द्राख् । खिद् गतौ । पृथक् च्छन्दोऽर्थम् । दाप् प्रा क्रमेण लवने पूरणे । पिद् दोपदोऽर्थम् । व्यक्तास्त्रयः । वृत् भाषि समाप्तौ । प्साभादौ भा इष्टः । विदो वेदने दाने ज्ञाने । मृजूः जदित् मर्जने शुद्धौ ॥६४॥

वचो वचने । भुवि [असु] । रुदिर् रोदने स्यात् । श्वस अन प्राणने । ञिष्वप् सूक्तः स्वापे ञीत् । जक्षञ् भक्षणे । चकासृ दित् दीप्तौ, ऋदित् । जागृः जागरणे । शासुः अनुशिष्टौ, उदित् । दरिद्राः दरिद्रे । वजक्ष व्यत्याहारार्थः । यङि वैके । यंङ् इत्यलुक् । अत एव यञो यङि-तः प्रायोऽतङानिनः । अदादि यङिदन्ताः ॥६५॥

चक्षिङ् सुवाचि व्यक्तायाम् । ईर कसिः । खिद्गतौ । आस आसने । सूक्तः षूङ् प्रसवे प्राणिगर्भविमोचने । शीङ् शयने स्वप्ने । वृजी वर्जने । ईदित् । ईड वस क्रमेण पाठवस्त्रे, अध्ययनाच्छादनयोः । आङ् शासु इच्छायाम् । उदिद् वा । व्यक्ताः ॥६६॥

दीधीङ् शिजिद् दिद् दीप्तौ । वेव्यादि त्वन्तः । [पृची] संपर्चने । चिदन्त्यार्थः । इदितौ । ईदित् । व्यक्ताः । तङिति तङानिनः पूर्वे ॥६७॥

लिहो अदि । अदीति अदने आस्वादने । तद्वेति विभाषिताः । पूर्वे द्वौ भाषितेयुरूह्याः । हु पृ क्रमेण दाने पूरणे । ओहाक् हाने त्यागे । ओदित् कित् । हाकप्स्नुहा विद्या व्यर्थः । ञिभी भये ञीत् । हञ् हरणे । कस तादृग् गतौ । घृभसद् दिद् दीप्तौ । वेति क्रमेण क्षरणभर्त्सनयोर्वा । ह्री त्रपायाम् । कि कित् वित्तौ विदि ज्ञाने । विषघ् घिच्छब्दः । जनः जनने । अरन्तुर् । अरमिति त्वरणं, तत्र तुर् । धन धान्ये । परस्मैपदिनः पूर्वे ॥६८॥

विजि विचिर्वा भिदि । भिदीति पृथग्भावे । विजिर् मतान्तरेण । षिचिरिति वा इरित् । णिजिरुपोषणेऽपि शोचेऽपि । ढाप्तौ विष्लृ । विष्लृ व्याप्तौ । च्छिदन्यतिदे तदर्थः । येर्टितो वेति ट्यञादि । द्वितुडिद्वा जसुक्तः भरणे पोषणे । अमी पूर्वे विभाषिताः । ओहाङ् गतौ ओङित् । माङ्

माने । तङानिनावृत्तौ । वृत् जुहोत्यादित्यर्थः ॥ अदादि ॥६९॥

दिवुश्रुवुखु खिद् गतौ । वेति क्रीडादौ वा दिवु । श्रुवु शोषणे च । षिवु तन्तुसन्ताने । ष्ठिवाद्युदित् । ष्णसु सिद्दिच्च निराकृतौ निरसने । त्रासद् दिद् दीप्तौ । प्लुष आदे अदने । [क्रथादयो] व्यक्ताः ॥७०॥

त्रसी त्रसने उद्वेगे । नृती नर्तने । ईदितौ । प्लीमादि आर्द्रे आर्द्रभावे । व्रीडक्षिपौ क्षेपणे । युधव्यधौ व्यक्तौ । ईषख् खिद् गतौ । स्फुटस्तु स्फोटने ॥७१॥

षहादि व्यक्तम् । सूक्तः पुषः पुष्टौ । शुषः शोषणे । दुषः दुष्टौ वैकृत्ये । शकन् नित् मर्षणे । व्यक्तोऽन्त्यः ॥७२॥

ष्विदाः प्रस्वेदे आदित् । क्षुध क्षुधि बुभुक्षायाम् । शुन्धुन्वन्तः शुद्धौ शौचे । षिधुः संसिद्धौ संराद्धौ जदिद् वा । रध दृप क्रमेण हिंसाविमोचनयोः । तृप तु त्वन्तः तृप्तौ । द्रुहादि सूक्तं द्रोहने स्नेहने मोहने नाशने । उद्गिरणे ष्णुहर् रित् । रधादि मुहादि प्रत्याहारार्थः । एवं शसु उपशमने । क्षमूः क्षान्तौ । क्लमुः ग्लानौ । मदि मदने हर्षे । दमुः दमने उपशमने । श्रमुः श्रमे ॥७३॥

भ्रमुः भ्रमणे अतृप्तौ आकाङ्क्षायाम् । तुमुच् चित् । शमादि प्रत्याहारार्थः । उद्दीदितः । गृधुः गार्ध्ये । क्रुधुः क्रुद्धौ । भृशादि जसुक्तं लोटने अधःपतने । क्षुभः क्षोभे । हृषः तृषः सूक्तः चित् तोषे । कुधु रुष कृप् तु । त्वन्तः कोपे । लुभ्रु लोभे । तुभणभ तादृग् हिंसने, गिद् वा ॥७४॥

[प्लुषादयो] व्यक्ताः । विस असु तु । त्वन्तः निरसने । प्रेरणे क्षेपणेऽप्ययमर्थः । [यस्वादि] व्यक्तौ । ञितृष वसु क्रमेण तृषि स्तम्भे वा ञित्यादुदित् ॥७५॥

पूषादि वृदन्तं सुगमम् । कृश तु कृशे तनूकरणे । अतङित्यतङानिन पूर्वे । वृत् पुषादिसमाप्तौ ॥७६-७७॥

ष्वादयो व्यक्ताः । ओदितश्च । ईङ् यदख् । खिद् गतौ । माङ् माने ॥७८॥

[प्रीत्यादयो] व्यक्ताः । दीप्यादि त्वन्तः द्योतने दीप्तौ । जनी जनने प्रादुर्भावे । सूरादि गिद् हिंसायाम् इदित् । विद सत्तायाम् । मन सृज ज्वरीः सूक्तः । मन मनने । ज्ञाने सर्जने जीर्णे । शृधु घुङ् शब्दे ॥७९॥

क्लिशादि व्यक्तम् । किन्तु रुधोऽनो रित् । अनुरुध् कामे । पतलृ वेति तप वा ईश्वरत्वे । तङिति पूर्वे तङानिनः । शकः तृषः सूक्तः । चित् मर्षणे । रञ्ज शप तादृग् रागाक्रोशे । सूक्तो धारणे शापे । विभाषिताः तिङ्वन्तः । वृत् दिवादि समाप्तौ । दिवादि ॥८०॥

षुञितः ञितो टुत्यन्ताः । उभयपदित्वात् किम् ? ञिता वेत् । षुषुञ् वुवुञ् वृवृञादि । विशेषार्थम् । पृथक्त्वेनोक्तः च्छन्दोर्थम् । षुञ् अभिषवे । षिञ् शिञ् क्रमेण बन्धने निशामने । धुञ् कृञ् कम्पने, गिद्धिंसने । चिवृ सूक्तम् । चिञ् चयने । वृञ् वरणे । प्रुरीति पूरणे प्रक्षेपणे । डुमिञ् डुञित् । स्तृ बृहिदाच्छादाने उभौ तङानातङानौ ष्वादेः । तिकादयः । गिँतौ हिंसायाम् । चिदन्त्यार्थः ॥८१॥

धिवितृपौ तृप्तौ । व्यक्तौ । दन्भु दम्भे । ऋधुः समृद्धौ । शक्लृः शक्तौ । आप्लृ तु व्याप्तौ । राध साध तातृक् संसिद्धौ । हिखिङ् गतौ । ञितृषा सूक्तः । धार्ष्ट्ये ञिआदित् । टुदु उपतापे । तिज रिरि गिद्धिंसने । केचित् अतङानि पूर्वोक्तम् । अशूढित् तु व्याप्तौ । ष्टिघ आक्रमणे । पञ्चपदी गाथा । वृत् स्वादिसमाप्तौ ॥८२॥ स्वादि ॥

तुदादि व्यक्तम् । णुदक्षिपौ ओदन्तः क्षेपणे । सूक्तोऽतः कृष कर्षणे । विद्लृ लाभे । षिच सेचने । मृच्लृ मोचने । लिप उपलेपने । लृप्लृ लोपने च्छेदने । तिङ् इति विभाषिताः । कृती कर्तने च्छेदने । खिद खेदे । पिशर् अवयवे रित् । मुचादि प्रत्याहारार्थः ॥८३॥

लिशादि गमने गतौ । रिफादि गिद्धिंसने । ष्टृहुवः । षष्ठी । ष्टृहू । ऊदीत् । अस्यापि गिद्धिंसार्थः सृजादि सूक्तः विसर्गे प्रच्छने आमर्शने इच्छायां प्रवेशे ॥८४॥

तृफादि भृतौ पूरणे । गुफादि ग्रन्थने । तुन्फादि गितो हिंसने । दृफादि रुजि रोगे । शुन्भुशुभौर् ओदन्तः शोभार्थौ । रिफं तृन्फादिरर्थः । हिल हावकरणे ॥८५॥

व्रश्चूखुरण् च्छेदने । त्वच संवरणे । गृः सूक्तः निगरणे । व्यक्तौ । षुञ् ञित् क्षेपणे प्रेरणे । घूर्ण घुण तादृग् भ्रमणे । घूर्णन्ती घूणन्ती इह प्रयोजनम् । षुः सुः वा ऐशे ऐश्वर्ये ॥८६॥

व्यक्तौ । पृणान्तः । मिल तु मेलने श्लेषणे । चिल चेले वसने । पृणश् शित् प्रीणने तृप्तौ । विधः विधाने ॥८७-८८॥

कुणादि । घिच्छब्दे । पुरः अग्रगे अग्रगामिनि । क्षुर लिख तु त्वन्तः विलेखने । णिल गहने । षदादि तादृक् । षद्लृ शद्लृ विशरणशातनयोः । चल चलने । चर्चादि तर्जने । झर्झजर्जच् इत्येके ॥८९॥

तुणकुट वित् कौटिल्ये । चुणादि छिदि छेदने । चुण चुट इति पुण पुट इत्येके । णित् तदिद् एतदर्थः । मुटादिः सूक्तः मुटने प्रमर्दने सङ्कुचने, नुतौ स्तुतौ । स्फलस्फरौ ओदन्तः स्फुरणे । द्रुड जुड तु जोडने बन्धे । धू विधूनने । व्यक्ताः, तुट कलहकर्मणि च । गुजघ् घिच्छब्दे ॥९०॥

स्फुट निर्विकसने । व्यचो व्याजे । क्रषु खिद् गतौ । गुड रक्षायाम् । डिपड् डित् क्षेपे । विन्मोचने, पुरीषोत्सर्गे गुः । कुड भ्रुड निमज्जने । अतङोऽतङानिनः पूर्वे । गुरी तादृग् उद्यमने गौरवे वा । कू क्रुकुघः घिच्छब्दे । वृत् पुषादिसमाप्तौ । योऽन्यत्र कुटादि सोऽत्र पुणादि । तङः तङानिनः पूर्वे ॥९१॥

ओलस्ज्यादिश्लोको व्यक्तः । ओदीदित् । किन्तु मृङ्पृङ् तौ तादृशौ प्राणत्यागावस्थानार्थौ । तङ्स्तङानिन एते ॥९२॥ गणस्तुदादिः समाप्तः ॥

रुधादि सूक्तः । इरित् । रुधि रोधने आवरणे । भिदिरु भेदने । छिदिरु छेदने । विचिरु विवेके पृथग्भावे । रुचिरु विरेचने । क्षुदिरु क्षोदने । युजिरु योगे । वेत्येते । छिदिरु तृदिर् उद्गितौ क्रमेण दीप्तिहिंसयोः, रुदितौ च । विभाषिताः पूर्वे । शिष्लृ विशेषणे । पिष्लृ पेषणे सञ्चूर्णने ॥९३॥

एवं पृची: सम्पर्के । वृजी वर्जने । ईदितौ । भुज भोजने पालने च । भञ्जो भञ्जने । तुह हिसि तु त्वन्तः हिंसने । ओविजी तादृग् भये [चलने च] । अञ्जूखिद्गतौ । व्यक्तौ । अतङिति अतङानिनः पूर्वे । ञिइन्धी ईदिद् दीप्तौ । ञिदित् । तङाना एभ्यः । वृत् रुधादिसमाप्तौ ॥९४॥ षट्पदीगाथा ॥

तन्वादि व्यक्तम् । क्षण्वादि खिद्गतौ । घुणु उदिद् दीप्तौ । डुकृञ् तु करणे, डुञितः । तङ् वा । विभाषिताः पूर्वे । मनु मनने बोधने । वनु याचने । उदितौ । तङ् एभ्यस्तङानाः । वृत् तनादिसमाप्तौ ॥९५॥

सूक्तः डुक्रीञ् क्रये द्रव्यविनिमये । द्रुमीञ एतौ ञिद्धिसने । प्री प्रीतौ । यु षि बन्धने । क्नु घुषि शब्दे । क्रमेण श्री पाके स्कु आप्रवणे । पू त्वन्तः पवने । लूः लवने । स्तृञ् ञिद् आच्छादने । धू कम्पने । कृ द्रु ञिद्धिसने । वृञ् तु त्वन्तः, वरणे । ञि तु क्र्यादि वृञन्तो ञित्, डुक्रीञ्द्रुञित्यादि । विभाषितत्वात् यत्नवति तत्सिद्धेर्ञितो नोक्ताः । मुग्वत्वेन करणेऽपि वरं ञिदित्युपहसति । ग्रहः गहणे । तङिति विभाषिताः पूर्वे । ली ल्यी च श्लेषणे । मृ शृ स्पृगः गिद्धिसने । दृ दारणे ॥९६॥

ज्या जृ त्वन्तः निर्जरणे वयोहानौ । नृः तादृग् नये । गृघ् घिच्छब्दे । री रेषणे ब्ली व्री तु त्वन्तः वरणे । भृ भर्त्सने । पृ च पूरणे । च ज्यादित्वादि-प्रत्याहारार्थः । सूक्तः ज्ञा ज्ञाने अवबोधने । ग्रन्थ [श्रन्थ] ग्रन्थने सन्दर्भे । मन्थ मन्थने विलोडने । अश अशने । मुष मोषणे । क्षुभ क्षोभने सञ्चलने । क्रथ क्लिशू तु त्वन्तः क्लेशने । व्यक्ताः अन्ये । किन्तु बन्धमृड एतौ तादृशौ बन्धने, सुखने ॥९८॥

क्षिष्वादि गिद्धिसने । इष आभीक्ष्ण्ये । खव खच वा भूतौ यूतिभावे । व्यक्तौ । अतङो अतङानिनः पूर्वे । वृङ् संभक्तौ । अस्मात् तङानाः । क्र्यादयश्चेते समाप्ताः ॥९९॥

चुरादि व्यक्ताः । ऊर्ज आयुषीति प्राणने ॥ कुद्रादि अनृतेऽनृतभाषणे । रक्षणे पलः, पाल रक्षणे वा पाठः । गुडि वेष्टने ॥१००-१०१॥

पृ पूरणे । घट्ट चलने । लुब्यादि अर्दने चित् । जल अपवारणे । व्यक्ताः क्षज्यन्ताः । आलस्यभव्ये क्रमेण शुठि आलस्ये । भडि भव्ये कल्याणे एताविष्टौ ॥१०२-१०३॥

मृषादि व्यक्तम् । धृषन् धाष्ट्र्ये शक्तिसम्बन्धे । नितृ तिङर्थः । अन्ये ङित् तङर्थः । व्रज इति बाणस्य संस्कृतौ । यद् वा व्रज मार्गे । एतौ संस्कारे । सर्जने ज्ञा । यमिन्माननुबन्धश्च । यमः परिवेषणे । ज्ञाप वाऽनुवर्तते । डपर् रित् सङ्घाते । डिपिन् च सङ्घाते । नित् तिङर्थः । अनिदेके । चकारोऽनुक्तसमुच्चये । वड भडि चैके ॥१०४॥

चितीत्यादि सूक्तः चिन्तने मण्डने सञ्चोदने लक्षणे दर्शने अङ्कने वेत्यर्थः । नित् तिङर्थः । भक्षणे श्लेषणे प्रथने सञ्चने वपने । उ निपातः । बुल बोलने निमज्जने । ताडने म्रक्षणे छर्दने । कुविच् । वि आच्छादने । क्षल क्षालने शौचे । वटि वण्टने विभागे । उ निपातः । विल कल एतौ ङितौ क्षेपे । मान पूजायाम् । चिदन्त्यार्थः कड्यादि जसुक्तः खण्डने चित् । घृ आद्याः त

एव तादृशाः क्रमेण क्षरणे तेजने । नाद्यो समुच्छ्राये सान्त्वने । षान्त्व इत्यन्ये । रुट वृष रोषे चित् ॥१०५॥

कीटादि जसुक्तः यन्त्रणे बन्धने । वर्णादि अनादरे । थौ [परे पुः पुथः] च पुस्तस्य समुच्चयार्थः । वर्ण चूर्ण जुड क्षेपे । सोऽप्यनादर एव । दिद् वा । वर्ण चूर्ण जुड इति । वर्धादि त्वन्तः कुट्टने च्छेदने ॥१०६॥

तिलादि जसुक्तः स्नेहने । चक्कादि पीडायाम् । श्वठादिशठखन्तम् । खिद्गतौ । शठन् नित् तिङर्थः । अर्क ईड तु त्वन्त ईडने स्तुतौ । दिवुन् देवने, उदित् नित् ॥१०७॥

गजादि । घि शब्दे । रुजादि गिर्द्धिसने ॥१०८॥

पुंस अभिमर्दने । बुधि षट्ट एतौ घाते हनने । पदा याथासंख्येन । पिडि पूल संघाते । वर्ण अत् नीले । रभि हर्षे । भिन्द्यादि ङित् क्षेपे । तुप स्वक्षनाशे । केचिदिति पृथक् । बलभृताविति भरणे । अतङ् अतङानिनः पूर्वे ॥१०९॥

मन्त्र्यादि सूक्तं मन्त्रणे तन्त्रणे कुटुम्बधारणे चिन्तने कुत्सने वञ्चने । उ निपातः । तर्ज भर्त्स तु त्वन्तः भर्त्सने । दिसिच् दसिः दशने चित् । दशि दर्शने च । निष्क तूण क्रमेण परिमाणे पूरणे । इह धातुपूरणे । ईदृशा गृ आद्याः क्वचिदर्थे स्युः । गृ ज्ञाने । यु जुगुप्सायाम् । मन स्तम्भे । विद वेदनाख्यानिवासेषु ॥११०॥

वस्तगन्ध एतौ अर्दने । किक्कहिक्कग् गिर्द्धिसने । स्यम वितर्के । व्यक्ताः । लल भ्रूण क्रमेण एतौ ईप्सायाम् आशंसायाम् । कूट पक्ष एतौ प्रतारणस्तुतौ । त्रुटदलौ छेदने आलम्भने । तड संहतौ सङ्घाते । कुड् सन्तापे । तङ्तङानिनः पूर्वे ॥१११॥

चर्चादिपदानि क्रमेण पाठाद्यर्थेषु । वर्च पाठे चर्च पाठे अध्ययने, पर्यायानाह । मुच प्रयोजने । त्रस वारणे । अञ्चु विशेषणे । भज विश्राणने । अर्जप्रतियत्ने । ज्ञा नियोजने । जस ताडने । लिगि चित्रीकरणे । मुद संसर्गे । कपभूः द्वावप्येकं पदम् । अवकल्कने । च्यु हसने । वैचित्र्यार्थमित्थम् । चरकण क्रमेण चिन्ता च संशये निमीलने च ॥११२॥

मोक्षः तादृग् अशने । तसि भूषौ, आदन्त भूषायाम् । दूषोऽन्धसमर्हः तादृग् दूषणे तुच्छे पूजायाम् । शेषा व्यक्ताः ॥११३॥

स्वादे आस्वादने रकादि । पशादि बन्धने । चट स्फुट तु स्फोटने । घट सङ्घे सङ्घाते । हिंसार्थाश्च चटादयः । व्यक्तौ ॥११४॥

आङः परः क्रन्दः सातत्येऽर्थे चुरादिः । आक्रन्दयति । अन्यत्र क्रन्दतीत्येके । अन्ये आङः क्रन्दे स्वार्थे णिञ् । आक्रन्दति । अन्यस्त्वाह घुषो वर्तते आङः परो घोषः क्रन्देऽर्थे चुरादिः । आघोषयति । प्रतियत्ननिकारयो ऋणाद् यती । यातयति छिद्रं पुत्रं वा [इति] वाच्ये । निरः परः । निर्यातयति । प्रतिददाति [इत्यर्थः] । अन्यत्र यतते । एवमन्यस्यापि निकारेऽर्थे उक्तिः । आस्वादस्तु सकर्मकात् णिञ् । त्वन्तादास्वादनेऽर्थे । आस्वादयति यवागूम् । अन्यत्र स्वादने भ्वादौ । आङः

किम् ? स्वादं वक्षत्यास्वादनेऽस्य, स्वादयति यवागूम् । अन्यस्त्वाह-आस्वादधातोः सकर्मकक्रियावचनादेव णिञ् । अन्यत्र व्यावृत्तिः । दल दलने विदारणे । पूरीश् शित् प्रीणने आप्यायने । रुजग् गित्, हिंसने । व्यक्तो ॥११५॥

पटादि चीवान्तं भाषायाम् । णिञ् स्वार्थे । पाटयतीत्यादि । अन्यत्र क्रमेण पटति । पुटति । लुट्यति, लोटते । पुष्यति । भञ्जति । पङ्क्ते । त्रस्यति । घटते । घटि कुशि लुजि नान्यत्र सन्ति । आलोकते । भनक्ति । नास्ति । वर्धते । नदति । कुप्यति । गोपायति । लोठते । नास्ति । वर्तते । वर्हति । वल्हते । लङ्घति । दशति । बृंहति । विच्छति । धूपायति । चीवति । अन्ये त्वन्यत्रापठिताऽप्यत्र पाठाद् धातव एवेत्यर्थान्तरेष्वपि प्रत्ययान्तरेण प्रत्युदाहरन्ति । यथा कुशन्ति घटन्ति लुञ्जति । तर्कति, इत्यादि । सोऽप्यार्थनियमार्थोऽत्रैषां पाठः । स्वादः सूक्तः आस्वादने । स्वादयति यवागूम् ॥११६॥

वाक्यप्रबन्धेऽत् । कथ अद् इत्यतोऽदन्ताः । कथ वाक्यप्रतिबन्धे । व्यक्तौ । पतयति खिद् वा । वेति । अथवा तवेति पाठः । खिद्गतौ । मुखसेवने चान्ये । महादि सूक्तः महध्वन तादृक् पूजायां शब्दे । क्रमेणान्ये स्तैन्ये जनने परिहाणौ । खोटं चहः । तवेति खोटने क्षये । खोडेत्यन्ये । तित् तिङर्थः । चहस्तत्र परिकल्कने । द्वौ स्पृहायाम् ॥११७॥

भामादि सुगमम् । किन्तु कूटादि आमन्त्रणे स्युरिति । कूटाद्यर्थः । ढिन्तेर्वा सः । निवासः । ढिदाच्छादने ॥११८॥

रहादि सुगमम् । अन्ते पषट् । टिद् अप्राद्यत्र । पषयति । टित् किम् ? प्रप्रषति ॥११९॥

पल्पूलादि सुगमम् ॥१२०॥

अतङ् त्विति अतङानिनः पूर्वे । पदस्ख् खिद्गतौ । ङितोऽतः तङानार्थः । मृगङ् अन्वेषणे ॥१२१॥

संग्रामादि क्रमेण युद्धादौ ॥१२२-१२३॥

अञ्चादि व्यक्तम् । किन्तु प्रगाब्रवा पाठः ॥१२४॥

छेद छेदने । अंसादि व्यक्तम् । चित्र चित्रकर्मणि, दर्शने च ॥१२५॥

गर्व माने । डिद् गर्व वोदित सम्बध्यते तङर्थः । स्तोम स्तुतौ । संसर्गेत्यादि प्रकटम् ॥१२६॥

जल वट । लजयति । वटयति । अर्थान्तरेऽत्रायम् । इदितौ । अन्ये लञ्जयति । अन्येऽत्र पाठाददन्ताः । वतो णिञिनन्ता आप् । लञ्जापयति । वर्ण वर्णक्रिया-विस्तारगुणवचनेषु । अङ्के अङ्कलक्षणे । अङ्ग पदलक्षणे । अन्यत्र अङ्गति ॥१२७॥

वैति कैश्चिद् युजादयश्चुरादौ पठ्यन्ते । तित्यणिञ् अर्थे नान्यैरिति वार्थः । तन्मतेन दर्श्यते । युजु पृचः संयमने । योजयति । पर्चयति । शप् च । योजति । पर्चति । गणान्तरपाठात्, युज्यते । युनक्ति । पृणक्ति ॥ शिषोंऽशे असर्वोपयोगे । णिञ् शप् श्नम् च । वेः परः विशेषे तैः शये ।

*णिञ् विशेष्यते । विशिष्यते । तृप प्रीणने । णिञ् शप् श्नु च । ली द्रवीकरणे । घृतं विलापयति ।* विलीनयति । गणपाठात् । ईर क्षेपणे । अन्ये खिद्गतौ च । ईरयति । ईरति । अदादौ च ईर्ते ॥१२८॥

मी आङः परः सदश्च खिद्गतौ । सर्वत्र वा पक्षे शप् । गणपाठादन्यश्च तदर्थेऽपि । अन्यार्थेऽपि तु व्यावृत्तिः । माययति । मयति । मिमीषते । श्ना च । आसादयति । अनाङ् अगतौ, सीदति, आसीदति । जुषः परितर्कणे । णिञ् शप् । तनु श्रद्धोपतापे । णिञ् शप् । तनित्वा । तान्त्वा अन्यत्र तनोति । तद्यते । ततः । कित् तु दैर्घ्ये । प्रादेश्च दीर्घत्वे, आतानयति, [प्रातानयति,] वितनति, प्रतनति । कित् किम् ? तनोति । प्राप्तौ भुवस्तङ् । तङानाश्च । भावयते । भवते । अन्यत्र भावयति । भवति । दृभादि सन्दर्भे । णिञ् शप् । दृभी भये चान्ये । ईदिता दृच्च दृम्भो दृभितम् । अन्यत्र, दृभति । श्र श्नाति । आप्लृ लम्भने । णिञ् शप् । आपत् । अन्यत्र श्नुः ॥१२९॥

सूक्तः वचः वचने, सन्देशने, भाषणे च । वाचयति । वञ्चति । अवीवचत् । अवचत् । एवं वृजी वर्जने । जॄ जरणे वयोहानौ । अणिञ् शप् । तथा वृणाति । वृक्ते । वृणक्ति । वृषादि सूक्तः । णिञ् शप् । वृषु वुषा । उदादित् । वृष्टं धर्षितम् । त्रा इत्येके । एवं छादने, अपवारणे, गर्भणे, मार्गणे, अन्वेषणे । णिञ् शप् । क्रथादि हिंसने । मन्मानौ मानने पूजायाम् । कठिरुक्तं विशोके । मृजु तादृक् शुद्धो । चृदी भृदी क्रमेण दीप्तौ भये ॥१३०॥

तिरु उभयपदिनः पूर्वे । तङ् अतस्तङाना । मृष मर्षणे । अदन्तो वा । शुन्ध तादृक् शुद्धौ । वदार्चम् । वदने, अर्चने । मर्च धिच्छब्दे । व्यक्तः । हेतौ क्रियार्थाच्च । तत्र हेतौ हेतुकर्तृव्यापारार्थाद् धातोर्णिञ् । कुर्वन्तं प्रयुङ्क्ते । कारयति । पाचयति । भिक्षा वासयति । कारीषो-ऽग्निरध्यापयति ॥१३१॥

सुपस्तदर्थे । धात्वर्थे विवक्षिते सुबन्तात् णिञ् । तदर्थं गणकारो व्याचष्टे-सूत्रमित्यादि । सूत्रादीन् करोत्यर्थः । वेत्यन्यधात्वर्थे । सूत्रयति । [मुण्डयति । लवणयति । मिश्रयति । श्लक्ष्णयति ।] व्रतं करोत्येव । कथम् ? न तद्वेति प्रत्याख्येयं द्वेधा । वृषलान्नं व्रतयति । नैव भुङ्क्ते । पयो व्रतयति । तदेव भुङ्क्ते । आचष्टे करोति च तान् वीप्सया सर्वाऽर्मः । पटुमाचष्टे करोति वा, पटयति । घटयति । सत्यापयति, इत्यादिः । तैस्तैः सर्वदाऽतिक्रामतीति । अतिहस्तयति । अत्यश्वयति, इत्यादिः । सत्यादेः आप् च सम्पादयति । [सत्यापयति । वेदापयति । अर्थापयति ।] आतामर्थादेकाजदन्तस्य प्रशस्यः स्वः । स्नापयति । स्थापयति । प्रापयति । क्रमेण श्वेत अश्व गालोडि आह्वर एभ्यः परे अश्व तर इत क एते लुक् स्यात् । णिञ् च । ङित् तङर्थम् । श्वेताश्वमाचष्टे, श्वेतयते । एवम् अश्वतरम् [आचष्टे], अश्वयते । गालोडितम् [आचष्टे], गालोडयते । आह्वरकम् [आचष्टे], आह्वरयते ॥१३२॥

वर्णादितमिति । वर्णादेर्द्वितीयान्तात् भूति अनैकधात्वर्थे णिञ् ॥१३३॥

गुह्णाति इत्यादिना तदेव दर्शयति । वर्णं गृह्णाति, वर्णयति । य इति । हलिकल्यो इ अ च स्याद् अतोऽग् लोपित्वात् सत्वकार्यं त्रक्ष्विति न स्यात् । हलि । आख्यत् । अजहत् ।

अचकलत् । अन्यत्रातः परत्वात् पूर्वमारैच् । अपीपटत् । त्वचं कृतं च गृह्णाति । त्वचयति । [कृतयति ।] नैकाचो लुक् । तूस्तानि निहन्ति, [नि]तूस्तयति । लोमान्यनुमार्ष्टि, अनुलोमयति । ङितस्तदर्थाः । भाण्डानि समाचिनोति सम्भाण्डयति । अङ्गानि सहस्तादीनि निरस्यति उत्क्षेपयति इत्यर्थे । अतिहस्तयते । पादयते । उत्पुच्छयते । चीवरं परिधत्ते सम्मार्ष्टि वा । सञ्चीवरयते भिक्षुः । भाण्डमाचष्टे । भाण्डयति । उत्पुच्छयति । विमोक्षे पाशात् । पाशं विमोचयति । विपाशयति । रूपं समीक्षते पश्यति । निरूपयति । वस्त्रं समाच्छादयति । इति वर्णादि समासौ ॥१३४-१३५॥

कूलादितो र्टा [१३३] । कूलादेर्वा पातः तृतीयान्तात् । भूत्येव णिञ् । तत् कूलादिना दर्शयति । कूलैरनुगृह्णाति । अनुकूलयति । एवं संवर्मयति । उपश्लोकयति । अभिषेणयति । अवचूर्णयति । अन्यार्थे च तं लुक् च कृतः स भद्रूप् । भूत्यैव करोतीत्यादौ धात्वर्थे तमिति द्वितीयान्तात् कृतो णिञ् स्यात् तदन्यार्थे । भिन्नधात्वर्थे विवक्षिते श्रुतत्वात् क्वचिल्लुक् च स्यात् तत् । स इति पूर्वोऽकृदन्तवत् भूर्धातुः स्यात्, रप् द्वितीयादि कारकं च । देवस्य प्रतिष्ठां करोति, देवं प्रतिष्ठापयति । देवार्चनं समाचरति, देवमर्चयति । ब्राह्मणभोजनमनुतिष्ठति, ब्राह्मणं भोजयति । कंसवधं, [बलिबन्धं] सीताहरणं, राजागमनमाचष्टे, कंसं घातयति । बलिं बन्धयति । सीतां हारयति । राजानमागमयति । मृगरमणमाचष्टे, मृगान् रमयति । दृश्यत्वे इष्यते । अन्यत्र ग्रामे मृगरमणमाचष्टे । कालावधावङित् । तथैव किन्तु कालात्यन्तसंयोगे, अवधौ मर्यादायामाङ् इल्लुक् स्यात् । आरात्रि विवासमाचष्टे, रात्रिं विवासयति । आ दिवसमगमनमधीते, दिवसं गमयति । अथापि चित्रे । तथैव, किन्तु आपिप्रां पिधात्वर्थे । चित्रे आश्चर्ये गम्यमाने । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते, तथा माहिष्मत्यां सूर्यमुद्गमयति । तथैव नक्षत्रयोगे ज्ञि । पुष्ययोगं जानाति । पुष्येण चन्द्रं योजयति । मघाभिर्वा । अन्यार्थे किम् ? व्याख्यानमाचष्टे, व्याख्यानयति । न कृल्लुक् । व्याकरणं करोति । णिञ् च न । ओदनपाकं करोति । ओदनं पचयति । स्यादेव । कृः किम् ? व्याकरणस्य सूत्रं करोति, व्याकरणं सूत्रयति । प्राक्सम्बन्धः प्रत्ययान्तरे सति निवर्तते । व्याकरणस्य च करोतिना सामर्थ्यमस्तीति रन् लुग् न च । व्याकरणं व्याख्यानयति । दिशानयाऽन्येऽपि द्रष्टव्याः ॥१३५॥

भावादितोऽर्थस्येत्यादि । सुगमम् । अतङानिनः पूर्वे अदितः । चुरादित् । चुरादिगणोऽयम् । त् भूत् चुत् प्रत्याहारार्थः । आद्यन्तवृत्तद्वयवर्जं सप्तत्रिंशं शतम् [? वस्तुतस्तु, आद्यन्तवृत्तद्वयवर्जं चतुस्त्रिंशं शतं, तत्सहितं च षट्त्रिंशं शतम् ॥] १३६॥ धातुवृत्तिः समाप्ता ॥

**(७) सहने तिजोऽनिट् । [३।४।२।२।]** क्षान्तवृत्तेस्तिजः स्वार्थेऽतोऽनिट् सन् स्यात् । तितिक्षते । सहने किम् ? तेजनं तेजयति । नित् सन् यङित्यर्थः ॥

**(८) कितश्चिकित्सा । [३।४।२।३।]** चिकित्साशब्दः [व्याधि-]प्रतीकारे विपूर्वः संशये वर्तते । तदर्थयोः कितः सन् । चिकित्सति व्याधिम् । विचिकित्सत्यर्थम् । अन्यत्र केतनं सङ्केतः ॥

**(९) बधगुप्क्षिपेर्न । [३।४।२।४।]** आभ्यामनिट् सन् स्यात्, क्षिपा निन्दा चेदर्थः । इति विवक्षार्थः । ई इति च वेरिकार्यो इ स्यात् । बीभत्सते । जुगुप्सते । क्षिपा किम् ? बधकः । गोपनम् ॥

**(१०) दान्शानिमानः । [ ३।४।२।५। ]** सन् नानिट् । ई च । दीदांसति । शीशांसति । तङ् वा । [दीदांसते । शीशांसते ।] इति विवक्षार्थः । मानो जिज्ञासायाम् । मीमांसतेऽर्थान् । जिज्ञासत इत्यर्थः । अन्यत्र मानयति मानः । दानं शानमिति द्यतेः शतेश्च वा वृत्तेर्वा ॥

**(११) यङ्रुच्छुचो भृशाभीक्ष्ण्ययोः । [ ३।४।२।६। ]** भृशमत्यर्थम् । आभीक्ष्ण्यं पौनः-पुन्यम् । तदर्थादरुचि शुचेस्तत्सादृश्यादेकाचो हलादेर्भ्वादेर्यङ् स्यात् । भृशं पुनः पुनर्वा ज्वलति, जाज्वल्यते । पापच्यते । अनयोः किम् ? पच्यते । रुच्शुचः । भृशं रोचते, भृशं शोचते । एकाचः किम् ? भृशं जागर्ति । हलादेः किम् ? भृशमीक्षते । ङित् तत्कार्यार्थः ॥

**(१२) सूत्र्यसृमूत्र्यटोऽर्णोः । [ ३।४।२।७। ]** सूचेश्च तथानेकाजहलाद्यर्थम् । सूत्रं करोति णिञ्, सोसूत्र्यते । एवं मूत्रसुचेः । अस् । असास्यते । रु । अरार्यते । अट् । अटाट्यते । उर्णोनूयते ॥२॥

**सूचेर्गतौ स्यात् कुटिलत्व एव गर्ह्याल्लुपः सद्दशिचर्जभोदह् ।**
**जपुश्चतो णिञ् कमृतो णिङीयङ् वायगुपूधूप्पणिविच्छिपन्भ्यः ॥३।४।३॥ वृत्तम् ॥**

**(१३) सूचेः । [ ३।४।३।१। ]** उक्तम् ।

**(१४) गतौ स्यात् कुटिलत्व एव । [ ३।४।३।२। ]** गत्यर्थात् कौटिल्य एव, न भृशाभीक्ष्ण्ये । कुटिलं क्रामति, चङ्क्रम्यते । दन्द्रम्यते । कुटिलत्व एव किम् ? भृशं क्रामति । नियमार्थमिदम् ॥

**(१५) गर्ह्याल्लुपः सद्दशिचर्जभोदह्जपुः । [ ३।४।३।३। ]** गर्हितादेव लुपादेर्यङ् । गर्हितं लुम्पति, लोलुप्यते । यावज्जेगिल्यते । गर्ह्यादेव किम् ? पुनर्लुम्पति । गर्ह्यादेः लुपादि न साधनम् । जपति वृषलो मन्त्रम् ॥

**(१६) चुतो णिञ् । [ ३।४।३।४। ]** चुत् प्रत्याहारार्थः । चुरादेः स्वार्थे णिञ् स्यात् । चोरयति । लुण्टयति । णिदात्वाद्यर्थः । ञिदुभयपदार्थः । यच्चात्र ङिचां विभाषितानां पाठः । स चुरादेर्णिञि किम् ? कल्पं सूचयति । चुराद्यन्ते हेतोः क्रियार्थादित्याद्युदाहृतम् ॥

**(१७) कमृतो णिङीयङ्वा । [ ३।४।६।५। ]** कम् कान्तौ । ऋतु घृणास्पर्धयोः सूक्तः । आभ्यां क्रमेण णिङ् ईयङ् वा स्तः । कामयिता । कामिता । अचीकमत् । हेत्वणिञ् वा । अचीकमत । ऋतीयिता । अर्तिता ॥

**(१८) अयगूपुधूप्पणिविच्छिपन्भ्यः । [ ३।४।३।६। ]** स्वार्थेऽतो वा यस्यात् । रिद् यकादिप्रत्याहारार्थः । चर् । गोपायिता । गोप्ता । एवं पणिवत् । पणि स्तुत्यर्थः । किम् ? शतस्य पणिता ॥३॥

**शेते मिद्ये प्राग्वच्यद्वेद्वीर्लुक् चङ्लिट्याद्योंऽशोऽच् सन् ।**
**यङाद्याचो यिः सन्वेर्ष्यः छिस्तिश्रेष्टः सुब्दाश्वांसः ॥३।४।४॥**

**न न्दूर्बो वल्यर्वा ये स्सन्युधिज्ञप्यापोऽगीर्धिप्धीब्दम्भु-।**
**मुज्मोज्वानाप्यो दाधिम्राधेर्हिंसायां स्याल्लिट्यप्सेट्येत् ॥३।४।४।५॥ विद्युन्मालाद्वयम् ॥**

**(१९) शेते । [३।४।४।१।]** शितिविषयाच्छेतेणिङीयङा परः स्युः । नित्यं पुनर्विधानात् । त्रयाणामेव प्राप्तेः । कामयते ॥

**(२०) मिद् ये । [३।४।४।२।]** मिदः इ ए स्याच्छिति । मिद्यति । मेद्यतः । स किम् ? मिद्यते ॥

**(२१) प्राग्वच्यद्वेद्वीर्लुक् चङ् लिट्याद्योंऽशोऽच् । [३।४।४।३।]** अपुर्लुक् च हुन इत्येतदर्थं रित् । लुंकि चङि लिटि परेऽद्विरुक्तस्य त्वादेः प्रथमोऽवयवोऽजन्तो द्विर्भवति । प्राग्वचि । उत्वे कार्ये आजादौ च परेऽप्रागन्येषां कार्याणां पश्चात् । जुहोति । पिपर्ति । अपीपठत् । पपाच । इह यण अयवादेशा लोपोपान्तणिलोपादिभ्यः पाक् । चक्रुः । निनयिथ । लुलविथ । निनाय । लुलाव । पपुः । जज्ञुः । आटिटत् । मा इत्यादि । अच्येवेति नियमाद् योऽनव्युभये वा विधिः । इग्यणः । आत्वम् इत्वं रीत्वम् इर उ रु अरेडादिस्ततः पश्चात् । इजः । जग्ले । पेपीयते । चेक्रीयते । स्तेस्तीर्यते । निपोपूर्यते । विचयिथ । लुलुविथ इत्यादि । अद्वे किम् ? अतितिक्षत् । भ्वादेः किम् ? प्राचीकरत् । लुगादौ किम् ? कर्ता ॥

**(२२) सन्यङ् । [३।४।४।४।]** एतदन्तस्तथा । पिपक्षति । प्रागुक्ते । चञ्चूर्यते । प्रथमा सन्यङो द्वित्वार्थम् । प्रतीषिषति । अटाट्यते । अद्वे किम् ? लोलयिषते ॥

**(२३) आद्याचः । [३।४।४।५।]** परोंऽशोऽज् द्विः । ओजिहत् । ऊर्णुनाव । अटिटिषति । अशाश्यते । नाद्योंऽशोऽच् ॥

**(२४) यिः सन्वेर्ष्यः । [३।४।४।६।]** ईर्ष्यः यिः सन् वा द्विः । ईर्ष्यियिषति । ईर्ष्यिषिषति । वा क्रमे ।

**(२५) छिस्तिश्च । [३।४।४।७।]** आद्याचः परो द्विरुक्तः छितिर्वा स्यात् । उतिच्छिषति । उचिच्छिषति ॥

**(२६) इष्टः सुप् । [३।४।४।८।]** सुब्धातोर्य इष्टः स द्विः । पुपुत्रीयिषति । यियिषो वा सर्वे तु क्वचिद् द्वितीयतृतीययोः । अशिश्वीयिषति । यि वा । कण्ड्वादौ तृतीय एव । कण्डूयियिषति ॥

**(२७) दाश्वांसः । [३।४।४।९।]** जसुणार्थः । अत्र च पञ्चपात् स्यात् —

दाश्वाननूरानचराचरौ च साह्वाननाश्वांश्च चलाचलोऽपि ।
मीढ्वांश्च पाटूपटचिक्लिदौ च पतापतोऽथापि वदावदोऽपि ।
घनाघनश्च क्वसमेव वा स्युः ॥१॥

चक्लुः, ययुः, चक्नस उणाद्याः । दाशः क्वसौ, अद्वित्वे टौ, दाश्वान् । सहेर्दीर्घत्वं च ।

साह्वान् । मिहेर्ढत्वं च । मीढ्वान् । नञोऽश्नातेः । अनाश्वन् । अनाश्वांसौ । विचः । अनूचानः । क्लिदेः कद्वित्वम् । चिक्लिदम् । क्नसो, विचक्नसम् । चरिचलिपदिवदीनां पूर्वः स्यात् । हलोऽलुक् च । चराचरः चलाचलः । पतापतः । वदावदः । हन्तेर्घत्वं च । घनाघनः । पाटेर्णिलुक्, उक् च । पाटूपटः । एते वा निपात्यन्ते । अन्येऽपि कृतद्वित्वाऽत्र द्रष्टव्याः ॥४॥

**( २८ ) न न्द्र्वो वलि । [ ३।४।५।१। ]** र न द ब एते च वल्युपश्लेषे न द्विरुच्यन्ते । अर्चिचिषति । उन्दिदिषति । अड्डिडिषति । उब्जिजिषति । आद्याचः किम् ? दिद्रासति ॥

**( २९ ) अर्वा ये । [ ३।४।५।२। ]** अरुरेफवर्जाद्वः ये वा द्विरुच्यन्ते वलिनिषेधाद्यनित्यं प्राप्ते वा । अन्यम् । आड्यम् । आढ्यम् । तदाख्यत् । निन्यत् । न्यियत् । आदिच्चत् । आदिद्यत् । आदियत् । आव्यियत् । अरु किम् ? अरार्यते । आर्यमाख्यत् । आरिर्यत । वामनस्य वलीति प्रतिषेधाद् ये द्विरुच्यन्त एव । यथाऽऽरार्यते । जसादित्योऽप्याह-ये प्रतिषेधो वक्तव्यो नञः । दुर्गोऽपि - ननु ये ये द्विरुच्यन्त एव । चन्द्रस्य तु मतेन न द्वे हलीति प्रतिषेधाद् अयि इत्यत्रापीत्यस्य रेफेण सम्बन्धात् । यद् वा नैव द्विरुच्यन्ते । न च योगविभागोऽपि पार्थक्यस्य वैयर्थ्यस्य प्रसङ्गात् । उभयमतप्रामाण्यादिदमुक्तम् । य किम् ? उब्जिजिषति ॥

**( ३० ) स्सन्यृधिज्ञप्यापोऽगीर् । [ ३।४।५।३। ]** सादौ सनि परे ऋध् ज्ञपि आपाम् अक् इ ई यथास्थानं स्यान्न च द्विः । ईर्त्सति । नारतो यणनिशामनेषु । ज्ञपि । ज्ञीप्सति । ईप्सति । सादौ किम् ? अर्दिधीषति । जिज्ञपयिषति ॥

**( ३१ ) धिब्धीब्दम्भु । [ ३।४।५।४। ]** दम्भः स्सनि धिप् धीप् स्यान्न च द्विः । धिप्सति । [धीप्सति ।] सादौ किम् ? दिदम्भिषति ॥

**( ३२ ) मुज्मोज्वानाप्यः । [ ३।४।५।५। ]** अविद्यमानाप्यो मुच् मोच् वा स्यात् स्सनि, न च द्विः । मोक्षति, मुमुक्षति, मोक्षते, [मुमुक्षते,] वत्सः स्वयमेव । अनाप्यः किम् ? मुमुक्षति वत्सं ना ॥

**( ३३ ) दाधिम् । [ ३।४।५।६। ]** श्लोकोऽत्र—

दाञदाणौ चेति दोदेङौ धाञ्धेटौ मीञ्मीञौ शकः ।
माङ्मेङौ लभ्रभौ चेति पतृपदौ गणः स्मृतः ॥१॥

एषां सक इस् स्यात् स्सनि, न च द्विः । दित्सति । [दित्सते । दित्सति । दित्सते ।] धित्सति । [धित्सते ।] मित्सति । [मित्सते । मित्सति । मित्सते ।] शिक्षति । [शिक्षते ।] मित्सति [मित्सते ।] लिप्सते । आरिप्सते । पित्सति । प्रपित्सते । सादौ किम ? पिपतिषति ॥

**( ३४ ) राधेर्हिंसायां स्यात् । [ ३।४।५।७। ]** तथा प्रतिरित्सति । प्रतिरित्सा । हिंसायां किम् ? आरिरात्सति मित्रम् ॥

**( ३५ ) लिट्यप्सेट्येत् । [ ३।४।५।८। ]** राधो हिंसार्थाल्लिट्यपिति सेटि चाग्योत् स्यान्न च द्विः । अपरेधतुः । अपरेधिव । अपरधिथ । लिटि किम् ? अपराध्यतः । अप् किम् ? अपरराध ।

हिंसायां किम् ? आरराधुः । आरराधिम । सेट्यिदर्थम् ॥५॥

**दार्हौ त्रपां देङ्दिगिर्नाम्नि मन्पच्यचां नश्यङः स्यादरेङीयु- ।**
**वादेर्युराद्यत् तु नुक्ताश्वयुक्तेऽजदिद्भूव्यथो ह्युस्वपेण्र्यन्तः ।**
**तण प्राग्युजोऽनादि हल्लुक् सखयृशर् कुहश्चुर्यङोऽकोस्तथैङ् नीक् ।**
**कसामुग्यषां चर्फलोऽदुत्तयङ् लुक्चसर्तोऽपि रीग्रुगृकौ चेति लुक्येद् ।**
**विजां पृभृमाङ्हाङ इत् त्रक्षु दीर्घोऽगुरुणौ त्वरामत् सनश्चेदयण् पुज्य ओः ।**
**वा द्रुश्रुस्त्रुच्युङः प्रुप्लुङो हेर्हनोऽचङ्यतः**
**कुज्यये वा चि णौ चङ्युपान्ते त्रगुध्रेःस्थइत्पीप्यः ॥३।४।६॥ द्वादशतम् ॥**

**( ३६ ) दार्हौ । [ ३।४।६।१। ]** हौ परे द्वित्वभाजोर्दारूपयोर्डुदाञ्डुधाञोरगेत् स्यान्न च द्विः । देहि । धेहि ॥

**( ३७ ) त्रपाम् । [ ३।४।६।२। ]** लिट्यप्सेट्येन्न च द्विः । वृत्तं त्विह-

त्रप्फलभजत्रोऽशसारेड्ददोऽवा देशाद्यदन्तश्च हलोर्न वा जृ ।
भ्रमुत्रसोऽथो फणतो यदम्भः श्रन्थग्रन्थिनो नो लुगसि टि वृत्तौ ॥१॥

त्रपफलभजतृणामत् । शसा अरेङ् । ददाचादि । आदेशादिवर्जितानां चान्येषां मत् । हलो रो म्नि । दशाद्व्योरसहाययोरन्ते मध्ये वर्तमान ए स्यात् । त्रेपे । त्रेपाते । फेलुः । फेलिथ । भेजुः । [भेजिथ ।] तेरुः । [तेरिथ ।] अशसाद्यत् । आचेमुः । [आचेमिथ ।] जेमुः । [जेमिथ ।] पेचुः । लेभे । सेहे । अशसादीनां किम् ? विशशसुः । [विशशसिथ ।] अरेङ् । विशशससुः । युयविथ । एवं ददृदे । ववमुः । प्राग्युज इत्यादेशाद् इः । चकणुः चखदुः । बभणुः । जहसुः । अत् किम् ? दिदिव । ररासे । द्वयोर्हलोः किम् ? तितक्षुः । न वा ज्ञादेः । जेरुः । [जेरिथ ।] जजरुः । [जजरिथ ।] एवे । फणतश्च । प्रत्याहारस्य । तद्यथा-

फणो शतौ वृत्त्वतङानि राजृः भ्राजृडुभ्वा भ्रासृडु भ्लासृ दीप्तौ ।
तङानिनः स्वस्यमुतो ध्वनोत्रेऽन्यस्य ॥२॥

फेणुः । [फेणतुः ।] पफणुः । [पफणतुः ।] एवं [स्येमुः । स्येमिथ । स्वेनतुः । स्वेनुः । रेजतुः । रेजुः । भ्रेशे । भ्रेशाते । बभ्राशे । बभ्राशाते । भ्लेशे । भ्लेशाते । भ्रेजे । भ्रेजाते । जेरतुः । जेरुः । त्रेसतुः । त्रेसुः । भ्रेमतुः । भ्रेमुः । वेमतुः । वेमुः । फणतः किम् ? दध्वनुः । दम्भादेरपि । असेटि च लिटि आदत् स्यात् । नु लुक् च । न वा न वर्तते । देमुः । [देमतुः । देमिथ ।] अपित् प । असेटि किम् ? ददम्भ । [ददम्भिथ । ददम्भतुः ।]

**( ३८ ) देङ् दिगि । [ ३।४।६।३। ]** स्याल्लिटि, न च द्विः । आदिग्ये । आदिग्यिरे ॥

**( ३९ ) नाम्नि मन्पच्मचाम् । [ ३।४।६।४। ]** आदित् स्यादलिट्यपि । मेना । मेनका । पेचकः । मेचकः ॥

**( ४० ) नश्यङः । [ ३।४।६।५। ]** तथा नशेरङन्तस्य । अनेशम् ॥

**(४१) स्यादरेङीयुवादेर्युः । [३।४।६।६।]** द्विर्वचने कृते आदेः पूर्वस्यावयवस्य युः इदुत् इयुव स्यादरेङि अकारे ऋकारे एङि च परे । ऋग्रहणालिडत्र झष् सम्बध्यते । इयर्ति । इयर्मि । ईय्रति । अरियर्ति । [अरियरीति ।] अरियृता । इयेष । उवोष । अरेङि किम् ? ईषुः । ऊषुः । इयाय । उवाय । अदेरित्यश्वेर्वेति यावत् ॥

**(४२) आद्यत् तु । [३।४।६।७।]** लिटि द्वित्वे कृते आ आदि अत् । आदिभूतो अत् तित्त्वात् स्वाभाविक आत् स्यात् । तु विशेषणे । अस्येवोत्तरो नुक् च । आट । आटतुः । आदि किम् ? पपाच । तित् किम् ? अञ् छ । लिटि किम् ? अटिटिषति ॥

**(४३) नुक्ताश्वृयुक्ते । [३।४।६।८।]** अशू व्याप्तावस्य त्वादेः सकारे युक्ते च हलि परे चाकारोऽदुक्तस्यातः नुमागमः स्यात् । व्यानशे । व्यानशाते । अनृचे । आनर्च्छ । आनर्च्छतुः । आनञ्ज । आनञ्जतुः । आनक्ष । [आनक्षतुः ।] जदित् । अशू किम् ? नाश्नातेः । आशः । अदात एव । आञ्छ ॥

**(४४) अजादिद् भूव्यथः । [३।४।६।९।]** भूव्यथे लिटि द्वित्वे कृते पूर्वस्याचः क्रमेण अत इत् स्यात् । बभूव । बभूवतुः । विव्यथे । लिटि किम् ? बोभूयते । वाव्यथ्यते ॥

**(४५) द्युस्वपेर्ण्यन्तः । [३।४।६।१०।]** द्युतस्वाप्योर्द्वित्वे कृते पूर्वस्याच युः क्रमेण इ उ स्यात् । व्युदित् स्यात् । विदिद्युते । दिद्योतिषते । देद्युत्यते । देद्युतीति । सुष्वापयिषति । स्वपि किम् ? स्वापं करोति । णिञ् सन् । सिष्वापयिषति । एवं, सिष्वापकीयिषति । पृथगलिडर्थम् ॥

**(४६) तण् । [३।४।६।११।]** द्वित्वे पूर्वस्यात तण् स्यात् ह्रस्वः । शशास । निनाय । लुलाव । ससार । चचार । सिशेक । तुत्रोक ॥

**(४७) प्राग्युजः । [३।४।६।१२।]** द्वित्वे पूर्वस्य । युजो वर्णाः द्वितीयचतुर्थाः स्वस्थानात् प्राक् प्रथमतृतीयाः स्युः । चिच्छेद । तेष्ठीव्यते । जहास । जञ्याम । डुढौके । दधाति । बभार ॥

**(४८) अनादिहल्लुक् । [३।४।६।१३।]** द्वित्वे पूर्वस्य । जह्ये ॥

**(४९) सखयृशर् । [३।४।६।१४।]** सह खया वर्तते यः, शर्, स आदिरपि लुक् । चुश्च्योत । तिष्ठासति । पस्पन्द । चस्खाद । शर् किम् ? आप्तमाख्यत् । आप्तप्त ॥

**(५०) कुहश्चुः । [३।४।६।१५।]** स्याद् द्वित्वे, पूर्वस्य चकारः । चुटुवे । जहार ॥

**(५१) यङोऽकोः । [३।४।६।१६।]** यङन्तस्याकवते कुहश्चुः स्यात् । चेक्रीयते । जोहूयते । अकोः किम् ? कोकूयते । खरः एत् किम् ? कौतेः कुवतेश्च प्रतिषेधार्थम् । चोकूयते । चोकवीति । अकोऽर्थं वचनम् ॥

**(५२) तथैङ् । [३।४।६।१७।]** द्वित्वे पूर्वस्य आ ऐङ् स्तः । पापच्यते । देद्युत्यते । सोषुष्यते । पापचीति ॥

**(५३) नीक् कसामुग्यषाम् । [३।४।६।१८।]** यङ्न्तकसादीनां द्वित्वे पूर्वस्य क्रमेण

नीग्मुगागमौ स्तः, नैङ् । अत्र श्लोकः—

कसिभ्रंसिपदिवञ्चोः स्कन्द्ध्वंसस्रंसपतर्गणः ।
दशाञमो जभो भञ्जेर्जपदर्शेदभेर्गणः ॥१॥

चनीकस्यते । बनीभ्रस्यते । पनीपत्यते ॥ एवं [चनीकसीति । बनीभ्रंसीति । पनीपतीति ।] पम्पश्यते । अञ् अमः । अकारात् परो योऽजम्, तदन्तस्य । जञ्जभ्यते । दन्दश्यते । अञित् किम् ? बाभाम्यते । एवं [मामव्यते । तेतीम्यते । सेसिम्यते । जोघुण्यते ।] न्लुग्निपातनात् । दन्दशीति । [जञ्जभीति] ॥

**(५४) चर्फलः । [३।४।६।१९।]** तथा मुक् । चञ्चूर्यते । [चञ्चुरीति । पम्फुल्यते । पम्फुलीति] ॥

**(५५) अदुत्तयङ्लुक् च । [३।४।६।२०।]** चर्फलोऽदुत् स्यात् तकारे यङि यङ्लुकि च । चूर्तिः [चरणम् ।] प्रफुल्लो व्रीहिः । चच्चूर्यते । [पम्फुल्यते ।] चञ्चूरिता । अत् किम् ? फालयतेः क्विप् । आचारे क्विप् । पम्फाल्यते । [पम्फालीति ।] उत् तिङनेङर्थः । दीर्घः स्यात् ॥

**(५६) सर्तोऽपि रीक् । [३।४।६।२१।]** यङन्तस्य ऋता सह वर्तमानस्य द्वित्वे पूर्वस्य रीगागमः स्यात् । चरीकृष्यते । [चरीकृषीति ।] वरीवृश्च्यते । [वरीवृचीति ।] वरीवृष्टिः ॥

**(५७) रुगृकौ चेति लुकि । [३।४।६।२२।]** सर्तो यङ्लुकि द्वित्वे पूर्वस्य रुक् रिक् रीक् चागमाः स्युः । चर्कर्ति । चरिकर्ति । चरीकर्ति । मर्मृजः । मरिमृजः । मरीमृजः । चल्कल्ति । चलिकल्ति । चलीक्लृपीति । तानुवृत्तिः किम् ? चाकर्ति । चाकीर्तः । चाकिरति ॥

**(५८) एद् विजाम् । [३।४।६।२३।]** एद्वेङ् विधानात् शप्लुकि । विजिरादीनां शपो लुकि द्वित्वे पूर्वस्य ए स्यात् । वेवेक्ति । [वेवेष्टि ।] नेनेक्ति । नेनिजानि । अवेविजम् ॥

**(५९) पृभृमाङ्हाङइत् । [३।४।६।२४।]** स्यात् तथा । [पृ] पिपर्ति । पिपृतः । ऋ । इयर्ति । बिभर्ति । मिमीते । जिहीते ॥

**(६०) त्रक्षु दीर्घोऽगुरुर्णौ । [३।४।६।२५।]** णौ चङ्युपान्तेऽनग्लोपि शाश्वदितम् । अच् तित् रित् अक् त्रगिति वक्ष्यति । तत्र परे । सुच्छन्दोर्थम् । द्वित्वे पूर्वस्य अरुर्णो दीर्घः स्यात् । अचीकरत् । अलीलवत् । अपीपटत् । एज्ञेयः । त्रकि किम् ? अत्यरराजत् । अशशासत् । अबभासत् । रित् किम् ? अचकथत् । अददृषत् । अचकलत् । अरत्वं च । अचकमत । त्वरादौ । अदः कमिङ् । पायत । हेतुणिञि तु, अचीकमत् । अचीकमत । अजजागरत् । जयादित्योऽप्याह-नाजीजागरत् । अगुरुर्णौ किम् ? अचिक्षत् । आर्णवनवत् ॥

**(६१) त्वरामत् । [३।४।६।२६।]** तथा स्यात्र भार्कदीर्घो वा । अत्रासौ-

त्वरस्तृसौ प्रथो दॄ च स्मृ स्पृशो च मृद भ्रषा ।
वेष्टिचेष्टीर्गणत्वाद् वा गणस्ये गणः स्मृतः ॥१॥

अतत्वरत् । अतस्तरत् । एवं [अपप्रथत् । अददरत् । असस्मरत् । अपस्पृशत् । अममृदत् ।] वेष्ट्यादेः वाऽन्वयः । वेष्टत् । चेष्टत् । ई च । अजीगणत् । अजगणत् । त्वरां किम् ? अतित्रपत् ॥

**( ६२ ) सनश्चेद । [ ३।४।६।२७।]** सन्नन्तस्य यत्रि च परे द्वित्वे पूर्वस्य इ स्याद् अवर्णः । पिपक्षति । तिष्ठासति । अचिक्षणत् । सनश्च किम् ? पपाठ । पापठिषते । रित् किम् ? अततक्षत् । अजजागरत् । अ किम् ? लुलूषति ॥

**( ६३ ) यण् पुज्य ओः । [ ३।४।६।२८।]** सन्नन्तस्य यत्रि च पूर्वस्य उवर्ण इत् स्याद्, अण् पवर्ग जि ए अवणपरे परतः । यियावयिषति । अयीयवत् । एवं रु [रिरावयिषति । अरीरवत् ।] लू [लिलावयिषति । अलीलवत् ।] पू [पिपावयिषति । अपीपवत् ।] भू [बिभावयिषति । अबीभवत् ।] जुः सौत्रः । [जिजावयिषति । अजीजवत् ] अत एव णौ कृतं स्थानिवत् । जुहावयिषति । [अजीहवत् ।] ओः किम् ? पापचिषते । यणादौ किम् ? तृतावयिषति । ए किम् ? बुभूषति ॥

**( ६४ ) वा द्रुश्रुस्रुच्युङः प्रुप्लुङः । [ ३।४।६।२९।]** तथैषां वा । श्रु लघुः । दुद्रावयिषति । अदिद्रवत् । अदुद्रवत् । एवं शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । चिच्यावयिषति । चुच्यावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । ए किम् ?] शुश्रूषति ।

**( ६५ ) हेर्हनोऽचङ्यतः कुः । [ ३।४।६।३०।]** हिहनोरचङ्निमित्ते द्वित्वेऽतः पूर्वांशात् परः कुः स्यात् । जिघाय । जघ्नुतः । [जिघीषति । जेघीयते ।] अचङि किम् ? प्रोजीहयत् । स्रुद्रहनः किम ? जिहननीयिषति ॥

**( ६६ ) ज्यये । [ ३।४।६।३१।]** अयेऽचङि चार्थात् सन्लिटोः द्वित्वे अतः परे जिः कुः । जिगीषति । जिगाय । औपदेशिकः किम् ? जिज्यः ॥

**( ६७ ) वा चि । [ ३।४।६।३२।]** तथा । चिचीषति । चिकीषति । चिचाय । [चिकाय ।] अयेऽचङि किम् ? चेचीयते । चेकीयते ॥

**( ६८ ) णौ चङ्युपान्ते त्रगृ । [ ३।४।६।३३।]** चङ्युरे णौ परतोऽन्तःसमीपस्थ ऋवर्णः त्रक् स्याद् वा । दिद् ह्रस्वार्थः । रित्रक्ष्विति दीर्घार्थः । कृत् । अचीकृतत् । अचिकीर्तत् । अवीवृतत् । अववर्तत् । अमीमृजत् । अममार्जत् । इररारा न स्युः । णावुत्तरार्थः । अचङि किम् ? कीर्तयति । उपान्ते किम् ? अचीकरत् ॥

**( ६९ ) घ्रेः स्थ इत् । [ ३।४।६।३४।]** जिघ्रतेर्णौ चङ्युपान्तेऽच् इञोऽग्वा स्यात् । स्थो नित्यं, पार्थक्यात् । अजिघ्रिपत् । अजिघ्रपत् । अतिष्ठिपत् । [अतिष्ठपत् ।] किङन्तो यङ्लुग्निवृत्त्यर्थः । अजाघ्रपत् । अतास्थपत् ॥

**( ७० ) पीप्यः । [ ३।४।६।३५।]** पिबतेर्णौ चङि सद्विवचनस्य पीप्य निपात्यते ।

अपीप्यत् । यङ्लुकि, अपपाद्यत् ॥६॥

**अनगिद्दिदितेऽशासाऽज्भाषां न तग्मित इणणुमोः**
**स्सनि तन इको दीर्घ इड्ग्महन् गमेऽविदि णावृशाम् ।**
**पुयुनुलुकोऽतो धूप्योः पाते लियो ल उ वा घृते**
**रुहगतिशदोः पस्तः स्फायो व जुक् च उ धूनने ॥३।४।७॥ हरिणी ॥**

**( ७१ ) अनगिद्दिदितेऽशासाऽच् । [ ३।४।७।१।]** अग्लोपि ऋदित् शास्वर्जभ्वादेरच् णौ चङ्युपान्तस्थः तक स्यात् । अपीपठत् । अचीकरत् । अनीनयत् । अलीलवत् । गो नाऽऽचारयत् । अजूगुनत् । अभगुनत् । वादेर्णिञ् । अवीवदद् वीणां त्रा । णि जातिग्रहणात् । अनग्लोप्यादेः किम् ? मालामाख्यत्, अममालत् । अलुलोमत् । अययाचत् । अडुढौकत् । मा भवानोणिणत् । ओणेर्ऋदित्करणात् । परत्वाच्च द्विर्वचनात् प्राग् ह्रस्वः । मा भवानटिटत् । अशशासत् । अग्लुच्यपि । अशशासत् । चङि किम् ? कारयति । ऊपान्ते किम् ? अचकाङ्क्षत् । अच् किम् ? णो चङि मितोऽप्यच् त्रक् । तेन, अजीगमत् । तग्मितस्त्वरितत्वात् । घटंघटं णमि न त्रक्ष्विति दीर्घः ॥

**( ७२ ) भाषाम् । [ ३।४।७।२।]** तथैव । चतुर्गं त्विह-

भाषेः भ्राजेः भासेः दीपेः जीवेः मीलेः पीड्काणीनाम् ।

अबीभषत् । अबिभज्रत् । एवं [अबीभसत् । अदीदीपत् । अजीजीवत् । अमीमीलत् । अपीपीडत् ।] काणीनां, कणे भणेत्यादेः । अचीकणत् । अबीभणत् । अजीहिवत् । अलूलुवत् ॥

**( ७३ ) न । [ ३।४।७।३।]** तथैषां त्रसार्थाद् वा । अबभाषत् । [अबभ्राजत् । अबभासत् । अदिदीपत् । अजिजीवत् । अपिपीडत् ।] काणमकार्षीद्, अचकाणद् इत्येव । सिद्धेः सुब्वाऽतो रुग्लोपिता नास्ति विधानो तितिज्ज्ञापनार्थं काणेर्वाणे राणे श्राणेरेषां काणीनामित्यन्ये ॥

**( ७४ ) तग्मितः । [ ३।४।७।४।]** तग अचङर्थम् । मितामुपान्ते अच् तग् ह्रस्वः स्याण्णौ परे घटादयो मिते । घटयति यावत् फण गतौ । फणयति । अन्यत्र फाणयति । मारणतोषणनिशामनेषु ज्ञामिच्च । यमो परिवेषणे । चहः परिकल्पने । नान्ये मितो हेतौ णिञि न मित्संज्ञकाः । आरामयति । तग् स्नातेः । स्नपयतीत्याद्यर्थम् ॥

**( ७५ ) इणणामोः । [ ३।४।७।५।]** इणुम्परे णौ परतो मितोऽन् तक्परो दीर्घो वा स्यात् । अघटि । अघाटि । घटघटम् । घाटंघाटम् । पाठादेव । अक्रन्दि । [अक्रान्दि] ॥

**( ७६ ) स्सनि तनः । [ ३।४।७।६।]** तौ । तितंसति । तितांसति । सादौ किम् ? तितनिषति ॥

**( ७७ ) इको दीर्घः । [ ३।४।७।७।]** स्सनि । चिचीषति । लुलूषति । चिकीर्षति ॥

**( ७८ ) इड् ग्महन् । [ ३।४।७।८।]** इडादेशस्य गमः हन्तेश्चादीर्घः स्सनि । इड् गम अत एव स्सनि । अधिजिगांसते । अधिजिगांसति । अधिजिगांसा । इड् किम् ? सञ्जिगंसते वत्सो

मात्रा ॥

**(७९) गमेऽविदि ।** [३।४।७।९।] गमः स्यात् । इण् इक् च सनि परे सादौ न सम्बध्यते, अविदि अबोधनेऽर्थे । जिगमिषति । सञ्जिगंसते । अधिजिगंसते मातरम् ॥

**(८०) णौ ।** [३।४।७।१०।] तथा । गमयति । विदि । अर्थान् प्रतीषिषति । प्रत्याययति ॥

**(८१) ऋशां पुयुः ।** [३।४।७।११।] ऋआदेः शादेश्च पुक्युक्स्यात् किता सम्बद्धाण्णौ परे । तद्द्वयोस्तु । ह्रीक्नूयीक्ष्मायीव्लेः पुक् । शाच्छासाह्वाव्यावेपां युक् । ऋ अर्ति ह्री क्नूयी री रीट् वा । अर्पयति दापयति । ह्रेपयति क्नोपयति । रेपयति । क्ष्मापयति । व्लेपयति । पुकि प्लुक्, एङ् च । शाययति इत्यादि [अवच्छाययति । अवसाययति । ह्वाययति । संव्याययति ।] वेग्रहणाद् वातेन वाययति केशान् । कृतात्वानां ग्रहणं लाक्षणिकस्यापि युगर्थम् । क्नापयति । पूर्वान्तकरणम् । अदीदपत् । असीसदत् । चङि ह्रस्वार्थम् ॥

**(८२) नु लुकोऽतो धूप्र्योः पातेः ।** [३।४।७।१२।] पदापेक्षं यथासंख्यं धूप्र्योः नुक्, पातेर्लुक् स्यात् । णौ पुयुनुलु एते कितस्तथोदाहृताः । विधूनयति । प्रीणयति । पालयति । पातेः किम् ? पाययति पयः केशान् वा ॥

**(८३) लियो ल उ वा घृते ।** [३।४।७।१३।] घृते तद्विषये क्रियार्थे लियो लातेश्च नुक्लुकौ स्तावाणौ परे । उ निपातः । घृतं विलीनयति । [घृतं] विलाययति । कृता त्वस्य लुगेव । घृतं विलापयति । घृते किम् ? जतु विलापयति । एवं, घृतं विलालयति । विलापयति । घृते किम् ? जटाभिरालापयते ॥

**(८४) रुहगतिशदोः पस्तः ।** [३।४।७।१४।] णौ रुहोऽन्तः पो वा स्यात् । आगत्यर्थसदः तौ नित्यं, पस्त इति पार्थक्यात् । व्रीहीनारोपयति । आरोहयति । रूपोऽन्यार्थः । फलानि शातयति । गतौ । गाः शादयति [गमयति] ॥

**(८५) स्फायो वः ।** [३।४।७।१५।] अन्तो णौ स्यात् । स्फावयति ॥

**(८६) जुक् च उ धूनने ।** [३।४।७।१६।] वाते च जुक् स्यात् णौ विधूननेऽर्थे । उ निपातः । पक्षकेणोपवाजयति । धूनने किम् ? वै शोषणे । आवापयति केशान् । वजोऽन्यार्थः ॥७॥

**स्फुर्चेर्वाऽजात् क्रीजीङा स्यादूद्दोषो वा चित्ते गो हः ।**
**ऋद्रोरिर्चोरोष्ठ्यात् कः से षो ढो ल्यश्याच्वेद्गो हलभ्यः ॥३।४।८॥ विद्युन्माला ॥**

**(८७) स्फुर्चेर्वाऽजात् ।** [३।४।८।१।] स्फुरि चिञोऽच् आत् स्याद् वा णौ । विस्फारयति । विस्फोरयति । चापयति । चाययति । पोऽन्यार्थः ॥

**(८८) क्रीजीङा स्यात् ।** [३।४।८।२।] नित्यम् । क्रापयति । जापयति । अध्यापयति ॥

**(८९) ऊद् दोषः । [३।४।८।३।]** अच् णौ । दूषयति । दूषयिता ॥

**(९०) वा चित्ते । [३।४।८।४।]** अर्थे तथा । चित्तं दूषयति । दोषयति वा । एवं मनो, बुद्धिः ॥

**(९१) गो हः । [३।४।८।५।]** गुहः कृतोत्वस्य हः । हान्तस्यार्थाद् अचि उनक् स्यान्नित्यम् । गूहयति । गूहकः । साधु गूहि । गूहिता । गोह् किम् ? जुगुहुः । हः किम् ? गोढा ॥

**(९२) ॠद्रोरिर्च । [३।४।८।६।]** ॠत ॠकारान्तस्य च आदेरच इर् स्यात् प्रत्यये परे । कीर्तयति । कीर्तिः । री । चेकीर्यते । जेगिल्यते । किरति । गिरति । कीर्णम् । चीकीर्षति । जिगीर्षा । कृतः । कृदुपदेशो, अचीकृतद् इति ॠत्वार्थम् ॥

**(९३) उरोष्ठ्यात् । [३।४।८।७।]** पर ॠ तथा । पोपूर्यते । पोपूर्तो ना पूः पुरौ । वुवुर्षति ॥

**(९४) कः से षो ढः । [३।४।८।८।]** षो ढश्च कः स्यात् सादौ परे । पिपक्षति । पेक्ष्यति । पिप्रक्षति । प्रक्ष्यति । ढः । विवक्षति । विवेक्ष्यति । से किम् ? पिष्ट । मीढ ॥

**(९५) ल्यश्याच्चेत् । [३।४।८।९।]** भ्वादेरित इलुक् स्यात् ल्यशि लिटि लिङि असादौ प्रत्यये परे । चिकीर्ष्यात् । चिकीर्षकः । चिकीर्ष्यते । चिकीर्षताम् । लोलूयिषीष्ट । भ्वादेः किम् ? वृक्षत्वम् । अत् किम् ? पाता । ल्यशि किम् ? चेकीर्षेत् । लोलूयेते । इत् शदीत्यर्थम् । ल्यशीत्या जागुः ॥

**(९६) यो हल्भ्यः । [३।४।८।१०।]** तथेत् । बिभेदिषीष्ट । मोमूत्रिता । हलः किम् ? लोलूयिता । हल्यो विहितः किमित्यन्ये । मोमूत्र्यता । भ्यस् किम् ? इष्यता । धातुहल्भ्यः सर्वेभ्यः परो यः प्रत्यय इत्यर्थः । ल्यशि किम् ? वेविद्यते ॥८॥

**क्यो वा दरिद्रः सिचि वाऽस्वकाने वा भू यि णिः क्तेटि अयान्त इत्लौ ।**
**वाऽऽपो लघोर्ल्ये वचि कर्त्रसिर्भू भ्रस्जोऽपि भर्ज् चक्षि तु शाञ् श्यखो वा ॥३।४।९॥ वृत्तम् ॥**

**(९७) क्यो वा । [३।४।९।१।]** क्यच् क्यङ् तथा वेत् । समिध्यिता । समिधिता । [दृषद्यिता । दृषदिता ।] समिध्यिषीष्ट । [समिधिषीष्ट । दृषद्यिषीष्ट । दृषदिषीष्ट ।] हलः किम् ? पुत्रीयिता । ल्यशि किम् ? समिध्यति ॥

**(९८) दरिद्रः सिचि वा । [३।४।९।२।]** दरिद्रातेरन्तः सिचि इद् वा स्यात् । अदरिद्रीत् । अदरिद्रासीत् । अदरिद्रिष्टम् ॥

**(९९) अस्वकाने । [३।४।९।३।]** सवोऽकनवर्जितो ल्यशि नित्यम् । दरिद्र्यात् । [दरिद्र्यते । दरिद्रयति ।] दिदरिद्रिषति । ङ्यण् । दरिद्रः । अस्वकाने किम् ? दिदरिद्रासति । दरिद्रावान् । दरिद्रायकः । दरिद्राणम् । ल्यशि किम् ? दरिद्रति । अतो निषेधात् लिट् ॥

**(१००) वा भू यि । [३।४।९।४।]** बह्वादेशो भूयस्ततः पर इ इद वा स्यात् ल्यशि । बहूनाचष्टे । णिञ् । तत आशीर्लिञ् । भूय्यति । भूयीयात् । भूयिता । भूययिता । भूयनम् । भूययनम् । भूय्यते । भूयीयते । ल्यशि किम् ? भूययति । परे किम् ? भूयिष्ठः । भूष्णि वा पाठः ॥

**(१०१) णिः । [३।४।९।५।]** इन्नित्यम् । अततक्षत् । आटिटत् । काम्यते । ल्यशि किम् ? कारयति ॥

**(१०२) क्तेटि । [३।४।९।६।]** क्तक्तवतोरेवे यणिरित् स्यात् । कारितः । हारितवान् । क्त किम् ? कारयिता । हारयितुम् ॥

**(१०३) अयान्त इत्नौ । [३।४।९।७।]** णिरय् स्याद् आ अन्ते इत्नौ च परे । कारयाञ्चकार । स्पृहयालुः । स्पृहयाय्यः । मण्डयन्तः । स्तनयित्नुः । [गदयित्नुः ।] एषु किम् ? कारणम् ॥

**(१०४) वाऽऽपो लघोर्ल्ये । [३।४।९।८।]** क्तादेशे ल्ये परे णिरय् स्यादापः परे । वा लघोर्नित्यं, भेदात् । प्रापय्य [गतः] प्राप्य गतः । आपो विहितः किम् ? [इङादेशस्य लाक्षणिकत्वान्न भवति । अध्याप्य गतः ।] लघोः किम् ? प्रपात्य गतः ॥

**(१०५) वचि कर्त्रसिर्भूः । [३।४।९।९।]** कर्तृवचिः असिः भूः स्यात् ल्यशि । वचि भूवि । उवाच । उच्यात् । वावच्यति । वावाच्यते । वक्ता बभूव । भविता । ल्यशि किम् ? ब्रूते । ब्रूयात् । अस्ति सत् स्यात् ॥

**(१०६) भ्रस्जोऽपि भर्ज् । [३।४।९।१०।]** ल्यशि भ्रस्जो भर्ज् स्यात् । भ्रस्जोऽपि स्यात् । बभर्ज । बभ्रर्ज्जे । भर्क्षीष्ट । भ्रक्षीष्ट । बिभर्क्षति । [बिभ्रक्षति ।] अभार्क्षीत् । [अभ्राक्षीत् ।] इह परत्वाद् यणिक । भृज्यात् । भृष्टः । बरीभृज्यते । ल्यशि किम् ? भृज्जति ॥

**(१०७) चक्षि तु ख्शाञ् । [३।४।९।११।]** स्याल्ल्यश्विषये । आख्शायात् । क्ष्याख्शासीष्ट । अचिख्शासते । आख्शायते । आख्शाता । ञिदुभयपदार्थः ॥

**(१०८) श्यखो वा । [३।४।९।१२।]** उत्क्रोशे शात् ख । खकारात् परः सयो वा स्यात् । शरि चः स्ख इति कः खो वा स्यात् । आख्यायात् । आख्शायात् । आख्यासीष्ट । इत्यादि । पुंख्यानम् । [आख्यानम् ।] पर्याख्यानम् । [प्रत्याख्यानम् ।] नमः ख्यात्रेऽस्योऽसदिति यस्याऽसत्त्वात् तदाश्रयं कार्यं न स्यात् ॥९॥

**वर्जेऽस्यो नो लिट्यृ दृशृप्रां वय् वे निद्युग्नेह्रीडाम् ।**
**वुक् चाचिभ्वो लुङ्यद्घस्लृच् साब्येऽघाब्क्योऽज्वी वल्यौ त्स्सीट् ॥३।४।१०॥ विद्युन्माला ॥**

**(१०९) वर्जेऽस्यो नः । [३।४।१०।१।]** वर्जनेऽर्थेऽसि यौ च परे आदेशो नो स्यात् । परिचक्षाः । निचक्षाः । विचक्षणः । प्रत्याख्येयः । व्याख्यानम् इति व्याख्याते ॥

**(११०) लिटि । [३।४।१०।२।]** वा ख्श वर्तते । ख्शाञ् वा स्यात् । आचख्शौ । आचख्यौ । आचचक्षे ॥

**(१११) ऋदृस्पृप्राम्** । [ ३।४।१०।३। ] एषामन्तो लिटि रित् स्याद् वा । ददार । [दद्रतुः । दद्रुः ।] ददरुः । दद्द्वान् । ददीर्वान् । पुपूर्वान् । क्वंसर्थं वचनम् ॥

**(११२) वय् वे** । [ ३।४।१०।४। ] वेञ् वा वय् स्याल्लिटि । उवाय । उवयिथ । ऊयुः । ऊयिवान् । ववौ । वविथ । ववुः । ऊवुः । वविवान् । ऊविवान् ॥

**(११३) निद्युग्नेद्दीङाम्** । [ ३।४।१०।५। ] इन्ध् दीङ् इङ् एषां यथासंख्यं न्लुग् युगागमगादेशाः स्युः नित्यं लिटि । समीधे । समीधानः । अत एवेन्धेर्लिट् । उपदिदीये । उपदिदीयानः । अधिजगे । [अधिजगानः ।] इन्धेर्नित्करणं लिट्यन्यस्यालुगर्थम् । दध्वंसे ॥

**(११४) वुक् चाचि भ्वः** । [ ३।४।१०।८। ] भुवो वुक् स्याल्लिट्यचि । बभूव ॥

**(११५) लुङि** । [ ३।४।१०।७। ] तथा । अभूवम् । अचि किम् ? अभूवन् । अभूत् ॥

**(११६) अद् घस्लृ** । [ ३।४।१०।८। ] स्याल्लुङि । अघसत् । जघास । जक्षुः । आद । आदुः । जघसटोर्लिटि ॥

**(११७) अच् साब्घे** । [ ३।४।१०।९। ] तथा अच् सन् अब् घणि । प्रघसः । जिघत्सति । प्रघसः । घासः । तृदडर्थः । एष्वद्विवृत्त्यर्थमिदम् ॥

**(११८) अघाब्क्योऽज्वी** । [ ३।४।१०।१०। ] अजि वी स्याद् घ-अप्-क्यवर्जिते ल्यशि विषयस्थे । प्रवेयम् । अघाब्क्ये किम् ? समाजः । उदाजः । समज्या ॥

**(११९) वल्यौ** । [ ३।४।१०।११। ] वलादौ यौ ल्यशि विषयस्थोऽज् वी च कार्यद्वयं स्यात्, पार्थक्यात् । अजिर्वर्तते । प्राजिजीषति । प्राविवीषति । प्राजिष्यति । प्रवेष्यति । प्राजिता । [प्रवेता ।] प्रवेतुम् । [प्राजितुम् ।] यौ । प्राजनो दण्डः । प्रवयणो वा । अघाच्च ल्युक्येऽज्वीति कृते घादौ अजेः विषयश्च रूपद्वयं सिध्यति । किन्तु घाब्क्ये वियोऽप्रयोगार्थमिति पाणिनिः ॥

**(१२०) त्स्सीट्** । [ ३।४।१०।१२। ] भ्वादेः सतस्यात् सादि ल्यशि । इडुत्तरार्थः । वस् । वत्स्यति । विवत्सति । व्यतिवत्सीष्ट । अवात्सीत् । घत्स्यति । [जिघत्सति । ज्यतिघत्सीष्ट । अघात्सीत्] सत् किम् ? अधिजिगासते । स किम् ? वस्ता । ल्यशि किम् ? आस्से । वस्से ॥१०॥

**सेटः स्तो ग्रह ईन्न वाऽलिडि तु वृ पित्तिङ् बलो ब्रूयङः**
**स्यस्सो लोऽऽद ईड्रुसोऽड्वलि जनीशीङ्स्ध्व इड्ढे लिटः ।**
**वा त्वदृद्दश्शृजवोऽनिटस्तृचि सदा नर्तोऽद्वृघस्व्येवयुः**
**स्कृस्तु द्रु सृ भृ वृ श्रुस्त्रु विशद्दशो गम्हन् विदो वा क्वसोः ॥३।४।११॥ शार्दूलविक्रीडितम् ॥**

**(१२१) सेटः स्तः** । [ ३।४।११।१। ] इट् सञ्ज्ञातौ परस्य ल्यशः स्तः, लिटः लिङः असकारस्य च स्तः । सकारतकारादेः इट् आगमः स्यात् । सेटोऽनिटो वेट उदाहियन्ते छन्दोभिरेकादशभिस्तु नाना ॥

द्वाद्यज्झलो बाध्वृश्विरयुजृस्वनीशीवेत्तेः स्येघ्नोऽतङिद्वृद्दस्तृस्तुसोः सेः ।
अञ्जेर्यमाङ्नमसुग्नशक्वस् हसध्वसः स्विद्बुधिमन्युषिशिलष्- ॥१॥

सिधः श्यना भो यरलान्नगाऽलान्मोऽत्तुदनुदिस्कंद्विदि शत्सदेः खिद् ।
क्षुद्भिद्हदेः च्छिद्व्यधिसाधिशुध्य्ः क्षुधिक्रुधेर्बन्ध्बुधिराध्युधिभ्यः ॥२॥

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् निजिं सिचिं मुचिभजि[भञ्जि]भृज्जतीन् ।
त्यजिं [यजिं] युजिरुचिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजिमाप्तपिं तिपिम् ॥३॥

वपिस्वपिलुपिलपितृप्दृपिक्षिपीन् सृपिच्छुपिं शपि कृषि दुष्पुषिं शिषिम् ।
पिषिद्विषित्विषिशुषिविष्दिशिदृशिमिशिस्पृशिरुशिरिशिदंशिशिलषिम् ।
क्रुशिं दशिं दिहिं दुहिमिहिरुह्वहिं महिं दहिं लहिं रिहिलुहिमाह चानिटः ॥४॥

सीप्स्योर्हलृव्रस्तङि वा स्वृषूप्याय् स्फाय्चायृनिष्कुष्धरुक्षिता स्तः ।
कृच्छ्रच्छृतिच्छृत्तृदितः स्यसौ क्रषलुव्रुष्सहेषोः स्ति सनः स्त्रयूर्णोः ॥५॥

दम्भ्रस्जृधिव्रोऽपि भरि क्षपिश्रेः सन्तन्दरिद्रापत इद् दऋग्दृ ।
घृग्रच्छतां ज्ञस्मिङ्पूङसूच्यो गुहग्रहो नो किति च श्यृगूर्णोः ॥६॥

क्तेरग्रहस्तिङ् य च कु चुङा स्तोः क्रमस्तुरर्हाद् गम इट् च स स्तैः ।
वृचः सता सश्च कृपश्च निष्कुष् क्तस्याकुले क्तोऽपि लुभोऽञ्चवस्क्षुधः ॥७॥

वा पूङ्क्लिशः क्तो ज्ञुदितोरव्रश्चोऽसोः क्तस्य भावेन विसन्निनोऽर्दो- ।
ऽभेश्चाविदूर्ये धृषशस् प्रगल्भे घुषोऽविशब्दे कष कृच्छ्रदुर्गे ॥८॥

आदीददौ डीङ्श्व्यपता न वेटः प्राद् वेः श्वसो वा जपि वम् च शन्ताम् -।
रुष् संघुषास्त्वर्ज्ञपितः शकोऽर्मिभावादिकर्मण्यथ चादितोऽपि ।
शप् चोद्वलोऽकित् स्विदि शीमिदेः पूवृषिक्ष्विदिभ्यः सहने मृषस्तु ॥९॥ षट्पदी ॥

मन्थमनस्तमःक्षुब्धस्वान्तध्वान्तभृशप्रभौ ।
बाढपरिवृढौ फाण्टोऽनायासे विरि धः स्वरे ॥१०॥

म्लिष्टोऽस्पष्टे बलि स्थूले दृढो वा दान्तशान्तयोः ।
वृत्तं ग्रन्थेषु पूर्णस्तु स्पष्टच्छन्नौ च दस्त वृत् ॥११॥

सेटस्तावत् । द्वाद्यच् । जागरिष्यति । व्यतिजागरिषीष्ट । जिजागरिषति । जागरिता । आदीधिष्यते । आदीधिता । प्रोर्भविष्यति । [प्रोर्भविता ।] कण्डूयिष्यति । कण्डूयिता । द्वाद्यच् किम् ? पास्यति । [पाता ।] चेष्यति । [चेता ।] हलः । एधिष्यते । [एधिता ।] चकासिष्यति । [चकासिता ।] शक क्षमायाम् । शकिष्यति । [शकिता ।] अबाधिषीष्ट । उभयथापि । वृ । वृङ् धृञ् ऋकारान्ताच्च । वरिष्यति । [वरिता ।] तरिष्यति । [तरिता ।] शरिष्यति । [शरिता ।] श्वि । श्वयिष्यति । [श्वयिता ।] युत् प्रत्याहारः । यौत्यादि षड् वा ते । यविष्यति । [यविता ।] एवं

[जरिष्यति । जरिता । स्नविष्यति । स्नविता । अनिष्यति । अनिता । ईशिष्यते । ईशिता । वेदिष्यति । वेदिता ।] युत् किम् ? क्रोक्ष्यति । ऊ । ऊकारान्तात् । भविष्यति । [भविता ।] लविष्यति । [लविता ।] एवं श्रि ङीङ्शीङः । [श्रिङ् । श्रयिष्यति । श्रयिता । ईड् । ईडिष्यते । ईडिता । शीङ् । शयिष्यते । शयिता ।] वेत्तेः । वेदिष्यति । वित्तिरिति किम् ? विद्यति-विन्दति-विनत्तेर्न । वेत्स्यति । स्ये परे ऋदन्तहन्तेः । हरिष्यति । अकरिष्यत् । हनिष्यति । अहनिष्यत् । बाधकबाधनार्थम् । स्ये किम् ? कर्ता । कृषीष्ट । हन्ता । वृद्दस्तृस्तुसोः सेः । तङि परे वृत् इड्बाधनार्थम् । स्तसोः प्राप्त्यर्थम् । प्रावारिष्टम् । अस्तारिष्टम् । अस्तावीत् । असावीत् । धूञः । अधावीत् । घुषः । अघोषीत् । सिद्धम् । अतङि किम् ? आवरिष्ट । आवरीष्ट च । अस्तौष्ट । [अस्तावीत्] अञ्जेः सिच एव । ऊदितो वेट् वक्ष्यति । आञ्जीत् । आञ्जिष्टम् । यम् आदन्तरमनमां सिचीट् । सुगागमश्च । अयंसीत् । अयंसिष्टाम् । [आकारान्तानाम् ।] अयासीत् । [अयासिष्टाम् ।] अदरिद्रासीत् । [अदरिद्रासिष्टाम् ।] अरंसीत् । [अरंसिष्टाम् ।] अनंसीत् । [अनंसिष्टाम् ।] नेति हलः प्राप्तः शकादेः प्रतिषिध्यते । शक्घस् । शक् च घस्लृ हन् । सज्साजो वशः तस्यादि स्तः । शक्ष्यति । [शक्ता ।] घत्स्यति । हन्ता । वत्स्यति । [वस्ता ।] सस् किम् ? वसिता । वस्त्रम् । एवं सर्वत्र । श्विदादेः श्यना लक्षितात् । स्वेत्ता । [बोद्धा । मन्ता । पोष्टा । सेद्धा । श्लेष्टा ।] श्यना किम् ? स्वेदिता । [बोधिता । मनिता । पोषिता । सेधिता । श्लेषिता] ॥१॥

भो यरलात् यभ-रभ-लभादित्यर्थः । यथा [यब्धा । यब्धुम् । रब्धा । रब्धुम् । लब्धा । लब्धुम् ।] एवं नगालान्मः । नगौ च अलकाराः पूर्वे च ते व्योमात् । नम-गम-यम-रमादित्यर्थः । नन्ता । [गन्ता । यन्ता । रन्ता ।] अदादेर्दान्तात् । अत्ता । [तोत्ता । नोत्ता । स्कन्ता । वेत्ता । शत्ता । सत्ता । खेत्ता । क्षोत्ता । भेत्ता । हत्ता । छेत्ता ।] विधादेर्धान्तात् । व्यद्धा । [साद्धा । शोद्धा । क्षोद्धा । क्रोद्धा । बन्द्धा । बोद्धा । राद्धा । योद्धा ] ॥२॥

पचादीन् लुहिपर्यन्तात् अनिट आह । क्तः ॥३-४॥

वेटोऽधुना । सीट् । सिचोर्वेट् तङि परे । हलः ऋ हलृ । तदन्तेन सिद्धेः संयोगादेः ऋतः वृद् वृञ् ऋतश्च परयोः हलृतोऽप्राप्ते व्रः प्राप्ते । स्मृषीष्ट । स्मरिषीष्ट । अस्मृषाताम् । [अस्मरिषाताम् ।] वृषीष्ट । [वषिषीष्ट ।] अस्तार्षीष्ट । [अस्तारिषीष्ट ।] अवृत । अवरिष्ट । औपदेशिकः किम् ? संस्कृषीष्ट । समस्कृत । स्वृ आदेः परस्य स्वो वा । अस्वार्षीत् । अस्वारीत् । स्वर्ता । स्वरिता । षूञ् । सोष्यते । [सोता । असोष्ट । सोषीष्ट ।] सविष्यते । [सविता । असविष्ट । सविषीष्ट ।] प्यास्यते । [प्याता । अप्यास्ट । प्याषीष्ट ।] प्यायिष्यते । [प्यायिता । अप्यायिष्ट । प्यायिषीष्ट ।] एवंरधप्रत्याहारः । रधादिभ्योऽष्टभ्यः । रत्स्यति । रधिष्यति । नङ्क्ष्यति । [नशिष्यति ।] इत्यादि । ऊदितः । गुपू । जुगुप्सति । जुगुपिषति । यद् वा । जुगोपायिषति । गोप्ता । [गोपिता । गोप्स्यति । गोपिष्यति ।] हलः प्राप्ते वा । कृति-वृति-भृति-छृदि-मृदिभ्यः स्यसौ । सादावसिचि वेट्ष्ठ । कर्त्स्यति । कर्तिष्यति । एवं [वर्त्स्यति । वर्तिष्यते । भर्ता । भरिष्यति । छर्त्स्यति । छर्दिष्यति । मर्क्ष्यति । मर्दिष्यति ।] असौ किम् ? अकर्तिष्टाम् । रिषलुभऋषसहइषुभ्यस्ति । तादौ वेट् । रेष्टा । रेषिता । एवं [लोब्धा । लोभिता । आर्षिता । अर्षिष्यति । सोढा । सहिता । एष्टा । एषिता ।]

ति किम् ? रेषिष्यति । इषु उदित् किम् । एषिता । सनो वेट् । स्वृ आदेः सन्नन्तात् परस्य । सुसूर्षति । सिस्वरिषति । युयूषति । यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति ॥५॥

धिप्सति । धीप्सति । दिदम्भिषति । बिभ्रक्षति । बिभर्क्षति । बिभ्रज्जिषति । बिभर्जिषति । ऋधिव्र इति ऋध् इव इवन्तः वृ वृङ् वृञ् ऋ एभ्यः । ईर्त्सति । आर्दिधिषति । इव् । दुद्यूषति । दिदेविषति । वुवूर्षति । विवरिषति । शप् किम् ? बुभूर्षति । [बिभरिषति ।] ज्ञिप्सति । [जिज्ञपयिषति ।] शिश्रीषति । [शिश्रयिषति ।] सिषासति । [सिसनिषति ।] तितांसति । [तितनिषति । दिदरिद्रासति ।] दिदरिद्रिषति । पित्सति । [पिपतिषति ।] इन्नित्यं सनः, ह आदेः । दिदरिषति । इत्यादि । स्मिङरि च । सिस्मयिषति । अरिरिषति । पूङि किम् ? पुनातेर्न । पुपूषति । ग्रहगुहो नो सन इट् । जिघृक्षति । जुघुक्षति । किति श्र्युगूर्णोः । एभ्यः किति तादौ सनि नेट् । श्रिऊणु उक् सनि वेत्युक्तम् । श्रितः । श्रितवान् । श्रित्वा । युतः । [युतवान् । युत्वा ।] लूनः [लूनवान् । लूत्वा ।] तीर्णः । [तीर्णवान् । तीर्त्वा । उक् ।] रुरूषति । उर्णुतः । ऊर्णोरिव द्व्यचः । जागरितः । [जागरितवान् । जागरित्वा ।] जिजागरिषति । [ऊर्णोनवित्वा ॥] ६॥

क्तेर्नेट् अग्रहादेः । शान्तिः । दीप्तिः । तन्तिः । अग्रहादेः किम् ? निगृहीतिः । तङ्तिङानैर्योगे स्तौतेः स्तो नेट् । प्रस्तोषीष्ट । प्रस्तोष्यते । प्रस्तोष्यमाणः । तङा किम् ? प्रस्तवितव्यम् । [प्रास्तावीत् । प्रस्तूयात् । प्रतुष्टूषति ।] प्रस्तवीत्रीयते । क्रमः । तथा । प्रकंसीष्ट । [प्रक्रन्ता । प्रक्रन्तासे । प्रकंस्यते ।] प्रविकंस्यमानः । प्रचिक्रंसिष्यते । तङा किम् ? आक्रमिष्यति स तम् । तुरर्हात् । अर्हात् तन्निमित्तात् क्रमः विहितस्य तुः तृच्तृनः नेट् वृत्यादिषु । क्रन्ता । प्रक्रन्ता । तुः किम् ? प्रक्रमितव्यम् । तङअर्हात् किम् ? निष्क्रमिता । गमः । तङर्हादिट् च न वेत्यर्थः स सादेः । सञ्जिगंसिता । सञ्जिगमिषिता । अधिजिगंसिता, अधिजिगमिषिता शास्त्रस्य । तङ्अर्हात् किम् ? जिगमिषति । तैः । तङा तैरेव योगे गमो नेट् सादेः । संजिगंसते । संगंसीष्ट । समगंस्यत । अधिजिगांसिष्यते । संजिगंसमानः । तैः किम् ? गमिष्यति । वृचः सः । वृच् प्रत्याहारः । वृदादिपञ्चकान्तैर्योगे सादेः स इटीत् स्यान्नित्यम् । वर्तिष्यते । विवर्धिष्यमाणः । अवर्धिष्ट । इत्यादि । तैः किम् ? अवर्त्स्यत् । वृद्भ्यः स्यस्यतोरुभयपदम् । तासश्च सादेश्च कृपः परस्येट् तैः । श्वः कल्पिता । चिकल्पिषते । तैः किम् ? कल्प्स्यति । कल्प्ता । चिक्लृप्सितम् । निष्कुषात् क्तस्येट् । निष्कोषितवान् । [निष्कोष्टवान् ।] वेट्त्वादप्राप्ते । आकुले[-विमोहने-]ऽर्थे लुभः क्तोऽपि । क्तस्यापि । विलुभिताः केशाः । [विलुभितः सीमन्तः । विलुभितानि पदानि ।] आकुले किम् ? लुब्धः [वृषलः ।] अञ्चवस्क्षुधः । तेषु सतकारोऽञ्च् पूजायाम् । अञ्चितमिव शिरो वहति । [अञ्चित्वा । अञ्चितवान् ।] उषितः । [उषितवान् । उषित्वा ।] क्षुधितः । [क्षुधितवान् । क्षुधित्वा ।] वसेरिडस्त्येव । सतकारोऽच् किम् ? उदक्तमुदकं कूपात् ॥७॥

वा पूङ् क्लिशः । वेडेषु । पवितः, [पवितवान्, पवित्वा ।] पूतः, [पूतवान्, पूत्वा ।] क्लिष्टः । [क्लिष्टवान् । क्लिष्ट्वा । क्लिशितः । क्लिशितवान् । क्लिशित्वा ॥] जृउदितेश्च क्तो वेट् । न क्तस्य । जृषः केचिन्नित्यं केचिद् वेति वा । जरित्वा । जरीत्वा । जीर्त्वा । शमुदमु । शान्त्वा । शमित्वा । दान्त्वा । दमित्वा । अव्रश्च । व्र लघुः । वा न स्मर्यते । क्त्वि इट् । व्रश्चोर्रस्यात्र

यणिक् । इङ्गिर् । व्रश्चित्वा । असोः भावे क्तस्येट् । आसितं न्रा । भावे किम् ? अस्तः । न्यस्तम् । विसन्नेरर्दः । क्तयोर्नेट । व्यर्णः । [समर्णः । न्यर्णः ।] न्यर्णवान् । अभेस्तथाऽविप्रकृष्टेऽर्थे । अभ्यर्णा शरत् । अविदूर्ये किम् ? अभ्यर्दितो ना शीतेन । पीडितः [इत्यर्थः] । धृषशसः प्रगल्भे । अविनीतत्वे क्तयोर्नेट । धृष्टः । [शस्तः ।] विशस्तवान् । प्रगल्भे किम् ? धर्षितः । [विशसितः ।] अविशब्देऽर्थे घृषेस्तथा । अवघुष्टा रज्जुः । अविशब्दनेऽप्रतिज्ञाने किम् ? अवघुषितं वाक्यमाह । चुरादौ णिरद् वा ज्ञापितोऽ तो 'महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः' [इति स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थोऽयं प्रयोग उपपन्नो भवति ] । कषस्तथा कृच्छ्रे दुर्गे च । गहनेऽर्थे । कष्टोऽग्निः । कष्टाः पर्वताः । कषितमन्यत् ॥८॥

आत ईत् । इदनुबन्धो यस्य क्तादेस्तथा । ञिमिदा - मिन्नः । [मिन्नवान् । ओलस्जी- लग्नः । [लग्नवान् ।] डीङ्श्विभ्यां पत आकारवर्जितान्न वेटश्च तथा । उड्डीनः । [उड्डीनवान् ।] शूनः । [शूनवान् ।] वेटः । गुह् - गूढः । [गूढवान् ।] वृद्धः [वृद्धवान् ।] अपता किम् ? पतितः । [पतितवान् ।] दरिद्रितः । [दरिद्रितवान् ॥] प्राद् वेः श्वसः । तथा । प्रश्वस्तः । प्राद् वेः किम् ? श्वसितम् । उच्छ्वसितवान् । क्तयोर्वेट् । जपादेः । जप्तः । [जप्तवान् ।] जपितः । [जपितवान् ।] वान्तः । [वमितः । दान्तः । दमितः ।] एवं [शान्तः शमितः । तान्तः । तमितः ।] अम्-अभ्यान्तः । [रुष्टः । रुषितः । संघुष्टः संघुषितः ।] त्वर- तूर्णः । त्वरितः । ज्ञप्तः । ज्ञपितः । ज्ञपितवान् । शकः क्तस्य वेट् । अर्माप्येऽर्थे । शक्तः, शकितो वा कटः कर्तुं ना । आप्ये किम् ? शकितं तेन । भावे आदिकर्मणि चार्थे क्तयोर्वेट् । आदितः । प्रमिन्नम् [अनेन ।] प्रमेदितम् [अनेन ।] प्रमिन्नः । प्रमेदितः । आदितः किम् ? प्रकृतः कटं ना । शप् चोद्वलोऽकिता शप् प्रकृतेः उत्पूर्वहलन्ताद् भावादिकर्मणोर्विहितयोः क्तयोरिट् अकिच्च स्यात् । द्योतितं द्युतितं न्रा । प्रद्योतितो, [प्रद्युतितो] ना । उद्वलः किम् ? विदितं न्रा । इट् किम् ? प्ररूढं न्रा । भावादिकर्मणोः किम् ? रुचितः पटः । शप् किम् ? गुधितं न्रा । निकुचितमिति । वाच्यम् । स्विदादेः । तच्चेड् वा । स चाकित् । प्रस्वेदितं न्रा । प्रस्वेदितो ना । [शयितम् । मेदितम् । पवितम् । वर्षितम् । क्ष्वेदितम् ।] इट् किम् ? प्रस्विन्नः । शीनः । मिन्नः । पूतः । वृष्टः । क्ष्विन्नः । सहने क्षान्त्यर्थात्, मृषः क्तयोरिडकित् । मर्षितं न्रा । मर्षितः । [मर्षितवान् ।] सहने किम् ? अपमृषितं वाक्यमाह ॥९॥ षट्पदी ॥

मन्थमनस्तमश्चेदर्थः क्रमेण क्षुब्धं स्वान्तं ध्वान्तमिति निपात्यन्ते । द्रवद्रव्यसंयुक्ताः सक्तवः मन्थ इत्युच्यते । तच्चलने क्षुभि क्तश्च । क्षुब्धः सञ्चलितो मन्थ उच्यते । यद्वाऽऽप्ये घणमन्तस्तदर्थे । क्षुब्धः समुद्रो विलोडनेन । विकृत इत्यर्थः । क्षुब्धा नदी । मन्थ किम् ? क्षुभितो ना । सामानाधिकरण्य किम् ? क्षुभितं मन्थेन । एवं स्वान्तं मनः । ध्वान्तं तमः । स्वनितोऽन्यः । ध्वनितं तमसा । भृशे प्रभौ बाढपरिवृढौ स्तः । बाहितं परिबृंहितमन्यत् । फाण्टम् अनायासनिर्यातं चेत् । सद्यो भिषगुद्धृतौषधं किञ्चिद् द्रव्यमुच्यते । फाणितमन्यत् । विरिब्धि स्वरेऽर्थे । विरेभितमन्यत् ॥१०॥

म्लिष्टोऽस्पष्टेऽर्थे । म्लेच्छितमन्यत् । बलिनि स्थूले चार्थे दृढः । बृंहितमन्यत् । वा दान्तशान्तयोः ण्यन्ताः । दान्तः । दमितः । शान्तः । [शमितः ।] वृत्तं पारायणम् । पारायणे वा ।

ग्रन्थे किम् ? वर्तितम् । एवं, पूरितम् । पूर्णम् । स्पाशितम् । [स्पष्टम् ।] च्छादितः । छन्नः । दासितः । [दस्तः ।] क्तान्तनिपातनात् क्तवतोरिट् स्यात् । वृद् गणसमासौ ॥१॥

**(१२२) ग्रह ईत् । [३।४।११।२।]** ल्यशस्तथा । ग्रहीष्यति । ग्रहीता । ग्रह इति किम् ? जरीगृहिष्यति । [जरीगृहीष्यति ॥]

**(१२३) न वाऽलिडि तु वॄ । [३।४।११।३।]** इड् वाऽतः ल्यशः स्तोऽलिडि । वरीष्यति । [वरिष्यति ।] तरीष्यति । [तरिष्यति ।] अलिडि किम् ? प्रावरिषीष्ट । [तरिषीष्ट] ॥

**(१२४) पित्तिङ्वलो ब्रूयङः । [३।४।११।४।]** ब्रूयङो विहितस्य वलादेः पित्तिङ ईड् वा व्यवस्थितनवात्वात् । ब्रुवो नित्यम् । ब्रवीति । ब्रवीषि । ब्रवीमि । वावदीति । [वावदीषि । वावदीमि ।] रोरवीति । वावर्त्ति । [वावर्षि । वावर्ति ।] चर्कर्मि । पिति किम् ? ब्रूहि । ब्रूतः वावत्तः । वलः किम् ? ब्रुवाणि । यङः पिदभावाद् यङ्लुगिष्यते ॥

**(१२५) स्यस्सो लः । [३।४।११।५।]** सिचोऽस्तेश्च सः सकारात् परस्याल्मात्रस्य पित्तिड्वल ईड् नित्यं स्यात् । अकार्षीत् । अकार्षीः । आसीत् । [आसीः ।] अलः किम् ? अकार्ष्टम् । अस्ति । स किम् ? अदात् । अभूत् ॥

**(१२६) अडदः । [३।४।११।६।]** तथा । आदत् । [आदः] । अलः किम् ? अत्ति । अत्सि ॥

**(१२७) ईड्रुसोऽट् । [३।४।११।७।]** रुस्प्रत्याहाराद् रुदादेस्तथाऽड् ईड् वा । अरोदीत् । [अरोदीः । अस्वपीत् । अस्वपीः । अश्वसीत् । अश्वसीः । प्राणीत् । प्राणीः । अजक्षीत् । अजक्षीः । अरोदत् । [अरोदः । अस्वपत् । अस्वपः । अश्वसत् । अश्वसः । प्राणत् । प्राणः । अजक्षत् । अजक्षः ।] अतः किम् ? रोदिति ॥

**(१२८) वलि । [३।४।११।८।]** पिन्निवृत्त्यर्थं वलीति । रुद्भ्यः तिङ्वल इदुत्तरः स्यात् । रोदिति । जक्षितः । वलि किम् ? रुदन्ति ॥

**(१२९) जनीशीडः स्ध्व इट् । [३।४।११।९।]** जन् ईश् ईड् एभ्यः, स्ध्वेति डिसादौ ध्वशब्दे च इट् स्यात् । व्यतिजज्ञिषे । व्यतिजज्ञिष्व । व्यतिजज्ञिध्वे । ईशिषे । [ईशिष्व । ईशिध्वे ।] ईडिषे । [ईडिष्व । ईडिध्वे ।] ईडिध्वम् । ध्वे ज्ञति निर्देशाद् अकृतैत्वस्य न स्यात् । ऐढ्वम् ॥

**(१३०) थे लिटो वात्वद्दृश्शृजवोऽनिटस्तृचि सदा । [३।४।११।१०]** अकारवद् दृशि सृजि अजन्तात् तृचि नित्यानिटः परस्य लिड्वल इड् वा स्यात् । पक्व । पपक्थ । पेचिथ । शशक्थ । इयजिथ । इयष्ट । अत्वत् किम् ? कृष् चकर्षिथ । तत् किम् ? रराधिथ । अनिट् किम् ? फेणिथ । तृचि किम् ? शान्तः । शमिथ । सदा किम् ? रद्धा । रधिता । रेधिषः । थलि किम् ? पेचिव । पेचिम । ददर्शिथ । दद्रष्ठ । [ससर्जिथ ।] सस्रष्ठ । अचः । याता । ययाथ । ययिथ । चिचेथ । [चिचयिथ ।] जुहोथ । [जुहविथ ।] अनिट् किम् ? लविता । लुलविथ । तृचः किम् ? युतः । युयविथ । सदा किम् ? सोता । सविता । सुसविथ । थलः किम् ? ययिव ।

[ययिम ॥]

**(१३१) नर्तः । [३।४।११।११।]** तथा ऋतो न । हर्ता । जहर्ष । ऋतः किम् ? भेत्ता । बिभिदिथ । अति किम् ? जागरिता । जजागरिथ । तृचि किम् ? वृतः । ववरिथ । सदा किम् ? स्वर्ता । [स्वरिता ।] सस्वरिथ । थलः किम् ? जह्व । [जह्म ।] नाचो वेति ।

**(१३२) अद्वृधस्व्येवयुः । [३।४।११।१२।]** अदादेर्लिड्वलो नित्यमिट् । आदिथ । ववरिथ । जघसिथ । संविव्ययिथ । उवयिथ । ऋ-आरिथ ॥

**(१३३) स्कृस्तुद्रुसृभृवृश्रुस्रुः । [३।४।११।१३।]** ससुट्कृञोऽस्त्वादेर्धातोश्च सर्वस्मात् परस्य लिटो वलादेरिट् स्यात् । सञ्चस्कारिव । [सञ्चस्करिम ।] सञ्चस्करिथ । बिभेदिव । [बिभेदिम । बिभेदिथ ।] शेकिव । [शेकिम ।] पेचिव । [पेचिम । अस्त्वादेः किम् ? तुष्टुव । [तुष्टुम ।] तुष्टोथ । एवं [दुद्रुव । दुद्रुम । दुद्रोथ । ससृव । ससृम । बभृव । बभृम । ववृवहे । ववृमहे । ववृव । ववृम । शुश्रुव । शुश्रुम । शुश्रोथ । सुस्रुव । सुस्रुम । सुस्रोथ ।] नाचो वेत्यपि । सुट्कृञः किम् ? चकृव । [चकृम । चकृषे] ॥

**(१३४) विशद्दशो गम्हन्विदो वा क्वसोः । [३।४।११।१४।]** एभ्यो लिड्क्वसोर्वेट् । विविश्वान् । विविशिवान् । दद्दश्वान् । [दद्दशिवान् ।] जगन्वान् । जग्मिवान् । जघन्वान् । जघ्निवान् । विविद्वान् । [विविदिवान्] ॥११॥

**यैकाज्घसोऽर्जागुरवीण्णवाश्येज्व्योऽलिड्शिदीप्ये सनि वा लियोऽखा- ।**
**पि नीङ्मिङः स्फुरस्फुलि घे मृजोऽद् वाऽरच्यृण्ण्युपान्ते घति हन्घन्निणो हन् ॥३।४।१२॥**

**वृत्तम् ॥**

**(१३५) यैकाज्घसः । [३।४।१२।१।]** अर्ति-इण्-आ-एकाच्-घसिभ्यः क्वसोर्नित्यमिट् । आरिवान् । ईयिवान् । पायिवान् । पेचिवान् । जक्षिवान् । लिटः किम् ? विद्वान् ॥

**(१३६) अर्जागुरवि । [३।४।१२।२।]** ल्यशीत्यत्रानुवर्तते । जागुरन्तोऽर् स्याद् अवादौ ल्यशि । जजागरिव । जागर्यात् । जागर्येते । जागरितः । अचि किम् ? जजागृवान् । ल्यशि किम् ? जागृतः । जाग्रति । जागृयात् । अप्रासेऽर् ॥

**(१३७) इण्णु आ । [३।४।१२।३।]** जागु आ स्यादिणि णे चैव । अजागारि । जजागार । इणे किम् ? जागरयति । जागरकः । साधु जागरी । अजागरीत् ॥

**(१३८) अश्येच् । [३।४।१२।४।]** भ्वादेरेच् अशि धिविपयस्थे आ स्यात् । वाता वानीयम् । ददौ । जग्लौ । अशि किम् ? ग्लानं वधः । ग्लायति । एच् किम् ? कर्ता । चेता । स्तोता । लाक्षणिकत्वात् ।

**(१३९) व्योऽलिड्शि । [३।४।१२।५।]** एजा स्यात् । संव्याता । अलिड्शि किम् ? संविव्याय । संविव्ययिथ । संविव्येवान् । व्ययति ।

**(१४०) दीप्ये ।** [३।४।१२।६।] दीङ ई आ स्याद् एच्विषये क्त्वादेशोऽप्येव । दाता । दानम् । दायः । उपदाय । एच् प्ये किम् ? दीयते । दीङ् ई किम् ? देदेति । यङ् लुग्धात्वन्तरम् ॥

**(१४१) सनि वा ।** [३।४।१२।७।] तथा । दिदासते । दिदीषते ॥

**(१४२) लियोऽखापि ।** [३।४।१२।८।] ख-अप्-वर्जिते एच् प्ये आ वा स्यात् । विलाता । विलेता । विलीनयति । विलापयति । घृतमुपलाय, [उपलीय ।] लिङो नित्यमात्वे, लिनातेर्विलेलीष्ट न स्यात् । अखापि किम् ? इषल्लयः । विलयः । एच् प्ये किम् ? लीनम् । लिलीषति ॥

**(१४३) नीङ्मिङः ।** [३।४।१२।९।] तथा नित्यम् । प्रमाता । निमातुम् । प्रमाय । एच् प्ये किम् ? मेमीचते । मितम् । अखापि किम् ? दुर्मयः ।

**(१४४) स्फुरस्फुलि घे ।** [३।४।१२।१०।] घण्यनयोरेजा स्यात् । विस्फारः । विस्फालः । घे किम् ? विस्फारिता ॥

**(१४५) मृजोऽत् ।** [३।४।१२।।११।] आ स्यात् । मार्ष्टा । मार्जनम् । मार्ष्टि । अत् किम् ? मृष्टः ॥

**(१४६) वाऽरच्यृत् ।** [३।४।१२।१२।] मृजेर्ऋत् आर् वा स्यादचि परे । मृजन्ति । मार्जन्ति । मृजन् । मार्जन् । अचि किम् ? मृष्टः । ऋत् किम् ? मार्जनम् ॥

**(१४७) ण्युपान्ते ।** [३।४।१२।१३।] भ्वादेरुपान्तस्थोऽत् आ स्याण्णिति परे । पाचयति । नाययति । लावकः । कार्यम् । णि किम् ? पचनम् । उपान्ते [किम् ?] रक्षयति । अत् किम् ? गोपाययति । धातोः किम् ? त्वचायति । मदयति ॥

**(१४८) घति हन् ।** [३।४।१२।१४।] हन घत् स्यात् णिति । घातयति । घातकः । घातो वर्तते । श्वघात्यः ॥

**(१४९) घनिण्णो हन् ।** [३।४।१२।१५।] घन् स्याद् इणि णे च, न घतिः । अघानि । जघान ॥१२॥

**जन्वत्सेष्टोऽनाचमिकमिवमोऽविश्रमो नाणि णे युक्**
**आतोऽरेङुन्विक्कुसि पुकि परे स्यादुपान्ते तिको द्विः ।**
**चेद्धल्लावक्विज्झलि सृजिदृशोऽम् वा तृपां मग्नशोर्नुम्**
**तीतो मुर्चा शे जभचि रध इट् लिट्यलिट्शे रभस्तु ॥३।४।१३॥ कुसुमितलता ॥**

**(१५०) जन्वत्सेष्टोऽनाचमिकमिवमोऽविश्रमो नाणि णे ।** [३।४।१३।१।] जन्वधोः सेटो मान्तस्य चाऽनाचमादेरणि णे णिनि आदान् स्यात् । अजनि । जनकः । प्रजनः । साधुजनी । अवधि । [वधकः । वधः । वध्यः ।] सेण्मः । अशमि । [शमकः । शमः । शमी ।] अतमि । [तमकः । तमः । तमी ।] सेट् किम् ? यामकः । रामकः । उद्यमेऽड, उपरमे यमु इति

गणपाठात् । ऋभ्योऽप् वा । अणि ऋणिङ् । णे किम् ? जजान । बाधयति । बबाध । शशाम । जनयति । तित् शिमत् उक्तः । णि वधोऽर्थम् । अनाचमादेः किम् ? आचामकः । [ नियामकः विनामकः । आगामकः ॥]

**( १५१ ) युक आतः । [ ३।४।१३।२। ]** तथा । अदायि । [अधायि । दायकः । धायकः ।] दरिद्रायकः । अणि णे किम् ? धावयति । दधौ ॥

**( १५२ ) अरेङुन्विक्कुसिपुकि परे स्यात् । [ ३।४।१३।३। ]** उ श्नु विकरणौ । भ्वादेरिक् चारेङ् स्यात् कुसादौ परे यथासम्भवं पुकि । अर्पयति । व्लेपयति । क्रादेशे कुसि । अबिभरुः अबिभयुः । किदेतदर्थः । परे पराधिकारविहिते प्रत्यये । उ-तनोति । करोति । नु-सुनोति । इक् कर्ता । चेता । स्तोता । हरति । जागर्ति । नयति । भवति । नेषीष्ट । च्व्येषीष्ट । कारयति । नाययति । लावयति । तितरिषति । सुसावयिषति । जुहव । जुहाव ॥

**( १५३ ) उपान्ते तिकः । [ ३।४।१३।४। ]** उपान्तस्थस्य धातोर्ह्रस्वस्येकः अरेङ् स्यात् प्रत्यये परे । कर्ता । विवर्तिषति । सिसेधिषते । रुरोचिषते । तिक् किम् ? ईहते । ऊहते । उपान्ते किम् ? सन्धुक्षते ॥

**( १५४ ) द्विश्चेद्धल्लौ । [ ३।४।१३।५। ]** द्विरुक्तिश्चेत् कृता स्याद् हलि लिटि च परत उपान्तस्थ इगरेङ् स्यात् । वेवेक्ति । वेवेक्षि । वेवेज्मि । विवेज । विवेजिथ । एवं विचिर् णिजिर् विशृ । हल्लौ किम् ? वेविजानि । अनेनिजम् । वेविषीति । लिडजर्थम् ॥

**( १५५ ) अक्विज्झलि सृजिदृशोऽम् । [ ३।४।१३।६। ]** आगमः स्याद् अकवर्गानुबन्धे झलि परे । ससिस्त्रष्टि । दर्द्रष्टि । स्रक्ष्यति । [द्रक्ष्यति ।] अस्राक्षीत् । [अद्राक्षीत् ।] स्रष्टा । [द्रष्टा ।] झलि किम् ? विसर्जनम् । [निदर्शनम् ।] अक्वि इति किम् ? सृष्टिः ॥

**( १५६ ) वा तृपाम् । [ ३।४।१३।७। ]** तथा अम् । अत्र द्विगम् । तृपदृपसृपकृष्स्पृशमृश्चैषाम् । तर्त्रप्ति । तर्तप्ति । त्रप्ता । तर्प्ता । अत्राप्सीत् । अतार्प्सीत् । एवं दृपादेः । [द्रप्ता । दर्प्ता । स्रप्ता । सर्प्ता । क्रष्टा । कर्ष्टा । स्प्रष्टा । स्पर्ष्टा । आम्रष्टा । आमर्ष्टा ।] अक्वि ज्झलि किम् ? तृप्तः । अस्पृक्षत् । तर्पणम् ॥

**( १५७ ) मग्नशोर्नुम् । [ ३।४।१३।८। ]** स्सादिलुकि मस्जेर्नशेश्च झलि नुम् स्यात् । मङ्क्ता । मग्नः । मङ्क्ष्यति । अमाङ्क्षीत् । ममङ्क्थ । एवं, नंष्टा । झलि किम् ? मज्जनम् । निनशिषति ॥

**( १५८ ) तीतः । [ ३।४।१३।९। ]** तित् इति स इदनुबन्धो यस्य इदितो धातोर्निर्निमित्तो नुम् स्यात् । कुण्डिता । कुण्डम् । कुण्डा । चुकुण्डिषति । चोकुण्ड्यते । हुण्डिता ॥

**( १५९ ) मुच्रां शे । [ ३।४।१३।१०। ]** र् प्रत्याहारः । मुचाद्यष्टकस्य शे नुम् स्यात् । मुञ्चति । मुञ्चन् । एवं शे तृप तृम्प, दृप दृम्प, गुफ गुम्फ, उभ उम्भ, शुभ शुम्भ ।-मैकेनान्येऽतो विकल्पः । स च धातुद्वयात् सिद्धः । तृपति । तृम्पति । इत्यादि । अन्यो म्रुचिरिति प्रत्याहारेण

तृपादींश्चाह शुभशुम्भोरिति यावत् । तथा च दृभी दृभति । वृती वृन्तति । तृप इत्यादेश्चाप्रयोगः । तदत्रेष्टप्रत्याहारवशात् ॥

**(१६०) जभचि । [३।४।१३।११।]** नुम् । जम्भयति । जम्भनम् । जम्भिता । अचि किम् ? जभ्यम् ॥

**(१६१) रधः । [३।४।१३।१२।]** अचि नुम् । रन्धयति । रन्धकः ॥

**(१६२) इट् लिटि । [३।४।१३।१३।]** एवं ररन्धिथ । ररन्धिव । लिटि किम् ? रधिता ॥

**(१६३) अलिट्शे रभस्तु । [३।४।१३।१४।]** अचि नुम् । आरम्भयति । आरम्भः । लिट्शपि न । आरेभे । आरभते ॥१३॥

**लभष्टेण्णमोर्वा य्युपाङः स्तवान्ये क्सुदुर्भ्यो घखेऽण्णादि नोष्वष्कषोऽष्ठिव् ।**
**प्रतोऽर्योल्लृतो वाऽङ्गुरीणां डचि ग्रो यङि घ्राध्म ईच्चायृ की हन्घ्नि हिंसा ॥३।४।१४॥**
**भुजङ्गप्रयातम् ॥**

**(१६४) लभः । [३।४।१४।१।]** अलिट्शे अचि नुम् ॥ लम्भयति । प्रलम्भनम् । अलिट्शे किम् ? लेभे । लभते । अचि किम् ? लब्धा ॥

**(१६५) टेण्णमोर्वा । [३।४।१४।२।]** टितोऽप्रादिणि णमि च वा । प्रादेर्नित्यमेव । अलम्भि । अलाभि । लम्भम् । [लाभम् ।] प्रालम्भि । प्रलम्भम् ॥

**(१६६) य्युपाङः स्तवान्ये । [३।४।१४।३।]** यादौ परे उपाल्लम्भेः स्तवेऽर्थे कर्तुः कर्मणो वा आङो यस्मिन् सामान्ये नुम् स्यात् । उपलम्भ्या भवता विद्या । उपलम्भ्यं शीलम् । उपात् किम् ? लभ्या विद्या । स्तुतौ किम् ? उपलभ्या वार्ता । एवम्, आलम्भ्या गौः । यि किम् ? आलब्धा । आङः किम् ? लभ्या । अन्यस्मिन् किम् ? समालभ्यः ॥

**(१६७) क्सुदुर्भ्यो घखे । [३।४।१४।४।]** कितः सप्रादेर्लभे घणि खे च नुम्, तथा कितः सप्रादेः सुदुरः परस्य लभेः अत एव भ्यस् । प्रलम्भः । विप्रलम्भः । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । तथा, अतिसुलभः । [अतिसुलम्भः ।] प्रादेरेव किम् ? लाभः ईषल्लाभः । तथा, सुलभः ॥

**(१६८) अस् । [३।४।१४।५।]** अनादि च सादि प्रत्याहारोऽत्र द्रष्टव्यः अतः प्राक्कार्येषु सिद्ध्यर्थम् ॥

**(१६९) णादि नः । [३।४।१४।५।]** भ्वादेरादिर्णः नः स्यात् । णीञ्-नयति । णम नमति । भ्वादेः किम् ? णकारीयति । आदि किम् ? रणति । प्रतो नामि परं णत्वार्थं णोपदेशः ॥

**(१७०) अष्वष्कषोऽष्ठिव् । [३।४।१४।७।]** भ्वादेरादिषः सः स्याद् विकृतस्य क्विणः षत्वार्थम् । अष्वष्काष्ठिव् । षह-सहते । षिचिर्-सिञ्चति । अष्वष्काष्ठिव् किम् ? ष्वष्कते ।

ष्ठीव्यति । अधातोः षो ङः । षण्डीयति । आदि किम् ? कषति । यो नादिणोपदेशः शादिश्च षोपदेशः, तत् प्रावस्रान्तिनिरासार्थम् । पञ्चपदीह-

नृनन्दिनक्का नाटिनाधृनर्दीन् मुक्त्वा नृतीनाथृ च नादिणादिः ।
स्तृस्त्यासृपेः सो च्कसृसीक्सृजोऽन्यः दन्त्याचरः स्मिस्विदि च स्वपि स्वद् ।

स्वञ्जिश्च सादिर्न तु षोपदेशः ॥१॥

**(१७१) प्रतोऽयोर्ल् । [३।४।१४।८।]** अय गतौ । एतदन्तस्य प्रादे र् ल् स्यात् । प्लायते । पलायते । प्लत्ययते । प्रतेः प्रयोगं नेच्छन्त्येके ॥

**(१७२) लृतः । [३।४।१४।९।]** सत्करश्रुतेर्लश्रुतिः स्यात् । तवल्कारः । कल्पयति । कल्प्ता । चलीक्लृप्यते । कलीकल्प्तिः । कृपेरः-कृपाणः । कृपीटकर्पटादेर्व्यवस्थितवायोगात् ॥

**(१७३) वाऽङ्गुरीणाम् । [३।४।१४।१०।]** अत्र दोधकम्-

अङ्गुरिपांसुरषूरगरारं रोमचवाररधूपरिकान्तः ।
रोहिततिर्पृरिकेलरलीरी अङ्कघयोगपरः परिकर्म ॥१॥

अङ्गुलिः इत्यादि । परिकान्तः । कोरन्तर्मध्ये परि के परि केत्यर्थः । कपिलिका । [कपिरिका ।] लोहिता । [रोहिता ।] तिर्पिरीका । [तिर्पिलीका । तिल्पिलीका ।] शब्दद्वये यौ लरौ वर्णौ तौ ली री क्रमेण स्तो वा । लोहितः । [रोहितः ।] लोहिणी । [रोहिणी ।] णत्वार्थम् । तिर्पिरिकः । [तिर्पिरीकः ।] तिर्पिलीकः । [तिर्पिलिकः ।] दीर्घार्थम् । अङ्कघयोगाः परे यस्य स तत्परः परि । पल्यङ्कः । पलिघः । [परिघः । पलियोगः ।] [परियोगः ।] कल्मस्तथा । आकृतिगणः । ग्लहोऽक्षस्य ॥

**(१७४) ड् । [३।४।१४।११।]** ल् वा वडभी । वलभी ॥

**(१७५) अचि ग्रः । [३।४।१४।१२।]** तथा । निगिलति । [निगिरति ।] निगलनम् । [निगरणम् ।] निगाल्यते । [निगीर्यते] ॥

**(१७६) यङि । [३।४।१४।१३।]** तथा नित्यम् । निजेगिल्यते ॥

**(१७७) घ्राध्म ईत् । [३।४।१४।१४।]** यङ्यन्तः स्यात् । जेघ्रीयते । देध्मीयते । ईत् किम् ? जेघ्रीत ॥

**(१७८) चायृ की । [३।४।१४।१५।]** यङि स्यात् । चेकीयते । चेकीतः ॥

**(१७९) हन्घ्नि हिंसा । [३।४।१४।१६।]** यङि हन् घ्नि स्याद्धिंसा चेद् गम्यते । जेघ्नीयते । जेघ्नीतः । हिंसायां किम् ? जङ्घन्यते । जघ्नीते । शृदीच्चान्तः ॥१४॥

**कः प्रत्युपात् सुड् वि चतुष्पदि त्वपादधृष्टान्नवासार्थिनि णम्युपाल्लवे-४ ऽध्याहारयत्ने विकृते कृ संपरे भूषा समेतेऽपि च नाम्नि तस्कराः ॥३।४।१५॥** वृत्तम् ॥

**(१८०) कः प्रत्युपात् सुट् । [३।४।१५।१।]** हिंसार्थे । प्रतिस्कीर्णं, उपस्कीर्णं [वा] वृषल ते भूयात् । हिंसानुबन्धी विक्षेपो भूयादित्यर्थः ॥

**(१८१) वि चतुष्पदि त्वपाद् हृष्टान्नवासार्थिनि । [३।४।१५।२।]** पक्षिचतुष्पदि हृष्टेऽन्नवासार्थिनि च विषये अपात् क्रः सुट् स्यात् । अपस्किरते वृषभो हृष्टः । [अपस्किरते] कुक्कुटो भक्ष्यार्थी । [अपस्किरते श्वा निवासार्थी । वि चतुष्पदि किम् ? अपकिरते मल्लो हृष्टः । हृष्टादौ किम् ? अपकिरति श्वा ओदनपिण्डमाशितः ॥

**(१८२) णम्युपाल्लवे । [३।४।१५।३।]** तथा लवनेऽर्थे । उपस्कारं लुनन्ति मद्रकाः । विक्षिप्य लुनन्ति । अत एव णम् । लवे किम् ? उपकिरति सः ॥

**(१८३) अध्याहारयत्ने विकृते कृ । [३।४।१५।४।]** गतार्थवाक्यस्योपादाने प्रतियत्ने विकारे चार्थे उपात् कृञः सुट् । उपस्कृतमधीते । सोपस्कराणि सूत्राणि । शाकं पत्रस्योपस्कुरुते । यतते [इत्यर्थः ।] उपस्कृतं भुङ्क्ते, याति । विकृतम् [इत्यर्थः ।] एषु किम् ? उपकरोति ॥

**(१८४) सम्परे भूषासमेतेऽपि च । [३।४।१५।५।]** भूषणसमवायेऽर्थेऽपि च उपात् सम्परेश्च कृञः सुट् । संस्करोति । समस्करोत् । संचस्कार । एवं पर्युपात् । [परिष्करोति । पर्यस्करोत् । परिचस्कार । उपस्करोति । उपास्करोत् । उपचस्कार ।] समवाये । तत्र नः संस्कृतं समुदितम् ॥

**(१८५) नाम्नि तस्कराः । [३।४।१५।६।]** कृत सुडागमा निपात्यन्ते । वृत्तत्रयषट्पदीह-

रौ रोऽत्र तस्करबृहस्पतिदेव वा चेदाश्चर्यमास्पदमनित्यप्रतिष्ठयोस्तु ।
विर्विष्किरो न च रथाङ्गमपस्करोऽगः कारस्करोऽकुसुमितोऽत्र वनस्पतिः स्यात् ॥१॥

प्रासुं प्रतिगोश्च नदीरथस्याऽजस्तुन्दकास्तीरपुरप्रमाणम् ।
किष्कुश्च कुस्तुम्बुरुधान्यकं स्यात् पारस्करो मस्करदेशवेणू ॥२॥

आसेवितासेवितमासु गोष्पदं सहायवार्तापुरुषेऽग्रग्रामिणि ।
प्रतिष्कशः स्यात् सततेऽपरस्पराः पुरी च किष्किन्धगुहाष्ववस्करः ॥३॥

वर्चस्को च हरिश्चन्द्रप्रस्कण्वौ च ऋषी लघोः ।
चन्द्रोत्तरपदे मन्त्रे परि ब्राह्मस्करीं तथा ।
प्रायश्चित्तिरन्योन्यं प्रायश्चित्तं परस्परम् ॥४॥

असुश्छन्दोर्थम् । तत्करोति तस्करः, चौरश्चेत् । बृहतां पतिः बृहस्पतिः, देवता सुरगुरुश्चेत् । कस्कादित्वात् सः । क्विणः पत्वम् । एवमुक्तेष्वर्थेषु । तत्कारादिरन्यः । लघोश्चन्द्रोत्तरपदे सुट् । समन्त्रेऽर्थे सुश्चन्द्रः । अन्त्यार्धं मतान्तरेण ॥१५॥

**क्यचीदोऽशनात्तुं धनातृष्युदन्यो वृषाश्वस्य सुग्मैथुनेऽत्तुं त्वसुक् च्वौ ।**
**मनोरू रहश्चक्षुचेतोरजस्सिच्च दीधीयि वेव्यप्यलुक्ज्डिच्चनारेङ् ॥३।४।१६॥**

**हलादेस्त्यु वाव्यश्च सन्वीटि रुद्विन्मुषः सीग्नितस्त्वि क्लिशो मृणमदो गु-**
**त्कुषो वर्तृषो मृष्कुशश्चेटि वार्णोर्विजः कापशित्तिङ्क्षु पीलिट्यङोः प्याय् ॥३।४।१७॥)**
**अष्ट्यं भुजङ्गद्वयं वा ॥**

*( १८६ ) **क्यचीदः** । [ ३।४।१६।१। ] अ ईत् स्यात् क्यचि परे । पुत्रीयति । मालीयति॥*

( १८७ ) **अशनात्तुम्** । [ ३।४।१६।२। ] अशना क्यच्याकारान्तः स्यात् तदत्तुम् । बुभुक्षितो भोक्तुमिच्छतीत्यर्थः । अशनायति । अशनाय अत्तुं किम् ? अशनीयति दानाय ॥

( १८८ ) **धना तृषि** । [ ३।४।१६।३। ] तथा धनायति । तत् तृषायां किम् ? धनीयति दानाय ॥

( १८९ ) **उदन्यः** । [ ३।४।१६।४। ] निपात्यते । तत् तृषि किम् ? उदकीयति ॥

( १९० ) **वृषाश्वस्य सुग्मैथुने** । [ ३।४।१६।५। ] तत् तृषि । वृषमश्वं चेच्छति मैथुनाय । वृषस्या गौः । अश्वस्यति वडवा । मैथुनेऽर्थे किम् ? वृषीयति ॥

( १९१ ) **अत्तुं त्वसुक्** । [ ३।४।१६।६। ] क्यचि असुक् तथा सुक् स्यात् तृषि, अत्तुमिच्छतीत्यर्थे । दध्यस्यति । मध्वस्यति । दधिस्यति । [मधुस्यति ।] लवणस्यति । अत्स इत्यषत्वम् । अत्तुं किम् ? दधीयति । [मधूयति ।] क्षीरीयति । [लवणीयति] ॥

( १९२ ) **च्वौ** । [ ३।४।१६।७। ] अ ईत् स्यात् । घटीकरोति । एवं [घटी-]भवति । [घटी-] स्यात् । मालीकरोति । [मालीभवति । मालीस्यात् ॥]

( १९३ ) **मनोरूरहश्चक्षुचेतोरजस्सिच् च** । [ ३।४।१६।८। ] एषामसुग् इल्लुक् च । कृतसिच् चक्षुच्छन्दोर्थम् । उन्मनीकरोति । [उन्मनीभवति । उन्मनीस्यात् ।] अरूकरोति । [अरूभवति । अरूस्यात् ।] रहीकरोति । [रहीभवति । रहीस्यात् ।] उच्चक्षूकरोति । [उच्चक्षूभवति । उच्चक्षूस्यात् ।] सचेतीकरोति । [सचेतीभवति । सचेतीस्यात् ।] रजीकरोति । [रजीभवति । रजीस्यात् ॥]

( १९४ ) **दीधीयि[ वेवी ]** । [ ३।४।१६।९। ] दीधी अस्य ई लुक् स्याद् इयि इवर्णयकारादौ परे । वेवी तथा आदीधिता । आवेविता । आदीध्यते । [आवेव्यते ।] आदीध्य [गतः । आवेव्य] गतः ॥

( १९५ ) **अप्यलुक्क्डिच्च नारेङ्** । [ ३।४।१६।१०। ] अपि अपिति प्रत्यये परेऽस्य लुक् कित् डित् एतदन्तानां दीधीवेव्योश्च अवर्ण आ आर् एङ् न स्यात् । आदीध्यनम् । आवेव्यकः । अलुक् । गणयति । कित् । मगध्यति । मगधकः । कुसुम्भिता । ङित् । सरिसृष्टः । [मरिमृष्टः ।] लोलुवः । मरीमृजः । अपिति किम् ? रोरवीति ॥१६॥

( १९६ ) **हलादेस्त्यु वाव्यश्च सन्वीटि** । [ ३।४।१७।१। ] हलादेर्धातोरव्यश्च, अवकारयकारान्तस्य, सनि क्त्वि चेडादौ परे, त्यु ईद् ऊत् अरेङ् वा न स्यात् । लिलेखिषति ।

लिलिखिषति । दिद्योतिषते । [दिद्युतिषते ।] लिखित्वा । [लेखित्वा । विलिख्य । विलेख्य ।] हलादेः किम् ? एषिषिषति । एषित्वा । त्यु किम् । विवर्तिषते । तित् यु किम् ? दिदीयिषते। अच्यः किम् ? दिदेविषति । [दुद्यूषति ।] इटि किम् ? बुभुक्षते । भुक्त्वा ॥

**(१९७) रुद्विन्मुषः । [३।४।१७।२।]** तथा नित्यम् । रुरुदिषति । रुदित्वा । एवं, [विविदिषति । विदित्वा । मुमुषिषति । मुषित्वा ॥]

**(१९८) सि । [३।४।१७।३।]** सादौ सनि अवर्ण अरेङ् स्यात् । सिसृक्षति । [सिसृप्सति ।] तितृप्सति । चिकीर्षति । चिकृप्सति । चिचीषति । बुभुत्सति ॥

**(१९९) इग्नितस्त्वि । [३।४।१७।४।]** इक्कृतयणिकः न्लुकश्च क्त्वीटि नारेङ् । वद्-उदित्वा । वस्-उषित्वा । गृहीत्वा । नित् । लुचित्वा । गुफित्वा ॥

**(२००) क्लिशो मृण्मृदो गुत्कुषः । [३।४।१७।५।]** तथा । क्लिशित्वा । [मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा ।] एषां किम् ? देवित्वा ॥

**(२०१) वर्तृषो मृष्कृशश्च । [३।४।१७।६।]** तथा वा ऋदादेः । ऋत् सौत्रः । ऋतित्वा । अर्तित्वा । एवं [तृषित्वा । तर्षित्वा मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा ।] चकारात् क्रुधित्वा, नित्यं व्यवस्थितत्वात् ॥

**(२०२) इटि वोर्णोः । [३।४।१७।७।]** प्रोर्णुविता । प्रोर्णविता । प्रोर्णुनुविषति । [प्रोर्णुनविषति ।] इटि किम् ? प्रोर्णवनम् ॥

**(२०३) विजः । [३।४।१७।८।]** नारेङ् नित्यमिटि । उद्विविजिषति । उद्विजिता । इटि किम् ? उद्वेजनम् ॥

**(२०४) कापशिन्तिङ्क्षु । [३।४।१७।९।]** किति शिति ङि ति तिङि चापिति धातोर्नारेङ् । कृतम् । चितम् । स्तुतम् । ङिति । अशिश्रियत् । अदुद्रुवत् । शिति । चिनोति । चिन्वन् । चिनुयात् । तिङि । कुरुतः । कुर्वन्ति । अतिति किम् ? हरति । नयति । करोति । अपिशित्तिङ्क्षु अधिकारो जगन्हनिति यावत् ॥

**(२०५) पी लिट्यङो प्याय् । [३।४।१७।१०।]** प्याय् पी स्यात्, लिटि यङि च । [पीनं मुखम् । पीनौ बाहू ।] आपिप्ये । आपिप्यिरे । आपेपीयते । आपेपीतः ॥१७॥

**श्वेः श्याच्यणिक् संश्चङि णौ च वा वेड् ह्वश्चङ्यपि स्वप्कि सडोग्रहिप्रच्छ-।**
**स्यम्व्योर्वचः सोऽणिति पुण्व्यचां यिक् किं वच्यजादेर्व्यधिज्याग्रहां प्रच्छ् ॥३।४।१८॥ वृत्तम् ॥**

**(२०६) श्वेः श्याच्यणिक् । [३।४।१८।१।]** परो वात्र श्वर्यण् सह वा इक् स्याद् वा लिट्यङो ॥ शुशाव । शुशुवतुः । शिश्वाय । [शिश्वियतुः ।] शोशूयते । शोशवीति । शेश्वीयते । साजप्रकृत्यर्थम् । अप्ययत्यर्थम् ॥

**(२०७) संश्चङिणौ च वा । [३।४।१८।२।]** संश्चङ्परे णौ तथा । शुशावयिषति ।

शिश्वाययिषति । अशूशवत् । अशिश्वयत् ॥

**(२०८) वेड् । [३।४।१८।३।]** तथेड् वा स्यात् । अधिजिगापयिषति । अध्यापिपयिषति । अध्यजीगपत् । अध्यापिपत् ॥

**(२०९) ह्वः । [३।४।१८।४।]** साच्यणिञ नित्यं तथा । जुहावयिषति । अजूहवत् । जिह्वाययिषति न, व्यवधानात् ॥

**(२१०) चङि । [३।४।१८।५।]** प्रत्याहारात् चङ् लिट् सन् यङि हित्वहेतौ ह्वः साच्यणिक् स्यात् । जुहाव । जुहुवतुः । जुहूवति । जोहूयते । जोहवीति ॥

**(२११) अपि स्वप् कि । [३।४।१८।६।]** अपः साच्यणिक् चप्छपि वि किति च । असूषुपत् । वचनाद् व्यवधानेऽपि । सुषुपतुः । सुषुप्सति । सोषुप्यते । सोषुपीति । अपि किम् ? सुष्वाप । कितः । सुप्तः । सुप्त्वा ॥

**(२१२) सङोग्रहिप्रच्छस्यम्व्योः [।।३।४।१८।७।]** ओस्तिनिर्देशाद् ग्रहिप्रच्छि इत्येकं पदम् । स्यम्व्येङिति द्वितीयम् । अनयोः साच्यणिक् स्यात्, सङोः सनि यङि । जिघृक्षति । विपृच्छिषति । तथा, सेसिम्यते । सेसिमीति । वेवीयते । वेवयीति ॥

**(२१३) व्यचः । [३।४।१८।८।]** व्यचेरसुस् निपात्यते यणिग् न । उरुव्यचाः । शिरोव्याच्यः ॥

**(२१४) सोऽणिति पुण्व्यचां यिक् । [३।४।१८।९।]** पुणादीनां, व्यचश्च य इक् सो यिक् स्याद् अणिति प्रत्यये परतः । स इति इक् । इगेव स्यात् । पुणावेदोऽरेङ् । पुपुणिषति । पुणितुम् । विचिता । वेविच्यते । अणिति किम् ? पाणयति । पुपोण कीटकः । व्याचयति । स किम् ? न्यनुवीत् । न्यनुवीत । इ यु वादेशे स इगस्ति, न बाध्यते ॥

**(२१५) किं वच्यजादेः । [३।४।१८।१०।]** साच्यणिक् । उच्यते । ऊचुः ।

यजोवहोऽर्चोद्धरणे डुवप् ह्वेञ् वेञ् स्पर्धतन्तौ तु विभाषिताः स्युः ।
वसो निवासे वद व्यक्तवाचि टुओश्विगत्यामतङानिनो वृत् ॥१॥

इज्यते । इष्टः । उह्यते । ऊढम् । संवीयते । [संवीतः ।] उवप्यते । उप्तः । हूयते । [हूतः ।] उयते । उतम् । उष्यते । उषितम् । उद्यते । [उदितम् ।] स्तूयते । स्तुतम् । किति किंवचनम् ॥

**(२१६) व्यधिज्याग्रहाम् । [३।४।१८।११।]** साच्यणिक् स्यात् । कापशितियुपूर्वोक्तेषु । विद्धम् । विध्यते । वेविध्यते । विध्यति । जीनम् । [जिनाति । जेजीयते । जीनवान् ।] गृहीतम् । [गृह्णाति । जरीगृह्यते । गृहीतवान् ।] गृह्णाति । एषु किम् ? व्यद्धा । जाता ॥

**(२१७) प्रच्छ् । [३।४।१८।११।]** उत्तरार्थम् ॥१८॥

**व्रश्चभ्रस्जोऽलिडयङि वशोऽश्विस्यमोर्लेऽपि वादे-**
**स्तेषां वेर्वाऽपिति न यिकि वाच्यः परे प्ये तयोर्ज्यः ।**
**दीर्घो वोऽच्च्वौ य्यगपशि तृरी शे रियक्क्याशि हलोर्**
**यङ्न्यृस्कृच्छां च लिटि निवृहेर्नित्वनर्चाञ्चितो हल् ॥३।४।१९।] मन्दाक्रान्ता ॥**

**( २१७ ) व्रश्चभ्रस्जोऽलिडयङि वशः । [ ३।४।१९।१।]** क्रमेण प्रच्छादेरलिटि कापशित्तिङि साच्यणिक् स्यात् । पृच्छ्यते । परीपृच्छ्यते । पृच्छति । पृष्टः । वृश्च्यते । [वरीवृश्च्यते । वृश्चति ।] वृक्णः । ऊः क्विप् वेञ् निपात्येते । ऊः उवौ । भृज्यते । [बरीभृज्यते । भृज्जति । भृष्टः ।] अलिटि किम् ? पप्रच्छुः । [वव्रश्चुः । बभ्रज्जुः ।] तथा वशेः । उश्यते । उशितम् । उष्टः । उशन्ति । ऊशुः । अयङि किम् ? वावश्यते ॥

**( २१८ ) अश्विस्यमोर्लोऽपि वादेः । [ ३।४।१९।२।]** उक्तेकाम् अश्विस्यमीनां लाविति लिटि पिति द्वित्वे कृते, आदेः पूर्वस्य साच्यणिक् स्यात् । सुष्वाप । सुष्वपिथ । जग्राह । [जग्रहिथ ।] विव्याय । [विव्ययिथ ।] विव्याच । [विव्यचिथ ।] उवाच । [उवचिथ ।] इयाय । [इययिथ ।] उवाय । [उवयिथ ।] प्रच्छादेः । पप्रच्छ । [पप्रच्छिथ ।] अनादिहलो लोपं बाधते । उवास । अश्विस्यमोः किम् ? शिश्वाय । [शिश्वयिथ ।] सस्याम । [सस्यमिथ ॥]

**( २१९ ) तेषां वेर्वाऽपिति । [ ३।४।१९।३।]** अपिति लिटि तेषां प्रकृतेर्नित्यं वेञो वा साच्यणिक् । विविचुः । ऊचुः । ईजुः । इत्यादि । विविधुः । जिज्युः । जगृहुः । व्रच्छव्रश्चभ्रस्जोऽलिट्यप्युक्तम् । जसुः । अस्य म एव । सस्यमुः । वेर्वा । ऊवुः । ववुः । वेः किम् ? नित्यं ऊयुः । अपि किम् ? ववौ । वविथ । र्नोऽपि चादेः । कृते अकृतेः पित्यादेरेवेति नियमात् । तेषां नित्यं वेर्वा प्रकृतेरर्थादपि । तथाऽन्यथापि चादेर्व्यर्थः स्यात् । तथा च अपिग्रहणात् वेङः पिचादेरिति न स्यात् ॥

**( २२० ) न यू । [ ३।४।१९।४।]** वेर्वयि सति य इग् न स्यात् । उवाय । ऊयुः । सात् किमित्येव सिद्धं चेत् । उ इकीति पाठः ॥

**( २२१ ) इकि । [ ३।४।१९।५।]** यण इकि सति पुनर्नेक् । वीतः । विध्यति । वृश्चति ।

**( २२२ ) वाच्यः परेः प्ये । [ ३।४।१९।६।]** परिप्येञ् । नेश्वाक्त्वादेशे प्ये । परिवीय । परिव्याय ॥

**( २२३ ) तयोर्ज्यः । [ ३।४।१९।७।]** तयोर्व्ये ञेत्वकोर्ज्यश्च प्ये नित्यं नेक् । उपव्याय । प्रव्याय । प्रज्याय ॥

**( २२४ ) दीर्घोऽवः । [ ३।४।१९।८।]** क्ङापसिचिङि इत इग्दीर्घः स्याद् अवेञः । वीतः । हूतवान् । जीनः । जीत्वा । अवः किम् ? उमतः । वेरवत् किम् ? चितम् । स्तुतम् । विचति इत्यादौ न, व्यवधानात् । अष्ठिमारौ । मघसत् । अषत्वे षत्वे सिद्धम् । म वातो मृज्यं षत्वं स्तोरित्युक्तं नत्वसिद्धौ न स्यात् । अतः स्कादीत् स्तौ चोक्तत्वे कर्तव्ये नत्वमसेच्च क्रयि कुत्वम् ॥

**( २२५ ) अच्च्वौ य्यगपशि । [ ३।४।१९।९। ]** च्वौ यादौ चापिच्छिति क्ङिति दीर्घोऽत् स्यात् । शुचीकरोति । [शुचीभवति ।] पटूकरोति । [पटूभवति ।] भृशायते । सुखायते । वल्गूयते । तोष्टूयते । अपशिति किम् ? प्रकृत्य । चिनुयात् ॥

**( २२६ ) तृरी । [ ३।४।१९।१०। ]** तित् ऋ तृ री स्यात् च्वौ ये च क्ङिति । मात्रीभूतः । पितरि साधुः, पित्र्यः । होत्रीयते । ऋत् किम् ? चेकीर्यते । निजेगिल्यते ॥

**( २२७ ) शे रियक्क्याशि । [ ३।४।१९।११। ]** तृ रि स्याद् एषु । आद्रियते । क्रियते । ह्रियात् ॥

**( २२८ ) हल्रो र् । [ ३।४।१९।१२। ]** हलः ऋसंयोगादेः रुक्रगतावस्य च यञ् वा श्येऽर् स्यात् । स्मर्यते । अर्यते । स्मर्यात् ॥

**( २२९ ) यङि । [ ३।४।१९।१३। ]** तथा । सास्मर्यते । [अरार्यते । सास्वर्यते । दाध्वर्यते ।] एषु किम् ? इयृयात् । नप्त्रीयते । हल् वा ते किम् ? संस्क्रियते । संस्कृयात् ॥

**( २३० ) ऋस्कृच्छां च लिटि । [ ३।४।१९।१४। ]** हलश्चार् । विचकरुः । संचस्करुः । आनर्च्छ । आनर्च्छतुः । सस्वरुः । दध्वरुः । आरतुः । आरुः । अप्राप्ते वचः । संचस्कृवान्, कित्त्वात् ॥

**( २३१ ) निबृहेर्न्नित्तु । [ ३।४।१९।१५। ]** बृहेर्नु इत्तु न च, लुग्वेत्यर्थः, प्रत्यये परे । निबर्हति । निबर्हकः । निर्वहिता । निबृह्यते । न च । निबृंहति । [निबृंहकः । निबृंहिता ॥ निबृंह्यते ।] इदित्वादप्राप्ते वा । वृहु अर्थान्तरे ॥

**( २३२ ) अनर्चाञ्चितो हल् । [ ३।४।१९।१६। ]** हलन्ताद्धातोर्नित् स्यात् । क्ङापशित्तिङि; अपूजाञ्च् इदितः । समक्नौ शकुनेः पादौ । उदक्तमुदकं कूपान् । अस्तः । ध्वस्तः । स्रस्यते । [ध्वस्यते ।] सनीस्रत्यते । ग्रन्थाति । मग्नः । हलः किम् ? नीयते । श्रन्थ्यात् । अनर्चाञ्चितः किम् ? अर्चिता गुरवः । अर्चितमिव शिरो वहति । इत् । नन्द्यते । काङ्क्ष्यते । काङ्क्षादिरित्करणादनेकहलोऽपिल्लुक् लिटीत्वेरेव । दध्वंसे । एषु किम् ? स्रंसिता ॥१९॥

**लङ्गिकपेरुपतापविकारे त्वीटि थलुञ्च्वचि फाञजनशो वा-।**
**ऽस्कन्तस्यदिनस्त्यि हल्यगि शाश्श्येऽद्लौ य्युत्कूहिकि क्यासि हलावेत् ॥३।४।२०॥ दोधकम् ॥**

**( २३३ ) लङ्गिकपेरुपतापविकारे । [ ३।४।२०।१। ]** उपतापे तद्विकारे च शरीरस्यार्थे नित् । विगलितो, विकपितो ना । तयोः किम् ? विलङ्गितः । [विकम्पितः ।] इतो नुम् ॥

**( २३४ ) त्वीटि थलुञ्च्वचि फाञ्जनशो वा । [ ३।४।२०।२। ]** इडादौ त्वि थान्तलुञ्चिवञ्चिफान्तानां निद् वा, जान्तनशानां चानिटि पार्थक्यात् । श्रन्थित्वा । श्रथित्वा । एवं, गुम्फित्वा । [गुफित्वा ।] इटि किम् ? लुक्त्वा ॥ जनशः । भङ्क्त्वा । रङ्क्त्वा । नंष्ट्वा ॥

**( २३५ ) अस्कन्तस्यदिनस्त्यि । [ ३।४।२०।३। ]** अस्कन्दिस्यन्देर्नित् स्यात् त्यि । तयादौ

क्त्वि । श्रस्त्वा । ध्वस्त्वा । अवस्रस्य । [अवध्वस्य ।] नाभ्याम् । स्कन्त्वा । [स्यन्त्वा ।] अवस्कन्द्य । [अवस्यन्द्य ।] त्यि किम् ? स्रंसित्वा । स्यन्दित्वा ॥

**( २३६ ) हल्यगि शास् । [ ३।४।२०।४। ]** शासेरक् इ स्यात् क्ङापशित्तिङि, हलि अङि च । शिष्टः । शिष्यते । शेशिष्यते । मित्रशीः । मित्रशिषौ । तिङि । शिष्टः । शिषाः । अङि । अन्वशिषत् । अन्वशिषताम् । शास् किम् ? आशास्ते । हलङि किम् ? अनुशासति । क्ङिति किम् ? शास्त्रम् । अपशित्तिङि किम् ? शास्ति ॥

**( २३७ ) श्येऽद्लौ । [ ३।४।२०।५। ]** शीङोऽगे स्याददिति लौ, अलिटि क्ङापशित्तिङि । शेते । शयाते । शेरते । शयानः । अलिटि किम् ? शिश्ये ॥

**( २३८ ) य्य् । [ ३।४।२०।६। ]** शीङोऽगय् स्याद् यादौ किङि । शय्यते । शाशय्यते । शय्या । अधिशय्या । क्ङिति किम् ? उपशेयम् ॥

**( २३९ ) उत्कूह् । [ ३।४।२०।७। ]** कित्त्वात् प्रादेरुहोऽगु स्याद् यादौ क्ङिति । समूह्यते । अत्यूह्य । प्रादेः किम् ? उह्यते । ऊह् किम् ? समीह्यते । यि किम् ? समूहितः । क्ङिति किम् ? अभ्यूह्योऽर्थः । अक् किम् ? आ ऊह । ऊह । समोह्यते ॥

**( २४० ) इकि क्यासि । [ ३।४।२०।८। ]** कीति कित्त्वात् प्रादेरिण् इ स्यात् क्यासि । क्यो लघु । उदियात् । समियास्ताम् । तथा, समेयात् । क्यासि किम् ? समीयते ॥

**( २४१ ) हलावेत् । [ ३।४।२०।९। ]** भ्यस्वृत्तेः संयोगादेरात् क्यासे स्याद् वा । ग्लेयात् । ग्लायात् । हल्भ्यः किम् ? यायात् ॥२०॥

**दामाङ्स्थासागापिब्हाकाम् ॥३।४।२१॥ द्विगम् ॥**

**( २४२ ) दामाङ्स्थासागापिब्हाकाम् [ ।३।४।२१।१। ]** क्यासेन्नित्यम् । देयात् । वेयात् । एवं, [मेयात् । स्थेयात् । सेयात् । गेयात् । पिबेत् । हेयात् ।] दाप । दायात् । [पायात् ।] माङ्पिब्हाक् किम् ? मायात् । [पायात् । हायात्] ॥२१॥

**अल्प्ये हलीदा क्तिवि लुक्सनो वा यक्या तनो ये जन्सनखनां स्सञ् -।**
**झल्ल्यात् तु धद्दध्विक्रमोश्च शूच्छ्वौ ज्वर्त्वर्मवश्रिव्यवक्वं च पादः ॥३।४।२२॥ वृत्तम् ॥**

**( २४३ ) अल्प्ये हलीत् । [ ३।४।२२।१। ]** क्ङापशिति हलि लादेश क्त्वादेशप्य-वर्जितोदादेरीत् स्यात् । दीयते । देदीयते । [ मीयते । मेमीयते । स्थीयते । तेष्ठीयते । सीयते । सेषीयते । गीयते । जेगीयते । पीयते । पेपीयते । हीयते । जेहीयते ।] अध्यगीष्ट । अध्ययीषत । तथा दायृपातियाहाङाम् । दायते । [पायते । यायते । हायते ।] अल्प्ये किम् ? अदात् । अधीय, इत्यादि ॥

**( २४४ ) आ क्तिचि लुक्सनो वा । [ ३।४।२२।२। ]** षणोऽन्तो लुगा वा स्यात् क्तिचि । सतिः । सातिः । सन्तिः ॥

**(२४५) यक्या तनः । [३।४।२२।३।]** वा । तायते । तन्यते । यकि किम् ? तन्तन्यते ॥

**(२४६) ये जन्सन्खनाम् । [३।४।२२।४।]** क्ङापशितित्ङि ये आ वा । जायते । जञ्जन्यते । सायते । संसन्यते । खायते । चङ्खन्यते ।] जातः । [सातः । खातः ] श्ये नित्यम् । जायते । क्ङापशितित्ङि किम् ? जन्यम् ॥

**(२४७) स्सनि झल्ल्यात् तु । [३।४।२२।५।]** सादौ सन्किङ्यापशितित्ङि च झलि नित्यमेषाम् आ स्यात् । जिजासति । [सिषासति । चिखासति ।] जातः । [सातः । खातः ।] स्सनि किम् ? सिसनिषति ॥

**(२४८) धद्दध् । [३।४।२२।६।]** दध् तथा धत्स्यात् । धत्तः । धत्थः । धद्ध्वे । सञ्झलि किम् ? दधति ॥

**(२४९) विक्रमोश्च शूच्छ्वौ । [३।४।२२।७।]** क्विप् क्रमि तत् सझलि वा वा च्छ्वौ श ऊच् स्तः । शब्दप्राट् । विट् । पाप्रश्मि । पाप्रश्मः । वेवेशिम । [वेवेश्मः ।] प्रश्नः । विश्नः । पृष्टवान् । पापृष्ठः । तथा, अक्षद्यूः । हिरण्यद्यूः क्तावदेव चादष्टे । क्तौ । दद्यूः धौतः । धौत्वा । द्यूतः । [द्यूतवान् । द्यूत्वा ।] देद्युमि । देद्यूमः । दुद्यूषति । सञ्झलि किम् ? दिदेविषति । देवित्वा ॥

**(२५०) ज्वर्त्वर्मर्वश्रिव्यवक्वं च पादः । [३।४।२२।८।]** तत् तथैषाम् ऊका सह । जूः । जूरौ । जूर्तिः । जूर्णः । तूः । [तूरौ । तूर्तिः । तूर्णः ।] मूः । मुवौ । मूतिः । श्रूः । [श्रुवौ । श्रूतिः ।] ऊः । [उवौ । ऊतिः ।] सञ्झलि किम् ? शिश्रेविषतिः ॥४॥ **पादो द्वादशः ॥**

**[इति] श्री बुद्धिसागराचार्यकृत[ पञ्चग्रन्थ्यां संस्कृताधिकारे तृतीयाध्याये चतुर्थः, आदितो वा द्वादशः, पादः ।]**



## [ ॥ अथ चतुर्थोऽध्यायः ॥ ]

### [ ॥ अथ प्रथमः पादः ॥ ]

**ञमन्तस्याग्दीर्घो वा क्रमस्त्व्या विड्वनोर्ज्रमः स्तौ**
**वन्निहनां मिल्लुक् प्ये राच्छ्वौ जनहङ्सो गङ्खनोऽ-।**
**नङ्क्यः टि्लटि वा समुच्चये गमात् क्वौ वल्बौ व्यो वेः**
**पित्यशले लघोस्तुक् क्त्वाप्योऽनञीद् वाऽत्र तु मेऽदजग्धः ॥४।१।१॥ वृत्तम् ॥**

**( १ ) ञमन्तस्याग्दीर्घः । [ ४।१।१।१। ]** स्यात् क्त्वौ तज्झलि वाऽक्किचि । प्रशान् । प्रशामौ । प्रदान् । [प्रदामौ ।] शान्तः । शान्ति । दान्त्वा । शात । [शात्वा ।] ञमः किम् ? ओदनपक् । क्त्वादौ किम् ? गन्ता । अक्किचि किम् ? शन्तिः । तन्तिः ॥

**( २ ) वा क्रमस्त्वि । [ ४।१।१।२। ]** तथा । क्रान्त्वा । क्रन्त्वा । झलि किम् ? क्रमित्वा । उपक्रम्य ।

**( ३ ) आ विड्वनोर्ज्रमः । [ ४।१।१।३। ]** अग्रेगाः । अब्जाः । अविजावा । अग्रेगावा ॥

**( ४ ) स्तौ वन्निहनां मिल्लुक् । [ ४।१।१।४। ]** लुगेषां सादितवर्गादौ क्त्वापशिचि घक्किचि वनिः । अनिटामाह । समतः । रतिः । हतः । हषः । गतः । तनाम् । ततः । अतत । अनथाः । सनथाः । क्वसुक्तः । क्षतकृत् । इत्यादि । एषां किम् ? शान्तः । दान्तवान् । स्तौ किम् ? तन्यते । ञमः किम् ? पक्वः । क्त्वादौ किम् ? यन्ता । क्तिचि । रन्तिः ।

**( ५ ) प्ये । [ ४।१।१।५। ]** तथैषां प्ये । प्रणत्य । प्रयत्य । प्रणम्य । प्रयम्य ॥

**( ६ ) राच्छ्वौ । [ ४।१।१।६। ]** लुक् स्तः क्ङ्यादौ । मूर्छा-मूः । मुरौ । मूर्तिः । हुर्च्छाहूः । हूरौ । हूर्तिः । हूर्णः । तुर्वी । धुर्वी । तूः । [तुरौ । तुरः । तूर्णः ।] धूः । [धुरौ । धुरः । धूर्णः ।] क्व्यादौ किम् ? ॥

**( ७ ) जनहङ्सो गङ्खनोऽनङ्क्यः । [ ४।१।१।७। ]** एषां अः अर्णः लुक् स्यात् क्ङाद्यच्यनङि । जग्मतुः । जग्मिवान् । जज्ञे । [जज्ञाते । जज्ञिरे ।] जघ्नतुः । जग्मतुः । चख्नतुः । अनङि किम् ? जन्यते । क्जादौ किम् ? जननम् ॥

**( ८ ) टि्लटि वा समुच्चये । [ ४।१।१।८। ]** टिति लिटि च क्ङिति वाऽचि अवर्णो लुक् स्यात् । दाधितः । जाहितः । लिटि । ययुः । पपुः । किति । गोदः । कुर्युः । अदुः । ङिति । आख्यत् ॥

**( ९ ) गमात् क्वौ । [ ४।१।१।९।]** लुगन्तः स्यात् । अत्र दिगम् गंयंतंमंऊंचेत्यादेः ॥१॥ कलिङ्गंगत् । संयत् । एवं [परीतत् । सुमत् । अग्रेगूः ॥]

**( १० ) वल्बौ व्यः । [ ४।१।१।१०।]** वलि क्विबादौ च व्य वयौ लुक् स्तः । दिदिवान् । दिदिवांसौ । कण्डूः । लोलूः । ऊयी । क्नूयी । ऊतम् । क्नूतम् । क्नोपयति । वल्बौ किम् ? क्नूयिता ॥

**( ११ ) वेः । [ ४।१।१।११।]** उत्सृष्टानुबन्धो लुक् स्यात् । पटीकरोति । अश्वति । घृतस्पृक् । अर्धभाक् । अग्निचित् । लुक् ॥

**( १२ ) पित्यशले लघोस्तुक् । [ ४।१।१।१२।]** अशिल्लादेशे पिति लघोः तुगागमः स्यात् । उपचित्य । प्रकृत्य । अग्निचित् । प्रातरित्वा । अशले किम् ? पिपक्षति । बिभर्ति ॥

**( १३ ) क्त्वा प्योऽनञि । [ ४।१।१।१३।]** क्त्वा प्यः स्याद् अनञि अनञ्समासे । प्रस्थाय । विलाय । अनञ्समासे किम् ? अकृत्वा । अहृत्वा । नञ्वत्प्रादिः किम् ? परमकृत्वा ॥

**( १४ ) इद्वाऽञ तु मे । [ ४।१।१।१४।]** मेङोऽन्त इद् वा स्यादत्र प्ये । अपमित्य । अपमाय याचते ।

**( १५ ) अदजग्धः । [ ४।१।१।१५।]** प्ये स्यात् । प्रजग्ध्य । अन्तरङ्गविधीन् बाधते । अवाय, प्रदाय, प्रशम्य, प्रपाय, प्रक्राम्य, प्रच्छाय, प्रदीव्य, प्रयाय्य गतः । हित्वदत्वत्वै त्वदीर्घत्वे त्वोत्वादीन् ॥१॥

**कित्तिद्दोसोमास्थां शाच्छो वा हि धाञ् हात् क्त्व्यब्दा दत्तः**
**प्राद्यणभ्यश्च क्तौ ह्लादात् क्ते ।**
**स्फायः स्फी प्रस्त्यास्ती प्राद् मो वा शुब्यचक्षः को वो मः**
**पीत्प्यायन्धूधस्याङः क्षीबाद्याः ॥४।१।२॥ षोडशगम् ॥**

**( १६ ) कित्ति । [ ४।१।२।१।]** किति तदावदः । जग्धः । जग्धिः । जग्ध्वा । कित् किम् ? अत्तव्यम् । तित् किम् ? अद्यते ॥

**( १७ ) इद्दोसोमास्थाम् । [ ४।१।२।२।]** तथैषामिदन्तः स्यात् । निर्दितः । [सितः । मितः । स्थितः ।] माङ् किम् ? मातः प्रस्थः स्थाल्याम् । दोसोनिर्देशाद् यङ्लुकि न । दादिः । [सासीतः ।] कित्ति किम् ? अवदात । प्रदाय ॥

**( १८ ) शाच्छो वा । [ ४।१।२।३।]** तथा । निशातः । [अपच्छातः ।] निशितः । [अपच्छितः ॥]

**( १९ ) हि धाञ् । [ ४।१।२।४।]** धाञ् किति हि स्यात् । हितः । [हितवान् । हित्वा । हितिः] । ञित् किम् ? दाधितः ॥

**( २० ) हात् क्त्व । [ ४।१।२।५।]** हि स्यात् । हित्वा तां गतः । क्त्व किम् ? प्रहाय ।

हात् किम् ? हात्वा । जहित्वा । इटि लोपः ॥

**( २१ ) अब्दा दत् । [ ४।१।२।६।]** अपिद् दारूपः किति दत् स्यात् । अपित्यधार्थम् । अवदातम्, अवदत्तं, मुखम् ॥

**( २२ ) तः प्राद्यण्भ्यश्च । [ ४।१।२।७।]** अब्दात् तः स्याददित् प्राद्यणन्ताः परः प्रादीग्दीर्घश्च हि । प्रत्तम् । प्रवत्तम् । नीत्तः । सूत्तम् । प्राद्यण किम् ? दधि दत्तम् ।

**निदत्तावदत्ते विदत्तप्रदत्ते सुदत्तानुदत्तो प्रभृत्यादि कर्म-।**
**ण्यथो पूर्वयोगादथ प्रादिवृत्त्या परेषामिवात्रापि सूत्रं विनिष्टम् ॥१॥**

**( २३ ) क्तौ ह्लादात् । [ ४।१।२।८।]** ह्लाद आ आम् स्यात् अक्तिचि क्तौ । प्रह्लत्तिः । क्लिति । प्रह्लावि ।

**( २४ ) क्ते । [ ४।१।२।९।]** क्तक्तवतोश्चाधिकारश्चातः । प्रह्लत्तः ॥

**( २५ ) स्फायः स्फी । [ ४।१।२।१०।]** तथा । स्फीतः । [स्फीतवान् ।] क्ते किम् ? स्फातिः ॥

**( २६ ) प्रस्त्यास्ती । [ ४।१।२।११।]** क्ते । प्रस्तीतः । प्रि सति किम् ? संस्त्यानः ॥

**( २७ ) प्राद् मो वा । [ ४।१।२।१२।]** प्रात् परा स्त्यः तौ मो वा स्तः । प्रस्तीमः । [प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् ।] प्रात् किम् ? प्रसंस्तीतः । [प्रसंस्तीतवान् ॥]

**( २८ ) शुष्पचूक्षः को वो मः । [ ४।१।२।१३।]** एभ्यः तयोः कः वः मः स्यात् । शुष्कः । [शुष्कवान् ।] पक्वः । [पक्ववान् ।] क्षामः । [क्षामवान् ।] सादेरसन् वा कुत्वम् ॥

**( २९ ) पीत्प्याय् । [ ४।१।२।१४।]** तिदप्रादि प्याये पी स्यात् । पीनो बाहुः । तित् किम् ? प्रप्यानः ॥

**( ३० ) अन्धूधस्याङः । [ ४।१।२।१५।]** तथा । आपीनोऽन्धुः । आपीनमूधः । अन्धूधसि किम् ? आप्यानश्चन्द्रमाः ॥

**( ३१ ) क्षीबाद्याः । [ ४।१।२।१६।]** क्तक्तवन्तृता निपात्यते । वृत्तमिह-

ट्क्षीबः कृशोल्लाघश्रुतं हविः पयो भित्तं दले ज्ञातधने तु वित्ततो
ख्यामूर्च्छिपृध्योऽपि मदेरमारुते निर्वाणफुल्लः समुदस्तथा गणः ॥१॥

क्षीब कृश उत्पूर्वलाद्युक्तान्तास्तलोपेऽऽभावा निपात्यन्ते । टित् किम् ? प्रक्षीबितः । परिक्षीबः । [प्रकृशितः । परिकृशः । प्रोल्लाघितः । प्रादिसमासादित्येके । असुबन्ताः छन्दोर्थम् । स्वार्थे श्रातेः श्रपयति वा । शृतं हविः, क्षीरं वा । स्वयंद्रावा हेतुः । णे श्रपितं तेन क्षीरं हविः । पयः किम् ? श्राणा यवागूः । भित्तं दले किम् ? भिन्नं सर्वम् । वित्तः ज्ञातधने । वित्तः प्रतीतः । वित्तं धनम् । विन्नमन्यत् । ख्यादेः तौतः स्तो न तु नः । ख्यातः । [ख्यातवान् ।] मूर्तः । [मूर्तवान् ।] पूर्तः । [पूर्तवान् ।] ध्यातः । [ध्यातवान् ।] मत्तः । [मत्तवान् ।] क्तो नः । निर्वातं वातेन ।

निर्वाणो दीपो वातेन । अवातार्थो वातिः । फलात्तयोः लः स्यात् । फुल्लः समुदः तथा सम्फुल्लः, उत्फुल्लः । नान्यप्रादेः । प्रफुल्लाः सुमनसः ॥२॥

**न ओदिद्रादेर्घिति कुश्चजोर्ण्येऽनित्येऽनजां न्यकव इत्युणाद्याः ।**
**श्रादेश्च नाना घणकर्तृभावे ऋभ्योऽप्यचादेर्यह वा द्वितोऽथुः ॥४।१।३॥ वृत्तम् ॥**

**( ३२ ) न ओदिद्रादेः । [ ४।१।३।१।]** क्तयोर्बहुलमन्यच्च । अत्र षट्पात् ।

ओदिद्रोऽपि च हल्यणातो द्यूनो दिवोऽञ्च्वोऽनवधौ च नाशे ।
ग्रासे स्वयं सेदुगु च क्षि दीर्घः ण्ये क्षेपदैन्ये भवने विदोन्द् वा ॥
ह्रीत्रानुदघ्राभ्यवतस्तु शी श्या मूर्तौ प्रते तः स्पृशि निश्च लृतुः ॥२॥

ओदितः । ओलस्जी । लग्नः । [लग्नवान् ।] [ओप्यायी वृद्धौ ।] पीनः । [पीनवान् ।] स्वाद्योदित् । [षूङ् ।] सूनः । [सूनवान् ।] डीनः । [डीनवान् ।] हीनः । [हीनवान् ।] हाङ्हाकः । रात् । आकीर्णः । [आकीर्णवान् ।] आगूर्णः । [आगूर्णवान् ।] दादश्च । भिन्नः । [भिन्नवान् ।] तः किम् ? चरितम् । मुदितम् । हलः पराद् यणः । परादातः संस्त्यानः । [संस्त्यानवान् ।] प्रद्राणः । [प्रद्राणवान् ।] हल् किम् ? यातः । यण् किम् ? स्नाता । आत् किम् ? प्लुतः । धातोः किम् ? निर्यातम् । दिव आद्यूनः । आद्यूने किम् ? द्यूतं वर्तते । अञ्चपूभ्यां क्रमेणानवधौ नाशे चार्थे । समक्नौ शकुनेः पादौ । अनवधौ किम् ? उदक्तमुदकं कूपात् । पूना यवाः । [विनष्टा इत्यर्थः ।] नाशे किम् ? पूतं धान्यम् । पूतं वर्तते । ग्रासेऽर्थे स्वयं कर्तरि पि त्रः । सिनो ग्रासः स्वयम् । ग्रासे किम् ? सिता [पाशेन] शूकरी । सितो ग्रासो त्रा । दुगु च दीर्घः स्यात् । आदूनः । आगूनः । क्षि च । क्षीणः । इदमेषां प्रक्षीणम् । ण्ये च क्षी दीर्घः । प्रक्षीयः । क्षेपादौ क्षि दीर्घो वाऽत्र । ततो नित्यम् । क्षीणायुः । क्षितायुः । क्षिणकः [क्षितकः वा] तपस्वी । [क्षितं] क्षीणं वा [तपस्विनः ।] विद उन्देर्वा न तु दीर्घः । [विन्नः ।] विन्नवान् । क्तवत्वर्थम् । समुन्नः । [समुन्नवान् ।] उन्दिविदि । नत्वे किम् ? विद्यते । वित्तः । ह्र्यादेर्वाः । ह्रीणः । [ह्रीतः ।] त्राणः । [त्रातः ।] नुन्नः । [नुत्तः ।] घ्राणः । [घ्रातः ।] व्यवस्थितवात्वादेव त्रातः । ऋतं सत्यम् । ऋणं शोध्यम् अभ्यवात् परः श्येङ् शी वा स्यान्नस्तु द्विधापि । अभिशीनम्, [अवशीनम्,] अभिश्यानम्, [अवश्यानम्] घृतम् । मूर्तौ वाच्यं वा । मूर्तौ द्रवद्रव्यस्य काठिन्ये नित्यम् । शीतं घृतम् । शीना वसा । प्रतेरमूर्तौ च । प्रतिशीनवान् । तः स्पृशिक्तयोः । तश्च स्पर्शेऽर्थे । शीतो वायुः । श्यानोऽन्यत्र । क्तिक्तयोश्च नः स्यात् । लुत् प्रत्याहाराद् ऋकारान्ताच्च । लूनिः । [लूनः । लूनवान् ।] जीनिः । [जीनः । जीनवान् ।] कीर्णिः । [कीर्णः । कीर्णवान् ।] वाऽपेरपचिरुक्तः ॥

**( ३३ ) घिति कुश्चजोर्ण्ये नित्येऽनजाम् । [ ४।१।३।२।]** घिति परे चजस्यान्तः कुः स्यादनित्येऽन्यवश्यकार्थविहिते ण्ये च, अनजां जादिवर्जितानाम् । पाकः । त्यागः । घे । निपकः । वकः । पाक्यम् । रङ्ग्यम् । अनित्ये किम् ? अवश्यरञ्ज्यम् । वृत्तं त्वजादौ

अजिव्रजिक्वादि गतौ तु वञ्चि, अन्ने तु भोज्योऽथ वचेरशब्दे
योज्योऽथ याज्यो बहुलं यजो ना प्रोपा तु पत्नी समुपांश्चृतुभ्यः ॥१॥

उदाजः । परिव्राज्यम् । क्वादेः -कूजः । खर्जः । वञ्चं वञ्चन्ति वाणिजाः । गतौ किम् ? वङ्कं काष्ठम् । भोज्यः ओदनः । अन्ने किम् ? भोग्यः पटः । वाच्यम् । शब्दे तु वाक्यमिति । यज्ञाङ्गे कुत्वं न स्यात् । प्रादेः परस्माद् यजः । प्रयाजः । अनुयाजः । उपयाजः । उपांशुयाजः । पत्नीसंयाजः । ऋतुयाजः । अयज्ञाङ्गे-प्रयागः । अनुयागः अभ्युद्गः । समुद्गः । इति गमेर्डो भविष्यति ॥

**( ३४ ) न्यङ्क्वः । [ ४।१।३।३। ]** कृतकुत्वा बहुलं निपात्यन्ते । इह षट्पदी च-

न्यङ्कु च तक्रं भृगुमद्गु वक्रम् ।
वाऽर्घोऽवदाघौ च निदाघमेघौ ।
व्यत्यन्ववात् सङ्ग अवानुसर्गः ॥१॥

एवम् उलूकादेः पाकः । अण् तथा । दूरेपाकः । फलेपाकः । घेतीति घणन्तपाके, न समासे । तथा दूरेपाकुः । फलेपाकुः । क्षणेपाकुः । उण् ॥

**( ३५ ) इत्युणाद्याः । [ ४।१।३।४। ]** भ्वादेर्बहुलं स्युः । ये यतस्ते चामी, त्रिंशत्तथा पञ्चदशाधिकेह-

उण् अशूस्वदिसाधिर्ममिपाजिकृ वा सनि हृ चरि जनि चटेस्तलितः ।
कृकवाकुजरायु च शारुकिमः उरणोभृमृतृचरिमस्जितनेः ॥१॥

वसिशीत्रपिपटयसि बन्धेन्दिहन्मनिन्यञ्चिक्लदेर्मनिजन्यचि नाधत ।
नास्किवगुर्वसितश्च फलेः कुरिषेर्भिदि पृ मथि मृध्यधितः ॥२॥

गृधृषिनोऽदिवसश्रप ऊरुः कृ ग्रु तु सिन्धुभृगूपशुरज्जुः ।
आखुबहुशकतर्कुहरिद्रुशङ्कुशरु द्रुतुसित्रपुसुष्ठु ॥३॥

दुष्टुरपष्ठुधनुस्वरुमय्वपत्सुस्वरु च मितद्रु च तुत्सेः ।
गम्मसि संक्ष्यवतकुशिधाऽभृः णिच्चवसेर्जनिननिहिभ्यः ॥४॥

यात्वसुजीवात्रुतु केतु पीतु गात्वेधतुः स्याद् वहतुश्च कारुः ।
क्रतुर्मदीस्तन्पुषिगद्धृपिभ्यः णेरिलुरेणुकृहञो नु [दा-]भः ॥५॥

रेणुवर्णुसूनुविष्णुः वेनुजह्नुवेणुवग्नु-।
स्थाणुनक्षिपोऽनुश्च भुज्जनेदसेर्मनेः क्युः ॥६॥

आतुकु सुत्युधुकित्कृषिह्रीपु मृड्श्य इदं सृ च युः शून श्च प्रः ।
ऊरुरुखरु शच्च मेरु श्मश्रु च शिग्रु च पेरु यवागूः ॥७॥

दूर्भ्रमेरू चमेस्तच्च पश्छः कषे येद्दरि द्रस्तिरो तु हृ जम्बूः ।
शृधुरन्द्लाबूकसेरुरनृत्व तु हन्भुकर्पूश्च कासूदिधिष्वौ तथा ॥८॥

प्रह्वः सर्जूश्च कर्कन्धूः खर्ज्वादिश्च दिवेर्ऋ च ।
ड्रिन्यः पितृननाद्रप्तृभ्रातृदुहितरस्तथा ॥९॥

जामातृमातृस्वसृननृनेष्टृत्वष्टृप्रशास्तृक्षत्तृहोतृपोतृ ।
इः कीगुपान्तात् क्रमदिन्मुनिश्च नभ्रञ्जिवृञ्वस्वपणित् हनेः स्नः ॥१०॥

घस्त्रश्यजो जन्पणतेरिणश्रिवीनीविपक्षीकरि भृमीसखादयः ।
सार्यंगतिभ्योऽथिनुरीथ्रिसञ्जासः थिग्नींदलेर्मिः कुषसेः त्सिरन्ति जूः ॥११॥

रश्मार्मिभूमिशदिरस्त्रिभूस्वदेः क्रिन्कण्मरीच्यञ्जिशकोऽलिजुन्तिचौ ।
अन्तिर्भुवो धाम्यशिवृद्‌धृसृग्रह्यवृतोऽनिः क्षिपणिस्त्वगे र्निः ॥१२॥

श्रिवहिश्रयुवशकुनिर्णि वियो घृणि पार्ष्णि च चूर्णिसृणी ।
विनतच्छविदीदिविदीविकृविच्छविनीर्विव जागृचिजीर्विवशीविधुची ॥१३॥

वृद्रोश्च पातेर्डति हञ्बसेः क्तिन् बह्वस्यमोऽतिगमिरश्च डोडौ ।
डो ग्लानुदेस्तन्द्र च ई च तृ स्तः ययी पपी प्रमी च लक्ष्मीः ॥१४॥

कापाकृदाधाशलिरार्चिमार्चीणभीभ्यः क यूकाभ्रकहाकनेकः ।
उल्का च धूका सृकमुष्कवल्काऽनीकावृकह्रीकभुकोदकानि ॥१५॥

स्नुकोल्मुकस्यमिकाश्च पृथुकः कुश्च भोजहः ।
कृषोर्जार्वा किकद्वृश्चिमृषेराङः पणेः पतेः ॥१६॥

इद्यः स्यमो भीशीङ आनको कृत्तिक्लतेः तिक् च शिघेर्णिको न ।
त्तकन्निषेः स्याद् बलिपत्त आकः श्यामाकखर्जकपिन्मन्तडिभ्यः ॥१७॥

कीकन्नलीषो कु मृदे ॠहीका स्तस्तत्कणेस्तिन्तिडकिङ्कणौ च ।
स्तो जृचरौ जर्जरचञ्चरौ च वुङ्क्रादितो मण्डिशलेश्चणूकः ॥१८॥

उलूको भल्लूको मधूको जलूका समैः खो मुहेः शिखा गः पते गाङ्मुदेर्गृ-
गमेर्गस्तु शृङ्गाङ्गभृङ्गजनेर्घः कचेः च्छः शकादेरटन् स्यात् ॥१९॥

कृतृकृपः कीट जटा च लोष्ठो धातुस्तु ठोऽठश्च कमो ण्ड वृञ्कुः ।
ऊर्णोर्ड नो ञम् कणिमुण्गुणादेः झञ्जृवशेरुन्तशकेः शमेर्ढः ॥२०॥

झट् नन्दिजीवे रुहिसाधिभासेः भूगण्डिहेम्वस्वहिमण्डियद्भ्यः
अद्दोत् तुम श्याहरुहेरिनोऽत भृञादितो रञ्जिपृषेः कतस्तन् ॥२१॥

गृवामलूपूङनदन्हसीणः तान्तो घृतं द्यूतसिते च तातः ।
स्यात् सूरतं च पलितं च जर्तः शंवञ्चिशय्यावसथोऽथ इष्टः ॥२२॥

ऊथं च वृञ्जकुषिगार्त्युषः क्थन् रम्काषिपातृकुषितुद्वचेः स्यृकन् ।
सिच्च स्पृचिर्यूथनिशीथगूथगो वीथपृष्कं समिथो निरूथम् ॥२३॥

न्लोपो युरुन्देस्तनवीपतिभ्यां दः कम्पशेः वृन्दमथापृकुन्दौ ।
श्यादश्च मन्दादिरिनच् हृवस्त्यः श्यादक्षिद्रुभ्यो वृजिनाजिनं च ॥२४॥

इरिणं विपिनं तुहिनं महिनं रशिवृञरुचिरोयुजघश्च हनिः ।
रजिकृवृजिपॄमदिधः क्युडिधः रिधृषेः ब्रध्नुवशितॄकृवृधः ॥२५॥

न सिद्रोः स्वपितो नगुषीणविधाकृषिपृषरितृरतितश्च बुधेः ।
उनदारियमर्जिकृपुः शकुनः फगिफौ गुरिरः सुरपः क्षुलपं विटपः ॥२६॥

विष्टपकुणिपविशिपखजपाः पृपातलेः पजध्वस्तोः ।
युकुसूनां किद्बाष्पं शष्पं शिल्पं च रूपादिः ॥२७॥

श्लक्ष्णं कृणं कृत्स्नं रास्नापि च सास्ना ।
स्थूणापि च वीणा तीक्ष्णं स्नकि रूपम् ॥२८॥

गृश्रोवलिघश्विसिकण् खटेः क्वन् ग्रीवोल्ववशम्बशिवशर्वनिम्बाः ।
शुल्वं च जिह्वापि च बिम्बकाद्याः वल्लूरासिकृगर्दशरोऽभ किच्च ॥२९॥

वृषृष्योर्भः गृदस्त्विणोऽसौ किदूमः गुधेश्चाथो मः क्षियामक्षिणिधृस्तुहूस्तोः ।
पदिक्षोः मना ग्रसग्रहेः स्मक् सूचेः हिधूश्यायुधिधेर्जनेर्मक् ॥३०॥

षुग्वा भियो युञ्जुजितिजाध्मः ग्रीष्मश्च घर्मो क्यतनेः हञो दु कित् ।
आय्यः स्पृहेः स्यन्मद इष्य भुज्जुजे एणाण्यनौ व्रः क्य पुणेर्हिरण्यम् ॥३१॥

पर्जन्यधिष्ण्यशक्यानि या माच्छासससिसोस्तथा ।
जाया कन्या च सन्ध्या च वन्ध्याद्या इह कीर्तिताः ॥३२॥

मद्यङ्क्चित्वाशिमथस्वसेरुरो हृदन्मुग्व्यधेः किदिर्बन्ध्रुधेति-।
म्मदिभ्यः स्थाछ्द्यजेश्च शिशिरः खदिरः शके रक्
तक्वक् च चन्दिचकिमन्दशुभिवृतादिभ्यः ॥३३॥

नीवीछिदिक्षिपिदहः श्वितितृप्मुदि च दीर्घोऽमिदूजितमउद्रउतोस्त्रतुञौ ।
भद्रोग्रकृच्छ्रमथ दभ्र उताग्रशुक्राः धाण्णू सुधो षिमिङिदी च वृध्वधीन्व्रजेरन् ॥३४॥

ट्कत्सूषिमुभ्य इति वृञ्कडिनक्ष्यमो त्रन् मद्यक्ष्वतेः सरः कृधूतनितः तसरोऽरः ।
भ्रम्वासिदेविवद आरकडङ्गिमन्द्रेः मड् भृङ्गकञ्चिमृजिशृङ्ग उरन् क्रमेश्च ॥३५॥

श्रः करः कित् पुषः क्षीय ईरट् च शौट्कृशः ईरग्वशेः कित् ।
कुटीरं पटीरं च गम्भीर ऊरं मसेर्ण्यज्जनोऽरो वदेर्वाच ठोऽदित् तथा ॥३६॥

चक्रठोरोर डोरो घुणेः स्याद् ट्वरः शृकटे चृञ्चतः पीवरं चीवरम् ।
नीवरं तीवरं गह्वरं छित्वरः छत्वरो धीवरः टित्रधश्चक्करम् ॥३७॥

पूरकृपूपिञ्जशबादितोर्म इत्रोत्ररूरोलकलाः पिशंशुः ।
त्रत्वं मिदेः पूपुतमेश्च भूषणं पच्चण्ड आलञ् कुणि पीत आलक् ॥३८॥

क्मलंकुटोऽलं च गमेर्वलज्वलौ श्रियोऽथ शक्तंकृवृभृश्च पल्वल- ।
चषालमाला: शिथिलं च तण्डुल: कीनाशदासाङ्कुशमिल्वलादिका: ॥३९॥

भण्ड्यङ्गिपीयूमञ्जुत ऊषपृकुषं कृतृत ईषश्च शिरम्बरपुर: ।
रुह्यव्यथाविष्टिषकिल्बिषं तथा गम्वं तरीष्यादिसमानिकष्य से: ॥४०॥

वृतृकमेर्हन्वदऋ ष्वृषिस्नुव: सक् चम्युपन्नभ्यदिदो स तुड् विय: ।
कु: पास को दुग्ह सिचे: क्वि दीर्घता श्रिद्रुस्नुजूप्र्वां स वचिप्रच्छेर्गम: ॥४१॥

द्वे व्राज्युरेर्वश्वणित: किजि: स्नुव: चिच्चेऽति मुग्रो न च मुद्गृतद्ग्रहे: ।
युषुह्वस्त्विति श्रोऽदिदर: पृगृच्च डित् त्यद्यत्तमेर्यद्यषसे: कनिवृषे: ।
राज्धन्वतक्षे: प्रतिदिव्द्युवो मन् पृद्बृह्महिभ्य: शत्रि मातरिश्वन् ॥४२॥ षट्पदम् ॥

व्योमन्वेमन्सामन्होमन्त्रोमन्लोमन्पूषन्मज्जन् ।
प्लीहन्नर्वन्नुक्षन्मूर्धन् श्वश्वेत्याद्या: कन्मनन्ता: ॥४३॥

मघवन्निमन्निमिर्गम्पथिमथ्यृभुक्षे: आगम्भुवो णित् परमेस्तु कित्स्थ: ।
छृद्यर्चिछोदे: सृपिशुज्हुरुज्भ्य: इसि द्युतादेरु सिपृवपित्रप् ॥४४॥

जद्धन्यजर्णिशिदिणोऽथ चक्ष: कनस् वसेरिण्विधितोऽसि चन्द्रात् ।
मो डित् पयोध: पुरसो णिदग्वस्दुषो यजे: शो जुरुषे: रमेर्भुक् ।
इण्श्योर्नुपुड्तुट् स्त्ररिय: छदेनुम् ऋ: शुट् च व्याधावुदके नुडिष्ट: ॥४५॥ षट्पदीसूत्रम् ॥

बहुलार्थीयम्

सम्प्रति भूतभविष्यतिकालेऽनद्यतनेऽपि भवन्ति क्रियायाम् ।
कारक एक इमे यत उक्तास्ते परतोऽपि भवन्ति ततोऽन्ये ॥४६॥

अश्वादितलान्तेभ्य: कर्तर्यादावुण् । आशु त्वरितम् । स्वादु: । साधु: । मायु: । पित्तम् । पायुरपानम् । जायुरौषधम् ॥१॥

वसु द्रव्यम् । शयुरजगर: । त्रपु । पटु: । असव: प्राणा: । बन्धु: । इन्दु: । हनु: । मनु: । न्युङ्कु: । नंग: । कन्दु: । मनिजन्यविनो धद् नात्, क्रमेणादिशाश्च । मनेर्मृधु: । जनर्जन्तु । न्यञ्चेर्लुगुक्त: । शित् सर्वार्थ: । नाकु: । वलिफलेर्गु: । वल्गु: मन्ये ज्ञम् । फल्गु: असारम् । इषादे: क्त: । इषु: शर: । भिदुर्वज्रम् । उरोष्ट्यात् । पुरु: समृद्ध: । पृथु: । मृदु: । इग्यण् । विधु: ॥ [२॥]

गृधु: काम: । धृषु: प्रगल्भ: । शसिरप: । कुप् स्याद् अप् । शिशु: । रिपु: । ऊरु: । उ: अते: कु स्यात् । उरादेशश्च । ऊरू। कृगृ अर्ते: कु: स्यात् । उरन्तश्च । कु कुरु: । गुरु: । उरु: । क्तन्ता: समाहारेतरासुबन्ताश्छन्दोर्थम् । स्यन्दुभ्रस्जस्पशसृजीनाम् । सिन्धु: । भृमु: । पशु:] । रज्जु: । आखनिवहे: । आखु: । बहु: । शृकृतिहरिपूर्वो द्रा । शंकि । शुद्रो मित्र पूर्व इण् ।

सु ॥ [३॥]

दुर् अपपूर्वथाः । धनि । स्वृ । मयि । अपपूर्वत्सरि । त्सरिश्च । मितपूर्वो द्रा, दृ वा । एषां शरु इत्यादि निपात्यते । तुत्स्यात् सि आदिः । सेतुः । गन्तुः । मस्तुः । सक्तुः । ओतुः । तन्तुः । क्रोष्टुः । धातुः । भर्तुः । णित् अणिच्च वसेः । वास्तु गृहभूमिः । वस्तुः । एवं जन्तुः । कन्तुः कदर्यः । मन्तुः हेतुः ॥ [४॥]

तुनन्ता निपात्यन्ते यात्वाद्याः । यातुः कामुकः । असुर्याज्ञिकः । जीवेः जीवातुः । ऋकतिपतीनाम् । ऋतुः । केतुः । पीतुः सूर्यः । गातुः । एधतुः पुरुषः । वहतुरनड्वाह् । कारुः । कृञ् । क्रतुरित्यादिरत्र । मदादेर्ण्यः तादि त्नुः स्यात् । मदयित्नुः सीधुः । स्तनयित्नुर्मेघः । पोषयित्नुः कोकिलः । गदयित्नुः वावदूकः । हर्षयित्नुः सुवर्णम् । एणुः स्यात् कृहृञः । करेणुर्हस्तिनी । हरेणुर्गन्धद्रव्यम् । नुः स्याद् दाभाभ्याम् । दानुः दाता । भानुरर्कः ॥ [५॥]

त्वन्ता निपात्यन्ते । रिवृञः । रेणुः । वर्णुः । सुविषः कित्, वेटानत्वम् । सूनुः । विष्णुः । वेनुः । हाञ् जह्नुः । वीस्थो णत्वं च । वेणुः । स्थाणुः । वेतेर्वचे वा गच्च । वग्नुः वावदूकः । नदिक्षिपोऽनु स्यात् । नदनुः मेघः । क्षिपणुर्वायुः । भुजादेः क्युः स्यात् । किदनरेऽर्थः । भुज्युरोदनः । जन्युः प्राणी । दस्युः । मन्युः ॥ [६॥]

आतु कु सु त्यु धु इदं पञ्चकं कित् स्यात् । कुशि-ह्री-इषु-मृड् शीः भ्यः । कृशानु-रग्निः । ह्रीकुः लत्वेन, ह्लीकुर्वाऽधृष्टः । रुक्कुः मृत्युः । शीधुः । सर्तेरयुः । सरयुर्नदी । शुभ अशूसूः । पृणात्तः । पर्शुः । पार्श्वास्थिः । परशुः कुठारः । जनादेर्त्रनिपात्यते । जत्रुः ग्रीवांशः । रुखनिशदेः । रुरुर्मृगः । खरुर्दूर्व्यः । शत्रुः । मित्रु । मेरुः । श्मपूर्वं श्रः । श्मश्रु । शीङ् शिग्रुः, शौभाञ्जनकः । पीङा पेरुः, भास्वरः । यौतेः यवागूः ॥ [७॥]

डूः भ्रमेः, भ्रूः । ऊः स्यात् चमि तन्वदेः, चमूः । कषेः ऊः स्याच्छश्चान्तः । कच्छूः पामा । ऊः स्याद् दरि, द्रूः । इआ लुक् च, दद्रूः । तृद्दगागमश्च, तर्दूः दर्वी । जम्बू आद्युकारान्तः निपात्यते । जमेजम्बूः । श्रृधुः । अन्दूः जलतरणम् । लम्बेरलाबूः । एणणोर्नत्वं च । हम्भेः हन्भूः । द्वन्द्वैकत्वाद् ह्रस्वः । कसेः कसेरुः कासूश्च । दिधेः दिधिषूः पुनर्भूः ॥८॥

प्रह्वः । सर्जूः । कृञ् कर्कन्धूः । खर्जूः । आदिशब्दात् पादूः पादुकेत्यादि । दिवेर्ऋच । देवा । देवरौ । डिद्ऋस्यान्नियः । ना । नरौ । इत्युणादित्वान्नेय् । पित्रादिऋत्रन्ता निपात्यन्ते । पाति । नञ् नन्दि । आपि । भृजि । दुहि ॥ [९॥]

जनिपति । सु असि । नञ् पि । एषाम् । एवं नेष्ट्रादि । इः स्याद् धातोः । रु । कु । दृ । ग्रन्थि । ध्वनि । अव । हृञ् । बल प्राणने सौत्रो वा । एवमादेः । रविः । कविः । दरिः । ग्रन्थिः । ध्वनिः । अविः । हरिः । बलिः । पेषिः । इत्यादिः । किः स्यादिगुपान्ताद् धातोः । कृषिः । शुचिः । रुचिः, इत्यादि । क्रमोऽत्, इच्च । क्रिमिः । मन्यतेर्मुनिः । नभाद् ए णित् स्यात् । णित् रंजेल्लुगर्थम् । नाभिः । राजिः । वारिः । वासिः । वापिः । घातिः । सारिः ॥ [१०॥]

घसाद्यत्यन्तेभ्यः इण् । घासिरग्निः । राशिः । आजिः । जनिर्माता । पाणिः । आतिः गमनम् । अश्रि आदेः सख्यन्ता निपात्यन्ते । आङ् श्रियः । अश्रिः । वियः विः पक्षी । स एव नेर्नी च । नीतिः । प्र ह्ञ् । प्रहिः । कृञ् । कारिः शिल्पम् । भ्रम् भृमिर्वायुः । सपूर्वस्य ख्यातेः सखिः, इत्यादि । सृण्यन्ताः । अगि अति च्यः अथिन् उरि इथि स्युः । सारथिः । अङ्गुरिः । लत्वेन अङ्गुलिः । अतिथिः । सञ्ज् असेः थिक् । सक्थि । अस्थि । नीदले मिः । नेमिः शकटम् । दल्मि वस्त्रम् । कुषि असेः । किस्तिः । कुक्षि । अक्षि । अर्तेरन्ति च । अरतिः हस्ती ॥ [११॥]

रश्मिः । ऊर्मिः । भूमिः । इति म्यन्ताः निपात्यन्ते । रशेः शत्वम् । अर्तेः ऊत्वम् । शद्लृरात्यां त्रि । शत्रिः कुञ्जरः । रात्रिः । भूसूअदिः क्रिन् । भूरिः । [सूरिः । अद्रिः ।] कण्मृङः इचिः । कणीचिः लता । मरीचिर्मयूखः । अञ्जिशकेरलिच्उन्तिचौ क्रमेण । अञ्जलिः । शकुन्तिः पक्षी । अन्तिर्भुवः । भवन्ति कालः । धामादेरनिः । [धमनिः] गलशिरा । अशनिः । वर्तनिः तर्कुद्रव्यम् । धरणिः । तरणिः । सरणिः पन्था । ग्रहणिः पङ्क्तिस्थानम् । अवनिः । अरणिः समुद्रः । क्षिपणिः आयुधम् । अनदेङ् । अगेर्निः श्र्यादेश्च । अग्निः ॥ [१२॥]

श्रेणिः । वह्निः । श्रोणिः । योनिः । शकुनिर्निपात्यते । वियो णिः । वेणिः । ण्यन्तो घृण्यादिर्निपात्यते । [घृणिः । पाष्णिः । चूर्णिः । सृणिः । विनतः छव्यादेर्निपात्यते । छदेः छविः त्वक् । दिवेः दीदिविः स्वर्गः । दीविश्च श्वापदम् । एवं कृवि, आदि ॥१३॥

वृद्रश्च विन् । वर्विः शकटम् । दर्विः तर्दूः । पातेर्डतिः पतिः पाता । दृञ्बसेः क्तिन् । दृतिः चर्ममयी । बस्तिः मूत्राशयः । वहादेरतिः वहतिर्गौः । वसतिर्ग्रामसंनिवेशः । अमति कालः । गम्लृराभ्यां डोडै स्तः । गौ । रै । असुबन्तौ । ग्लौनुदेः डौं । ग्लौश्चन्द्रः । नौः । तन्द्रादि ई । तन्द्री मूर्च्छा । अवीः । तरीः अग्निः [? प्लवः] स्तरीः मर्मः [? धूमः] । एवं ययीरित्यादि । [ययीः] अश्वः । [पपीः] रविः । अश्वकमलार्थाः । लक्ष्मेर्मुट् च ॥१४॥

कादेः कः । [काकः ।] पाकः बालः । कर्कः वर्णविशेषः । दाको यज्ञः । धाक ओदनः । शल्कः मुद्गः । राका पौर्णमासी । अर्कः रविः । मर्कः वायुः । एकः । भेकः । कान्तं यूकादि निपात्यते । अर्तेः [? ओषतेः] उल्का । सृकम् उत्पलम् । मुष्कः वृषणः । वल्कः त्वक् । इष्टित्याद्यन्येऽपि ॥ [१५॥]

धातोः ण्कुः । क्षिणः क्षिपकः । योद्धा लिखकः । लघेर्लङ्कः मालाकारः । धमः सौत्रः । धमकः धर्मकरः । इत्यादि । हाक् जहश्च जहकः । लावकः । कृषेरच् अर् चाचः स्यात् । कर्षकः । कार्षको वा कुटुम्बी । वृश्चिमूषेः किकन् । वृश्चिकः । मूषिकः । एवम् आपणिको वणिक् । आपतिकः कालः ॥ [१६॥]

ईद्यः स्यमः । स्यमेर्य इच्च । सीमिको वृक्षः । भीशीभ्यामानकः । भयानकः । शयानकः अजगरः । कृदादेः तिक् च । इति कित् तिकः स्यात् । कृत्तिका । भित्तिका कुड्यः । लतः सौत्रः । लत्तिका गोधा । शिघेर्णिक् । नञ् । शिघेर्णिकः स्यात् । नशादेशश्च । नासिका । शिघिर्नश्रोण इति वा पावः नाशस्तावः । इषेः क्तकन् । इष्टका । बलशलिपतेराकः । बलाका । [शलाका ।

पताका ।] शीङः । श्यामाकः । खजाकः । मनाकः । तडाकः । पडेः पिन्निपातनात् ॥ [१७॥]

अलीषः कीकन् । अलीकं ललाटम् । इषीका तुलाश्रयः । मृदेः कुश्चागमः । मृद्वीका दाक्षाः । ऋहीका निपात्यते । तत्कणौ तिन्तिडकिङ्कणौ च स्तः । तिन्तिडिका । [किङ्किणिका] घण्टिका । जृचरौ जर्जरचञ्चरौ स्तः । जर्जरीकः । [चञ्चरीकः ।] एवं वाल्मीकादि । क्रादेर्वुन् । करकः । सरकः । नरकः । इत्यादि । मण्डिशलेर्णूकः । मण्डूकः । शालूकम् उत्पलम् ॥१८॥

णूकान्तोलूकादिनिपातनम् । अर्तेः [? वलेः] उलूकः । भल्लूको हिंस्रः । जलूका [जलौका] इत्यादि । शमेः खः शङ्खः । मुहेः ख रूचान्तः । मूर्खः । शिखा निपातनम् । पतेरङ्गः । पतङ्गः । मुदे गाङि । मुद्गः । गृ । गमेर्गः । गर्गः । शृअञ्जिभृञादि गान्तम् । [शृङ्गः । अङ्गः । भृङ्गः ।] जनेर्घः । जङ्घा । कचेः च्छः । कच्छः पार्श्वः । शकादेरटन् । शकटम् । अवटः । कुलटा इत्यादि ॥१९॥

कृतृकृपः कीटः । कृत्रोरिर् । किरीटः । तिरीटं वेष्टनम् । कृपीटम् । एवं जनेर्जटा । लुटेर्लोष्ठः । धातोस्तु ठः । वडेः वण्ठ इत्यादि । कमेरठश्च । कमठः । कण्ठः । वृकृभ्यामण्डः । वरण्डः मुखरोगः । करण्डः । ऊर्णोर्डः । ऊर्णा । ञमन्तादेर्डः । चम् । चण्डः दुर्जनः । अण्डः । दण्डः । रण्डा । षण्डम् । मण्डम् । ञमन्तात् सिद्धे कुणाद्यनरेङ्निपातनार्थम् । कुण्डम् । मुण्डम् । गुण्डम् इत्यादि । जृविशेर्झच् । झोऽन्तः । जरन्तः महिषः । वेशन्तः वल्लभः । शकेरुन्तः । शकुन्तः [पक्षिः] । शमेर्ढः । शण्ढः ॥२०॥

झट् नन्दादेः । टिच्चर्थः । नन्दन्ती सुखी । जीवन्ती ओषधी । रोहन्तो वृक्षः । साधन्तो भिक्षुः । भासन्तः सूर्यः । भवन्तः कालः । णान्तौ गण्डयन्तः मण्डयन्तश्च । ओदन्तः । हेमन्तः । वसन्तः । वहन्तो रथः । जयन्तस्तरुविशेषः । अद्भ्योऽत् । अप्सु तुम् । श्यादेरिनः । श्येतः, हरितश्च वर्णांशः । रोहितो मत्स्यभेदः । लत्वेन, लोहितो रक्तः । अतो भृञादेः । भरतः । दर्शतः सोमः । यजतः वह्निः, इत्यादि । रञ्जिपृषेः कतः । रजतं रौप्यम् । पृषतो मृगः ॥ तन्-[॥२१॥]

ग्रादेः । गर्तः । वातः । मर्तः लोकः । लोतः । पोतः बालः । अन्तः । हस्तः । एतो वर्णः । तान्तनिपातनम् । अञ्चेः [अक्तम् ।] घृतम् । द्यूतम् । सितम् । ततेः तातः । सुरमेः । सूरतं मुखसंवासः । फलेः पलितम् । जनेर्जर्तः, इत्यादि । शमादेरथः । [शमथः] समाधिः । वञ्चथः कोकिलः । शयथः । आवसथः, इत्यादि ॥२२॥

वृञ्भ्यामूथः । वरूथः बलसम्पातः । जरूथः अग्रमांसम् । कुषादेः थः । कोष्ठम् । गाथा । उषः ओष्ठः । रमादेः क्थः । रथः । काष्ठम् । पीथमम्भः । तीर्थम् । कुष्ठम् । तुत्थं वह्निः । उक्थं साम । सिक्थं विष्ठा । ऋक्थं द्रव्यम् । व्जान्तस्तथादि निपात्यते । समिण् । समिथः अग्निः, इत्याद्यन्येऽपि । अवभृथं यज्ञावसानम् ॥२३॥

उन्देर्यु न्लोपश्च । ओदनः । वीपतिभ्यां तनः । वेतनं भृतिः । पत्तनम् । कम्शपेर्दः । कन्दः । झलो जश् । शब्दः । दान्तं वृन्दादि निपात्यते । वृञ् वृन्दम् । आपेः [अब्दः ।] कमेः [? कौतेः] कुन्दः । श्यायतेः श्यादः सुवर्णम् । मदेर्मनेर्वा । मन्द इत्यादि । हृञादेरिनः । हरिणः

मृगः । अविनः [अध्वर्युः ।] स्तेनः । श्येनः । दक्षिणा । द्रविणम् । वृजेः । वृजिनम् । कुटिनं पापं च । अजेरजिनं चर्म ॥२४॥

ईरेरीरिणम् उषरम् । वपेर्विपिनं गहनम् । तुहेर्तुहिनम् । महेर्महिनं महत्त्वम् । रशादेर्युः । रशः सौत्रः । रशना । वरणः वृक्षविशेषः । रोचना । रवणो जलकुम्भः । हन्तेर्जघश्च । जघनं कटिः । इतो रजादेः क्युट् । रजनं रङ्गः । रजनी रात्रिः । किरणः । वृजनम् अन्तरिक्षम् । अन्येषामपि, दीर्घः । पूरणः समुद्रः । मन्दनम् । निधनम् । धृषेरित्वम् । धिषणा बुद्धिः । ब्रधादेर्नः । ब्रध्नो रविः । पर्णम् । वस्नो मूल्यम् । तर्णः समुद्रः । कर्णः । वर्णः । धानाः ॥२५॥

एवं सेना । द्रोणः । [स्वप्नः] स्वपनम् । नक् उषादेः । उष्णम् । इनः स्वामी । ऊनो विकलः । धेनः समुद्रः । कृष्णः । पूर्णः । रतः सौत्रः । रत्नः । बुध्नः । उन दार्यादेः । दारुणः । यमुना । अर्जुनः । करुणा । वरुणः । लत्वेन, वलुनः । शकुनो निपातनम् । गुरिराभ्यां फकइफौ । लत्वेन, गुल्फः, प्रपदम् । रेफः । सर्तेरपः क्सु च । सर्षपः । अपान्तम् उलपादि निपात्यते । सर्तेः [? वलतेः] उपलं जलं [? कोमलतृणम्] । विटपः ॥ [२६॥]

विशः विष्टपः स्वर्गः । वशेः विशिपं गृहम् इत्यादि । पृपातलेभ्यः पः । पर्पं गृहम् । पापम् । तल्पं शय्या । ऊ चान्तः स्तौतेः । स्तूपः । युकुसूनां कित् पः । यूपः । कूपः । सूपः । पान्तं बाष्पादि निपात्यते । वसेः वाष्पं लतृणम् । शिलेः शिल्पम् । रौतेः रूपम् इत्यादि ॥२७॥

श्लिषादेः स्नक् निपात्यते । श्लक्ष्णम् अल्पम् । कृणः कृत्स्नम् । रसेः रास्ना ओषधिः । स्यतेः [? सस्तेः] सास्ना ग्रीवास्थायीति जाता [चर्मकम्बली] । स्थूणा । वीणा । तीक्ष्णम् इत्यादि ॥२८॥

गृश्रोवलिघश्विसिकण् । खटेः क्वन् । खट्वा । क्वनन्तं ग्रीवादि निपात्यते । वल्लादेरभः । वल्लभः । रासभः । करभः । गर्दभः । शरभः । लत्वेन शलभः ॥ [२९॥]

किच्चाभः वृषिऋषेः । वृषभः, ऋषभः, श्रेष्ठः । गृदृभ्यां भः । गर्भः । दर्भः । इणः असौ भः, कित् । इभः करी । ऊमः गुधेः । गोधूमः । चरिप्रथेरमः । चरमः । प्रथमः । क्ष्यादेर्मः । क्षेमम् । यामः प्रहरः । यक्ष्मः क्षयो रोगः । नेमम् अधस्तात् । धृ । धर्मः । ऋ । अर्मः अक्षिरोगः । सोमः । होमः । स्तोमः । पद्मम् । क्षोमम् अतसी वासः [वस्त्रम् । भामः क्रोधः] रविश्च । आ चातो ग्रसिग्रसेः ग्रहेः । ग्रसति गृह्णाति वा बुद्ध्यादीनिति ग्रामः । सूचेः स्मक् । सूक्ष्मम् । ह्यादेर्मक् । हिमम् । धूमः । श्याम । युध्मः शरः । इध्मः काष्टम् । जन्म ॥३०॥

भियो वा षुगागमः । भीष्मः । भीमः । युजिरुजितिजां षष्ठीवृत्तेः कुत्वं चान्तस्य । युग्मम् । रुग्मम् । तिग्मं तीक्ष्णम् । अधगघृणाम् । अधमः । ग्रीष्मः घर्म, इत्यादि मगन्तम् । किदयस्तनेः । तनयः । हञो दु किदागमश्च हृदयम् । आय्यः स्पृहेः । स्पृहयाय्यः । ते अपरतोऽपीत्युक्तेः, श्रवाय्यः, इत्यादि । मदेः स्यः । मत्स्यः । भुजिरुजेरिष्यः कित् । भुजिष्यं [भोग्यम् ।] रुजिष्यं दीप्तम् । वृऋभ्यामेण्याण्यनौ । वरेण्यः श्रेष्ठः । अरण्यं वनम् । पुणेः क्यः । पुण्यम् । अन्यान्तं हिरण्यादि निपात्यते । ह्रो हिरण्यम् ॥३१॥

पृञ् । पर्जन्यः । धाञ् । धिष्ण्यं गृहम् । शकेः [? शलेः [कः] । शक्यं [? शल्कं] तुषारोपणम्, इत्यादि । मादेर्यः । माया । छाया । सस्यं सारम् । सव्यो वायसः [? वामः] यान्तं जायादि निपात्यते । जनेर्जाया । कमेः कन्या । स्यदेः [? सन्धेः] सन्ध्या । वधेः वन्ध्या, इत्यादि ॥३२॥

मदादेरुरः । मन्दुरा । अङ्कुरः । चतुरः । वाशुरा निशा । मथुरा । स्वसेः । सु । स्वरः । [असेः] असुरः । उरः हृदर्द् च । दर्दुरः । मुकिव्यधिः उरः कित् । मुकुरो दर्पणः । विधुरो विगुणः । किदिरः बन्धादेः । बधिरः । [रुधिरम् ।] तिमिरम् । मदिरा । स्थिरः । छिदिरः । अजिरो वायुः । शृस्खदेः । शिशिर । खदिरः, इत्यादि । शकादे रक् । शक्रः । तक्रम् । वक्रम् । चन्द्रः । चक्रम् । मन्द्रः । शुभ्रम् । वृत्रम् ॥ [३३॥]

नीरम् । वीरः । छिद्रम् । क्षिप्रम् । दहः तरुणः । श्वित्रं सितं कुष्ठम् । तृप्रः पुरोडाशः । मुद्रा । अमादेः दीर्घश्च । आम्रः । दूरम् । जीरो वह्निः । ताम्रम् । रगन्तम् उद्रादि निपात्यते । उन्देः उद्रः पशुजातिः । अभ्रम् । उस्रम् । भद्रम् । उचेः उग्रः । कृतेः कृच्छ्रम् । ददेर्दर्भः [? दभेर्दभ्रः ।] अचेः [? अगेः] अग्रः । शुचे शुक्रः । जस् एचामाद्यर्थम् । भियो भेरी । गुरेः गौरः वर्णः । वप्रः प्रासादपः । धादे रक् । धीरः । सूरः । सुरा । धुरा । षिमिचेः ङिदी चान्तः । सीरं हलम् । मीरो जलधिः । चीरम् । वृधादे रः । वध्रम् । इन्द्रः । वज्रम् ॥३४॥

स्वादे रक्, टित् कित् त्रः । सूत्रम् । उष्ट्रः । मूत्रम् । वृञादेरत्र । वरत्रा । कडत्रं भार्या । लत्वेन कलत्रम् । नक्षमतौ । नक्षत्रम् । अमत्रम् । मदादेः सरः । मत्सरः । अक्षरम् । वत्सरः समाः । संवत्सरः । क्रादेः कित् । कृसरः । धूसरः रुक्षः । तसरं कुविन्दद्रव्यम् । अरो भ्रमादेः । भ्रमरः । वासरो दिनम् । देवरः । बदरम् । आरः कडादेः । कडारः पिशङ्गम् । अङ्गारः । मन्दारः । मणिः भृङ्गारः । कञ्जारो यूपः । मार्जारः । शृङ्गारः । क्रमेरारन् उच्च । कुमारः ॥३५॥

शृतः करः । शर्करा । पुषः कित् । पुष्करम् । क्षीय ईरङ् । क्षीरम् । शौडिकृशृभ्य ईरः । शौडीरं गर्वः । करीरः । लत्वेन करीलः वंशाङ्कुरः । शरीरम् । वशेः कित् । उशीरं वीरणः मूलम् । ईरान्तं गम्लृ [? गाधृ] णेः । गम्भीरम् । [गभीरम् ।] कुम्भीरम्, इत्यादि । ऊरः मसेः, मसूरः । जनेररः, ठान्तश्च । जठरम् । वदेः ठो वा । वठरः । बदरी । पावरत् इच्च, वश्च । विवरः स्थाली ॥३६॥

चक्कठोरोरः । चकोरः । कठोरः । छडोरः । घुणेः घोरम् । ट्वरः । श्रादेः । शर्वरी रात्रिः । कड्वरं दधिविकारः । चर्चरः, चत्वरम् अङ्गनम् । ट्वरान्तं पीवरादि निपात्यते । पीवरं स्थूलम् । चिञ् चीवरं हृतिवरं हीनजातिः । णीञ् नीवरं गृहम् । गह्वरम् । छिवरी धूर्तः । छत्वरो निकुजाम्बर इत्यादि । टित् त्रः दाधातः । धात्री । दात्रम् । पात्रम् । पत्रम् । पोत्रम् । तोत्रम् । नेत्रम् । वस्त्रम् । छत्रम् । भस्त्रा, जादौ । शास्त्रम् । शस्त्रम् इत्यादि । कुवः किद्रः । कुररः ॥३७॥

प्रत्येकमादियोगात् । प्वादिरादिकृपादिपिञ्जादिशबादिभ्यो यथासङ्ख्यं इत्र-उत्र-ऊर-ऊलच्-कलाः स्युः । चिच्छन्दोर्थम् । [इत्र ।] पवित्रम् । वहित्रम् । कटित्रम् । इत्यादि । [उत्र ।] रोत्रम् ।

लोत्रम् अपहृतधनम् । पोत्रं शूकरमुखनासा, इत्यादि । [ऊर ।] कर्पूरः । वल्लूरः । खर्जूरः इत्यादि । [ऊल ।] पिञ्जूलः पक्षिजातिः । रगेरन्येषामिति दीर्घः । लाङ्गूलः, इत्यादि । [कल ।] कित् अलः । शबलं चित्रं कमलम् । वृषलः शूद्रः । उदः पाते, उत्पलम् । पटलम् । छः, छलम् । कललम् । केवलम् । शकलं खण्डम् । शमलम् असुरिरित्यादि । सर्ते पिशन् । सपिशम् अग्रमांसम् । चद्यादेस्त्रक् । चित्रम् । अन्त्रम् । मित्रम् । पूञः पु च । पुत्रः । तमेऽलिण् । ताम्बूलः । पतिचण्डेरालञ् । पातालम् । चाण्डालः । कुणिप्रिभ्यामालक् । कुणालम् । प्रियालः तरुविशेषः ॥३८॥

कालकूटः । कुड्मलं मुकुलम् । अलं मगेः । मङ्गलम् । वलञ्वालौ स्तः, शीङः । शैवलम् । शेवालं बालतृणम् । वमादेः शक् । वंशः । कशः । वृशं मूलम् । भृशम् । अलान्ते पल्वलादि निपात्यते । पलेः पल्वलम् । चषिमाङोः । चषालः । माला । शिथिलम् । तमेः तण्डुलः । शगन्ते शकेः कीनाशः कुणपः । दसेः दासः कैवर्तः । अङ्केरुशन् । अङ्कुशः । इलेः इल्वला, इत्यादि ॥ [३९॥]

भण्डादेः ऊषः भाण्डूषः व्याघ्रः । अङ्गूषः पक्षी । पीयम्चु सौत्रौ । पीयूषं देवोऽमृतं च । मञ्जूषा । ऋ अरुषः चञ्चूः । पृणाते कुषः । पुरुषः । कृतृभ्यामीषः । करीषः । तरीषः समुद्रः । शृ अविपृणां शिर्अम्बर्पुर् च । शिरीषः । अम्बरीषं भ्राष्ट्रम् । पुरीषम् इत्यादि । रुहादेः । टिदिषः रोहिषो मृगः । अव्यथिषः सूर्यः । अविषः समुद्रः । किले किल्बिषं पापम् । टीषान्तं निपात्यते । गमेर्गवादेशश्च । गविषः समुद्रः । तरीषी नदी, इत्यादि । सः मन्यादेः । मांसम् । कक्षम् ॥४०॥

वर्षम् । तर्षः समुद्रः । कंसः । हंसः । वत्सः । ऋषादेः सक् । ऋक्षम् । वृक्षः । स्नुषा वधूः । चमादेरसः । चमसः [सोमपानभाण्डम् । अवसः] सूर्यः । यवसः गोभक्तम् । पनसः । रभसः । अदसो व्रीहिः । तुडागमश्च । [अतसः ।] वेतसः । [पतसः] वह्निः । कृञो पासः । कार्पासः । सिचेः कः, दुगागमो हश्चान्तः । सिंहः । श्च्यादेः क्विप्, दीर्घश्चान्तः । श्रीः सुवर्णम् । स्रूः । जूः पिशाचः । [कट-] प्रूः कामचारः । वचिप्रच्छेश्च । स एव । वचोऽथ न यणिक् । वाक् । प्राट् शिष्यः । गमेर्द्वे च । जगत् ॥४१॥

परिव्राट् निपात्यते । क्विपि । वशिवणेः किजिः । वशिक् तन्तुवायः । वणिक् । उरुच्चारणार्थः । स्रुगतौ, अतश्चित् । स्रुच् । मृङ् उतिः । मरुत् । गृत उति, मुद् वा न च वेत्यर्थः । गर्मुत् हेम । गरुत् । तदस्यास्ति, गरुत्मान् । स्रादेरितिः । सरित् । तडित् । रोहित् । योषित्, युषः सौत्रः । हरित् । शृतोऽदिः । शरत् । दृतः षुगागमश्च, ऋकृच्च । दृषद् । त्यजादेः । त्यद् । यद् । तद् । मगागमश्च युषश्चासरदिश्च । युष्मद् । अस्मद् । कनिः वृषादेः । वृषन् गौः । राजन् । धन्वन् मरु-[प्रदेशः] । तक्षन् । प्रतिदिवन् दिवसः । द्युवन् । मन् धातोः । भासः भस्मन् । जनेर्जन्मन् । वृतेः वर्त्मन्, इत्यादि । पृषादेः शतृ । पृषत् मृगः । बृहत् वयुनम् । महत् । मातरिपूर्वस्य श्वयतेः कनिनन्तो मातरिश्वन् निपात्यते । षट्पदी गाथा ॥४२॥

व्ययतेः व्योमन्, इत्यादि मनन्तकनन्तं निपात्यते । आदिशब्दात्-॥४३॥

मघवन् इत्यादि । इमन् धातोः । भृ । भरिमन् इत्यादि । इमिर्गमादेः । गमिन् । पथिन् । मन्थिन् । ऋभुक्षिन् । आगमिभूभ्यां णित् । आगामिन् । भाविन् । परमे स्थः कित् । परमेष्ठिन् । छृदादेरिसिः । छर्दिष् । अर्चिष् । 'इस्मन्त्रन्क्विषु [च]' [पा. अ. ६।४।९७] [इति न] दीर्घः [छृदा-] दिषु । सर्पिष् । शोचिष् । हविष् । रोचिष् । एवं जातादेः ज्योतिष् इत्यादि । उसिः प्रादेः । परुष् । वपुष् । त्रपुष् ॥४४॥

जतुष् पित् । धनुष् । यजूष् । अरुष् । यथासङ्ख्यं इणो णित् चक्षः शित् उसिः । आयुष् । चक्षुष् । वसेः कनस् । उशनस् । इण्विधेरसि । ऊधस् । वेधस् । चन्द्रान्मो डित् । चन्द्रमस् । पयस्पुरसोर्धाश्च । पयोधस् मेघः । पुरोधस् पुरोहितः । अगिवसेर्नित् । आगस् । वासस् । दुषोरसन्तस्य दोष् भुजः । यजेः शान्तश्च । यशस् । जश्चान्त उषे । ओजस् । अमे भुगागमश्च । अम्भस् । इणुश्योर्नुपुडागमौ च । एनस् । शेपस् । स्रुरीभ्यां तुट् च । स्रोतस् । [रेतस् ।] छदेर्नुम् च । छन्दस् । ऋरिति अर्ति, उर्च । उरस् । शुट् चार्थे । व्याधावर्थे । अर्शस् । नुट् चोदकेऽर्थे । अर्णस् जलम् । षट्पदी गाथा ॥४५॥ उणाद्याः समाप्ताः ॥

**( ३६ ) श्रादेश्च नाना घण् । [ ४।१।३।५। ]** वृत्तत्रयं पञ्चपदीह-

शृवायुवर्णेऽपगते रुजस्पृश् व्याधौ विशो मत्स्यबलस्थिरसृ ।
रिद् वा समुद्रद्रुयुदोः क्रुभूवोऽवज्ञा परेर्द्यूतनियष्ट्रतो द्रः ॥१॥

माने पणः द्रुच्छ्व्यभिलूनिरुत्पूः टिद् वेड् क्रमे च व्युपशीन्युदो ग्रः ।
नीवारधान्ये क्रपि चेः कराप्येऽस्तेये कि देहे चिति राशिवासे ॥२॥

सङ्केन बोधः क्षुश्रुवोश्च वेः प्रात् स्रुदो अयज्ञे प्रथनेऽध्वनो वेः ।
छन्दोभिधात्रश्च रवान्मखे संस्तोः प्रात् परिग्राहिसमोऽथ मुष्टौ ॥३॥

क्षेपे न्यवा लिप्सति प्राद् वणिग् वा रश्मावववाद् वर्षविबाध उत्तः ।
न्यादौ वुराच्छादन आप्लुरुभ्यां स्यान्न्यायपर्यायनये क्रमे दृ- ।
ज्ञानाय जालोऽनुदके द्युदङ्कः ॥४॥

शृतो वाय्वाद्यर्थे घण् । शारो वायुः, वर्णश्च । अपगते निवृत्तेऽर्थे । निशारः आवरणः । एषु किम् ? शरः अप् । रुजतीति रोगः । एवं स्पर्शः । वेशः । व्याधिविशोऽत्र किम् ? रोक्ता । [स्प्रष्टा । वेष्टा ।] व्याधादौ कर्तरि । अतीसारो व्याधिः । विसारो मत्स्यः । सरति तेन वा सारो बलम् । सरति कालान्तरम् । [इति] सारः स्थिरोऽर्थः । चन्दनसारः । एषु किम् ? सर्त्वा । क्वातोऽप् । रिद्वेति । अतः परो रिद्विधेः वा स्यात् । समुद्र रुयुदोः । द्रुयुदुभ्यां समुद्भ्यां नित्यं द्र इति । टिद्प्राद्यर्थः । रिद्वार्थः । ततोऽप्रादिभ्यो वा । संद्रावः । [संयावः । संदावः ।] उद्द्रावः । [उद्यावः । उद्दावः ।] उद्वासं नेच्छन्त्येके । दाद्रावः । [दाद्यावः । दाद्दावः ।] द्रवः । [यवः । दवः ।] क्रुभूवः । किद्दतः । प्राद्यप्रादेः रुभुवः । संरावः । प्रादेः किम् ? रवः । भावः । अप्रादेः किम् ? प्रभवः । कथं प्रभावोऽनुभावः ? अप्रादेर्घणेवेति नियम आदिसमासो युज्यते । अवज्ञा परेः । परिभुवोऽवज्ञार्थे रिद् वा । परिभावः । परिभवः । अवज्ञा किम् ? सर्वतोभवनं परिभवः । द्यूतनियः । परेर्णीङः

द्यूतेऽर्थे रिद् वा । परिणायेन शारीन् हन्ति । द्यूते किम् ? परिणयः । तो द्रः । ट्वितोऽप्रादेर्वा । अत्रान्नित्यम् । [प्रदावः ।] परिद्रुतो वा नियः, नायः, नयः । अवनायः । उन्नायः । उन्नयः ॥१॥

मानेऽर्थे सर्वधातोः । तण्डुलावक्षायः । एकस्तण्डुलनिश्चयः । द्वौ शूर्पनिष्पापौ । द्वौ कारौ । रिद् वा । एका तिलोच्छितिः । माने किम् ? एको निश्चयः । पणः । मानेऽनात्वं निपात्यते । शाकपणः । मूलकपणः । पाणोऽन्यत्र । ट्वुच्छ्रिः । टितः श्रियो मित्योरिदुतो वा । श्रायः । उच्छ्रायः । उच्छ्रयः । ट्वुद् किम् ? प्रश्रयः । एवम् अभिलावः । निष्पावः । उत्पावः । अभ्यादेः किम् ? लवः । विलवः । पवः । टिद् वेङ् । इङो घण् टिद् वा स्यात्, ट्यर्थम् । अध्यायः । उपेत्याधीयतेऽतः उपाध्यायः । तद्भार्या उपाध्यायी । उपाध्यायनी । उपाध्याया । क्रमे पर्यायेऽर्थे व्युपाभ्यां शीङः । तव राजविशायः । मम राजोपशायः । तव राजानमुपशयितुं परिपाटीत्यर्थः । क्रमे किम् ? विशयः । [उपशयः ।] न्युदोः गृतः । निगारः । [उद्गारः ।] न्युदः किम् ? गरः । नीवारेति निपात्यते धान्येऽर्थे । नीवाराः व्रीहयः । धान्ये किम् ? निवरा कन्या । क्रपि कृतोऽपि न्युदो धान्ये । निकार उत्कारो [वा] धान्यस्य, विक्षेपः । धान्ये किम् ? पुष्पनिकरः । पुष्पोत्करः । हिंसार्थान्नाभिधानम् । वेः कराप्येऽस्तेये । पुष्पप्रचायः । हस्तप्राप्ये किम् ? वृक्षाग्रे फलप्रचयः । अचौर्ये किम् ? पुष्पप्रचयं करोति हस्तेन चोरः । चिकि च देहादौ । कायो देहः । आकायोऽग्नेः । गोमयनिकायः । [ऋषिनिकायः । चिखल्लिनिकायः ।] ब्राह्मणनिकायः । एषु किम् ? चयः ॥२॥

सङ्घे वा । च्येऽनधोऽधोऽर्थेऽनौत्तराद्यर्थे चिकि च । नृनिकायः । अनधोऽधः किम् ? सूकरनिचयः । वेः क्षुश्रुभ्याम् । विक्षावः । [विश्रावः ।] वेः किम् ? क्षवः । [श्रवः ।] प्रात् स्रुद्रुभ्याम् । प्रस्रावः । [प्रद्रावः ।] प्रात् किम् ? स्रवः । [द्रवः ।] स्तृतः । प्रादयज्ञेऽर्थे । मणिप्रस्तारः । यज्ञे, बर्हिषां प्रस्तरः । प्रात् किम् ? इष्टकानां स्तरः । प्रथने चार्थेऽ वेः । पटस्य विस्तारः । शब्दे वाग्विस्तरः । छन्दोभिधानात् । आस्तारः । प्रास्तारः । विष्टारः पङ्क्ति[च्छन्दः] । त्रश्च रवात् । रितोऽवात् तृतो वा । स्तृणातेर्नित्यं चानुकृष्टत्वात् । अवतारः । अवस्तारः । अवात् किम् ? तरः । प्रतरः । मखेऽर्थे । संस्तावः । यज्ञे किम् ? संस्तवः । प्रादयज्ञेऽपि । प्रस्तावः । प्रात् किम् ? स्तवः । अथ उत्तरपरिग्राहः । दक्षिणपरिग्राहः । मखे किम् ? परिग्रहोऽस्य । समः । संग्राहो मुष्टौ । मुष्टौ किम् ? सङ्ग्रहोऽन्नस्य ॥३॥

न्यवात् । निग्राहः, [अवग्राहः] वृषलस्ते भूयात् । क्षेपे आक्रोशे । निग्रहश्चौरस्य । अवग्रहः पदस्य । लिप्सति प्रात् । पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी । स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी । लिप्सायां किम् ? प्रग्रहोऽस्य । वणिग्वा । वणिग्विषयलिप्सायां च । तुलाप्रग्राहेण चरति वणिक् । वाऽधिकारार्थः । रश्मौ । अश्वादिरज्जौ च । प्रग्राहः । प्रग्रहः । अवात् [वर्षाविबन्धे] । अवग्राहो वृष्ट । वर्षविबन्धे किम् ? अवग्रहः । उत्तः । उद्ग्राहः । [उद्ग्रहः ।] उदः किम् ? ग्रहः । निअदः घण् वा निपात्यते । न्यादः । निघसो वा । वृञः प्रावारः । प्रवरः । आच्छादनेऽर्थे किम् ? प्रवरः । आङ् प्लुरुभ्यां वा । आप्लावः । [आप्लवः । आरावः । आरवः । यथासङ्ख्यं न्यायो नयेऽर्थे, पर्यायो क्रमेऽर्थे निपात्यते । न्ययः पर्यायो वा । वेत्येके । अन्यत्र न्ययः पर्ययः । दृजृभ्याम् । दृणन्ति दारयन्ति दीर्यते वैभिर्दाराः । एवं जारः । आनायो मत्स्यानाम् । जाले किम् ?

अनयः घृतोदङ्कः । अनुदके किम् ? उदकोदञ्चनः ॥४॥

**( ३७ ) अकर्तृभावे । [ ४।१।३।६। ]** अकर्तरि कारके भावे च धातोर्घण् स्यात् । प्रास्यन्ति तमिति प्रासः । पद्यतेऽनेनार्थः पादः । दास्यतेऽस्मै दासः । आहरन्त्यस्माद् रसं वा आहारः । अधिक्रियन्ते क्रिया अत्र आधारः । भावे । पचनं पाकः । त्यागः । अकर्तरि किम् ? पक्ता ॥

**( ३८ ) ॠभ्योऽप् । [ ४।१।३।७। ]** अकर्तृभावे घण् । अत्र षट्पात् ॥

ॠयुग्रहो गम्वृद्दवस्त्रणात् कत् ट्मद्व्यधोऽजः समुदः पशोर्वेः ।
हर्षे प्रसंमद्प्रजने सृ संट्विन्युपर्यमोर्स्वन्हसटोर्निगद्नद् ।
स्वन्पठक्वणोऽन्त्याट्टिरितो विपञ्च्याः न्युब्जव्रजश्चर्वहपण्वृषादेः ॥१॥

ॠकारान्ताद् योः इवर्णोवर्णान्ताद् ग्रहादेश्च । शरः । करः । जयः । नयः । यवः । पवः । गमः । निगमः । वरः । दरः । वसः । रणः । कद्कितः । प्रादेरदः । प्रघसः । विघसः । प्रादेः किम् ? घासः । ट्मद्व्यधः । टिदप्रादिभ्यः । [विद्यामदः । धनमदः । कुलमदः । टित् किम् ? उन्मादः [अव्याधः ।] अजः समुदः । समजः पशूनाम् । समूहप्रेरण इत्यर्थः । पशौ किम् ? समाजः विदुषाम् । उदाजः शकुनीनाम् । वेः । व्यजो पशौ च । हर्षेऽर्थे प्रसं मदः । ट्मदोऽपवादः । प्रमदः, सम्मदः कन्यानाम् । हर्षे किम् ? प्रमादः । [सम्मादः । प्रजने । गर्भग्रहणेऽर्थे सर्तेः । । गवामुपसरः । उपसारोऽन्यः । रिद् वा यमः । सं-टिदप्रादि वि-नि-उप-विशेष्यात् । संयमः । संयामः । एवं [यमः । यामः । वियमः । वियामः । नियमः । नियामः । उपयमः । उपयामः ।] एभ्यः किम् ? आयामः । स्वर्न्हसटः । रिट्टितो वा प्रादेः स्वनः । प्रस्वानः । [प्रहासः ।] रिद् वा नेः गदादेः । निगदः । [निनदः । निस्वनः । निपठः । निक्वणः ।] निगादः । [निनादः । निस्वानः । निपाठः । निक्वाणः ।] अन्त्याट्टिरितः क्वणोऽप्रादेर्वा । क्वणः । [क्वाणः] तथा विपञ्च्याः सम्बन्धे रिद् वा । प्रक्वणः, [प्रक्वाणः] वीणायाः वादनकः । पुना रिदटिदर्थम् । न्युब्जादेः । न्युब्जः । व्रजन्ति तेनात्र वा व्रजः । वहन्ति तेन वहः । रिद् वा । प्रवाहः । आपणन्त अत्र आपणः । वृषादेः । वृषभीकषगोचरसञ्चरादेः । वर्षम् । भयम् । न क्तोऽतः । कषः । निकषः । गावश्चरन्त्यशनेन वा गोचरः । सञ्चरः, इत्यादि ॥

**( ३९ ) पचादेः । [ ४।१।३।८। ]** घः तथा । निपकः । वकः । घिति कुत्वम् । छादेर्घे ह्रस्वः । उरश्छदः । एत्याकुर्वन्त्यत्र आकरः । कृतकृत्वाऽनयोरत्राकृतित्वात्

**( ४० ) हवाः । [ ४।१।३।९। ]** हवादयोऽबन्ता बहुलं निपात्यन्ते । हवादावपि वृत्तं षट्पात्—

ड्भावे हवाऽऽडो युधि निव्युपाचे निपानमाहावते वध्वघातः ।
मूर्तौ घनाङ्गेऽपघनोद्घनोऽध्याधाने गृहांशे प्रघणप्रघाणौ ॥१॥

देशे तथान्तर्घनविद्व्रयोभ्यः स्तम्बाद् घनः कः करणे परेर्घः ।
हन्तेरुपघ्नाश्रय उद्घ पूज्ये सङ्घे गणेऽर्थे निमिते निघः स्यात् ।
ग्लहोऽक्ष एधेकवकेकघण्घाश्चात्तः खनोडो घणि वाऽर्डि रागः ॥२॥

टिदप्रादेर्भावे ह्वेयोऽप्रह्वानम् । हवः । भावे किम् ? आह्वायः । कारके न । आङः । आहयन्तेऽत्र आहवः युधि युद्धे । [युधि] किम् ? आह्वायः । भावे न वर्तते । न्यादेः तथा । निहवः । [अभिहवः । उपहवः । विहवः ।] । न घण् । निपानं कूपतटेषूदकाधारश्चेत् । आहूयन्ते पशवोऽत्र पानाय आहावः । निपातनं किम् ? आह्वायः । हन्तिना सम्बन्धात् टिदप्रादेश्चकाराद् भावे वधः स्यात् । वधो दस्यूनाम् । किञ्च, घातः । तथा घातो उपघाते वर्तते, अटितोऽपि । मूर्तौ काठिन्येऽर्थे घनः । अभ्रघनः । दधिघनः । घनं दधि धर्मे धर्म्युपचारात् । अङ्गे घणि पादे । अपघनः । अपघातोऽन्यः । उद्घनः । अध्याधाने दारुकाष्ठे । [तत्र] किम् ? उद्घातः । प्रघणः, गृहांशे [प्रघाणः], बहिर्द्वारकोष्ठके । [तत्र] किम् ? प्रघातः ॥१॥

तथा यथाभिधानम् । अन्तर्घनः [देशविशेषः] णत्वं वा । अन्तर्घणो देशः । देशे वाहीकेषु वाच्ये किम् ? अन्तर्घातः । विद्रु अयस् स्तम्बाच्च घनः करणेऽर्थे । विहन्यते [अयो] तेन, विघनः । द्रुघनः । द्रुघणो वा । अरिहणादिपदान्तान्नि वा णत्वम् । अयोघनः । स्तम्बघनः । करणे किम् ? विघातादि । कः स्तम्बात् तथा । स्तम्बघ्नः । करणे किम् ? स्तम्बघातः । हन्तेः को वा । गोघ्नोऽतिथिः । परेः परो हन्तिरबन्तो घः स्यात् करणे । परिहन्यतेऽनेन परिघः । [लत्वे पलिघः ।] आश्रये सामीप्येऽर्थे उपघ्नः स्यात् । पर्वतोपघ्नः । ग्रामोपघ्नः । उपघातोऽन्यत्र । उद्घः पूज्यो ना । उद्घातोऽन्यत्र । गणेऽर्थे सङ्घः स्यात्, पशूनाम् । सङ्घातोऽन्यत्र । निमित्ते समारोह-परिणाहेऽर्थे । निघाः वृक्षाः । निघाः शालयः । निघातोऽन्यत्र । ग्रहेग्लहेर्वा ग्लहः । अक्षे किम् ? ग्लाहः । इन्धेरपि एधः । खनेस्तथा इकवक-इक-घण्-घ-डर-ड एते स्युः । आखनिकवकः । आखनिकः । आखाः । आखनः । आखरः । आखः रञ्जेर्घणि रागः । रजनं रजति तेन वा रागः । अर्डि । अनधिकरणे किम् ? रजत्यत्र रङ्गः ॥२॥

**(४१) ट्वितोऽथुः । [४।१।३।१०।]** धातोष्ट्वितस्तथा अथुः स्यात् । टुवेपृ-वेपथुः । टक्षु-क्षवथुः ॥३॥

**क्त्रिमो ड्वितोऽथाभिविधौ तु णिण्णट् स्त्र्यन्योन्यकृत्यां क्त्यकणौ क्रियेच्छे ।**
**ग्लाहाज्य आक्रोशनञोऽनिरङ्क्यप् भिच्छ्याद्दितो युर्णिविदासघट्टात् ॥४।१।४॥ वृत्तम् ॥**

**(४२) क्त्रिमो ड्वितोऽथ । [४।१।४।१।]** ड्वितो धातोस्तथा क्त्रिमः स्यात् । अथार्थस्तद्वानुभावेन कृतेऽर्थे । डुपच् [पाके ।] पाकेन कृतं पक्त्रिमम् । कृत्रिमम् ॥

**(४३) अभिविधौ (तु) णिन् । [४।१।४।२।]** क्रियायाः कात्स्न्येन सम्बन्धे धातोर्णिन् । प्रज्ञादौ णट्णिनः स्वार्थेऽण् । साङ्कूटिनम् । सांराविणम् । सान्द्राविणम् । अभिविधौ किम् ? संरावः ॥

**(४४) णट् स्त्र्यन्योन्यकृत्याम् । [४।१।४।३।]** स्त्रीलिङ्गे [कर्म-]व्यतिहारे धातोर्णट् । टिद् घर्थः । व्यावक्रोशी, व्यावचर्ची वर्तते । बहुलमेव । व्यतीहा, व्यतीक्षा वर्तते ॥

**(४५) क्त्यकणौ । [४।१।४।४।]** स्त्रियामकर्तरि कारके भावे च क्तिः अकण् धातोः स्यात् । भावे । चितिः । कृतिः । करणे- श्रुतिः । इष्टिः । स्तुतिः । बहुलार्थे वुण् रोगाख्यायां

संज्ञाभावे पर्यायार्हर्णोत्पत्तौ स्यात्, न क्त्यादि । रोगाख्यायाम् । विचर्चिका । प्रवाहिका । प्रच्छर्दिका । विशूचिका । आख्यात् तदन्तेन रोगसंज्ञा चेत् । न च । शिरोर्त्तिः । संज्ञायाम् । उद्दाल[क]-पुष्पभञ्जिका । भावे । शायिका, आशिका वर्तते । पर्याये । तव शायिका, ममाशिका, तस्याग्रग्रासिका । अर्हे । सोऽर्हतीक्षुभक्षिकाम् । ओदनभोजिकाम् । ऋणे । पयः पायिकां मे धारयसि । इक्षुभक्षिकाम् [मे धारयसि ।] उत्पत्तौ । इक्षुभक्षिका मे उदपादि । न च । चिकीर्षोत्पद्यते ॥

**( ४६ ) क्रियेच्छे । [ ४।१।४।५। ]** कृञि शेः षः । क्रिया । इच्छा । बहुलम् । कृतिः । कृत्या । इष्टिः ।

**( ४७ ) ग्लाहाज्य आक्रोशनञोऽनिः । [ ४।१।४।६। ]** अतः परोऽनिस्तथा । ग्लानिः । आक्रोशार्थनञः पराद्धातोरनिः स्यात् । अकरणिः, अजननिः, अपठनिः ते वृषल भूयात् । आक्रोशे किम् ? अकृतिस्तस्य कटस्य । तत्र किम् ? मृतिस्ते वृषल भूयात् ॥

**( ४८ ) अङ्क्यप्भिच्छ्याादितः । [ ४।१।४।७। ]** स्त्रियां भिद्यादेरङ् शीङादेः क्यप् स्यात् । [अत्र] सप्तपाद्दोधकमेलयोस्तु-

भिच्छित् स्वार्थे धारा पाते आरा शस्त्र्यां षिद्भ्यश्चिन्तेः ।
पूजेः कुम्बेः चर्चेः कथ्यन्थः का गोधा मेधा श्रद्धा ।
हारा कारा तारा रेखा लेखा चूडा पीडा वस्वप् ।
क्षप् गुहवित्सृज्क्रप् च कृप् स्यात् ॥१॥

क्तेट् गुरुहल्यरडित्वषजागुः शीभृक्रिणौ समज्या मनवित्सोः ।
कृव्रजनेषदिपत्यजटाद्या जागृपरेः सृचरो मृगया रेड् ॥२॥

भिदा छिदा स्वार्थे विदारणे द्वैधीकरणे । [तत्र] किम् ? भित्तिः । [छित्तिः ।] धारा आरा प्रपाते शस्त्र्यां च । [अन्यत्र] धृतिः । अर्तिः । षिद्भ्यः । जृष् जरा । [क्षमुष्] क्षमा । [त्रपुष् त्र-]पा च । घटादि षित् । घटा । चिन्तादेः ण्यन्तान्न युः । चिन्ता । [पूजा । कुम्बा । चर्चा ।] कथा । अन्थः का । अन्तः प्रादेरातः । अन्तर्द्धा । अन्तद्धिः । अन्तर्धानं च । प्रधा । उपधा । संस्था । व्यवस्था । अन्तः प्रादेः किम् ? स्थितिः । गोधादि । एवं वसा, वपा, क्षिपा, गुहा, विदा, सृजा । क्रप् कृप् च । कृपा ॥१॥

क्तस्येट् यतो गुरोर्हलन्तात् । यर् यकादिप्रत्याहारात् । जागर्तेश्च । अदिद् अर्थाद् अः स्यात् । कुण्डा । हुण्डा । ईहा । ऊहा । उक्षा । काङ्क्षा । क्तेट् किम् ? आप्तिः । राद्धिः । दीप्तिः । ध्वस्तिः । स्रस्तिः । यर् । कण्डूया । पटपटाया । गल्भा । पुत्रीया । पुत्रकाम्या । चिकीर्षा । लोलूया । ऋतीया । गोपाया । तथा, जागरा । संस्थितिः । कण्डूतिः । नाड् पूतादिपाठात् । स्त्रियां किम् ? भेदनम् । भवे किम् ? भेत्री । भिदाद्याकृतिगणः । शीङादेर्भावे नाम्नीष्यते । शयनं शय्या । भृत्या । समज्या । मन्या । विद्या । सुत्या । कृत्या । व्रज्या । नेः । निषद्या । निपत्या । यजः । इज्या । अटाद्याः । यङो लुग् निपात्यते । जाग्रादेरारड् । जागर्या । परिसर्या । परिचर्या ।

मृगेर्णेरत्वं च । मृगया । आकृतिगणः ॥२॥

**( ४९ ) युर्णिविदासघट्टात्** ( ॥४।१।४।८।] तथाऽऽतो युः णेः । कारणा । हारणा । वेदना । [आसना । घट्टना] ॥४॥

**श्रन्थवन्दिषोऽन्तक्ष्ङ उकी रमोर्ङौ यूत्यादिप्रश्नोत्तर इणपि क्तिच् ।**
**क्विप् सम्पदादेर्नक यज्व्यधादेर्द्युः छिक्सिवः कर्तरि कुश्च दीर्घः ॥४।१।५॥ वृत्तम् ॥**

**( ५० ) श्रन्थ्वन्दिषः । [ ४।१।५।१। ]** तथा । श्रन्थना । वन्दना । अन्वेषणा । पर्येषणा । इषोऽनिच्छायामेव । इष्टिः । परीष्टिः ॥

**( ५१ ) अन्तर्क्ष्ङ उकिः । [ ४।१।५।२। ]** उ निपातः । तथान्तः प्रादेर्दासंज्ञकात् किः स्यात् । अन्तर्द्धिः । आधिः । आदिः । प्रादिः ॥

**( ५२ ) रमोर्ङौ । [ ४।१।५।३। ]** आप्याद् दः कि, आधारेऽर्थे । शरधिः । इषुधिः ॥

**( ५३ ) यूत्यादि । [ ४।१।५।४। ]** स्त्रियां निपात्यते । अस्मिन् चतुर्गः-

यूतिर्जूतिः सातिर्हेतिः ।
कीर्तिः गीर्तिः पीतिः पक्तिः ॥१॥

युजि दीर्घः । षिञ्सुञ्चादेः सातिः । हन्-कृ-गै-पिबः तान्तात् काङ् । षित्पचोऽङ् च । पक्तिः । पच आकृतिगणत्वाद् ईषद्बाधितः क्तिरत्र । संस्थितिः । कण्डूतिः, इत्यादि ॥

**( ५४ ) प्रश्नोत्तरे इणपि । [ ४।१।५।५। ]** यथाप्राप्तं च स्त्रियाम् । का त्वं कारिमकार्षीः ? कां क्रियां, कां कृत्यां, कां कारिकां, कां कृतिम् [अकार्षीः] ? उत्तरे च-सर्वां कारिमकार्षम् [इत्यादि] । कां गणिं गणनाम् अजीगणः ? सर्वां गणिं, [गणिकां, गणनाम्] अजीगणम् । प्रश्नोत्तरे किम् ? कृतिः ॥

**( ५५ ) क्तिच् । [ ४।१।५।६। ]** स्त्रियां नाम्नि । तन्तिः । रन्तिः ॥

**( ५६ ) क्विप् सम्पदादेः । [ ४।१।५।७। ]** स्त्रियां भावेऽकर्तरि कारके च क्विप् च । सम्पत् । सम्पत्तिः । आपत् । आपत्तिः । प्रतिप्रत् । प्रतिपत्तिः । आकृतिगणः ॥

**( ५७ ) नक यज्व्यधादेः । [ ४।१।५।८। ]** अकर्तृभावे यजादिव्यधादेर्नकौ स्तः । त्विह तस्य षट्पात्

यज्यद्याञ्चः स्वप्प्रच्छिभ्याम् । विच्छ्रक्षात्रः व्यव्युध्हन्भुज् ।
श्रन्थो वान्देः स्थास्त्रापः कः ॥१॥

यज्ञः । यत्नः । याञ्चा । स्वप्नः । प्रश्नः । विश्नः । रक्षणः । नोऽतः गणसमाप्त्यर्थम् । आविव्यन्ति तेन आविधम् । आयुधम् । विघ्नम् । भुग्नः । बहुलमिति । हिमप्राभ्यां श्रन्थेः । हिमश्रयः । [प्रश्रयः ।] अन्यत्र श्रन्थः । अवादुदोरवोदः । [अवोदः । एधः । ओद्मः ।] आखूत्थो

वर्तते । प्रतिष्ठन्त्यत्र प्रस्थः । एवं प्रश्नः । प्रपाकः गणान्तार्थः ॥

**(५८) ट्युः । [४।१।५।९।]** तथा धातोः । पानम् । भोजनम् । इध्मव्रश्चनः । पलाशशातनः । करणः । सम्प्रदानम् । प्रपतनः । अपाद् आप्तम् । गोदोहनी । सक्तुधानी । अधिकरणम् । घदाप्यस्पर्शात् कर्त्रङ्गसुखमित्येको नित्यसमासार्थम् । पयःपानं ओदनभोजनं सुखम् । आप्यं किम् ? बालिकाया उत्थानं सुखम् । स्पर्शः किम् ? अग्निकुण्डस्योपासनं सुखम् । कर्तृ किम् ? गुरोः स्नापनं सुखम् । गुरुर्हि कर्म । अङ्ग किम् ? पुत्रस्य परिष्वजनं सुखम् । मानसी हि प्रीतिः । सुखं किम् ? कण्ठकमर्दनं दुःखम् । पूर्वेण ट्युः सिद्धः । सर्वत्रासमासः प्रत्युदाह्रियते । स च तत्रैव द्रष्टव्यः ॥

**(५९) ष्ठिक्सिवः । [४।१।५।१०।]** दीर्घश्च बहुलम् । ष्ठीवनम् । [ष्ठेवनम् । सीवनम् ।] सेवनम् ॥

**(६०) कर्तरि कुश्च दीर्घः । [४।१।५।११।]** तथा । कारणम् । कर्तरि किम् ? करणम् ॥५॥

**खुकष्णुवः खित्सुभगाढ्यनग्नस्थूलप्रियान्धात् पलितात् कुरच्वेः ।**
**ख्युडत्र भूते करणाद् यजो णिनिन् विक्रियोर्नोपि हनेः स निन्द्ये । [४।१।६।१।] वृत्तम् ॥**

**(६१) खुकष्णुवः खित्सुभगाढ्यनग्नस्थूलप्रियान्धात् पलितात् । [४।१।६।१।]** सुभगाढ्यादिभुवोऽच्वेः च्व्यार्थवृत्ते स्नु उकण् च खित् कर्तरि स्यात् । असुभगः सुभगो भवति, सुभगंभविष्णुः । सुभगंभावुकः । एवं [आढ्यंभविष्णुः । आढ्यंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । स्थूलंभविष्णुः । स्थूलंभावुकः । प्रियंभविष्णुः । प्रियंभावुकः । अन्धंभविष्णुः । अन्धंभावुकः । पलितंभविष्णुः । पलितंभावुकः ।] अच्वेः किम् ? सुभगीभवति । सुभगो भवति । खिन्मुमर्थः ॥

**(६२) कुरच्वेः ख्युडत्र (भूते) । [४।१।६।२।]** तथा । अत्रेति करणे । असुभगं सुभगं कुर्वन्त्यनेनानया वा, सुभगंकरणम् । डी वा । एवम् [आढ्यंकरणम् । नग्नंकरणम् । स्थूलंकरणम् । प्रियंकरणम् । अन्धंकरणम् । पलितंकरणम् । टिड्ङ्यर्थः । अच्वेः किम् ? सुभगीकुर्वन्त्यनेन । च्व्यर्थे किम् ? आढ्यं कुर्वन्ति तैलेन । अभ्यञ्जनार्थविवक्षातो मा [इत्यर्थः] ।

**(६३) करणाद् यजो णिन् । [४।१।६।३।]** स्यात् । अग्निष्टोमेनेष्टवान्, अग्निष्टोमयाजी ॥

**(६४) इन् विक्रियोर्नोऽपि । [४।१।६।४।]** आप्याद् विक्रियोऽपि निन्द्ये कर्तरि इन् स्यात् । सोमविक्रयी । तिलविक्रयी विप्रः । निन्द्ये किम् ? तैलविक्रायः ॥

**(६५) हनेः स निन्द्ये । [४।१।६।५।]** स तथा णिन् । पितृव्यघाती । निन्द्ये किम् ? चौरं हतवान् ॥६॥

**कुमारशीर्षाट्टसमोऽण् चरोर्वाङ् दारोर्डपात् क्लेशतमोभ्य आशीः ।**
**अपुंसि जायापतितोऽपि चिह्ने शक्तौ च टक् हस्तिकपाटवाकोः ॥४।१।७॥**

**( ६६ ) कुमारशीर्षात्** । **[ ४।१।७।१।]** हन्तेर्णिन् । कुमारघाती । शीर्षघाती । निन्द्ये । अभूतार्थं पृथक् । शिरः शीर्षो निपातनात् ॥

**( ६७ ) ट समोऽण्** ( **४।१।७।२।]** संह्लोऽण् टश्चान्तो वाऽऽप्यात् । वर्णान् संहन्ति, वर्णसंघाटः । पदसंघाटः ॥

**( ६८ ) चरोर्वाङ्** । **[ ४।१।७।३।]** आङो हन्तेश्चरोराप्यादण् टश्चान्तो वा । चार्वाघाटः । [चार्वाघातः ॥]

**( ६९ ) दारोः** । **[ ४।१।७।४।]** आप्यान्नित्यम् । दार्वाघाटः । घटिरर्थान्ते वाक्यं च साध्यम् । दार्वाघातश्च मा भूत् । असमाङो घटश्च ॥

**( ७० ) डपात् क्लेशतमोभ्यः** । **[ ४।१।७।५।]** क्लेशतमोऽर्मोऽपाद्धन्तेर्डः स्यात् । तपाच्छकन्ध्वादि । क्लेशमपहति क्लेशापहः पुत्रः । [तमोपहः] सूर्यः । भ्यस् किम् ? दुःखापहश्च ॥

**( ७१ ) आशीः** । **[ ४।१।७।६।]** चेत् हन्तेर्डः स्यात् । तिमिं वध्यात्, तिमिहः । शत्रुहः । आशीः किम् ? शत्रुघातः ॥

**( ७२ ) अपुंसि** । **[ ४।१।७।७।]** कर्तर्याप्याद्धन्तेष्टगुत्तरः स्यात् । जायाघ्नस्तिलकालकः । पतिघ्नी [पाणि-]रेखा । श्लेष्मघ्नं मधु । पित्तघ्नं घृतम् । अपुंस्यमनुष्ये किम् ? आखुघातः शूद्रः । अज्ञि चेति वा पाठः । अचेतने किम् ? चौरघातो हस्ती । न च वा ॥

**( ७३ ) जायापतितोऽपि चिह्ने** । **[ ४।१।७।८।]** चिह्ने लक्षणवति कर्तरि मनुष्येऽपि तथा । जायाघ्नः ना । पतिघ्नी सा । भ्यसस्तस् । कृतघ्नः खलः । शत्रुघ्नः शूरः । सम्भावनीय तल्लक्षणत्वाद् वा चिह्नार्थोऽपि ॥

**( ७४ ) शक्तौ च टक् हस्तिकपाटवाकोः** । **[ ४।१।७।९।]** तथा । हस्तिघ्नः, [कपाटघ्नः] ना । शक्तिगतौ किम् ? विषेण हस्तिघातः । एभ्यः किम् ? चौरघातः ॥७॥

**राजघताऽघपाणिघशिल्पी ट्गः पिबसीधुसुरान्नगराद् घ्न ।**
**हस्तिनि, हुस्त्विपशौ द्दतिनाथात् स्तम्बशकृत् कुरि व्रीहिवत्सः ॥४।१।८॥ दोधकम् ॥**

**( ७५ ) राजघताऽघपाणिघशिल्पी** । **[ ४।१।८।१।]** [राजानं ताडं पाणिं] तान् हन्ति [इति] टग्निपात्यते शिल्पी चेत् । स्त्रियां ङीः । [राजघी । ताडघी । पाणिघी ।।]

**( ७६ ) ट्गः** । **[ ४।१।८।२।]** टितोऽप्राद्यर्मः । ग स्थक् । वक्रगः [?] [गाथकः] सामगी । टित् किम् ? सामसंगायः । अटितो बहुलमित्यन्ये ॥

**( ७७ ) पिबशीधुसुरात्** । **[ ४।१।८।३।]** आभ्यां पः टक् । शीधुपः । सुरापः । ङी च । [शीधुपी । सुरापी ।] नाम्नि सुरापौ ङेन । [सुरापा ॥]

**( ७८ ) नगराद्घ्नो हस्तिनि** । **[ ४।१।८।४।]** टक् । नगरघ्नोऽग्निः । हस्तीं तु कर्ता नगरघातः ॥

**(७९) हृस्त्वि पशौ दृतिनाथात् । [४।१।८।५।]** आभ्यां हृञः इ स्यात् । दृतिहरिः, नाथहरिः पशुः । पशौ किम् ? दृतिहारोऽन्यः ॥

**(८०) स्तम्बशकृत्कुरि व्रीहिवत्सः । [४।१।८।६।]** आभ्यां कृञः इ स्यात् क्रमेण व्रीहिर्वत्सश्चेत् कर्ता । स्तम्बकरिव्रीहिः । शकृत्करिर्वत्सः । स्तम्बकारोऽन्यः ॥८॥

**मुः ख्यात्मकुक्षेरि फलेग्रहोऽण् तुम्येज्व्रादितः खश्ख सुपोऽपि काच् टाः ।**
**मुच्पच्चरादेः खगमो विहः खड् डो णश्चरो विण्डुघभज्दुहिभ्याम् ॥४।१।९॥ वृत्तम् ॥**

**(८१) मुः ख्यात्मकुक्षेः । [४।१।९।१।]** आभ्यां कृञः खिः मुः स्यात् । आत्मंभरिः ।

**(८२) इ फलेग्रहः । [४।१।९।२।]** फलानि गृह्णातीति इ स्याद् , एत्वं च निपात्यते । फलेग्रहिः ॥

**(८३) अण् । [४।१।९।३।]** आप्याद् धातोः कर्तर्यण् स्यात् । कुम्भं करोतीति कुम्भकारः । काण्डलावः । वेदाध्यायः । अम्भोभिगामी । नेहानभिधानात् । ग्रामं गच्छति । आदित्यं पश्यति । हिमवन्तं शृणोति ॥

**(८४) तुमि । [४।१।९।४।]** आप्याद्धातोः तुम्विषयेऽण् टकः । गां वाऽनुव्रजति, गोदायो व्रजति । शास्त्राध्यायो याति । आप्यात् किम् ? पक्तुं याति ॥

**(८५) एज्व्रादितः खश्ख । [४।१।९।५।]** लुप्तत्यन्तत्वाद् एजयत्यादेराप्यात् कर्तरि खश्, वृआदेः ख स्यान्नाण् । चत्वारि वृत्तान्यनयोः—

एजेश्च धेटोऽपि शुनीस्तनाभ्यां मुं चास्य कूलादपि पुष्यतोन्ना- ।
डीनासिकामुष्टिघटीखरीभ्यः ध्मः पाणिवातात् करपर्वतादेः
कूलादुदोरुज्वहतेः वहाभ्रात् ॥१॥ [पञ्चपात्]

लिहः पचो मानमितान्नखाच्च तुदस्तिलारुर्विधुनो ललाटात् ।
तपः कषेस्त्वभ्रकरीषकूलात् सहश्च सर्वात् प्रियतो वशाच्च ॥२॥

वाचंयमस्यानियमे दृशोस्तर्योग्राद्गणोऽयं वृभृतृजिदंसहः ।
तब्धारिधर्नाम्नि भयार्तिमेघात् कुः क्षेममद्रः प्रियभद्रतोऽण् वा ॥३॥

शर्धंजहो वातमजो भगंदरः पुरन्दरेरंमद चेत् परंतपः ।
द्विषंतपः कुञ्जर आशिताद् भुवो भावे तथा स्यात् करणे गणो मतः ॥४॥

अङ्गमेजयः । जनमेजयः । शून्यादेः धेटः । शुनिन्धयः । [स्तनंधयः । नाडिन्धयः । नासिकन्धयः । मुष्टिन्धयः । खरिन्धयः । पाणिन्धयः । वातन्धयः ।] टिद्ङ्यर्थः । नाड्यादेर्ध्मः । नाडिन्धमः । [नासिकन्धमः । मुष्टिन्धमः । खरिन्धमः । पाणिन्धमः । वातन्धमः ।] आद्याकृत्यर्थः । को नैभ्यः । एवं नामादेर्धातोः । कूलमुद्रुजः । कुलमुद्वहः । वहंलिहः [गौः । अभ्रंलिहो वायुः] ॥१॥

मानं द्रोणादि । द्रोणंपचः । [खारिम्पचः । प्रस्थम्पचा स्थाली । मितम्पचा ब्राह्मणी । नखम्पचा यवागूः ।] तिलन्तुदः । [अरुन्तुदः । विधुन्तुदः राहुः ।] षित् । ललाटन्तपः आदित्यः । अभ्रंकषः [गिरिः । करीषंकषा वात्या । कूलंकषा नदी ।] सर्वंसहः । सर्वंकषश्च । प्रियंवदः । [वशंवदः ॥] २॥

वाचंयमः । वाग्यामस्त्वनियमे । असूर्यंपश्या [राजदाराः] । [उग्रंपश्यः ।] एको गणः । वृक्षादेर्नाम्नि । पतिंवरा कन्या । विश्वंभरा भूः । रथंतरं साम । शत्रुञ्जयो गिरिः । अरिन्दमो हस्ती । शत्रुंसहः । शत्रुंतपः । धुरन्धरः । वसुन्धरः । युगन्धरः । भयादेः कृञः । भयङ्करः । [ऋतिङ्करः । मेघङ्करः ।] क्षेमङ्करः । [मद्रङ्करः । प्रियङ्करः । भद्रङ्करः ॥३॥

शर्धंजहा माषाः । वातमजा मृगाः । तं दारयति, [माद्यति, तापयति, जरयति, इरया माद्यतीत्यर्थे निपात्यन्ते ॥ आशिताद् भुवो भावे करणे चार्थे । आशितस्य भवनं, आशितंभवं वर्तते । आशितो भवत्यनेन, आशितंभव ओदनः । आशितंभवा यवागूः । दुःखमाशितंभवम् । अलमाशितंभवः । द्वितीयो गणः ॥४॥

**(८६) सुपोऽपि काच्टाः मुच्पच्चरादेः । [४।१।९।६।]** सुपो वाप्यासुपोऽपि मुचादिपचादिचरादिभ्यः क्रमेण का-अच्-टाः स्युर्णादेः । अमीषु आर्ये च वृत्तानि च पञ्च-

नखमुचकाकगुहौ स्तः कुमुदं मूलविभुजाद्यनुपदः स्यात् ।
शोकात् तुन्दात् परिमृजः नाम्नि व्याघ्रः प्रदाघ्रश्च ॥१॥

सुप्यातो ह्वावामः संख्यासुगुपान्तस्कृकाक्षा
वृच्छ्वपसोमं पस्पचो देवः सवः सृपः सूदः ॥२॥

नृदर्शकोपव्रणदर्भमेघाः शीलीक्षिभक्षिक्षमिकामितो र्हः ।
धर्हुर्वयोऽनुद्यम आङि शीले कर्णेजपः सूचकहस्तिनौ चेत् ॥३॥

स्तम्बेरमः किंबहुयत्तदः कुः धनुर्घटीतोमरयष्टिशक्ति- ।
घटाङ्कुशाल्लाङ्गलतो ग्रहेस्तु सूत्राच्च सूत्रे शमि नाम्नि धातोः ॥४॥

शिते डिरोर्डादरतः सृतो वृत् आवार्यभिक्षां चरतीति सेनाम् ।
पूर्वात् सृकर्तुस्तु पुरोऽग्रतोऽग्रेः भास्करनान्दीलिपिभक्तिकर्तृ- ॥५॥

जङ्घाप्रभाबाहुनिशादिवाऽहः संख्याधनुः क्षेत्रविभान्तचित्र- ।
बह्वाद्यनन्ताल्लिबिबल्यरुभ्यो घटीघटाद् वेतनकर्मणः कुः ॥६॥

ताच्छील्यहेतावनुकूलतायामश्लोकगाथापदसूत्रमन्त्र- ।
कुम्भक्रमेभ्योऽकलहादवैराटाट्टोरशब्दाच्च गणः समाप्तः ॥७॥

नाम्नीति योगः । धनुस्तिलपद्मरथाद्यर्थे] नखमुचकाकगुहकुमुदमूलविभुज-]आद्याः । आद्याकृत्यर्थः । संस्थः संस्थानात् । शोकाद्याद्यादपनुदादेः । शोकापनुद पुत्रः आनन्दकरण एव । तुन्दपरिमृजोऽलस एव । अन्यत्राणौ । [तुन्दपरिमार्जः । शोकापनोदः ।] व्याघ्रः नाम्नि । न शः ।

तथा प्रपाप्रद्रः । पथिप्रज्ञः । प्र किम् ? गोसम्प्रदायः ॥१॥

सुप्यातः सुपः । द्विपः । समस्थः । सुप् किम् ? स्थाता । रमः । गोदः । कम्बलदः । दिटप्रादि किम् ? गोसंदायः । आह्वामः किम् ? स्वर्गाह्वायः । तन्तुवायः । धान्यमायः । गोसंख्यः । पशुसंख्यः । असुपोऽपि प्री आदेः कः, नाजादि । प्रियः । इगुपान्तात् । विक्षिपः । उत्किरः । कात् प्रादेरात् । प्रस्थः । सुग्लः । ज्ञः । प्रज्ञश्च । वृद्गणान्ते । श्वपचादेर्नाण् । देवादेर्न कः । एवं सर्पः सूदः ॥२॥

नर्त इत्यादि । [दर्श । कोप । व्रण । दर्भ । मेघ ।] शीलादेर्नाण् । मांसं शीलयति, मांसशीला । सुखप्रतीक्षा । शालिभक्षा । दुःखक्षमा । पयःकामा । पुष्पाहर्ा कन्या । धार्हञोः । धारः । श्रीधरः । हृतोऽर्मः । अस्थिहरः श्वा । कवचहरो ना । उत्क्षेपाद् यौवनादिर्वयोगतिः । वयः किम् ? वस्त्रहारः । अंशहरः । रिक्थहरः । अनुक्षेपेऽर्थे किम् ? भारहारः । कर्णेजपः सूचकः । स्तम्बेरमो हस्ती चेत् । कर्णे जपिताऽन्यः ॥३॥

किमादेः कृञः । [किङ्करः । [बहुकरः । यत्करः । तत्करः] नटः । ग्रहेस्तु धनुरादेः । धनुर्ग्रहः इत्यादि [=घटीग्रहः । तोमरग्रहः । यष्टिग्रहः । शक्तिग्रहः । घटग्रहः । अङ्कुशग्रहः । लाङ्गलग्रहः ।]

**(८७) खगमो विहः खड् । [४।१।९।७।]** सुपो गमः खखडौ । विहायसो विह च निपातनात् । सुतङ्गमः । [तुरङ्गमः] हृदयङ्गमा वाक् । [अमितङ्गमा हस्तिनी ।] भुजङ्गमः । [प्लवङ्गमः । मितङ्गमः ।] विहङ्गमः । [खड् ।] भुजङ्गः । पतङ्गः । विहङ्गः ॥

**(८८) डः । [४।१।९।८।]** सुपो धातोर्नामार्थे । पञ्चपात्-

अत्यन्तदूराच्च अनन्तसर्वात् सर्वत्रपत्तात् सुदुरो ङिरर्थे
देशे निसोऽन्येऽपि गमोऽन्त पारादाप्यादनोर्ङेश्च जने जरातौ ।
ङसोः प्रतो नाम्न्युरगोऽन्यतोऽपि ॥१॥

गमः । अत्यन्तगः । [दूरगः । अनन्तगः । सर्वगः । सर्वत्रगः । पतगः । सुगः । दूरगः । डिरर्थे । सुखेन गच्छत्यत्र सुगः । निगोर्देशः । निर्गतोऽन्यः । एवम् अन्तगः । [पारगः ।] अन्येऽपीति दृश्यन्ते । भुजगः । पतगः । विहगः । विहङ्गः । गुरुतल्पगः । परदारगः । ग्रामग इत्यादि । उरगो नाम्नि निपात्यते । अनोर्जनेराप्यात् । स्त्रियमनुजातः, स्त्र्यनुजः । पुमनुजा । ङेः । अप्सु जातः, अब्जः । मन्दरजः । ङसेरजातेः । खेदजं दुःखम् । अश्वजातः जातेः । प्रतः। प्रजा । अभिजः । अनुजश्च । अजः । अन्यतोऽपि पराद् दृश्यते । द्विर्जातः द्विजः । सुप्समासेनोक्तः । जातश्च । ब्राह्मणजः । क्षत्रियजं युद्धम् । बुद्धिजः संस्कारः । यद्वाऽन्यतोऽपि धातोः । वरमाहतवान् वराहः । पटहः । गिरिशः । [परितः खाता, परिखा । आखा । उपखा । तथा प्रह्वः । ब्रह्मष्ठः । परिवाको वा । पञ्चपाद् मतान्तरार्थः । अन्ये अन्यतोऽपि दर्शनात् । अत एवानियमः सूत्रे ॥

**(८९) णश्चरः । [४।१।९।९।]** सुपः । कल्याणाचारा स्त्री ॥

**( ९० ) विण्डुघभजुहिभ्याम् । [ ४।१।९।१० ]** तथा स्तः । [अर्धं भजते,] अर्धभाक् । कामदुघा धेनुः । धर्मदुघा । न च । कामधुक् ॥९॥

**आवश्यके कर्तुरिवाद् व्रते णिन् साधोरजातेः सतते च शीले ।**
**ब्रह्मन्वदेः प्रत्युद आसृ मन्यात् स्वे खश्स्पृशश्चानुदकात् क्विनाप्ये ॥४।१।१०॥ वृत्तम् ॥**

**( ९१ ) आवश्यके । [ ४।१।१०।१ ]** अवश्यभावगतौ धातोः परो णिन् स्यात् । दायी । अवश्यंहारी ॥

**( ९२ ) कर्तुरिवात् । [ ४।१।१०।२ ]** कर्त्रुपमानाच्च धातोः । उष्ट्रक्रोशी । ध्वाङ्क्षविरावी । कर्तुः किम् ? शालीनिव कोद्रवान् भुङ्क्ते । इवात् किम् ? उष्ट्रः क्रोशति ॥

**( ९३ ) व्रते णिन् । [ ४।१।१०।३ ]** अर्थित्वान्निवृत्तौ सुपो धातोः । स्थण्डिल एव शेते, स्थण्डिलशायी । अश्राद्धभोजी ॥

*( ९४ ) साधोः । [ ४।१।१०।४ ] धातोः । साधुकारी । साधुदायी । अशीलेऽपि ॥*

***( ९५ ) अजातेः सतते च शीले । [ ४।१।१०।५ ]*** *आभीक्ष्ण्यतत्स्वभावयोर*-जातिसुपोर्धातोः । क्षीरपायिन उशीनराः । उष्णभोजी । अजातेः किम् ? ब्राह्मणानामन्त्रयिता । न च । कुल्माषखादाः ॥

**( ९६ ) ब्रह्मन् वदेः । [ ४।१।१०।६ ]** अशीलेऽपि । ब्रह्मवादी । अलुक् च्छन्दोर्थम् ॥

**( ९७ ) प्रत्युद आसृ । [ ४।१।१०।७ ]** तथा । प्रत्यासारी । उदासारी ॥

**( ९८ ) मन्यात् । [ ४।१।१०।८ ]** तथा । दर्शनीयमानी । स तस्य पटुमानी । स्य किम् ? पटुमानः ॥

**( ९९ ) स्वे खश् । [ ४।१।१०।९ ]** आत्ममाने खश्च णिन् । पण्डितमात्मानं मन्यते, पण्डितमानी । पण्डितंमन्यः । श्रिमन्यं श्रियंमन्यं वा कुलम् ॥

**( १०० ) स्पृशश्चानुदकात् क्विन् । [ ४।१।१०।१० ]** सुपः स्पृशेः क्विन् स्यात् । घृतस्पृक् । मन्त्रस्पृक् । नेह । उदकस्पर्शः । क्विनः कुत्वं चकारात् । ऋत्विक् । स्रक् । दिक् ॥

**( १०१ ) आप्ये । [ ४।१।१०।११ ]** परार्थम् ॥१०॥

**कङ्क्सौ समानान्यत्यदो दृशोऽपीवाद् विट् सनक्रङ्घनजङ्गमोऽदः ।**
**क्रव्यादनन्नात् क्विबनाद्वनिप्विच्क्वनिप्मनोऽच् तृच्ण्वुयुणिन्सणाः स्युः ॥४।१।११॥ वृत्तम् ॥**

**१०१ ) कङ्क्सौ समानान्यत्यदो दृशोऽपीवात् । [ ४।१।११।१ ]** समानाद्युपमानाद् दृशोऽपि क्विन् स्याद् आप्ये कङ्क्सौ च । समान इव दृश्यते । सदृक् । सदृशः । सदृक्षः । अन्यादृक । [अन्यादृशः । अन्यादृक्षः ।] त्यदः । त्यदादि । त्यादृक् । [त्यादृशः । त्यादृक्षः ।] यादृक् । [यादृशः । यादृक्षः ।] एभ्यः किम् ? वृक्ष इव दृश्यते । इवात् किम् ? स दृश्यते ।

आप्ये किम् ? स इव पश्यति । टिद् ङ्यर्थः । तादृशी ।

**( १०२ ) विट् सनक्रङ्खनजङ्गमः । ( ४।१।११।२।]** सुपोऽतो विट् । [सन] गोषाः । वृषाः । [क्रम् ।] दधिक्राः । [खन ।] कूपखाः । [जन्] अब्जाः । [गम ।] अग्रेगाः ॥

**( १०३ ) अदः क्रव्यादनन्नात् । [ ४।१।११।३।]** तथाऽदः । क्रव्यात् । अपक्वमांसभक्षः । रिद् वा । क्रव्यादः । पक्व[मांस]भक्षः । अनन्नात् सुपः । आमात् । अनन्नात् किम् ? अन्नादः ॥

**( १०४ ) क्विबनाद् वनिप्विच्क्वनिप्मनः । [ ४।१।११।४।]** सुबसुप्राद्यप्रादिधातोरनातः क्विप्, आतश्चान्ये । क्विप् । पर्णध्वत् । उखास्रत् । वहाय भ्राट [वाहाभ्रट्] । अनातः कीम् ? कीलालपाः । विच्क्विपीत्वं मा भूत् । वनिप् । भूरिदावा । घृतपावा नौ । विजावा । विच् । क्षीरपाः, वित् । क्वनिप् । सुधीवा । सुपीवा । प्रातरित्वानौ । मन् । सुदामा । सुशर्माणौ । बहुलार्थे वृत्तद्वयम्-

ग्रावस्तुपृभ्राज्यलघुर्विभासभूयेस्तथा साचि च छिद्भिदादेः ।
सत्सूद्विषद्रुद्युजविड्किभिदुहराड्डीछिदोघो नुडि ब्रह्मवृत्र-॥१॥

भ्रणाङ्वृत्रः कर्मसुपुण्यपापकर्माप्यतोऽग्नेरिह चेः सु सोमात् ।
क्वनिपृदृशो राजसहात् कृयोधेर्वनिब्यजः स्याद् बहुलाधिकारात् ॥२॥

साचि चेति साधुधर्मशीलच् तेषु चान्यत्र च वृत्तार्धात् । ग्रावस्तुत् । ग्रावस्तुतौ । पूरित्यादि । सदादि छन्दात् । सुप्रादिभ्याम् । अन्तरिक्षसत् । उपनिषत् । अण्डसूः इत्यादि । घुः एव, लुङि ब्रह्मभूत एव, ब्रह्मादेरेव, **क्विबेवे**ति चतुर्विधो नियमः । अलघुः । ब्रह्माणं हतवान् ब्रह्महा । [वृत्रहा] ॥१॥

[भ्रूणहा ।] एभ्यः किम् ? तं हतवान् । हन्तेः किम् ? ब्रह्माधीतवान् । भूते किम् ? ब्रह्माणं हन्ति । [वृत्रं हन्ति ।] क्विबेव नान्यः । अब्रह्मादेश्च दृश्यते इत्यन्ये । मधुहा । अहतेश्च । ब्रह्मवित् । अक्विप् च । ब्रह्मघ्नः । वृत्रस्य हन्ता । भूत एवार्थात् । तथा कर्मादेः । [कर्मकृत् सुकृत् मन्त्रकृत् । पुण्यकृत् । पापकृत् ।] त्रिविधो नियमोऽधातुः । अन्यतोऽपि । शास्त्रकृत् । अकृञोऽपि दृश्यते । मन्त्रवित् । अक्विप् च । मन्त्रकारः । कर्माप्यतोऽग्नेरिह चेः । अग्न्याप्याच्चिञस्तथा । अग्निचित् । अनग्नेः । शालाचायः । आप्याच्चिञः क्विप् न । इहेति आप्यकारकेऽग्नौ चार्थे । श्येन इव चीयते स्म, श्येनचित् । इष्टकाचयः किम् ? क्वचिद् रथचक्रचित् । सोमाप्यात् सुञस्तथा । सोमसुत् । असोमात् तद् दृश्यते । सुरासुत् । अक्विप् । सोमं सुतवान् । एभ्यः क्विबुक्तः । भूते क्विबेव नान्यः सुञः दृशश्चाप्यात् । सुन्वा । मेरुदृश्वणपरलोकदृश्वानौ । राजाप्यात् सहत्वे कृञः युधेश्च ण्यन्तात् । राजानं कृतवान् योधितवांश्च । राजकृत्वा । राजयुध्वा । सहकृत्वा । [सहयुध्वा ।] यथासङ्ख्यं नेष्टम् । वनिबेव यजः । यज्वा । यज्वानौ । एतदत्र बहुलाधिकारात् ॥२॥ प्रत्यक्षलक्षणे व्यभिचारोपदर्शनमयुक्तम् । यदाह–

लक्ष्माविरुद्धं तु समीक्ष्य लक्ष्यं कातन्त्रलक्ष्मापि समर्थनीयम् ।
सल्लक्ष्मवाच्यं न तु तद्विरुद्धैर्लक्ष्यैः सता तज्ज्ञखसूचिदृश्वैः ॥३॥

**( १०५ ) अचतृच्ण्वु । [ ४।१।११।५।]** कर्तरि धातोर्बहुलं स्युः ।

पचूवचूवपो मृचलूनदूवदेः प्लः गृगाहचर्चोरिसृतृपनिभ्यः ।
भृझष्कषादोऽपि यथा च दृष्टिः ॥१॥ त्रिपात् ॥

पचः यावद् आदेः । प्रघसः । पूर्वाजणाद्यपवादः । एवं पक्ता । पाचकः । कर्ता । कारकः । बहुलमेव । पादाभ्यां ह्रियते, पादहारकः । गले चुप्यते, गलेचोपकः । नदीत्यादि गौरादौ नटच् ॥

( १०६ ) **युणिन्सणाः स्युः** । [ ४।१।११।६।] तथा जसन्तद्वन्द्वात् परेभ्यो नन्दादिभ्यश्चतुर्भ्यः क्रमेण ॥११॥

**नन्दिग्रहघ्राज्वलतस्थको गः ण्युड्व्रीहिकाले ह उ वुड्डु शिल्पी ।**
**नृत्खः रजो लूप्रसृतो वुनाशीः गेहे गृहेन् घ्णिण्णुजिसं क्लिशादेः ।**
**ज्वादेर्यु साधावपि धर्मशीलेऽच् ॥४।१।१२॥ पञ्चपात् ॥**

१०७) **नन्दिग्रहघ्राज्वलतः** । [ ४।१।१२।१।] ते । एषु षट्पादद्वयं पञ्चपदी च

णेर्नन्दिवाशेर्मदिदूषिसाधेः स्याद् वर्धिशोभेरपि नाम्नि रोचेः ।
दन्तप्सहोऽणेश्च युजल्परम्भ्यो दृप्संहृषः क्रन्दकृषो जनार्दः ।
विभीषणः स्यान्मधुसूदनश्च चित्ताद् विनाशाल्लवणं कुलाद् दम् ॥१॥

गृह्णन्त्रिनेरक्षवपश्रुशा नञः याच्व्याहृसंव्याहृवदव्रजो वसो-।
ऽचोऽचित्तवत्कर्तृकतो विषेर्लघुः देशे च भूतेऽभिपरेर्भुवो न वा ।
स्थाव्याहृसंमर्दनिवेशतो रुधोऽवोपादुदो भास्वस्सहोऽपराधिनः ॥२॥

घ्राधेट्दृशध्माऽपि वद्वेदिधारिवित्साऽतिसाहे लिपपार्युदिजि-।
दार्ज्वो चेते निर्लिपो गणोऽयं ज्वज्वृग्रहष्ट्वा व्यधतः श्वसेऽण् स्यात् ।
दुन्यः समास्त्रोरव सा हञो वृत् ॥३॥

णेः ण्यन्तान्नाम्नि च । नन्दयति नन्दनः । [वाशनः । मदनः । दूषणः । साधनः । वर्धनः । शोभनः । रोचनः ।] अणेः । दमनः । [तपनः । सहनः । यवनः । जल्पनः । रमणः । दर्पणः ।] समः । संहर्षणः । [सङ्क्रन्दनः । सङ्कर्षणः ।] जनादर्देः । जनार्दनः एवं चित्तविनाशनः । कुलदमनः । लवणम् । णत्वं च निपात्यते ॥ गणः १॥

गृह्णातीति ग्राही । मन्त्री । नेः । निरक्षी । [निवापी । निश्रावी । निशायी ।] नञः । अयाची । [अव्याहारी । असंव्याहारी । अवादी । अव्राजी । अवासी ।] अजन्ताच्चित्तवत्कर्तृकाच्च नञः । अकारी घर्मस्य बालातपः । अहारी । विषिञो लघुर्न वाऽत्र, देशेऽर्थे । विषयी । विषायी । एवंभूतेऽर्थे वा । अभिभावी । [अभिभवी । परिभावी । परिभवी ।] स्थायी । [व्याहारी । संमर्दी । निवेशी ।] रुधोऽवोपाद् । अवरोधी । [उपरोधी ।] उदः उद्भासी । [उद्वासी । उत्साही ।] अपराधी, इत्यादि । इनि सिद्धेऽचादि मा भूत् ॥ गणः २॥

उज्जिघ्रः । धयः । पश्यः । धमः । प्रपिबः । द्वेदीति लघुश्रुतिः । टितोऽतोऽप्रादेः । वेदयः । धारयः । गोविन्दः । एवं दाञ्धारिद् वाऽणोपवादः । ददः । दायः । दधः । धायः । निलिम्पा

नाम देवाः । टित् किम् ? प्रवेदकः । प्रवेदः ॥ गण ३॥

ज्वज्वृग्रहष्ट्वा । ज्वव् प्रत्याहारः । ज्वलादि शतृ शासनेऽच् यावत् । एभ्यो भूग्रहश्च वा टितोऽप्रादेश्च । ज्वालः । ज्वलः । सादः । [सदः ।] भावः । [भवः ।] ग्लाहः । जनचरः । ग्रहः सूर्यादि । मुक्तेऽच् । टित् किम् ? प्रज्वलः । [प्रसदः । प्रभवः । प्रग्लहः ।] व्यधादेर्नित्यम् । श्वसादेश्च । व्याधः । अवतानः । निःश्वासः । इण् अत्यायः स्यात् । शोङ आतश्च । अवश्यायः । न कः । दायः । पायः । टितोऽर्थात् । दुन्यः । दावः । नायः । टित् किम् ? प्रदवः । [प्रणयः ।] एवं, संस्रावः । आस्रावः । अवसायः । अवहारः ॥ गणः ४॥

**(१०८) थको गः । [४।१।१२।२।]** गाथकः ॥

**(१०९) ण्युट् । [४।१।१२।३।]** गः गायनी ॥

**(११०) व्रीहिकाले ह उ । [४।१।१२।४।]** उ निपातः । हो ण्युट् । हायनो व्रीहिः । संवत्सरश्च । हतोऽन्यः ॥

**(१११) वुट्ट शिल्पी नृत्खः रजः । [४।१।१२।५।]** अतो वुट् शिल्पी चेत् कर्ता । नर्तकः । [खनकः । रजकः ।] न्लोपो निपातनात् ॥

**(११२) लूप्रसृतो वुन् । [४।१।१२।।६।]** तथा । लवकः । [प्रवकः । सरकः ।] प्रोताऽशिल्पी । निद् अकेनीत्यर्थः ॥

**(११३) आशीः । [४।१।१२।७।]** चेत् धातोः वुन् स्यात् । जीवतात्, जीवकः । नन्दकः ॥

**(११४) गेहे गृहा । [४।१।१२।८।]** गेहेऽर्थे गृहं सद्म स्यात् । गृह्णन्ति [इति] गुहा दाराश्च । बहुलत्वात् ॥

**(११५) इनुघ्णिणणुजिसं क्लिशादेः । [४।१।१२।९।]** क्रमेणैतेभ्यः इनाद्याः स्युः, साध्वादौ । एषु वृत्तत्रयम्-

जिदृक्षिविश्रीण्परिभूप्रसूभ्योऽव्यथाभ्यमाभ्यां वमतेः प्रजो वृत् ।
शम्वो युजक्रीडदुहद्रुहद्विष् त्यजज्भजो वेः कषकत्थलस्भ्यः ॥१॥

स्रम्भाद्व्यपाल्लष् च परेः सृदेविक्षिप्रट्वदेः दहमुहतो व्यनो रुध् ।
आयस्यमः संज्वरसृज्पृचेभ्यः प्रात् सृद्रुवस्वद्मथतो लपाच्च ॥२॥

व्यभ्याहनोऽमोष् विवचोऽत्यपाच्चर् प्रायोऽन्यपूर्वादपि रुज्भुजादेः ।
क्लिश्निन्दहिंस्खाद विनाशसूयात् क्रोष्ट्र दिव्याभाष्परिवादिरट्क्षिप् ॥३॥

जयी । [दरी । क्षयी । विश्रयी । परिभवी । प्रसवी । अव्ययी । अभ्यमी । वमी ।] यावत् प्रजवी । वृद् गणान्ते । गवादि । शम्वः । शमाद्यष्टभ्यः युजादेश्च घ्णिन् । घित् कुत्वार्थम् । णिद् औरजर्थम् । शमी । [तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी ।] उन्मादी । योगी ।

[आक्रीडी । दोही । द्रोही । द्वेषी । त्यागी । भागी] इत्यादि । न्लुक् । रागी । वेः परात् कषादेः । विकाषी, न युः । [विकत्थी ।] एवं [विलासी] नोकण् ॥१॥

[विस्रम्भी ।] परेः । परिसारी । [परिदेवी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही ।] विरोधी । [अनुरोधी ।] आयासी । [आयामी ।] समः । सञ्चारी । [संसर्गी । सम्पर्की ।] पित् रुधादिः । न्यदादिः । प्रात् । प्रसारी । [प्रद्रावी ।] प्रवासी । प्रवादी । प्रमाथी । प्रलापी] ॥२॥

विघाती । अभ्याघाती । अमोष् । अमोषी । अमोघी, इत्येके । विवेकी । अतिचारी । [अपचारी ।] अन्यपूर्वादपि स्याद् उक्तगणात् । प्रयासी । [प्रयामी ।] विसारी । विसंगी । संवादी । विवादी । अनुवादी । विदाही । सञ्चारी । व्यभिचारी । विद्रावी । संवासी, इत्यादि । रुज्भुजादेः । रोगी । [भोगी ।] आद्याकृत्यर्थः । एभ्यः प्रापस्तृनिप्राप्ते द्वितीयो गणः ॥ क्लेशादेः ण्वुः । क्लेशकः । क्रोश्देवि । कित् प्रादेः । आक्रोशकः । परिदेवकः । कित् किम् ? क्रोष्टा । देवयिता । व्याभाषकः । परेः । परिवादकः । [परिराटकः । परिक्षेपकः ।] ण्वुः किम् । साध्वादौ न तृचादि । गेहादिपादं विहाय वृत्तं पठन्त्यन्ये । मुचादौ ग्रहः । वृः गृहम् । शमादेर्घण इन् । ष्णुक्र प्राक् । ओशर्ग्निकस्यापि साध्वादौ समावेशात् । तत्रोक्तम्-लक्ष्माविरुद्धमित्यादि । साध्वाद्यर्थस्य तु प्रायः समावेशोऽपि समुचितः स्यात् ॥

**( ११६ ) ज्वादेर्यु साधावपि धर्मशीलेऽच् । [ ४।१।१२।१० ।]** साधुर्निपुणः । यो धात्वर्थम् । साधुकरोति । धर्मो ममायमाचार इति प्रवर्तते । शीलं स्वभावः यत्ननिरपेक्षा प्रवृत्तिः । एषु कर्तृषु ज्वादेर्बहुलं युः स्यात् । अपि सम्बन्धात् स्वलक्षणे प्राप्तोऽपि प्रायः । विकत्थनः । विकत्थी, इत्यादि ।

जोश्चालशब्दार्थहलादितद्वतोऽङोऽदीक्षसूद्दीपयतोऽप्यकर्मकात् ।
भूषाक्रुधार्थात् सृगृध्येः शुचज्वलात् चङ्क्रम्यदन्द्रम्य लषात् [पदात्] पतेः ॥१॥

अकर्मकादिति सर्वत्र सम्बध्यते । जुः सौत्रः । जवनः । चलनार्थः । चलनः । चोपनः । शब्दार्थः । रवणः । शब्दनः । अनाप्यात् किम् ? पठिता विद्या । हलादेस्तद्वतोऽङितः । वर्तनः । वर्धनः । बहुलमेव । परिदेवनः । परिदेवकश्च न स्यात् । हलादिः किम् ? एधिता । आदि किम् ? जुगुप्सनः । तद्वतः किम् ? भविता । अङः किम् ? शयिता । अनाप्यात् किम् ? वसिता वस्त्रम् । अदीक्षादेः किम् ? दीक्षिता । सूदेरिद् वा । सूदिता । मधुसूदनः । दीपो रोऽस्ति बाधकश्चेत् तथा तृतोऽपि बाधा स्यात् । दीप्रः । दीपिता । यकारान्तात् । क्नूयिता । क्ष्मायिता । भूषाक्रुधार्थात् । भूषणः । क्रोधनः । कोपनः । एवं स्रादेः । चालोऽन्तामर्थः । पदिश्चनौ क्तेन बाधा अपि नाप्राप्तेः ॥१२॥

**कर्ह्यिस्स्मिदीप्कम्प्यजसस्तमो रो भास्स्थेशयायापिसकस्वरोऽपि ।**
**मिद्भासभंस्जो घुर मक्र घस्त्वत् सित्कोलिमाप्ये कुट्लुण्ट्वृभिक्षात् ॥४।१।१३॥ वृत्तम् ॥**

**(११७) कम्हिंस्स्मिदीपकम्प्यजसस्नमो रः ।** [ ४।१।१३।१। ] अपियोगात् साध्वादौ । कमादेः रोऽपि यथाप्राप्तोऽपि प्रायः स्यात् । कम्रः । [हिंस्रः । स्मेरः । दीप्रः । कम्प्रः । अजस्रम् । नम्रः ।] कम्कम्प्येर्यु च । [कमनः । कम्पनः ।] स्नमः सित्त्वादाप्ये कर्तरि ॥

**(११८) भास्स्थेशयायापिसकस्वरोऽपि ।** [ ४।१।१३।२। ] तथाऽतो वरोऽपि । भास्वरः । [स्थावरः । ईश्वरः । यायावरः । पेस्वरः । कस्वरः ।] यो यङित् यायाभासोर्यु च ॥

**(११९) मिद्भासभंस्जो घुरः ।** [ ४।१।१३।३। ] तथाऽतोऽत्र घुरोऽपि । मेदुरः । [भासुरः । भङ्गुरः ।] भंस्जः सित्त्वात् स्वयं कर्तरि ॥

**(१२०) मक्रघसस्त्रद् ।** [ ४।१।१३।४। ] तथाऽतः कित् मरोऽपि । घस्मरः । [सृमरः । अद्मरः ॥]

**(१२१) सित् केलिमाप्ये ।** [ ४।१।१३।५। ] धातोस्तथाप्येकत्र केलिमः स्यात् । सिदत्याप्योपलक्षणम् । तथोदाहृतम् । स्वयं पच्यन्ते, पचेलिमाः माषाः । भिदेलिमानि काष्ठानि । आप्ये किम् ? पक्तव्या माषा न्रा ॥

**(१२२) कुट्लुण्ट्वृभिक्षात् ।** [ ४।१।१३।६। ] परार्थम् ॥१३॥

**जल्पाट्टिदाकः त्वरगिण्जिगंसुः छिद्भिस्दिवेत्तेः कुर नश्वरस्वप्-।**
**तृष्धृष्ज्ञकः स्थास्नु च जागरूकः वद्यज्जपो दंशदहो यङः किः ॥४।१।१४॥ वृत्तम् ॥**

**(१२२) जल्पाट्टिदाकः ।** [ ४।१।१४।१। ] कुट्यादेस्तथा । आकोऽपि टित् स्यात् । कुट्टाकः । [लुण्टाकः । वराकः । भिक्षाकः । जल्पाकः ।] टिद्ङ्यर्थः ॥

**(१२३) त्वरगिण्जिगंसुः ।** [ ४।१।१४।२। ] तथेणादेः त्वरायुक्ते । इत्वरः । [जित्वरः । गत्वरः । सृत्वरः ।] गमः तृन् सण् क च ॥

**(१२४) छिद्भिस्दिवेत्तेः कुर ।** [ ४।१।१४।३। ] तथाऽतः कुरोऽपि । भिच्छिदोः सित्त्वाद् आप्ये कर्तरि । वेत्तिः ज्ञानार्थो, न लाभाद्यर्थः । छिदुरः । [भिदुरः । विदुरः ।] यत्तु 'दोषान्धकारभिदुरो हृतारिपक्षच्छिदुरः' इति तन्मतेऽसित् । 'भिद्वेत्तिछिद्भ्यः' [इति च] पाठः ॥

**(१२५) नश्वरस्वप्तृष्धृष्ज्ञकः स्थास्नु च ।** [ ४।१।१४।४। ] नशेः । नश्वरः, टित् । स्वपितृषेर्नजिद् निपात्यते । स्वप्नक् । तृधृ नजौ । [तृष्णक् । धृष्णक् ।] स्थास्नु च ॥

**(१२६) जागरूकः ।** [ ४।१।१४।५। ] ऊकोऽपि तृत्वजागर्तेः तथा । जागरूकः ॥

**(१२७) वद्यज्जपो दंशदहो यङः ।** [ ४।१।१४।६। ] तथाऽतो यङन्ताद् ऊकोऽपि । वावदूकः । [यायजूकः ।] एवं [जञ्जपूकः । दन्दशूकः । दन्दहूकः] शत्रुः ॥

**(१२८) किः ।** [ ४।१।१४।७। ] परार्थः ॥१४॥

**सहवहचलः पापतिदातृजङ्गं घ्नो लिङ्वदुण्को लषभूवृषद्वि-।**
**कं सृपतस्थापद आरु वञ्च्छ्रूय आशंसभिक्षिवन्दिसनिच्छ ऊ रुः ॥४।१।१५॥ वृत्तम् ॥**

(१२८) **सहवहचलः** । [४।१।१५।१।] तथाऽतो यङन्तात् किः । सासहिः । [वावहिः । चाचलिः ॥

(१२९) **पापतित्** । [४।१।१५।२।] पतेर्यङन्तात् किः । [पापतिः ।] नीगभावो निपात्यते। त् घत्प्रत्याहारार्थः ॥

(१३०) **आतृजङ्गं घ्नो लिड्वत्** । [४।१।१५।३।] तथाऽतः कि लिड्वत् स्यात् । आत्। पपिः सोमम् । ददिर्गाः । ऋ । चक्रिः । सस्रिः । मम्रिः । जन् । जज्ञिः बीजम् । गमः । जग्मिः. ग्राम्यं ना । हन् । जघ्निः वृत्रम् । लिट्वद्‌द्विष्किदार्थम् ॥

(१३१) **उण्को लषभूवृषद्विकसृपतस्थापदः** । [४।१।१५।४।] तथाऽतः उण्कोऽपि णिन्तार्थः । उक्तः स्यात् । अपलाषुकं वृषलसङ्गतम् । यु च । अपभावुकः प्रभविष्णुः । वर्षुकः । द्वीत्यनन्तरम् । गम्हनिभ्याम् । आगामुकः । आघातुकं बालकस्य सूत्रम् । कामुकः । कमिता । प्रसारुकः । प्रपातकः । स्थायुकः । प्रपादुकः ॥

(१३२) **आरु वञ्छ्र्यः** । [४।१।१५।५।] तथा वन्दिश्रीभ्याम् आरुः । वन्दारुः । [शरारुः ॥]

(१३३) **आशंसभिक्षिवन्दिसनिच्छ उः** । [४।१।१५।६।] तथाऽतः उरपि । आशंसुः । [भिक्षुः । विन्दुः । सन् । चिकीर्षुः । जुगुप्सुः । यु च । इच्छुः ॥

(१३४) **रुः** । [४।१।१५।७।] पदार्थः ॥१५॥

**शत्सत्सिधेड्डुस्त्रसिगृधृषक्षिप् क्नुर्ग्लाजिभूः स्नुः स्पृहिशीपतेर्दय् ।**
**गृह्यालुभीक्रुक्लुक चेष्णु भूभ्यस्तृणिणट्टणे च क्तवतुश्च भूते ॥४।१।१६॥ वृत्तम् ॥**

(१३४) **शत्सत्सिधेड्डुः** । [४।१।१६।१।] तथाऽतः रुरपि । शद्रुः । [सद्रुः । सेरुः । धारुः । दारुः ॥]

(१३५) **त्रसिगृध्धृष्क्षिप् क्नुः** । [४।१।१६।२।] तथाऽतः कित् नुः । [त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥]

(१३६) **ग्लाजिभूः स्नुः** । [४।१।१६।३।] तथाऽतः कित् स्नुः । ग्लास्नुः । [जिष्णुः । भूष्णुः ॥

(१३७) **स्पृहिशीपतेर्दय्गृह्यालुः** । [४।१।१६।४।] तथाऽतः आलुः । स्पृहयालुः । [शयालुः ।] पतयालुः । दयालुः । गृहयालुः ॥

(१३८) **भीक्रुक्लुक च** । [४।१।१६।५।] भियस्तथा कित् रुलुकौ स्तः । भीरुः । भीरुकः । लत्वं वा । भीलुकः ॥

(१३९) **इष्णु भूभ्यः** । [४।१।१६।६।] तथेष्णुरपि भूभ्यः । इह चार्थे-

भूभ्राजचर्वृद्वृधुरुच्यपत्रपोत्पच्युन्मदो जन् सहलं निराकृञः ॥१॥

भविष्णुः । [भ्राजिष्णुः चरिष्णुः । वर्तिष्णुः । वर्धिष्णुः । रोचिष्णुः । अपत्रपिष्णुः ।] [उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । प्रादिष्यतो जन् ॥ प्रजनिष्णुः । सहिष्णुः । अलङ्करिष्णुः कन्याम् । निराकरिष्णुः शक्रम् ॥

**(१४०) तृन् । [४।१।१६।७।]** च तथा धातोः स्यात् । गन्ता खेलः । कर्ता विकटः साधौ । वधूम् ऊढां मुण्डयितारः श्राविष्ठायना भवन्ति । श्राद्धे सिद्धे अपहर्तार आह्वरकाः, धर्मे । कर्ता कटान् । वदिता जनापवादान्, शीले ॥

**(१४१) णिन्नृणे च । [४।१।१६।८।]** धातोः णित् स्याद् ऋणे वाच्ये । शतं दायी । पुनर्णि त्रर्थम् । चकारः साध्वाद्यनुकर्षा वा नोत्तरत्र ॥

**(१४२) क्तवतुश्च भूते । [४।१।१६।९।]** भूतेऽर्थे धातोः क्तवतुः स्यात् । गतवान् । मां शायितवती । उदिगित् कार्यार्थम् ॥१६॥

**क्ताप्ये च जृभ्यो युधिशासदृशाद् धृष्मृषोर्यु भावार्मि ख भूकृञोऽच्वे ।**
**कर्त्रर्मे ईषत्सुदुरोऽपि कृच्छ्रकृच्छ्राच्च यण्यक्यबजाश्व्यणादेः ॥४।१।१७॥ वृत्तम् ॥**

**(१४३) क्ताप्ये च जृभ्यः । [४।१।१७।१।]** ज्रादेर्बहुलं भूतेऽभूतेऽपि कर्तर्याप्ये च यथाप्राप्तं च क्तः स्यात् । अत्रापि वृत्तम्—

जृशीश्लिषस्थाऽऽस्वसो जन्रुहेश्चारम्भे खनाप्याड्डिरिवाप्यदर्थात् ।
भावार्मिपूजे ञिमिदादितोऽस्मिन् सम्भाव्यहेत्वोश्च भविष्यति कष् ॥१॥

पादो भूतकर्तरि अस्येव । अनुजीर्णो ना ताम् । अनुजीर्णा न्रा सा । जीर्णं न्रा । अधिशयितः शय्यां ना । अधिशयिता न्रा सा । एवम्, आश्लिष्टो गुरुं ना । [आश्लिष्टो गुरुर्न्रा । उपस्थितः [गुरुं ना । उपस्थितो गुरुर्न्रा । ] उपासितः । [गुरुं भवान् । उपासितो गुरुर्भवता ।] अनूषितः [गुरुं भवान् । अनुषितो गुरुर्भवता ।] अनुजातोऽन्यं ना [अनुजातोऽन्यः न्रा ।] आरूढो वृक्षं ना । आरूढो वृक्षो न्रा ।] एते साप्याः प्रादेः । यथा, अतिशेते त्वां, तदाकाङ्क्षा वा । यथार्जिरोहेः । आरुहेस्त्वमित्यर्थे । ण्यन्ता वा । यथाग्निं जनितः । इति वचनम् । चारम्भे । क्रियाप्रारम्भे च कर्तरि यथाप्राप्तं च क्तः । प्रकृतो नां ना । [प्रकृतो] स न्रा, वा । प्रकृतं न्रा । प्रभुक्तो ना ओदनम् । [प्रभुक्त ओदनः न्रा । प्रभुक्तं न्रा ।] खअनाप्याड्डिरि च । खिद्गत्यर्थादनाप्याच्च ड्डिरि, आधारे कर्तादौ च । इदमेषां यातम् । यातास्ते ग्रामम् । यातस्तैर्ग्रामः । यातं तैः । इदमेषामासितम् । आसितो ना । आसितं न्रा । नास्त्याप्यम् । अदर्थात् । आहारार्थादाधारादावकर्तरि, पार्थक्यात् । आञ्चेति । अन्यथाऽजूपात् । इदमेषां भुक्तमोदनस्य । भुक्तोऽसौ न्रा । भुक्तं न्रा । कथं भुक्ताः पीताः गाव [इति] ? अर्श आद्यनिदित्येके । भावार्मिभूते धातोः । आसितम् [एषाम् । आसिता ते । आसितं तैः ।] कृतः कटो न्रा । पूजित्यादि । पूजार्थज्ञानार्थेच्छार्थेञिमित्ञ्यन्वन् च, एभ्यः । आदिशब्दाच्छीलितादिभ्यश्चास्मिन्निति वर्तमाने लटः कालकर्तादौ । राज्ञां पूजितः, अर्चितः, ज्ञातः, बुद्धः, मतः । इष्टोऽभिप्रेतः स मतः । ञीतः । मित्रः । धृष्टः । [क्ष्विण्णः । भीतः ।] तथा—

शीलितो रक्षितः क्षान्त आकृष्टो जुष्ट आसितः ।
रुष्टश्च रुषितः सुप्तः लिप्तोऽभिव्याहृतो मृतः ।
हृष्टतुष्टौ कमेस्तृप्तः शयितः संयतोद्यतौ ॥२॥ षट्पदी ॥

कमेः कान्त इत्यादि । सम्भावनीयेऽवश्यंभावितयाऽतोद्वतौ चार्थे धातोर्भविष्यति काले । दृष्टश्चेद् गुरुर्भोजितस्तेन । यदि द्रक्ष्यत्यवश्यं भोजयिष्यतीत्यर्थः । वृष्टश्च देवः सम्पन्नाः शालयः । श्रुतश्चेच्चौरो घातितस्तेन । कष । सामान्यर्थः । कष्टम् ॥ गणः ॥

**(१४४) युधिशास्दृशाद् धृष्मृषो यु भावार्मि । [४।१।१७।२।]** एभ्योऽपि कृच्छ्राकृच्छ्रार्थेषदादिपरेभ्यो भावाप्ययोर्युः स्यात् । ईषद्योधनः । सुयोधनः । दुर्योधनः । एवमात् । ईषत्पानः सोमो त्रा । ईषद्दानो गौर्त्रा । ईषत्स्थानं त्रा । कृच्छ्रेतरात् किम् ? ईषद्दातव्यः । दुर्देयः । दुः पापार्थः । ईषदादेः किम् ? कृच्छ्रेण देयः ।

**(१४५) ख । [४।१।१७।३।]** स्यात् तथा धातोः । ईषच्छयं त्रा । ईषत्करः कटो त्रा । खित् परार्थः ॥

**(१४६) भूकृञोऽच्वे कर्त्रर्मईषत्सुदुरोऽपि कृच्छ्रकृच्छ्राच्च । [४।१।१७।४।]** तथा भूकृञः खित् किन्त्वच्वेः चव्यर्थात् । क्रमेण कर्त्राप्याभ्यां पराच्च । अनीषदा ढ्येन भूयते त्रा । ईषदाढ्यंभवं त्रा । [स्वाढ्यंभवं त्रा । दुराढ्यंभवं त्रा ।] अनीषदाढ्यः ईषदाढ्यः क्रियते त्रा, ईषदाढ्यङ्करो त्रा । [स्वाढ्यङ्करो त्रा । दुराढ्यङ्करो त्रा । ईषत्कटङ्कराणि तृणानि त्रा । कर्त्रमः किम् ? ईषद्भूयते । [सुभूयतेः । दूर्भूयते ।] च्व्यर्थात् किम् ? स्वाढ्येन भूयते ॥

**(१४७) यण्यक्यबजाश्व्यणादेः । [४।१।१७।५।]** अजाद्या अस्वादीणादेः क्रमेण यण्-य क्यप् स्याद् भावार्मि, क्वचित् कर्तादौ च । त्रिषु दोधकवृत्ते ते दोधकं सप्तपदी—

अच्चति यज्यति शस्सहि शक्तक पोष्ट्यमगद्मदचत्यगुरौ माङ् ।
आत् खन एट्ट तु मत्युपसर्या सुब्वदमा सह उः प्रभुवैश्यौ ॥१॥

विक्रियगर्ह्ये पणवद्वृ आवारणे घङ् वहमजुः करणे च सङ्गते ।
वाप्लाव्यपात्यौ वचनीयप्रादुपस्थानीयभव्याप्यथ तु जनोऽथगः ॥२॥

आसुयुवप्रतिसयुपिचमतृभ् पाणिसृजः समवाहृल्लोऽश्न्वा-।
क्ष्यक ओः परिचाय्यसमूह्याग्नावुपचाय्य इतोऽत्र च चित्या ॥३॥

सान्नाय्यधाय्यौ घृतसामिधेन्योर्निकाय्यपाय्यौ च निरासमाने ।
प्रणाय्य चासंमतदक्षिणाग्न्योः संचाय्य चेत् स्यात् क्रतु कुण्डपाय्यः ॥४॥

इणस्तुदृवृञ्जुष्शासृदुपान्तात् क्लृप्चृतनाम्नि भृसंभृकृशंसि ।
वृष्मृजिदुहगुहिसुप्वदभावे हंहतनूः धनकुप्यघृतायाम् ॥५॥

- भे पुष्यसिद्ध्यौ उद उद्ध्यभिद्यौ युग्यं च पत्रे हलि मुञ्जकल्के ।
जित्या विपूयोऽथ विनीयपक्ष्याबाह्यां पदास्वैरिणि तु ग्रहः स्यात् ।
मृषोद्यसूर्योऽव्यथराजसूयः क्षय्यप्रयोज्यौ च नियोज्यजय्यौ ।
शक्ये च गाथेति च कृष्टपच्याः ॥६॥

अचः । चेयम् । लव्यम् । चिकीर्ष्यम् । एवं, चत्यम् । पोः पवर्ग्यात् । वप्यम् । गोप्यम् । टिदप्रादेः । यम्यम् । [गद्यम् । मद्यम् ।] चर्यम् । टित् किम् ? प्रयाम्यम् । [प्रगाद्यम् । प्रमाद्यम् । चरि साङ् । आचर्यो देशः । अगुरौ किम् ? आचार्यः । आत् खनोऽन्त एच्च । देयम् । खेयम् । क्वचिन्निपातनं चातः । ऋतुमती प्राप्तकाला चेत् [प्रजने], उपसर्या गौः । [उपसर्या] वडवादि । उपसार्याऽन्या । सुपः टितो वदः । ब्रह्मवद्यम् । इणादौ, ब्रह्मोद्यम् । सुप्टित् किम् ? वाद्यः । अभिवाद्यः । एवम् अमा सह वसतौ अस्यां चन्द्रार्कौ, रिद् वा ण्यः । अमावास्या । [अमावस्या ।] उः अर्यस्वामिवैश्यश्च । आर्योऽन्यः ॥१॥

पण्यः पटादिः विक्रेयश्चेत् । अवद्यं गर्ह्यं पापं चेत् । पाण्यम्, अनुद्यम् अन्यत् । वृञः वर्या निषेध्येऽर्थे । शतेन वर्या, लक्षेण वा । वृत्याऽन्या । बहुलत्वात् स्त्रियामेव । वार्या ऋत्विजः । अतोऽत्र गणे घङ्ग्रहणे न गृह्यते षष्ठ्यर्थम् । वहन्त्यनेन वह्यं शकटम् । करणं किम् ? वाह्यम् । अजुः । नञो जॄषः कर्तरि च । अजर्यम् आर्यसङ्गतम् । सङ्गते किम् ? अजरिता पटः । अतो वा कर्तरि च बहुलं च । आङः द्वौ यात् । कर्तरि [आप्लाव्यः । आपात्यः ।] प्रवचनीयः । [उपस्थानीयः,] अभ्यर्च्यः । [भव्यः । जन्यः ।] गेयो ना साम्नाम् । भावार्मि च । गेयं साम न्रा । आप्लाव्यादि घदर्थं, कर्त्रर्थं च । गणः ॥२॥

आङ् सुनोति त्यु । अनावश्यके च, असाव्यम् । एवं, पाणिसर्ग्या [रज्जुः ।] समवः । समवसर्ग्या रज्जुः । आभ्यां किम् ? सृज्यम् । ऋवर्णहलन्ताद् धातोः । हार्यम् । पाक्यम् । वाक्यम् । अश्नोतेः ओः उवर्णान्ताद् आवश्यकेऽर्थे । भव्यम् । अवश्यभाव्यम् । अश्नु किम् ? अवश्यस्तुत्यः । आवश्यके किम् ? दव्यम् । अग्नौ वाच्ये इतोऽग्नेः परोऽत्र चाग्नावर्थे चित्या स्यात् । चित्योऽग्निः । अग्निचयनम् । अग्निचित्या । अग्निचयनमन्यत् ॥३॥

एवं, सान्नाय्यं घृतं, हविः । धाय्या सामिधेनी । ऋक्शंसतिश्च रूढ्या । संनेयं, धेयं चान्यत् निकाय्यो निवासः पाय्यं मानम् । निचेयं, मेयं चान्यत् । प्राङ्भ्यां नाय्यः । प्रणाय्योऽसंमतश्चौरादिः । प्रणेयोऽन्यः । कथं प्रणाय्याय पुत्राय ब्रह्म ब्रूयात् । अनभिलाषश्चासंमतिः । आनाय्यो दक्षिणाग्निः । आनायोऽन्यः । सञ्चीयतेऽत्र कुण्डैश्च पीयत इत्यर्थे सञ्चाय्यः, कुण्डपाय्यः, क्रतुश्चेत् । असुबच्छन्दोऽर्थम् । क्रतु किम् ? सञ्चेयः । कुण्डपानम् । द्वितीयो गणः ॥४॥

इत्यः । इङ् । वृङ् । उपेयम् । वार्या ऋत्विजः । बहुलमेव । अनिवार्यो गजैरन्यैः स्वभाव इव देहिनाम् । ऋदुपान्तात् । वृत्यम् । वृध्यम् । नाभ्याम् । कल्प्यम् । चर्त्यम् । भृत्यः । अनाम्नि किम् ? भार्या नाम क्षत्रियाः । नाम्न्यपि स्त्रियां क्यबस्ति चेत् तस्य भावे विधानात् । संभृञादेः रिद् वा । संभृत्यः । संभार्यः । एवं, [कृत्यम् । कार्यम् । शस्यम् । शंस्यम् । वृष्यम् । वर्ष्यम् । मृज्यम् । मार्ग्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम्] सुपष्टितो वदः । सत्योद्यम् । [सत्यवद्यम् ।]

सुप् टित् किम् ? अभिवाद्यः । तथैव हन्तेः हत च । ब्रह्महननं ब्रह्महत्या । स्त्रीहत्या । भुवश्च । ब्रह्मभूयं देवभूयं गतः । तत्त्वं प्राप्तः । भावे किम् ? श्वघात्यः । सुप् टित् किम् । भव्यम् । प्रभव्यम् । घातोपघातौ वर्तेते । ण्यो न बहुलत्वात् । जयादित्योऽप्याह-ण्यो नानभिधानात्' [काशि ३।१।१०८।] । घात्यम्, उपघात्यमित्यन्ये । प्रत्युदाहरन्ति । कुप्यं, धनं चेत् । आज्यं, घृतं चेत् । गोप्यं मार्ग्यं चान्यत् ॥५॥

भादौ पुष्यादि निपात्यते । भे किम् ? पोषणः । सेधनः । उज्झत्युदकम् । भिनत्ति कूलानि । उद्ध्यः । भिद्यः] नदे किम् ? उज्झिता । भेत्ता । पत्रं वाहनम् । [पत्रं] किम् ? योग्यः । हल्यादौ किम् ? जेत्यम् । विपच्यः । विनेयः । पक्ष्यादि । ग्रहः क्यप् । त्वद्गृह्याः । मद्गृह्यः । तत्पक्षाश्रितः [इत्यर्थः ।] ग्रामगृह्या स्त्री, सेना वा । तद्बाह्या [इत्यर्थः] आत् किम् ? ग्रामग्राह्यः । [प्रतिग्राह्यम् । अपिग्राह्यम् ।] प्रगृह्यम्, पदं यस्यावग्रहः क्रियते सन्धेर्वाऽचि । अवगृह्यका इमे । परतन्त्राः । [इत्यर्थः ।] । शक्यार्थे । शक्यं क्षेतुं, क्षय्यम् । [जय्यः । क्रय्यः ।] शक्ये किम् ? क्षेयः । प्रयोज्यः । [नियोज्यः ।] जेयः । कृष्टे पच्यन्ते, कृष्टपच्याः शालयः ॥१७॥

**वास्तव्यकर्ता सिदनीयतव्यौ परापरे वा नञलङ्खलौ क्त्वा ।**
**मेङेककर्त्रोः प्रथमादिवे णं नो यद्यधातौ तु तुमस्ति कालः ॥४।१।१८॥ वृत्तम् ॥**

(१४८) **वास्तव्यकर्ता** । [४।१।१८।१।] चेद् वसति, वास्तव्यः ॥

(१४९) **सित्** । [४।१।१८।२।] सित् केलिमोऽत्र यदर्थम् । अवश्यं पचेलिमा माषाः ॥

(१५०) **अनीयतव्यौ** । [४।१।१८।३।] भावार्मि च धातोः स्तः । शयनीयम्, आसितव्यं त्रा । करणीयः, कर्तव्यः कटः । तथा, स्नानीयं चूर्णम् । दानीयो ना ।

(१५१) **परापरेऽर्थे** । [४।१।१८।४।] परः क्त्वाऽपूर्वोऽपि स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगेन पर्वतो विशिष्यते । अतिक्रम्य पर्वतं नदी । अपरपर्वतयोगेन नदीं विशेष्यते । अत्येन गम्यमाने धातौ क्त्वा । प्रविश्य पिण्डीम् इति मतान्तरे ॥

(१५२) **वा नञलङ्खलौ क्त्वा** । [४।१।१८।५।] प्रतिषेधार्थालङ्खलावुपपदे धातोर्वा क्त्वा स्यात् । अलङ्कृत्वा । अलं कृतेन । खलुकृत्वा । [खलु कृतेन । अलं बाले रुदित्वा । नञर्थे किम् ? अलङ्कारः । अनयोः किम् ? मा कार्षीः । ङिरसमासार्थः ॥

(१५३) **मेङेककर्त्रोः प्रथमात्** । [४।१।१८।६।] मेङोऽपूर्वार्थमेककर्तृकयोः व्यापारयोः पूर्वातिङ् क्त्वा वा । अपमित्य याचते । अपमातुं याचते । याचित्वाऽपमयते । तथा, भुक्त्वा याति । भुक्त्वा पीत्वा गतः । एककर्त्रोः किम् ? भुक्तवति त्वयि स याति । प्रथमात् किम् ? भुङ्क्ते पिबति च ॥

(१५४) **इवे** । [४।१।१८।७।] एककर्त्रोर्युगपद्व्यापारयोरपि पूर्वाद् इवि च प्रतीयमानाद् वा क्त्वा । मुखं व्यादाय स्वपिति । अक्षिणी निमील्य हसति । संस्कृत्य जल्पति । इवात् किम् ? गच्छति जल्पति च ॥

**( १५५ ) णम् । [ ४।१।१८।८।]** तथा धातोः, क्त्वा वा । बहुलार्थं वृत्तचतुष्टयं सप्तपदी च–

आभीक्ष्ण्यपूर्वे प्रथमे तथाऽग्रे तेनोपदेशश्च गितोर्म ऐक्ये ।
ङौ चोपपीड्पार्श्वरुधात् प्रमाणासत्त्योस्त्वरासोरमि वा ध्रुवेऽङ्गे ॥१॥

क्लेशे च नाम्नि ग्रह आदितश्च कालेऽन्तरे वाऽसुतृषो यङि स्क-।
न्दत्येद् विशेः क्त्वा च भुवोऽपि तूष्णीमि चानुलोम्येऽन्वचि कुश्च तोऽङ्गे ॥२॥

नाधार्थतोच्चैरपि तिर्यचोऽन्तो वादावनिष्टोक्तिषु खि णुमध्यः ।
स्वादर्थतः क्रोशि च अन्यथैवं कथमित्थ[मे]भ्योऽपि अनर्थकाच्च ॥३॥

तथायथाभ्यामसहोत्तरे च जीव्विन्दतेर्यावति विद्दृशिभ्याम् ।
कात्स्न्र्ये च चर्मोदरतश्च पूरेर्वृद्वृष्टिमाने वसनार्थक्नोपेः ॥४॥

पिषु शुष्कचूर्णादनु सोऽचि रूक्षाज्जीवग्रहाच्चाकृत कुः समूलात् ।
घ्नः कष् णि मूलाच्च इवान्तकर्तुः पूर्शुष्ट ऊर्ध्वात् पुरुषाद् वहः स्यात् ।
जीवान्नशो घ्नः करणात् पिषस्तु स्नेहात् करार्थाद् ग्रहवर्तितः पुषः ।
स्वार्थाद् ङि बन्धनाम्नि च सप्रपाद् वृत् ॥५॥

आभीक्ष्ण्ये । भोजं भोजं याति । भुक्त्वा भुक्त्वा व्रजति । पूर्वाद्युपपदे च । पूर्वं भोजं, पूर्वं भुक्त्वा वा याति । एवं प्रथमं [भोजं भुक्त्वा वा याति ।] अग्रे । [भोजं भुक्त्वा वा याति ।] तेनेति करण उपपदे उपदंशश्च न वा टैंति समासः । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं भुङ्क्ते । मूलकेनोपदश्य भुङ्क्ते । तेन किम् ? मूलकमुपदश्य भुङ्क्ते । गितो हिंसार्थात् तथाप्यस्यैकत्वे सति । दण्डोपघातं, [दण्डेनोपघातं, दण्डताडं, दण्डेन ताडं] गाश्चालयति ना । अर्म ऐक्ये किम् ? दण्डेनोपहत्य चौरं गाश्चालयति । ङौं टां चोपपदे उत्पीडादेस्तथा । पार्श्वयोरुपपीडं, [पार्श्वोपपीडं, पार्श्वाभ्यामुपपीडं, पार्श्वाभ्यामुपपीड्य वा] शेते । क्त्वा च । एवं, पाणावुपकर्षं [पाण्युपकर्षं, पाणिनोपकर्षं, पाणिनोपकृष्य वा] गृह्णाति । व्रज उपरोधं [व्रजोपरोधं, व्रजेनोपरोधं, व्रजेनोपरुध्य वा] गाः शादयति । इयत्तासन्नेऽर्थे, तथा ङौ धातोः । द्व्यङ्गुले उत्कर्षं, [द्व्यङ्गुलोत्कर्षं, द्व्यङ्गुलेनोत्कर्षं, द्व्यङ्गुलेनोत्कृष्य वा] काष्ठं छिन्धि । केशेषु ग्राहं, [केशग्राहं, केशैर्ग्राहं, केशैर्गृहीत्वा वा] युध्यन्ते । ङौं किम् ? द्व्यङ्गुलमुत्कृष्य । प्रमाणासत्त्योः किम् ? दण्डं त्यक्त्वा गतः । त्वरासौ । त्वरागतौ तथा पञ्चम्यां धातोः । शय्याया उत्थाप, [शय्योत्थायं, वा] याति । [एवं नाम त्वरते यदवश्यं कर्तव्यमपि नापेक्षते, शय्योत्थानमात्रमाद्रियते । रन्ध्रापकर्षं, रन्ध्रादकृष्य वा पयः पिबति ।] त्वरा किम् ? आसनादुत्थाय याति । रमि च । यष्टिग्राहं [यष्टिं ग्राहं, यष्टिं गृहीत्वा वा] युध्यन्ते । एवं ते त्वरन्ते [यत्] प्रहरणान्यपि नापेक्षन्ते । क्षिप्राऽमृते ङे । स्वाङ्गे रमि तथा धातोः । भ्रुवोः विक्षेपं, [भ्रूविक्षेपं जल्पति । अक्षिणी काणम्, अक्षिकाणं] जल्पति । अध्रुवे किम् ? उत्क्षिप्य शिरः कथयति ॥१॥

पीडागतौ, आप्येऽङ्गे तथा । उरांसि प्रतिपेषम्, [उरःप्रतिपेषं वा] युध्यन्ते । कृत्स्नमुरः

प्रपीड्येत्यर्थः । क्लेशे किम् ? उरः पीडयित्वा शेते । नामाप्ये ग्रहेरादिशश्च तथा । नामग्राहं, [नामानि ग्राहं वा] ददाति । नामादेशं । [नामान्यादेशं वा] । क्रियाविच्छेदगतौ कालेऽमि तथाऽसुतृषः । द्व्यहात्यासं, [द्व्यहमत्यासं वा] द्व्यहतर्पं, [द्व्यहं तर्पं] गाः पाययति । अतिक्रम्याह्नी पाययति [इत्यर्थः] यङि भृशाभीक्ष्ण्ये तथामि स्कन्दादेः समासेनोक्तत्वान्न द्विरुक्तिः. वाक्ये स्यात् । गेहावस्कन्दं, गेहं गेहमवस्कन्दं, गेहमवस्कन्दमवस्कन्दम् आस्ते । क्त्वा च । [गेहमवस्कन्द्य, गेहमवस्कन्द्यावस्कन्द्यास्ते ।] एवं, गेहानुप्रपादं, [गेहमनुप्रपादं, गेहमनुप्रपादमनुप्रपादं, गेहं गेहमनुप्रपादम् । गेहानुप्रपातम् ।] गेहानुप्रवेशमास्ते । यङि किम् ? गेहं प्रविश्य भुङ्क्ते । तूष्णीमि भुवो णम् । क्त्वा वा । क्त्वा समासविकल्पार्थम् । तूष्णींभावं, तूष्णींभूय, तूष्णींभूत्वा आस्ते । तथाऽन्वचि भुव आनुलोम्यार्थाः । अन्वग्भावम् [अन्वग्भूय, अन्वग्भूत्वा] आस्ते । आनुलोम्ये किम् ? अन्वग्भूत्वा स्थितः । तोऽङ्गे । तसन्तः स्वाङ्गे तथा कृञः भुवश्च । मुखतः कारं गतः । [मुखतः कृत्य गतः । मुखतः कृत्वा गतः । ] पृष्ठतः कारं, [पृष्ठतः कृत्य, पृष्ठतः कृत्वा, पृष्ठतो भावं, पृष्ठतो भूय, पृष्ठतो भूत्वा] गतः । अङ्गे किम् ? सर्वतः कृत्वा गतः । तस्प्रत्ययः किम् ? मुखे तस्यति मुखतः कृत्वा गतः ॥२॥

अध्ये । ध्यर्थान्नाधार्थात् कृभुवस्तथा । नानाकारं, [नानाकृत्य, नानाकृत्वा, नानाभावं नानाभूय, नानाभूत्वा] । विनाकारं, [विनाकृत्य, विनाकृत्वा । विनाभावम् ।] द्विधाकारं, [द्विधाभूय, द्विधाभूत्वा । द्विधाकृत्य, द्विधाकृत्वा, द्विधाभावं गतः ।] द्वैधंकारं, [द्वैधंभूय, द्वैधंभूत्वा, द्वैधंकृत्य, द्वैधंकृत्वा, द्वैधंभावं] गतः । अर्थात् किम् ? नानाकृत्वा काष्ठानि गतः । तिर्यचः कुः । तौ अन्ते क्रियासमाप्तौ । तिर्यक्कारं, तिर्यक्कृत्य, तिर्यक्कृत्वा गतः । समाप्य गतः [इत्यर्थः ।] अन्ते किम् ? तिर्यक् कृत्वा काष्ठं गतः । वादौ कुत्स्नौ अनभिप्रेताख्यागतौ । ब्राह्मण ! पुत्रस्ते जातः [किं तर्हि वृषल !] नीचैःकारं, [नीचैःकृत्य, नीचैःकृत्वा] आचष्टे । उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण ! कन्या ते गर्भिणी । उच्चैःकारं, [उच्चैःकृत्य । उच्चैःकृत्वा] आचष्टे । नीचैर्नामाप्रियमाख्येयम् । अनिष्टोक्तौ किम् ? नीचैः कृत्वा । अच्व्यन्ताऽतीकारात् स्वाद्वर्थाप्यात् कृञो णम् चास च । खिवत् । पुनर्णम् नित्यवृत्यर्थम् । अस्वादुं स्वादुङ्कारं, स्वादुं कृत्वा भुङ्क्ते । सम्पन्नङ्कारं, [सम्पन्नं कृत्वा] । लवणङ्कारं, [लवणं कृत्वा] च । अच्व्यः किम् ? स्वादूकृत्य । स्वाद्वींकृत्य । आक्रोशे र्मः कुः खि णुम् । चौरस्त्वमसीत्याक्रोशति । चौरङ्कारं, [चौरङ्कृत्य,] दस्युङ्कारं [दस्युङ्कृत्य] अतं तमाह । च खिदर्थम् । अन्यथादेः, अनर्थककुः तथा । अन्यथाकारं भुङ्क्ते । [एवङ्कारं भुङ्क्ते । कथङ्कारं भुङ्क्ते । इत्थङ्कारं भुङ्क्ते ।] क्त्वा । [अन्यथाकृत्वा भुङ्क्ते ।] अन्यथा भुङ्क्त इत्यर्थे नानर्थकत्वम् । अस्ति चौक्तार्थानामनुवादतया प्रयोगः । अनर्थात् किम् ? अन्यथाकृत्वा शिरो भुङ्क्ते ॥३॥

असहोत्तरेऽसूयाप्रतिवचने यथातथाभ्यां कुस्तथा । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । अत्र किम् ? यथाकृत्वाहं भोक्ष्ये तथा द्रक्ष्यसि । न्यग्वति किम् ? यथाकृत्वाहं शिरो भोक्ष्ये तथाकृत्वा भोक्ष्ये किं तव । णम्विधो क्त्वा च । तथा यावति जीवति विन्देर्णम् । यावज्जीवमधीते । यावद्वेदं भुङ्क्ते । यावल्लभते । [तावद्भुङ्क्त इत्यर्थः] । विदिद्दशेः कात्स्न्र्येऽर्थेऽमि । ब्राह्मणवेदं भोजयति । [यं यं ब्राह्मणं जानाति तं तं] सर्वं भोजयतीत्यर्थः । कन्यादर्शं वरयति । कात्स्न्र्ये

किम् ? ब्राह्मणं दृष्ट्वा भोजयति । एवं, चर्मपूरमास्तृणाति । उदरपूरं भुङ्क्ते । विदिति पूरे रू इलुक् च । वृष्टिप्रमाणेऽर्थे । गोष्पदपूरं, [गोष्पदप्रं] वृष्टः । सीताप्रं, [सीतापूरं वृष्टः] मूषिकाबिलपूरं, [मूषिकाबिलप्र]तरम् । एवं [मूषिकाबिलप्र]तमं [वृष्टः] । वसनार्थात् क्नोपेः । वस्त्रक्नोपं, चेलक्नोपं वृष्टः ॥४॥

शुष्कादेः पिषः । इतः सधातुरप्रबुध्यते । शुष्कपेषं पिनष्टि । [चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टिः ।] एवं, जीवग्राहं गृह्णाति । एवम्, अकृतकारं करोति । समूलघातं हन्ति । निर्मूलकाषं कषति । समूलकाषं कषति । इवार्थाच्च कर्तुः । कर्तृश्चाप्याच्च धातोस्तथा उपमानेऽर्थे । अज इव नष्टः, अजनाशं नष्टः । घृतविधायं, रत्ननिधायं वा निहितः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वशोषं शुष्यते । ऊर्ध्वं पूर्यते, शुष्यति चेत्यर्थः । पुरुषवाहं वहति । जीवनाशं नष्टः । करणाद् हन्तेः । पाणिघातं वेदिं हन्ति । पादघातं भूमिं हन्ति । ताभ्यां हन्ति [इत्यर्थः] । स्नेहात् करणात् पिषः । उदपेषं पिनष्टि । एवं, करग्राहं गृह्णाति । हस्तवर्तं वर्तयति । स्वार्थादात्मीयधनज्ञातिवचनात् करणात् पुषेः । गोपोषम् । महिषीपोषम् । धनपोषम् । रैपोषम् । पितृपोषम् । मातृपोषं पुष्णाति । ङिर्बन्ध् । आधाराद् बन्धः । चक्रबन्धं बद्धः । चक्रे बद्ध इत्यर्थः । नाम्नि च बन्धः । क्रौञ्चबन्धं बद्धः । चण्डालिकाबन्धं बद्धः । अट्टालिकाबन्धं बद्धः । मयूरिकाबन्धं बद्धः । बन्धविशेषसंज्ञा । वृद् गणान्ते ॥५॥

**( १५६ ) नो यद्यधातौ तु । [ ४।१।१८।९। ]** यच्छब्दप्रयोगे धात्वन्तरानाकाङ्क्षायां स्वादिः क्त्वाणमौ न स्तः । यदयं भुङ्क्ते ततो व्रजति । अधातौ किम् ? यदयं भुक्त्वा व्रजति, अधीते ततः परम् ।

**( १५७ ) तुमस्ति कालः । [ ४।१।१८।१०। ]** परार्थम् ॥१८॥

**ज्ञाग्लार्हशक्क्रंसहलभ्रभार्थे धातोस्तदर्थे ण्व च कर्तृभावे ।**
**ते धातुयोगे तृनपोरतुल्यो ज्ञोऽतु त्स्वपोः शानशतृक्रियायाः ॥४।१।१९॥**

**वृतम् ॥**

**( १५८ ) ज्ञाग्लार्हशक्क्रं सहलभ्रभार्थे । [ ४।११९।१। ]** ज्ञादेर्भावे तुम् स्याद् अस्त्याद्यर्थ उपपदे । अस्ति, भवति, विद्यते भोक्तुं कालः समयः । वेलाऽवसरो भोक्तुम् । ज्ञानार्थे । जानात्यवगच्छति भोक्तुम् । ग्लायत्यलस्यते भोक्तुम् । अर्हति, योग्यो, घटते, भोक्तुम् । शक्नोति, शक्तः, अलं, पर्याप्तः, प्रभुः, प्रगल्भो भोक्तुम् । प्रक्रमते भोक्तुम् । असहते, लभते, आरभत भोक्तुम् ॥

**( १५८ ) धातोस्तदर्थे । [ ४।१।१९।२। ]** धातोः तुम् स्यात् तत्क्रियाप्रयोजने धातौ परे । भोक्तुं व्रजति । अध्येतुं याति । धातौ किम् ? भिक्षिष्ये इत्यस्य जटाः । तदर्थे किम् ? धावतस्ते पतिष्यति दण्डः । भविष्यत्यर्थात् ।

**( १५९ ) ण्व च कर्तृ । [ ४।१।१९।३। ]** तथा कर्तरि । भोजको व्रजत्योदनम् । एधानाहरको याति । न तृयादिः षष्ठि ॥

**( १६० ) भावे । [ ४।१।१९।४। ]** हिताय ते धातोः स्युः धातौ तदर्थे । पाकाय व्रजति ।

पक्तये, पचनाय व्रजति ॥

**(१६१) ते धातुयोगे । [४।१।१९।४।]** धात्वर्थानां योगे विशेष्यविशेषणभावे सति ते यथाकालोक्ता अपि प्रत्ययाः साधवः स्युः । अग्निष्टोमयाज्यस्य पुत्रो भविता । कृतः कटः श्वो भविता । भाविकृत्यमासीत् । भूतकालादि भविष्यतिकारादिना सम्बध्यमानः साधुः स्यात् । विशेषणं विशेष्यकालमेवानुरुध्यते तेन प्रत्ययः । त इति प्रत्ययाः । अतस्तद्धिताश्च धातुसम्बन्धे कालभेदे स्युः । गोमानासीत्, भविता वा ॥

**(१६२) नृनपोरतुल्यः । [४।१।१९।६।]** अस्त्रियो विहितोऽसमानरूपोऽपवादप्रत्ययः बहुलं स्यात् । विक्षेपकः । विक्षेप्ता । विक्षिपः । अतुल्यः किम् ? आप्यादण् सुपः । प्रायातः कण्वगोदः । नानुबन्धकृतमसारूप्यम् । अस्त्रियां किम् ? स्त्रियां क्तिन् । पर अः बाधक एव । चिकीर्षा ॥

**(१६३) ज्रोऽतृ । [४।१।१९।७।]** जृषोऽतृ स्यात् । जरत् । जरती ॥

**(१६४) त्स्वपोः शानशतृ । [४।१।१९।८।]** त्सौ सम्बोधनेऽपीत्यप्रथमासमानाधिकरणे च धातोः शानशतृ एतौ स्तः । हे पचन् । हे पचमान । पचन्तं पश्य । [पचमानं पश्य ।] पचति निधेहि । अपि किम् ? स पचति । प्रथमासमानाधिकरणेऽपि । सन् विद्यमानः । जुह्वत् । अधीयानः । बहुलत्वात् ॥

**(१६५) क्रियायाः । [४।१।१९।९।]** परार्थः ॥१९॥

**हेत्वङ्क्योर्द्विट्सुञमित्रपत्योर्धारीङकृच्छ्रेऽर्हशतृस्तुतौ (तु) शानः ।**
**(पूङो यजः) शक्तिवयः स्वभावे आसीन आने मुगतः स्वलृट् तौ ॥४।१।२०॥ वृत्तम् ॥**

**(१६५) हेत्वङ्क्योः । [४।१।२०।१।]** क्रियायाः जनकलक्षणवृत्तेर्धातोस्तौ स्तः । अर्जयन् वसति । अधीयान आस्ते । अङ्के । शयाना भुञ्जते यवनाः । तिष्ठन्तोऽनुशासति गणकाः । हेत्वङ्क्यो किम् ? पचति, पठति च । क्रियायाः किम् ? द्रव्यगुणयोर्मा भूत् । यः कम्पते सोऽश्वत्थः । यदुत्प्लवते तल्लघु ॥

**(१६६) द्विट्सुञमित्रपत्योः । [४।१।२०।२।]** क्रमेणातः अमित्रे स्वामिनि परः शतृ स्यात् । द्विषन् । सुन्वन्तो यजमानाः सत्रिण उच्यन्ते । अमित्रपत्योः किम् ? देष्टि पतिं भार्या । याजकेषु न । यज्ञसंयोगे एव । सुनोति सुराम् ॥

**(१६७) धारीङकृच्छ्रे । [४।१।२०।३।]** सुखसाध्ये धात्वर्थेऽतः शतृ । धारयन्नुपनिषदम् । अधीयन् पारायणम् । अकृच्छ्रे किम् ? कृच्छ्रेण धारयति, अधीते ॥

**(१६८) अर्हशतृ स्तुतौ (तु) । [४।१।२०।४।]** तथा । अर्हन् स विद्याम् । अर्हन् भवान् पूजाम् । स्तुतो प्रशंसायां किम् ? अर्हति चौरो बन्धम् ॥

**(१६९) शानः (पूङो यजः) । [४।१।२०।५।]** स्यात् । पवमानः सोमम् । यजमानः ॥

(१७०) **शक्तिवयः स्वभावे । [४।१।२१।६।]** अर्थे तङानिभ्योऽपि शानः स्यात् । कतीह निघ्नानाः ? [कतीह] कवचं पर्यस्यमानाः ? कतीह शिखण्डं वहमानाः ? कतीह मन्द्रयमानाः ? [कतीह] भूषयमाणाः ?

(१७१) **आसीनः । [४।१।२०।७।]** निपात्यते ॥

(१७२) **आने मुगतः । [४।१।२०।८।]** अतो मुगागमः स्यात् आने परे । वर्धमानः । पच्यमानः ॥

(१७३) **स्वलृट् तौ । [४।१।२०।९।]** स्वे भविष्यद्विषये यौ लृट् स तौ शतृशानौ स्यात् । भविष्यन् । करिष्यमाणः । स्वे किम् ? जानासि नो तत्र वत्स्यामः ॥२०॥

**विद्वांश्च लण्माङि क्षिपात् क्वसुर्लिट् कानः स्यतासौ लृलुटोश्च लोश्ले-।**
**ऽनद्भ्यश्च शब्लुक् च हुतोऽप्युशौ तन्तुद्भ्यो रुधां श्नं श्य दिवादितो वा ॥४।१।२१॥ वृत्तम्॥**

(१७४) **विद्वांश्च । [४।१।२१।१।]** विदेर्लट् क्वसु निपात्यते । विद्वांसौ । [विद्वांसः ॥]

(१७५) **लट् । [४।१।२१।२।]** स्वे वर्तमानकाले तौ स्यात् । पचन् । पचमानः । पचति । [पठति ।] सन् अस्त्युदाहृतम् स्वे किम् ? करोति स्म ॥

(१७६) **माङि क्षिपात् । [४।१।२१।३।]** माङ्योगे क्षेपेऽर्थे लट् तौ स्यात् । मा पचन् । मा पचमानः । अत एव माङि लट् ॥

(१७७) **क्वसुर्लिट् कानः । [४।१।२१।४।]** लिडो तौ स्याद् बहुलम् । जक्षिवान् । पपिवान् । चिक्यानः । सुषुवाणः । शिशीर्वान् । शिशिराणः । किदनरेङर्थः ॥

(१७८) **स्यतासौ लृलुटोश्च । [४।१।२१।५।]** धातोः स्यातामस्तः लृलुटोः परयोः । लृ इति लुट् लृट् च । करिष्यति । करिष्यत् । अकरिष्यत् । तथा, कर्ता ॥

(१७९) **लोश्लेऽनद्भ्यश्च शप् । [४।१।२१।६।]** शलोटि शिल्लिडि लटि लङि सपरे अनदादेः भ्वादेः कर्तरि शप् स्यात् । भवत् । भवेत् । भवति । अभवत् । अनद्भ्यः किम् ? अत्ति । लोश्ले किम् ? पपाच । पच्यात् । अपाक्षीत् । पक्ता । पक्ष्यति । अपक्ष्यत् ॥

(१८०) **लुक् च हुतोऽपि । [४।१।२१।७।]** जुहोत्यादेः शपोर्लुक् स्याल्लोश्लोः । रिद् द्वित्वार्थम् । जुहोति । जुहुयात् । ददाति । अददात् ॥

(१८१) **उशौ तन्तुद्भ्यः । [४।१।२१।८।]** तनादितुदादेः क्रमेण उशौ स्तः । तनोति । [तनोतु । अतनोत् । तनुयात् ।] तुदति । [तुदतु । अतुदत् । तुदेत् ॥]

(१८२) **रुधां श्नम् । [४।१।२१।९।]** तथा । रुणद्धि । रुन्ध्यात् । अभिनत् । मिदचोऽन्त्यार्थः ॥

(१८३) **श्य दिवादितो वा । [४।१।२१।१०।]** तथा । दीव्यति [दीव्यतु । अदीव्यत् ।

दीव्येत् । वोत्तरार्थः ॥२१॥

**भ्रम्भ्राशलष्क्रन्त्रुटिभ्लाशत्रसिक्लंसं ये यसोऽक्षः श्नुस्तनूकृतौ तक्ष् ।**
**स्वादेः श्रुकृध्विव् शृकृधिः स्कुतः स्त स्कुस्कस्तुतोम्भो रिह श्ना च क्रीभ्यः ।**
**भञ्ज्स्वञ्जि निद्वेणिलटि शान्मृगाप्ये ॥४।१।२२॥ पञ्चपात् ॥**

**( १८४ ) भ्रम्भ्राशलष्क्रन्त्रुटिभ्लाशूत्रसिक्लं सं ये यसः । [ ४।१।२२।१।]** तथेभ्यः श्यो वा । भ्राम्यति । [भ्रमति । भ्राश्यते । भ्राशते । लष्यति । लषति । क्राम्यति । क्रामति । त्रुट्यति । त्रुटति । भ्लाश्यते । भ्लाशते । त्रस्यति । त्रसति । क्लाम्यति । क्लामति । संयस्यति । संयसति । यस्यति । यसति] शप् च । [भ्रमति इत्यादिषु ।] सं किम् ? आयस्यति ॥

**( १८५ ) अक्षः श्नुः । [ ४।१।२२।२।]** तथा वा । अक्ष्णोति । [अक्षति ।।]

**( १८६ ) तनूकृतौ तक्ष् । [ ४।१।२२।३।]** तथा । तक्ष्णोति, [तक्षति] काष्ठम् । तनूकरणे किम् ? सन्तक्षति वाग्भिः शिष्यम् ॥

**( १८७ ) स्वादेः । [ ४।१।२२।४।]** तथा नित्यम् ॥ सुनोति । [सुनोतु । असुनोत् । सुनुयात् ॥

**( १८८ ) श्रुकृध्विव् शृकृधिः । [ ४।१।२२।५।]** श्रुकृव् धिव् क्रमेण शृकृधिश्च स्यात् । शृणोति । [कृणोति । धिनोति ॥]

**( १८९ ) स्कुतः स्तस्कुस्कस्तुतोम्भोरिह श्ना च । [ ४।१।२२।६।]** स्कोः श्नादेः मभोस्च । स्कुस्तम्भुस्तुम्भुस्कम्भुस्कुम्भुभ्यः । तथा स्ना च श्नु च स्यात् । सौत्राः [धातवः] । स्कुनाति । स्कुनोति । स्तभ्नाति । [स्तभ्नोति ।] एवं [स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कुभ्नाति । स्कुभ्नोति ॥]

**( १९० ) क्रीभ्यः । [ ४।१।२२।७।]** क्रीणाति । [क्रीणातु । अक्रीणात् । क्रीणीयात् ।] क्रीणत् । क्रीणानः ॥

**( १९१ ) भञ्ज्स्वञ्जि निद्वेणिलटि । [ ४।१।२२।८।]** भञ्जेरिणि स्वञ्जेर्लिट् न इल्लुग्वा स्यात् । अभाजि । अभञ्जि । परिपस्वजे । परिपस्वञ्जे ॥

**( १९२ ) श्नात् । [ ४।१।२२।९।]** श्नमः परो नित् स्यात् । अञ्जू । व्यङ्क्तः । व्यञ्जति । व्यञ्जन् ॥

**( १९३ ) मृगाप्ये । [ ४।१।२२।१०।]** परार्थम् ॥२२॥

**रजेणौ दंशिस्वञ्जिसञ्जेश्च शित्योदिषो यङ्गमश्छो जन ज्ञा च जा पा ।**
**पिबो ध्मा धमो म्ना मनो दाण्दृशौ यच्छपश्यौ शीय्जिघ्र शद्घ्रा सदि स्था च सीत्ति-।**
**ष्ठ दीर्घोऽक्क्लमाचंष्ठिवश्चातडाने क्रमः श्ये शमां ह्रस्व पुच्छुर्कुरोऽचि ।**
**ह्विणो व्योऽपि कुकृञ् तथा श्नासदिच्छ्नात् स आदष्टपात् पाद एषः ( समाप्तः ) ॥४।१।२३॥**

**(१९३) रजेर्णौ** । [४।१।२३।१।] निन्निर्देशाद् रञ्जेः णौ परे नित् स्यात् । रजयति मृगान् । मृगाप्ये किम् ? रञ्जयति वस्त्रम् । णौ किम् ? ररञ्जे मृगान् ॥

**(१९४) दंशिस्वञ्जिसञ्जेश्च शिति** । [४।१।२३।२।] दंश्यादेः रञ्जेश्च शिति नित् स्यात् । दशति । दशन् । परिष्वजे । परिष्वजमानः । सजति । सजन् ॥

**(१९५) ओत्** । (४।१।२३।३।] शिति लुक् स्यात् । दो-द्यति । सो-स्यति भवतीति प्रायोगिकत्वान्न स्यात् ॥

**(१९६) इषो यङ्गमश्छः** । [४।१।२३।४।] एषां च्छोऽन्तः स्यात् । इच्छति । यच्छति । गच्छति ॥

**(१९७) जनज्ञा च जा** । [४।१।२३।५।] सिति स्यात् । जायते । जायमानः । जानाति । जानन् ।

**(१९८) पा पिबो ध्मा धमो म्ना मनः** । [४।१।२३।६।] तथा स्यात् । पिबति । [धमति । मनति] ॥

**(१९९) दाण्दृशौ यच्छपश्यौ** । [४।१।२३।७।] स्तः । यच्छति । [पश्यति ।]

**(२००) शीय्जिघ्र शद्घ्रा** । [४।१।२३।८।] स्तः । शय्या । शीयते । जिघ्रति ॥

**(२०१) सदि स्था च सीत्तिष्ठ** । [४।१।२३।९।] स्तः । सीदति । [तिष्ठति ॥]

**(२०२) दीर्घोऽक्क्लमाचंष्ठिवश्च** । [४।१।२३।१०।] शित्येषां दीर्घोऽक् स्यात् । क्लाम्यति । क्लामति । आचामति । आत् किम् ? चमति । विचमति । निष्ठीवति ॥

**(२०३) अतङाने क्रमः** । [४।१२३।११।] तथा । क्रामति । क्रामन् । अतङाने किम् ? क्रमते ॥

**(२०४) श्ये शमाम्** । [४।१२३।१२।] शमाद्यष्टानां श्येऽग्दीर्घः स्यात् । शाम्यति । [ताम्यति । दाम्यति । श्राम्यति । भ्राम्यति । क्षाम्यति । क्लाम्यति । माद्यति ।] अष्टानामेव [किम् ?] अस्यति । श्ये किम् ? भ्रमन्ति ॥

**(२०५) ह्रस्व पुच्** । [४।१।२३।१३।] पुच् प्रत्याहारः । प्वादीनां शिति ह्रस्वोऽच् स्यात् । पुनाति । लुनाति । [स्तृणाति । धुनाति । वृणाति । शृणाति । मृणाति । पृणाति । बृणाति । भृणाति । दृणाति । जृणाति । नृणाति । ॠणाति । रिणाति । लिनाति ।] इत्यादि ॥

**(२०६) छुर्कुरः** । [४।१।२३।१४।] अक् ह्रस्वः स्यात् । छुर्यात् । कुर्यात् । कुर्वन् । उर्वीग्घलि दीर्घः । [गीः । धूः । पूः । आस्तीर्णम् । विशीर्णम् । अवगूर्णम् ॥]

**(२०७) अचि ह्विणो व्योऽपि** । [४।१।२३।१५।] हू इ लौव्यः स्याद् वा श्लेऽपीत्यजादौ परे । जुह्वति । जुह्वत् । यन्ति । यन् । अचि किम् ? जुहुतः । इतः । अपि

किम् ? जुहवानि । अयानि । लो श्ले किम् ? जुहुवतुः । ईयतुः । आयडिति परत्वादारैच् ॥

**(२०८) कुकृञ् तथा । [४।१।२३।१६।]** लो श्लेऽपिति । कुरुतः । कुर्वन्ति । अपिति किम् ? करोति ॥।

**(२०९) श्नासदित् । [४।१।२३।१७।]** श्नम अस्तेरत् लो श्लेऽपिति । रुन्धः । रुन्धन्ति । रुन्धन् । स्तः । सन्ति । सन् । अत् किम् ? आसन् ॥

**(२१०) श्नात् स आत् । [४।१।२३।१८।]** श्ना इत्यस्य अद्भूक्रो यस्मात्, तस्य चादित्, स्यात्, लो श्लेऽपिति । क्रीणन्ति । क्रीणन् । जहति । ददुः । दधुः । दत्तः । धत्तः । ददत् । दधत् । यङ्लुक् । पायति । पायन् । अपि किम् ? प्रीणाति । ददाति ॥

अष्टपाच्छन्दोजातिः । **पाद एष त्रयोदशः ॥२३॥ ॥१३॥**

**(इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे चतुर्थाध्याये प्रथमः, आदितो वा त्रयोदशः, पादः ।)**



## [ ॥ अथ चतुर्थाध्याये द्वितीयः पादः ।]

### [ आदितश्चतुर्दशः पादः ।]

**ई हल्यदो वा भिय इद्दरिद्रो हाकश्च हौ वात् पिति चौदुदद्वेः ।**
**वोर्णोश्च नालीन्तृणहः स्सिलुक् तौ कल्ह्रस्वतः थास्त उ वा तनादेः ॥४।२।१॥ वृत्तम् ॥**

(१) **ई हल्यदः । [ ४।२।१।१।]** श्नाज्झ आदीत् स्यात्, दासंज्ञावर्जितः लोऽश्लेऽपिति । क्रीणीतः । लुनीहि । मिमीते । जिहीते । हलि किम् । लुनते मिमते । अदः किम् ? दत्ते । धत्ते । अपि[ति] किम् ? क्रीणाति । जहाति ॥

(२) **वा भिय इत् ( ४।२।१।२।]** तथाऽन्तः । बिभितः । बिभीतः । [बिभिथः । बिभीथः ।] हलि किम् ? बिभ्यति । पिति, बिभेति ॥

(३) **दरिद्रः । [ ४।२।१।३।]** नित्यम् ॥ दरिद्रितः । दरिद्रिहि । हलि किम् ? दरिद्रति । पिति, दरिद्राति ॥

(४) **हाकश्च । [ ४।२।१।४।]** तथा इड् वा । जहितः । जहीतः ॥

(५) **हौ वाऽऽत् । [ ४।२।१।५।]** हाको हौ परे आदिच्च वा स्तः । जहाहि । जहिहि । जहीहि ॥

(६) **पिति चौदुदद्वेः । [ ४।२।१।६।]** अद्विरुक्तस्य धातोरुदौत् लोऽश्ले हलि पिति । यौति । रौमि । पिति किम् ? युतः । अद्वे किम् ? रारौति । उत् किम् ? एति । हल् किम् ? यवानि ॥

(७) **वोर्णोश्च । [ ४।२।१।७।]** तथा । प्रार्णोति । प्रोर्णौति । पिति किम् । प्रोर्णुतः । हलि किम् ? प्रोर्णवानि ॥

(८) **नालि । [ ४।२।१।८।]** तथाऽल्मात्रे । प्रौर्णोत् । प्रौर्णोः ॥

(९) **इन्तृणहः । [ ४।२।१।९।]** तथेमागमः स्यात् । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् । पिति किम् ? तृण्ढः । हलि किम् ? तृणहानि । अल् न वर्तते ।

(१०) **स्सिल्लुक् तौ झल्ह्रस्वतः । [ ४।२।१।१०।]** आभ्यां स्सिल्लुक् स्यात् तौ तवर्ग्यादौ । अभिन्त । अभिन्तम् । अभिद्ध्वम् । अकृत । अकृथाः । अकृड्ढ्वम् । झल्ह्रस्वात् किम् ? अमंस्त । अचैष्टाम् । सादि किम् ? अवादिष्ट । तौ किम् ? अभैत्सीत् ॥

**( ११ ) थास्त उ वा तनादेः ।** [ **४।२।१।११।** ] तनादेः परः सिल्लुग्वा स्यात् थासि ते च । अतथाः । अतिनिष्ठाः । अततः । [अतनिष्ट ।] असाथाः । [असनिष्ठाः । असात । असनिष्ट ।] थास्वत्ते किम् ? अतनिष्ट यूयम् । उ निपातः ॥१॥

**घ्राधेशाच्छासोऽतङ्लुक् स्थेण्दाभूपः धीटय्ंशात् सावारेजश्वेः ।**
**स्यज्झल्हल्प्राचः र्लीङ्यद्वोर्णोर्हल्यह्म्येदिद् विद्युन्माला ॥४।२।२॥**

**( १२ ) घ्राधेशाच्छासोऽतङ्लुक् ।** [ **४।२।२।१।** ] लुग्वाऽतः स्यात् तङि परे । अघ्रात् । अघ्रासीत् । एवं, [अदात् । अदासीत् । अशात् । अशासीत्, अच्छात् । अच्छासीत् । असात् । असासीत् ।] अतङ्यु किम् ? अघ्रासातां सुमनसो त्रा ॥

**( १३ ) स्थेण्दाभूपः ।** [ **४।२।२।२।** ] तन्नित्यम् । अस्थात् । अगात् । इण् किम् ? अगासीन्नटः । दासंज्ञः । अदात् । अधात् । अभूत् । अपात् । भूवत् पा किम् ? अपासीत् नृपः प्रजाः । अतङि किम् ? अघ्रासातां मातरौ वत्सेन ॥

**( १४ ) धि ।** [ **४।२।२।३।** ] धादौ सिलुक् । अलविढ्वम् । अलविध्वम् । व्यत्ययाद् ध्वम् ।

**( १५ ) ईटय्ंशात् ।** [ **४।२।२।४।** ] ईटि तथांशाद् इटश्च । अलावीत् । अग्रहीः । ईटि किम् ? अलाविषुः । अंशात् किम् ? अकार्षीत् ॥

**( १६ ) सावारेजश्वेः ।** [ **४।२।२।५।** ] सावतङि परेऽश्वेरिङान्तस्याऽऽर् एच् स्यात् अकार्षीत् । अनैषीत् । अलावीत् । श्वेः । अश्वयीत् । तङि । अच्योष्ट ॥

**( १७ ) स्यज्झल् ।** [ **४।२।२।६।** ] सि सादौ सो हलन्तस्याजारैच् स्यात् । अपाक्षीत् । अताप्सीत् । अभैत्सीत् । अरौत्सीत् । अराङ्क्षीत् । सि किम् ? अपावीत् । आकार्षीत् । तङि । अभित्साताम् ॥

**( १८ ) हल्प्राचः र्लीङ्यत् ।** [ **४।२।२।७।** ] हलादेर्धातोरदारैच् स्याद् रे ले च परे इडादौ सौ, अतङि परे । अक्षारीत् । अह्वालीत् । र्लि किम् ? अश्वल्लीत् । अबभ्रीत् ॥

**( १९ ) वोर्णोः ।** [ **४।२।२।८।** ] तथा । प्रोर्णावीत् । प्रोर्णवीत् ॥

**( २० ) हल्यह्म्येदित् ।** [ **४।२।२।९।** ] परस्य क्षणश्वसः हलादेर्धातोर्हलि इसौ अतङि परेऽद् वाऽऽरैच् स्याद् अह्म्येदिदादेः । अक्षाणीत् । अक्षणीत् । अरणीत् । [अराणीत् ।] हलि किम् ? अतक्षीत् । अयंसीत् । अहमययदिदन्तक्षणश्वसः किम् ? अग्रहीत् । अ । अस्यमीत् । अव्ययीत् । रोगः । अरगीत् । अक्षणीत् । अश्वसीत् । अत् किम् ? अदेवीत् । हल्प्राचः किम् ? मा भवानटीत् ॥२॥

**क्षणश्वसो वद्व्रज इट् तङि स्थादे घ्नो यमः सूचन उब्विवाहे ।**
**सीप्स्योर्गमो वा च हलुः सि नारेङ् भूस्वोर्लि मास्म लुङ् लुट् च माङि ॥४।२।३॥ वृत्तम् ॥**

**( २१ ) क्षणश्वसः । [ ४।२।३।१। ]** गतम् ॥

**( २२ ) वद्व्रजः । [ ४।२।३।२। ]** तन्नित्यम् । अवादीत् । [अव्राजीत् ॥]

**( २३ ) इट् तङि स्थादा । [ ४।२।३।३। ]** स्थादासंज्ञयोरन्तः स्यात् तङ्परे सौ । आस्थित । आदित । आधित । तङि किम् ? अस्थात् । [अदात् । अधात् ॥]

**( २४ ) इ घ्नः । [ ४।२।३।४। ]** अतस्तथेल्लुक् । आहत । आहसाताम् । उदाहास ॥

**( २५ ) यमः सूचने । [ ४।२।३।५। ]** अर्थे तथा । उदायत । [उदायसाताम् । उदायसत ।] सूचने दोषाविष्करणे किम् ? अयंस्त पादम् ॥

**( २६ ) उद्विवाहे । [ ४।२।३।६। ]** अर्थे तथा वाऽत्रापि । उपायत, उपायंस्त कन्याम् ॥

**( २७ ) सीप्स्योर्गमो वा च । [ ४।२।३।७। ]** सीपि सौ तङि गमो लुग्वा । [संगंसीष्ट ।] संगसीष्ट । समगत । समगंस्त ॥

**( २८ ) हलुः सि नारेङ् । [ ४।२।३।८। ]** हलन्तऋवर्णस्य सादौ सीप् सौ तङि असरेङ् न स्यात् । सृक्षीष्ट । असृष्ट । भित्सीष्ट । उत्सीष्ट । कृषीष्ट । अभित्त । अबुद्ध । अकृत । सि किम् ? वर्तिषीष्ट । अवर्तिष्ट । तङि किम् ? अद्राक्षीत् । अ किम् ? सृजृशोर्नाम् ॥

**( २९ ) भूस्वोर्लि । [ ४।२।३।९। ]** नारेङ् इलमात्रे तिङीत्यर्थः । अभूत् । अभूः । सुवै । सुवावहै । [सुवामहै ॥]

**( ३० ) मास्म लुङ् । [ ४।२।३।१०। ]** मास्म योगे धातोः सर्वकालेषु लङ् स्यात् । उ निपातः । मा स्म करोत् । मा हरत् स्म ॥

**( ३१ ) लुङ् च । [ ४।२।३।११। ]** तथा । मा स्म कार्षीत् । [मा स्म करोत् ॥]

**( ३२ ) माङि । [ ४।२।३।१२। ]** तथा लुङ् । मा कार्षीत् ॥३॥

**भूत इवे वससच्छुव लिड्लङ्द्यतने स्मरणेऽयदि लुट् कृषि ।**
**वाऽविदिते लिडपह्नव आस्दयकासयद्व्याय च आस्कमि भू लिट-।**
**नृच्छ इजादिगुरोर्न च जागुष भीभृहुह्री च विदां सिपि लोटि कृ ।**
**लोड्जनवित्तद्दगर्ह हशश्वचि प्रश्न उ लङ् निकटे पुरि लुङ् च तु ॥४।२।४॥ अष्टभम् ॥**

**( ३३ ) भूते । [ ४।२।४।१। ]** भूतसामान्यार्थाद् धातोर्लुङ् स्यात् । अचैषीत् ॥

**( ३४ ) इवे । [ ४।२।४।२। ]** भूतेऽर्थाद् अद्यतने विधिः । ततोऽद्यतने इवभूते प्रतीयमाने स्पष्टक्रियासंवेदनाद् अनद्यतनेऽपि लुङ् । अगमाम घोषान् । अपाम पयः । अशयिष्महि । अमुत्रावात्सम् । स्वल्पस्वापेऽप्यस्पष्टक्रियावेदने । अत्रावसम् ॥

**( ३५ ) वससच्छुव लिड्लङ् । [ ४।२।४।३। ]** भूतसामान्येऽतः लुङ् लिट् लङ् च स्यात् । अन्ववासीत् कौत्स्यः पाणिनिम् । अन्ववास । अन्ववसत् । उपासदत् । उपाससाद । उपासीदत् ।

उपाश्रौसीत् । उपशुश्राव । उपाशृणोत् ॥

**( ३६ ) अनद्यतने । [ ४।२।४।४।]** भूते लङ् । अकरोत् । बहुव्रीहिः किम् ? अद्य ह्यो वाऽभुक्ष्महि ॥

**( ३७ ) स्मरणेऽयदि लृट् । [ ४।२।४।५।]** स्मरसि चेतयसि वत्स मगधेषु वत्स्यामः । अयदि किम् ? बुद्ध्याम यत् कश्मीरेष्ववसाम ? ॥

**( ३८ ) कृषि वा । [ ४।२।४।६।]** क्रियान्तराकाङ्क्षायां सत्यां, तथा चायदि च । स्मरसि वत्स कश्मीरेषु वत्स्यामः, तत्रौदनं भोक्ष्यामहे । तथा, अवसाम, अभुञ्ज्महि वा । यदि च । [अभिजानासि वत्स यत् कश्मीरेषु वत्स्यामः, यत् तत्रौदनं भोक्ष्यामहे ॥

**( ३९ ) अविदिते लिट् । [ ४।२।४।७।]** परोक्षे क्रियासाधनेऽर्थे वा प्रयोक्तुः प्रतिपत्तुर्वा भूतानद्यतने लिट् । चकार । सुप्तोऽहं लि विललाप । चित्तविक्षेपात् क्रियापरोक्षार्थे । [दक्षिणापथेषु स्थितोऽसि ?] नाहं दक्षिणापथं प्रविवेश ॥

**( ४० ) अपह्नवे । [ ४।२।४।८।]** क्रियायास्तथा । भवता कलिङ्गेषु ब्राह्मणो हतः ? स आह । कः कलिङ्गान् जगाम ? नाहं कलिङ्गान् जगाम । दूरतो ब्राह्मणवधः ॥

**( ४१ ) आस्दयकासयद्व्याय च आस्क्रमिभू लिट् । [ ४।२।४।९।]** तथा आसादनेराम् स्यात्, तदनु कृ अस् भू लिट् च प्रयुज्यते । आसाञ्चक्रे । [दयाञ्चक्रे ।] कासामास । अयाम्बभूव । द्व्यादच् लघुश्रुतिश्च । चिकीर्षाञ्चकार । जगारा[ञ्चकार] । चकासाञ्चक्रे ॥

**( ४२ ) अनृच्छ इजादिगुरोः । [ ४।२।४।१०।]** इजादिगुरुर्यस्य तस्मात् तथा । ईहाञ्चक्रे । ऊहाञ्चक्रे । इजादि किम् ? ततक्ष । गुरुः किम् ? इयेष । उरुच्छवर्जात् किम् ? प्रोर्णुनाव । आनर्च्छ ॥

**( ४३ ) न च जागृुषः । [ ४।२।४।११।]** तत्तथा स्यात् । न चार्थेऽद् वा । जागराञ्चकार । जजागार । ओषाञ्चक्रे । उवोष ॥

**( ४४ ) भीभृहुह्री च विदां सिपि । [ ४।२।४।१२।]** तथा वा गदि स्यात् । तत्रामि भीभृहुह्री चैते तिपीडितिपीचसिपि द्वित्वप्रागित्वादि स्यादित्यर्थः । बिभराञ्चकार । बभार । एवं, [बिभयाञ्चकार । बिभाय । जुहवाञ्चकार । जुहाव । जिह्रयाञ्चकार । जिह्राय ॥] विदामिति । तथा आम्यनैङ्वा । विदाञ्चकार । विवेद ॥

**( ४५ ) लोटि कृ लोट् । [ ४।२।४।१३।]** लोटि विषयस्थे विदां वा रि निपात्यते । कृ लोट् चानुप्रयुज्यते । विदाङ्करोतु । विदाङ्कुरुत । वेत्तु । वित्ताम् ॥

**( ४६ ) जनवित्त [ दृगर्हे । ४।२।४।१४।]** जिगर्हपरौ ङिलङावत्रापि परोक्षे लोकविज्ञाते दृगर्हे प्रयोक्तुर्दर्शनविषये लङ् वा । अरुणद् यवनः साकेतम् । परोक्षे किम् ? असौत्सीन्न तम् । जनवित्ते किम् ? जगा[म] गाशतम् । दृगर्हे किम् ? जघान कंसं किल वासुदेवः ॥

**(४७) हशश्वचि । [४।२।४।१५।]** उपपदे धातोः परोक्षे लङ [लि]ट् चेति वा । इति हाकरोत् । इति ह चकार । एवं, [शश्वदकरोत् । शश्वच्चकार ।] परत्वालृङ् च स्मृत्युक्तौ । स्मरसि भो कश्मीरेषु शश्वदवसाम ? ॥

**(४८) प्रश्न उ लङ् निकटे । [४।२।४।१६।]** भूतानद्यतने परोक्षे निकटे आसन्ने काले पञ्चाब्दमध्येऽर्थे प्रश्ने लङ् स्यात् । उ निपातः । न च । अगच्छत् स तं, जगाम वा । अयजत । इयाज वा । कश्चित् किञ्चित् गच्छति । प्रश्ने किम् ? जगाम शतम् । निकटे किम् ? जघान कंसं वासुदेवः ॥

**(४९) पुरि लुङ् च तु । [४।२।४।१७।]** पुराशब्दे सति तत्परोक्षे लुङ् वा स्यात् । अवात्सुरिह पुरा च्छात्राः । एवं अवसन्, उषुः वसन्ति ॥४॥

**लट् स्मे च नन्वोरपि चोत्तरे (ननौ) क्षेपे कथं जात्वपि वर्तमाने ।**
**तद्भूतवद् वा निकटे मते प्राक् यावत्पुरोः कर्हिकदोश्च भाव्ये ॥४।२।५॥ वृत्तम् ॥**

**(५०) लट् स्मे च । [४।२।५।१।]** पुरि च भूतानद्यतने । एवं स्म पिता ब्रवीति । शश्वत् पुराऽधीते । ह च परत्वाल्लडि च ॥

**(५१) नन्वोरपि चोत्तरे (ननौ) ।४।२।५।]** नन्वोः पृष्ठप्रतिवचने भूतसामान्ये लड् वापि शब्दात् शतृशानौ च । अकार्षीः कटं त्वम् ? न करोमि । नु करोमि भोः । नाकार्षं भोः । [न्वकार्षं भोः ।] न कुर्वन्तं, [नु कुर्वन्तं] पश्य माम् । अत्र ननौ तथा नित्यं लट् । अकार्षीः कटं वत्स ? ननु करोमि । ननु कुर्वन्तं मां पश्य ॥

**(५२) क्षेपे कथं जात्वपि । [४।२।५।३।]** क्षेपेऽर्थे सत्स्वेषु च सर्वकाले लट् । कथं नाम स तत्र वृषलं याजयति । एवं जातु [स तत्र वृषलं याजयति ।] अपि [तत्र स वृषलं याजयति ।] गर्हामहेऽन्याय्यमेतद् [इत्यर्थः] ॥

**(५३) वर्तमाने । [४।२।५।४।]** प्रारब्धापरिसमाप्ते च काले लट् । पचति । प्रासादं करोति । तिष्ठन्ति पर्वताः ॥

**(५४) तद्भूतवद् वा निकटे मते । [४।२।५।५।]** तदिति [वर्त-]मानवद् वा प्रत्ययाः स्युः । वर्तमानसामीप्ये भूते भविष्यति च, मते वाञ्छिते आशंसायामर्थे भूतवच्च प्रत्ययाः स्युः । कदाऽऽगतोऽसि ? एष आगच्छामि, आगमं वा । कदा गमिष्यसि ? एष गच्छामि, गमिष्यामि, गन्ता वा । वदिति ये यथा तथैव ते । पचमानः । अलङ्करिष्णुः । भूतवच्च । उपाध्यायश्चेदागच्छति युक्ता अधीमहे । एवम्, आगतोऽधीतमेतत् । आगमत् [चेत्] अध्यगीष्महि । लट्लिटौ न स्तः । वाशब्दाद्, आगमिष्यति [चेद्] अध्येष्यामहे । आगन्ता [चेद्] अध्येतास्महे ॥

**(५५) प्राक् । [४।२।५।६।]** निकटक्रियायाः क्रियान्तरे, तस्यात्येकस्य च कालान्तरे, तत्सामीप्ये विवक्षिते, प्रागिति प्राग्विहित औत्सर्गिकः सामान्यप्रत्ययो भूतभविष्यतोः स्यात् न लङ्लुटावित्यर्थः । यावज्जीवं भृशमन्नमदात् दास्यति वा । [यावज्जीवम्] अध्यापिपत्

अध्यापयिष्यति वा । सामीप्ये । इयं पौर्णमास्यतिक्रान्ताऽस्यां सोऽग्निनाधित, सोमनायष्टा, गामदित । येयममावास्याऽऽगामिनी तस्यां सोऽग्निनाधास्यति, सोमेन यक्ष्यति, गां दास्यति ॥

**( ५६ ) यावत्पुरोः । [ ४।२।५।७। ]** सतोः भावो भविष्यति काले लेट् प्रकृतः स्यात् । यावद्भुङ्क्ते । पुरा भुङ्क्ते । निपातने किम् ? यावद् दास्यते तावद् भोक्ष्यते । गम्याद्युणादौ ॥

**( ५७ ) कर्हिकदोश्च भाव्ये । [ ४।२।५।८। ]** तथा च । वाऽनुकर्षे । कर्हि भुङ्क्ते ? लृट् लुट् च । [कर्हि भोक्ष्यते ? कर्हि भोक्ता ?] कदा भुङ्क्ते ? कदा भोक्ष्यते ? कदा भोक्ता ? ॥५॥

**किं लिप्स्यजे व्यद्यतनोपहासे लुट् लृट् त्वरार्थाशिषि सीम्नि चार्वाक् ।**
**कालेऽनिशाह्नोः पर वाऽनु चित्रेऽश्राद्धात् क्रुधोः किंकिलभूषु जातौ ॥४।२।६॥ वृत्तम् ॥**

**( ५८ ) किं लिप्स्यजे । [ ४।२।६।१। ]** प्रत्येकं ङिः किंवृत्ते लिप्स्यमानेऽर्थे भाव्ये लङ् वा । को भवतां भिक्षां ददाति, दास्यति वा, दाता वा । एवं कतरो [भवतां भिक्षां ददाति, दास्यति, दाता वा ।] कतमो [भवतां भिक्षां ददाति, दास्यति, दाता वा ।] पुनरावृत्त्या लिप्स्याजे लिप्स्यमानाज्ज्ञाते परलोकसिद्धौ प्रकाश्यायां च । यो भवतां भिक्षां ददाति, दास्यति दाता वा स स्वर्गलोकं याति, यास्यति, याता वा । व्यवस्थायां धातोऽभाव्येऽपि । योऽदात् सोऽगमद् इति च ॥

**( ५९ ) व्यद्यतनोपहासे लुट् । [ ४।२।६।२। ]** विगताद्यतने भविष्यत्युपहासेऽर्थे च सामान्ये लुट् स्यात् । कर्ता श्वः । भोक्ता [श्वः ।] वि किम् ? अद्य श्वो वा करिष्यति । उपहासेऽप्यशक्तौ वा याचः । कदायं गन्ता य एवं पादौ निदधाति ? कदाध्येता य एवमनभियुक्तः ॥

**( ६० ) लृट् । [ ४।२।६।४। ]** स्यात् सामान्ये भविष्यति ॥

**( ६१ ) त्वरार्थाशिषि । [ ४।२।६।४। ]** त्वरार्थे शंसामत्यागतौ लृट् । स चेत् क्षिप्रमागमिष्यति क्षिप्रमध्येष्यामहे । एवमाशु, शीघ्रं वा ॥

**( ६२ ) सीम्नि चार्वाक् । [ ४।२।६।५। ]** सीम्नि सति अर्वागभागवगतौ लृट् स्यात्, न लुट् । योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे । तत्र सक्तून् पास्यामः । अर्वाक् किम् ? तथा परस्मिन् । [योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यत्परं कौशाम्ब्यास्तत्र द्विरोदनं] भोक्तास्महे । सक्तून् पातास्मः । सीम्नि किम् ? निरवधिकश्चेद् गन्तव्योऽध्वा तदा लुट् । भविष्यति किम् ? योऽध्वागत तथा [आपाटलिपुत्रात् तस्य यदवरं] तत्र युक्ता अध्यैमहि, [तत्र द्विरोदनमभुञ्ज्महि । तत्र] सक्तून् पिबामः ॥

**( ६३ ) कालेऽनिशाह्नोः । [ ४।२।६।६। ]** अहोरात्रवर्जिते कालवाचि सीम्नि तत् तथा । योऽयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अर्वाक् किम् ? परस्मिन् लुट् । सीम्नि किम् ? निरवधिककाले तथा लुट् । भविष्यति किम् ? गते संवत्सरादौ तथा । अभुञ्ज्महि । अनिशाह्नोः किम् ? योऽयं मासस्त्रिंशद्रात्रो वागामी तस्य योऽवरोऽर्धमासः । पञ्चदशरात्रो वा तत्र युक्ता अध्येतास्महे । [तत्र सक्तून् पातास्मः ।] पृथगुत्तरार्थम् ॥

**( ६४ ) पर वाऽनु । [ ४।२।६।७। ]** ङिलोपात् परस्मिन् भागे तथा च लुट् । योऽयं

संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, अध्येतास्महे ॥

**( ६५ ) चित्रे । [ ४।२।६।८। ]** आश्चर्यगत्युक्त्योः लृट् नान्यो लः । आश्चर्यमद्भुतम् । अन्धो नाम पर्वतमारोक्ष्यति । बधिरो [नाम] व्याकरणमध्येष्यते ॥

**( ६६ ) अश्राद्धात् क्रुधोः किंकिलभूषु । [ ४।२।६।९। ]** सत्स्वेषु अश्रद्धाक्रोधार्थे लृडेव । किंकिल [नाम तत्रभवान्] स तं [वृषलं] तत्र याजयिष्यति । भूषु अस्त्यार्थेषु । विद्यते, अस्ति नाम स तं तत्र याजयिष्यति । न श्रद्दधे, नावकल्पयामि, न मर्षयामि, न क्षमे इत्यर्थः] ॥

**( ६७ ) जातौ । [ ४।२।६।१०। ]** परार्थम् ॥६॥

**लिङ् यद्यद्यदस्तौ कथमक्षिपा वा किम्येषु लिट् स्याद् यदि यच्च यत्रे ।**
**आशंसने लुङ् च लिङोऽतिपातौ प्राग्वा गते हेतुफले लृडस्तु ॥४।२।७॥ वृत्तम् ॥**

**( ६७ ) लिङ् यद्यद्यदः । [ ४।२।७।१। ]** जातुयद्यदासु सत्सु च लिङ् तथा । जातु तत्रासौ वृषलं याजयेत् । [यत् तत्रासौ वृषलं याजयेत् । यदि तत्रासौ वृषलं याजयेत् ।] न श्रद्दधे । [नावकल्पामि । न मर्षयामि । न क्षमे ।] क्रियातिपत्तौ भूते लृङ् वा । भविष्यति तु नित्यम् । यत् तत्र स तं याजयिष्यात् । [यदि तत्र स तं याजयिष्यात् । यदि तत्र स तं याजयिष्यात् । न श्रद्धधे । [नावकल्पामि । न मर्षयामि । न क्षमे ॥]

**( ६८ ) तौ । [ ४।२।७।२। ]** लृट्लिङावेवाश्रद्धाकुधोः । न श्रद्दधे [नावकल्पामि, न मर्षयामि, न क्षमे] तत्रासौ तं याजयिष्यति । याजयेत् ॥

**( ६९ ) कथमक्षिपा वा । [ ४।२।७।३। ]** कथमि सति क्षेपेऽर्थे तावेव वा । कथं स तं याजयिष्यति । [याजयेत्] वा । कथं याजयति । याजयिता । अयीयजत् । अयायजत् । याजयाञ्चकार । तथा लृङ् । कथं स तमयाजयिष्यत् ॥

**( ७० ) किमि । [ ४।२।७।४। ]** सति तावेव क्षेपे नित्यम् । को नाम कतरो [नाम] कतमो वा वृषलोऽयं तत्रासौ याजयिष्यति, याजयेत् । लृट् तथा ॥

**( ७१ ) एषु लिट् स्याद् यदि यच्च यत्रे । [ ४।२।७।५। ]** एषु चित्राद्यर्थेषु यद्यादौ सति लिङ् वा । चित्रं यदि सोऽधीयीय, यदि स तं याजयेत् । न श्रद्दधे । [नावकल्पयामि । न मर्षये। न क्षमे ।] यच्च तत्र स तं याजयेत् । यत्र वा [तत्र स तं याजयेत्] गर्हामहे । लृट् तथा ॥

**( ७२ ) आशंसने । [ ४।२।७।६। ]** सत्यर्थे च लिङ् । स चेदागच्छेद् आशंसे युक्तोऽधीयीः ॥

**( ७३ ) लृङ् च लिङोऽतिपातौ । [ ४।२।७।७। ]** कुतश्चिद् वैगुण्यात् क्रियानभिनिवृत्तौ सत्यां लिङः स्थाने लिङ्निमित्ते लृङ् स्यात् । दक्षिणेन चेदयास्यत्र शकटं पर्यभविष्यत् । अभोक्ष्यत च भवान् घृतेन यदि मत्समीप अश्लिष्यात् । भविष्यद्विषयमिदम् ॥

**( ७४ ) प्राग्वा गते । [ ४।२।७।८। ]** प्राग् अतः सूत्रालिङोत्पत्तौ गते भूतेऽर्थे लृङेव वा ।

कथं स तमयाजयिष्यत् । याजयेत् ॥

**( ७५ ) हेतुफले लृङस्तु । [ ४।२।७।९। ]** हेतुफलार्थाद् धातोः लृटोऽर्थे भविष्यति लिङ् वा । दक्षिणेन चेदयात्र शकटं पर्याभवेत् । यदि कमलकमाह्वयेन्न शकटं पर्याभवेत् । दक्षिणयानं हेतुः, अपर्याभवनं फलम् । दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यति । इह तु [न] । हनिष्यतीति प्रपलायिष्यते । नोक्तत्वात् । लृट् तथा । केनचिल्लिङ्गेन भविष्यन्तीं क्रियातिपत्तिं ज्ञात्वा प्रयुङ्क्ते । [यथा-]

अमङ्क्ष्यद् वसुधा तोये च्युतशैलेन्द्रबन्धना ।
नारायण इव श्रीमन् यदि त्वं नाधरिष्यथाः ॥१॥७॥

**इच्छासु लोट् तुञ्च समे लटीतो बाढेऽप्युतेऽकच्चिति कामचारे-।**
**ऽलं भावनेऽर्थेऽयदि वा क्रियोक्तौ स्यात् कालवेलासमयैर्यदीति ॥४।२।८॥ वृत्तम् ॥**

**( ७६ ) इच्छासु लोट् । [ ४।२।८।१। ]** इच्छार्थे सति धातोर्लिङ् स्यात्, तथा लोट् । इच्छामि भुञ्जीत, भुङ्क्तां वा, सः । इच्छन्, करोति । अनभिधानान्न ॥

**( ७७ ) तुम् च समे । [ ४।२।८।२। ]** समानकर्तृक इच्छार्थे तुम् च लिङ् च स्यात् । इच्छति [भोक्तुम्] । कामयते भोक्तुम् । भुञ्जीय, अधीयीयेतीच्छति ॥

**( ७८ ) लटीतः । [ ४।२।८।३। ]** वर्तमाने इत इच्छार्थात् लिङ् लट् च । इच्छति । इच्छेत् ॥

**( ७९ ) बाढेऽप्युते । [ ४।२।८।४। ]** सति लिङेव । अपि कुर्यात् । अप्यधीयीत । उत कुर्यात् । [उताधीयीत ।] बाढेऽर्थे किम् ? अपि धास्यति द्वारम् । उत पतिष्यति दण्डः । प्रच्छादनं प्रश्नश्च गम्यते । इतः क्रियातिपत्तौ भूतभविष्यतो नित्यं लृङ् । अप्यभोक्ष्यत । [उताभोक्ष्यत ॥]

**( ८० ) अकच्चिति कामचारे । [ १४।२।८।५। ]** अर्थे लिङ् । कामो मे भुञ्जीत भवान् । अकच्चिति किम् ? कच्चिज्जीवति माता ते ॥

**( ८१ ) अलं भावनेऽर्थे । [ ४।२।८।६। ]** अलमर्थेन तु शब्दे सम्भावने क्रियाशक्तिश्रद्धाने लिङेव । अपि पर्वतं शिरसा भिन्द्यात् । अपि द्रोणपाकं भुञ्जीत । अलमिति किम् ? विदेशस्थायी [सः] प्रायेण गमिष्यति ग्रामम् । अर्थे किम् ? अलं सा तं हनिष्यति । तत्र भोक्ष्यते । अलं लवणेन। लृङ् तथा । अपि पर्वतं शिरसाऽभेत्स्यत् ॥

**( ८२ ) अयदि वा क्रियोक्तौ । [ ४।२।८।७। ]** धातुना सम्भावनोक्तौ लिङेव वा । सम्भावयामि, श्रद्दधे, अवकल्पयामि, भुञ्जीत भोक्ष्यते वा सः । अयदि किम् ? सम्भावयामि यद् भोक्ष्यते भवान् ॥

**( ८३ ) स्यात् कालवेलासमयैर्यदीति । [ ४।२।८।८। ]** कालादियोगे यदि सति लिङेव । कालो यद् भुञ्जीत सः ॥८॥

**यथार्हशक्ते विधिप्रार्थने सम्प्रश्ने च लोट् यप् समयेऽनुमत्याम् ।**
**प्रैष्ये मुहूर्तोपरिते लडङ्के स्मे लोडधीष्टे च समुच्चये वा-।**
**ऽलं लोट् स्वहीध्वन्ताःयङः स कर्ता तिप्तस्झिसिप्थस्थमिपोऽपि वस्मस् ॥४।२।९॥ षट्पदी ॥**

**(८४) यथार्हशक्ते । [४।२।९।१।]** अर्हे शक्ते च कर्तरि यप् च लिङेव च स्यात् । ना भारं वहेत् । न्राऽसौ वोढव्यः ॥

**(८५) विधिप्रार्थने सम्प्रश्ने च । [४।२।९।२।]** कर्तरि लिङेव । विधिर्नियोगो दृष्टार्थे वा प्रत्याख्याने सप्रत्यवायो निमन्त्रणं, निष्प्रत्यवाय आमन्त्रणं सत्कारपूर्वको न्यक्कारपूर्वको वा । प्रार्थनं याचनमिष्टशंसनं च । सम्प्रश्नः सम्प्रधारणा । स कटं कुर्यात्, यजेत, दद्यात् । इह भवान् भुञ्जीत, आसीत । इह स भुञ्जीत । [कुर्यात्, यजेत, दद्यात् । माणवकं भवानध्यापयेत् । भवन्तमध्येष्यामहे । ग्रामं गच्छेः, कटं कुर्यास्त्वम् । लभेयाहं भिक्षाम् । जीव्याद् भवान् । [सम्प्रश्ने ।] किं भो व्याकरणमधीयीय उत छन्दः ? पृष्टमयदर्थम् ॥

**(८६) लोट् । [४।२।९।३।]** तथा । सोऽत्रास्ताम् । [सोऽत्र] भुङ्क्ताम् । तं स उपानयताम् । भिक्षां देहि । स जीवतु । किं नु च्छन्दोऽध्ययै ? ॥

**(८७) यप् समयेऽनुमत्यां प्रैष्ये । [४।२।९।४।]** प्राप्तकालानुज्ञा प्रैष्येऽर्थे यप् लोट् च । समयोऽवसरः । प्राप्तस्ते कालः कटं कुरु । किमहमधीये ? एवं कुरु । भवानादिष्टः कटं करोतु । भवता कटः कर्तव्यः करणीयः । तस्यावसरः [इत्यर्थः] । समनुज्ञातः प्रेषितः ॥

**(८८) मुहूर्तोपरिते । [४।२।९।५।]** ऊर्ध्वमौहूर्तिकार्थाद् धातोः लिङ्यप्लोटः स्युः समयादौ । प्राप्तस्ते कालोऽनुज्ञातः । असावादिष्टः मुहूर्तस्योपरि कटं कुर्यात्, करोतु । न्रा स कर्तव्यः ॥

**(८९) लडङ्के । [४।२।९।६।]** प्रकृतलोटोऽर्थः समयादिः सोऽङ्क्यते लक्ष्यते येन तदर्थाद् धातोः लङ्प्रत्याहारसूत्रोक्तः लट् लृट् लुट् लिङ् च स्यात् । उपाध्यायश्चेदागच्छति, आगमिष्यति, आगन्ता, आगच्छेद् अथ त्वं छन्दोऽधीष्व । तथोपरिमुहूर्तस्यापि । स चेद् आगच्छति, [आगमिष्यति, आगन्ता, आगच्छेद्] अथ त्वं छन्दोऽधीष्व । लिङन्ये ॥

**(९०) स्मे लोट् । [४।२।९।७।]** तथोपरिमुहूर्तस्य समयः [अनुमतिः, प्रैषः] स तं करोतु स्म । अध्यापयतु स्म ॥

**(९१) अधीष्टे च । [४।२।९।८।]** ससत्कारव्यापारणे स्मे लोट् स्याद् अनूर्ध्वमौहूर्तिकेऽपि । अङ्ग स्म तमध्यापय ॥

**(९२) समुच्चये वाऽलं लोट् स्वहीध्वन्ताः । [४।२।९।९।]** क्रियासमुच्चयार्थाद् धातोः सर्वकालेषु वा लोट्, स च यथाविधि हिस्वौ स्यात् तध्वप्सावी च हिस्वौ वा स्यात् । व्यत्ययश्छन्दोर्थम् । स्वकालप्रत्ययान्तश्च योऽलं समर्थः तत्क्रियासामान्यवाची स प्रयोक्तव्यः । सक्तून् पिब, धानाः खाद, ओदनं भुङ्क्ष्वेत्यायमभ्यवहरतोऽभ्यवहरन्ति । अभ्यवहरसि । अभ्यवहरामि । यद्वा,

ओदनं भुग्ध्वं, सक्तून् पिबत, धानाः स्वादत इत्येवं यूयमभ्यवहरथ । एवं भ्राष्ट्रमट मठमट खदूरमटेत्येयमटति । छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्ययमधीत्ये । यद्वा च्छन्दोऽधीध्वमित्येव यूयमधीध्वे चेति । च्छन्दोऽधीते इत्येवायमधीते । यथासङ्ख्यम् ॥

**(९३) यङः स कर्ता । [४।२।९।१०।]** यङोऽर्थे भृशाभीक्ष्ण्यार्थाद् धातोः सर्वकालेषु लोट् नित्यं कर्तरि लोट् च हिस्वौ तयस्भावी च वा स इति यस्तदन्तेन सम्बन्धः स एव धातुस्तत्परस्तत्साधनश्च प्रयोक्तव्यः । लुनीहि लुनीहीत्येवायं लुनाति । यद् वा, लुनीत [लुनीत] इत्येव यूयं लुनीथ । भूते । लुनीहि [लुनीहि] इत्येवायमलावीत् । भविष्यति । लुनीहि [लुनीहि] इत्येवायं लविष्यति । अधीष्व [अधीष्व] इत्येवायमधीते । यद्वा, अधीध्वम् [अधीध्वम्] इत्येव यूयमधीध्वे । सर्वलकारपुरुषवचनेषूदाहार्यम् । तथा, लोलूयत्स्व [लोलूयत्स्व] इत्येवायं लोलूयते । भृशार्थादाभीक्ष्ण्ये लोट् । स कर्तेति वचनात्, छिनत्ति लूयतेऽनेनेत्येतत् । लुनीहि । [लुनीहि] इत्येतत्सम्बद्धं न प्रयुज्यते । विवक्षातः कारकवत् कालोऽपि । योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तत्र कूपोऽस्ति, भविष्यति, भविता, अभूत्, आसीत्, बभूव ॥

**(९४) तिप्तस्झिसिप्थस्थमिपोऽपि वस्मस् । [४।२।९।१०।]** परार्थम् ॥९॥

**तातांझथास आथांध्वम् इवहिमहिङोऽथ लः ।**
**त्रयी सुप् युष्मदस्मत्सु मन्याभूतोऽसुबन्यथा ।**
**एकवच्चोपहासे तु सुप् चैकादो लुडादिमा ॥४।२।१०॥ षट्पदी ॥**

**(९४)** ल इत्यु[त्सृ]ष्टानुबन्धलकाराः दश, तिबादयः स्युः तिप् तस् झि १ । सिप् थस् थ २ । मिप् वस् मस् ३ । पित् तत्कार्यार्थः । मिपो जसपीच्छन्दोऽर्थम् । मसोरिति राद्यर्थम् ॥ तथा ॥

**(९५) तातांझथासाथांध्वमिवहिमहिङोऽथ लः [॥४।२।१०।१।]** त आताम् अन्त १ । थास् आथाम् ध्वम् २ । इ वहि महिङ् ३ । ङित् तिङ्तङर्थः जसथौ च्छन्दोऽर्थम् ।

**(९६) त्रयी सुप् युष्मदस्मत्सु । [४।२।१०।३।]** एषां त्रयी [त्रयी] नामादिगतौ सत्त्वे वा स्यात् । स पचति । तौ पचतः । ते पचन्ति । एवं, त्वं पचसि । [युवां पचथः । यूयं पचथ ।] अहं पचामि । [आवां पचावः । वयं पचामः ।] तथा तङ् । [पचते पचेते पचन्ते । पचसे पचेथे पचध्वे । पचे पचावहे पचामहे ।] स च त्वं च युवां पचथ । स चाहं चावां पचावः । स च त्वं चाहं च वयं पचामः । नरौ पचेथे । त्वत्कल्पाः पचेथे । मत्तरः मद्रूपः पचे । अतित्वम् अत्यहं च पचते । एवं द्विबहुत्वे । अत्वं त्वं सम्पद्यते । त्वद्भवति । मद्भवति । त्वमिच्छति । त्वद्यति । [मद्यति ।] त्वद्यते । [मद्यते ॥]

**(९७) मन्याद्भूतोऽसुबन्यथा एकवच्चोपहासे तु । [४।२।१०।३।]** मन्यतेस्तद्विशिष्ट धातोश्चासुब्विषया मध्यमान्ता त्रयी, अन्यथा व्यत्ययेन मन्यतेर्युष्मद्यन्ता धातोरस्मदि मध्यमा एकवच्च स्यात् प्रहासेऽर्थे । एहि मन्ये ओदनं भोक्ष्यसे [इति], न हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि *मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्ते पिता ।* प्रहासे किम् ? एहि मन्यसे ओदनं भोक्ष्ये इति, साधु मन्यसे ॥

**(९८) सुप् चैकादौ । [४।२।१०।४।]** सुपां तिङां च त्रयी [त्रयी] एकद्विबहुष्वर्थेषु स्यात् । तथोदाहृता ॥

**(९९) लुडादिमा । [४।२।१०।५।]** त्रयी तिङाऽतिङां च परः तारौरसः स्यात् । भविता । भवितारौ । भवितारः । व्यतिभविता ॥१०॥

**तारौरसः श्यादियतो म्म्विनाज्झ अन्तर्द्विर्जक्षचोऽत् शीङनतो रदत्तङ् ।**
**वेत्तेः लिडेते झ इरे म्यणोऽतङ् स्युर्णातुसुस्थाथुसशवा म लद् वा ।**
**विदो णसाह् बुवष्ठ आद औ णा ए ल्टित्तङां गाम्स उ थास्व ए वाम् ॥४।२।११॥ षट्पदी ॥**

**(९९) तारौरसः । [४।२।११।१।]** गतम् ॥

**(१००) श्यादियतः । [४।२।११।२।]** श्या आच्च अतः पर ईय् स्यात् । भवेत् । भवेताम् । भवेयुः । पचेते । पचेथे । पचेताम् । अतः किम् ? यायात् । ददाते ॥

**(१०१) म्म्विनात् । [४।२।११।३।]** मकार्यो म्वि च तिङि मेवे च परो न[कारः] स्यात्, तथाऽकार्यो आत् स्यात् । संगन्मि । जङ्गन्वः । जगन्वान् । तथा पचामि । पचावहे ॥

**(१०२) झ अन्तः । [४।२।११।४।]** स्यात् तिङः । यजन्ति । यजन्ते । यजन्तु । यजन्ताम् ॥

**(१०३) द्विर्जक्षचोऽत् । [४।२।११।५।]** द्विरुक्ताज्जक्षादिपञ्चकात् तथा झ अत् । जुह्वति । ददति । जाग्रति । जक्षति । [दरिद्रति । चकासति । शासति ॥]

**(१०४) शीङनतोरदत्तङ् । [४।२।११।६।]** शीङोऽनझादात् तङ् क्रमेण रत् अत् । शेरते । अशेरत । आचक्षते । आदीध्यते । लुनते । अनतः किम् ? पचन्ते ॥

**(१०५) वेत्तेः । [४।२।११।७।]** तथा । संविद्रते । संविदते ॥

**(१०६) लिडेते झ इरे म्यणः । [४।२।११।७।]** इडादेशः ते एस्यज्झ इरे । पचे । पचिरे । लिट् मिप् अण् च स्यात् । अहं पपच । स पपाच । चुकुट । चुकोट ॥

**(१०७) (अतङ् स्युर्णातुसुस्थाथुसशवा म लद्वा [।४।२।११।९।]** अतङ् श्या ण अतुम् उस् थ अथुस् अश् अ व म । अकृतसन्धिः । लिडेते स्यान्मिप्वर्जः । वाजश्छन्दोऽर्थम् । अथुस् मित् । णसर्थं लघुश्च । पपाच । पेचतुः । पेचुः । पेचिथ । पेचथुः । पेच । पेचिव । पेचिम ॥

**(१०८) लड्वा विदः । [४।२।११।१०।]** विदोऽद् लट् वा णादि स्यात् । वेद मिप् । विदतुः । विदुः । वेत्थ । विदथुः । विद । विद्व । विद्म । वेत्ति । वित्तः । [विदन्ति । एवं] [वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः] ॥

**(१०९) णसाहब्रुवष्ठ आत् । [४।२।११।।१०।]** ब्रुवो लडादेशो यथाक्रमं णस् । णादिपञ्चकं स्याद् वा । ब्रुव आह स्यात् णसि । थे तु आत् । आह । आहतुः । आहुः । आत्थ ।

आहथुः । ब्रवीति ॥

**(११०) अ औणाः । [४।२।११।१२।]** आकारात् परे णाः ण ण अ एते, औ स्युः । स ददौ । अहं दधौ च । अः किम् ? पपाच । पपच ॥

**(१११) ए ल्टित् तङाम् । [४।२।११।१३।]** टिल्लादेशतङामन्त ए स्यात् । पचते । पचामहे । टित् किम् ? अपचत । तङां किम् ? पचति ॥

**(११२) गाम् । [४।२।११।१४।]** टित्तङामाम् गिद् ए स्यादसन्ध्यर्थे । पचेते इति पचेथे । टित् किम् ? आपचे त्वम् ॥

**(११३) स उ थास् ।** [४।२।११।१५।] टित्तङां थास् से स्यात् । उ निपातः । पचामः ॥

**(११४) स्व ए वाम् । [४।२।११।१६।]** स्वः सकारवकारात् पर ए क्रमेण व अम् स्यात् । लोडत्र । लोटः साध्वसध्वम् स्तः, इत्यर्थः । अधीष्व । अधीध्वम् ॥११॥

**लोडामेऽनिङ आन्युमी ड्हिसि जहिः शाध्येधि टाप् म्वेश्च तस्-**
**थस्तान्तंथतडिद् मिबञ्च वम सीत् ति स्तौत् सि वा द्रुश्च झिः ।**
**जुस् द्विष्योऽज्झिस्वदभूसिचो लिङिड्झरन् स्याप् तिंन् तङः सी च सीप्**
**याशीः ट्यास्थिसु तात्त वामुहिरिणः सीप्लुङ्ल धोढ्वेणिटः ॥४।२।१२॥ शार्दूलविक्रीडितम् ॥**

**(११५) लोडामे । [४।२।१२।१।]** तदादेशोऽपि सः । लोट् ए आं स्यात् । पचताम् । पचेताम् । पचन्ताम् ॥

**(११६) अनिङः । [४।२।१२।२।]** लोडिङ् प्रत्याहारस्यार्थाद् एरनागमः स्यात् । करवै । करवावहै । करवामहै ॥

**(११७) आन्युमी । [४।२।१२।३।]** लोट् मिप् इ एतौ आनि ओ स्तः । करवाणि । करोतु । कुर्वन्तु ॥

**(११८) ड्हि सि । [४।२।१२।४।]** लोट् सिप् डिद् हि स्यात् । रुदिहि । आप्नुहि ॥

**(११९) जहिः । [४।२।१२।५।]** हन्तिः सिबन्तो निपात्यते । हस्तु जः । [जघन्थ । जघनिथ । जेघ्नीयते । जंघन्यते ॥]

**(१२०) शाध्येधि । [४।२।१२।६।]** स्तः शास्त्यस्तेः ॥

**(१२१) टाप्म्वेश्च । [४।२।१२।७।]** लोट् वमइटा टाप् स्यात् । करवाव । करवाम । सुवै । सुवावहै । सुवामहै । टित्पिदागमा अरेङर्थम् ॥

**(१२२) तस्थस्तान्तन्थत । [४।२।१२।८।]** लोट् तस् थस् थ एते ताम् तम् त स्युः । पचताम् । पचतम् । पचत ॥

**(१२३) डित् । [४।२।१२।९।]** लस्तत् तथा । अपचताम् । अपचतम् । अपचत ॥

**(१२४) मिबम् च । [४।२।१२।१०।]** ङित् मिप् अम् स्याच्च, उत्तरत्र लोडर्थः । अकरवम् । अकार्षम् । अकरिष्यम् । डित् किम् ? करोमि ॥

**(१२५) वम सीत् तिर् । [४।२।१२।११।]** वमयोः स इकारश्च तिर् । अतङ् । इल्लुक् स्यात् । स चार्थात् तिङेव । रिल्लोड्वस्मसोर्लुगन्तः । अपचाव । अपचाम । पचाव । [पचाम् ।] तिर्ङित् तासिः । अपचत् । अपचः । अपचन् । अकरिष्यत् । अकार्षीत् ॥

**(१२६) स्तौत् । [४।२।१२।१२।]** तवर्गे डिति स् त् स्यात् । अचकात् । अशात् सः ॥

**१२७) सि वा द्रुश्च । [४।२।१२।१३।]** अचकात्त्वम् । अचकास्त्वम् । [अशात् त्वम् । अशास् त्वम् । त्वद्भूतवर्गो नवर्जो रु स्याद् वा ङित्सिपि । अभिनोऽत्र । अछिनोऽत्र । अपास्याः अजार्ग्याः । अभिनत्त्वम् । [अभिनस्त्वम् ।] अपास्यर्द । अप्यर्द्द । अत् किम् ? अहत्त्वम् ॥

**(१२८) झिर्जुस् द्विष्यः । [४।२।१२।१४।]** द्विषेरातश्चाडि झि जुस् स्याद् वा । अदिषुः । अद्विषन् । अयुः । अयान् ॥

**(१२९) अज्झिवदभूसिचः । [४।२।१२।१५।]** अड्भूवोरो यस्माद् वेत्तेश्चाभुवः सिचश्च झिर्जुस् नित्यम् । अबिभयुः । अजक्षुः । अविदुः । सिचः । अकार्षुः । अदुः । अधुः । अभू किम् ? अभूवन् ॥

**(१३०) लिङ् । [४।२।१२।१६।]** झिर्जुस् । पचेयुः । कुर्युः ॥

**(१३१) इड्झरन् । [४।२।१२।१७।]** लिङ् इझ क्रमेण अ रन् स्यात् । पचेय । पक्षीय । कुर्वीय । पचेरन् । पक्षीरन् । कुर्वीरन् । सनाऽनर्थकत्वात् । पचेवहि । [पचेमहि ॥]

**(१३२) स्याप् तिन् । [४।२।१२।१८।]** लिङः स्यानागमः स्यादपित् । चिनुयात् । सुनुयाम् ॥

**(१३३) तङः सी च । [४।२।१२।१९।]** टित् तथा । कुर्वीयाताम् । कुर्वीरन् ॥

**(१३४) सीप्याशीः । [४।२।१२।२०।]** आशीर्लिङ् पित् सीप् टित् स्यात् । व्योषीष्ट । व्योषीयास्ताम् । व्योषीरन् ॥

**(१३५) ट्यास् । [४।२।१२।२१।]** टित् स्यादाशीर्लोडः । नूयात् । उच्यात् । इज्यात् ॥

**(१३६) त्थिसु । [४।२।१२।२२।]** आशीर्लिङ्तथोः सुटित् स्यात् । भूयास्ताम् । भूयास्त । पक्षीष्ट । पक्षीयास्ताम् । पक्षीष्ठाः । पक्षीयास्थाम् ॥

**(१३७) तात् तवामुहिः । [४।२।१२।२३।]** आशिषि तु हि तात् स्याद् वाऽपित् । जीवतात् । जीवतु सः । कुरुतात् । कुरुष्व ॥

**(१३८) इणः सीप् लुङ् लि धोद् । [४।२।१२।२४।]** च्यादेरिणन्तात् परः सीप् लुङ्लटां

धः ढः स्यात् । च्योषीढ्वम् । प्लोषीढ्वम् । अच्योढ्वम् । चकृढ्वे । ववृढ्वे । एषां ढ्किम् ? स्तुध्वे । इणः किम् ? पक्षीध्वम् ।

**( १३९ ) वेणिटः । [ ४।२।१२।२५। ]** इण इटः परस्तथा वा । लविषीढ्वम् । लविषीध्वम् । अलविढ्वम् । [अलविध्वम् ।] लुलुविढ्वे । [लुलुविध्वे ।] उपदिदीयिढ्वे । [उपदिदीयिध्वे ।] लाविषीढ्वम् । [लाविषीध्वम् ।] अलाविढ्वम् । [अलाविध्वम् ।] इणः किम् ? समिषीध्वम् । आसीध्वम् ॥१२॥

**हि झल्होर्धि हल्श्ना अनश्शिमन्नतो लुग् हि वच्छ्नो म्वि वा कुः श्यि हाकः स्थि वाऽस्ता । स्त्रि ताहेऽनमाऽलिङ्च्चारैच्च गीलुङ्लृङीङ् वा वधो लिङ्स्कि हन् लुट् तङोर्वै ॥४।२।१३॥**

**ति गासिर्नवामोऽसृपो वेष्ठलोऽनि दृशः स्डोऽचि लुक् दुहिहोलिङ्गुहो धा-। तु तङ्दन्त्य उम्पुम्स्को वच्यतोऽस्याङि दृथुश्व्योऽरश्शास्ख्योऽङ् च कर्तेति लिप्ह्वा-॥४।२।१४॥**

**सिचो वाऽतङि स्तम्भुजृम्रुच्म्लुचुग्लुच्ग्रुचुग्लुञ्चु( तः ) श्वीरितोऽतङ्ल्यृदिद्द्युत्-। पुषादेरनालिङ्ने च श्लिषः स्त्रो न वा चङ्श्विधेः कंश्रिणिद्रुस्त्रुवस्तः ॥४।२।१५॥**

**लुगिण् ते पदो दीपपूर्प्यायितायृबुज्झनो वाऽज् दुहाप्ये रुधो नो तपोऽनोश्च भावा- । र्मि वा लि स्तिहन्दस्त्रहावः शलौ यक् तङना ङिदादेः समाप्तोऽधिकारः ॥४।२।१६॥**

**षोडशयं भुजङ्गचतुष्टयं वा ॥**

**( १४० ) हिझल्होर्धिः । [ ४।२।१३।१। ]** झलन्तहुभ्यां हि धि स्यात् । छिन्धि । भिन्धि । जुहुधि । झल्होः किम् ? याहि । नेटि । रुदिहि ॥

**( १४१ ) हल्श्ना अनश्शिमन् । [ ४।२।१३।२। ]** हलः परः श्ना आनश् स्याद् अस्मिन् हौ परे । गृहाण । पुषाण । हलः किम् ? क्रीणीहि ॥

**( १४२ ) अतो लुग् हि । [ ४।२।१३।३। ]** पच । दीव्य । अतः किम् ? याहि ।

**( १४३ ) वच्छ्नः । [ ४।२।१३।४। ]** उकाराद् अच्पराच्छ्नोश्च हि लुक् । तनु । चिनु। श्नुवत्प्रत्ययात् किम् ? युहि । अचः श्ना किम् ? राध्नुहि ॥

**( १४४ ) म्वि वा । ( ४।२।१३।५। ]** मे वे च परे वच्छ्नोर्लुग्वाऽन्तः । तन्मः । तनुमः । तन्वः । [तनुवः ।] सुन्मः । [सुनुमः । सुन्वः । सुनुवः ।] अच्छ्नोः किम् ? आप्नुमः । [आप्नुवः ॥]

**( १४५ ) कुः । [ ४।२।१३।६। ]** कृञः परः उलुग् नित्यं म्वि । कुर्मः । [कुर्वः ॥]

**( १४६ ) श्यि । [ ४।२।१३।७। ]** श्या इत्यत्र च । कुर्यात् ॥

**( १४७ ) हाकः । [ ४।२।१३।८। ]** शिलुगतः । जह्यात् ॥

**( १४८ ) स्थि वा । [ ४।२।१३।९। ]** लां धि परे स लुग्वा । चकाधे । चकाद्धि ।

अशाध्वम्*। आशाध्वम् ॥

**(१४९) अस्तास्त्रि । [४।२।१३।१०।]** अस्तितास्रोः सलुक् से रे च परे । असि । कर्तारौ । कर्तारः । व्वृवृत्ते ताध्वे [?] ॥

**(१५०) ताहे । [४।२।१३।११।]** लासो लुट्येति हो निपात्यते । अहं कर्ताहे ॥

**(१५१) अनमाऽलिङि । [४।२।१३।१२।]** अलिङि तत्सदृशेऽन्यत्र ङिति लुङ्लङ्लृङि परे भ्वादेरडागमः स्यान्न चेन्मायोगः । अभूत् । अकरोत् । अकरिष्यत् । अमा किम् ? मा स प्राक्षीत् । मा स्म रचत् । अलिङिति किम् ? पचेत् ॥

**(१५२) अचाऽऽरैच्च । [४।२।१३।१३।]** चाद्यचा परेण सहाट आ आर् ऐच् च स्यात् । आस्ताम् । आसन् । आटिष्यत् । आरत् । आर्च्छित् । आर्च्छिष्यत् । ऐक्षिष्ट । आयत् । ऐष्यत । ऐज्यत*। औप्यत । इणेऽपि नत्वम् ॥

**(१५३) गी लुङ्लृङीङ् वा । [४।२।१३।१४।]** लुङ्लृङि परे इङ् गी वा स्यात् । अध्यगीष्ट । अध्यगीषत् । अध्यैष्यत । इङनेरेङर्थः ॥

**(१५४) वधो लिङ्स्कि हन् । [४।२।१३।१५।]** हन्तिर्वधोऽदन्तः स्यात् स्यादौ कादौ लिङि । आवधिषीष्ट । वध्यात् । [स्कि] किम् ? हन्यात् । आघ्नीत ॥

**(१५५) लुङ्तङोर्वा । [४।२।१३।१६।]** ओस्निर्देशात् लुङि नित्यं, तस्यैव तङि वा हन् वधः स्यात् । अवधीत् । अवधीष्ट । अवधिषुः । तङि वा । आवधिष्ट । आवधिषाताम् । आवधिषत । आहत । आहसाताम् । आहसत ॥१३॥

**(१५६) एति गा । [४।२।१४।१।]** इणिक गा स्यात्, लुङि । अगात् । अगाताम् । अगुः । अध्यगात् । [अध्यगाताम् । अध्यगुः ।] अगायि, [अध्यगायि] त्रा ॥

**(१५७) सिः । [४।२।१४।२।]** सि च स्यादातोर्लुङि । अकार्षीत् । अभोत्सीत् । चित् ॥

**(१५८) नवाऽमोऽसृपो वा । [४।२।१४।३।]** न वा अमो यस्य तस्मादसृपो धातोर्लुङि सिज्वा । अस्पार्क्षीत् । अस्प्राक्षीत् । अस्पृक्षत् । इत्यादि । न वामः किम् ? अपाक्षीत् । असृपः किम् ? असार्प्सीत् ॥

**(१५९) इष्टलोऽनिड्दृशः स्ङः । [४।२।१४।४।]** इकारसलन्ताददृशोऽनिटो लुङि सुः स्यात् । अधुक्षत् । अलिक्षत् । इकः किम् ? अधाक्षीत् । दृशः-अद्राक्षीत् । अदर्शत् । सेटः । अकोषीत् ॥

**(१६०) अचि लुक् । [४।२।१४।५।]** स्ङित्यस्य अः लुत्स्यादचि । अधुक्ष्याताम् । अधुक्षि । अचि किम् ? अधुक्षात् । अधुक्षाताम् ॥

**(१६१) दुड्डिहोलिड्गुहोधातुतङ् दन्त्ये । [४।२।१४।६।]** दुहादेः परः लुग्वा तङि दन्त्ये । अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अदुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि ।

एवं । [न्यगूढ । न्यधुक्षत । न्यगूढाः । न्युधुक्षथाः । न्यगूढ्वम् । न्युधुक्षध्वम् । न्युधुह्वहि । न्यधुक्षावहि ।] अतः किम् ? व्यत्यश्लिक्षत । तङि किम् ? अधुक्षत् । दन्त्ये किम् ? अधुक्षामहि ॥

**( १६२ ) उम्पुम्थुको वच्पतोऽस्याङि । [ ४।२।१४।७। ]** वक्ति-पतृ-अस्यतीनाम् उम् पुम् थुगागमः स्याल्लुङ्परेऽङि परतः । अवोचत् अपप्तत् । आस्थत् । अङि किम् ? अपतिष्ट ॥

**( १६३ ) दृश्ख्योऽर् । [ ४।२।१४।८। ]** दृशश्विऋ ऋवर्णान्तानां यथार्हं ऋ अर् श्वेरन्तः अः स्यात् लुङ्चङि । अदर्शत् । आरत् । असरत् । अजरत् । अश्वत् । अङि किम् ? अद्राक्षीत् । आर्षीत् आसार्षीत् । अश्वयीत् ॥

**( १६४ ) अश्शास्ख्योऽङ् च कर्तेति । [ ४।२।१४।९। ]** कर्ता चेत् लुङर्थः, कर्तरीत्यर्थः, शासु ख्याते, चकारात् वचादेश्च लुङि अङ् स्यात् । अशिषत् । [आस्थत् । आख्यत् । अवोचत् ॥].

**( १६५ ) लिप्ह्वासिचः । [ ४।२।१४।१०। ]** तथा । अलिपत् । आह्वत् । असिचत् ॥१४॥

**( १६६ ) वाऽतङि । [ ४।२।१५।१। ]** लिपादेः लुङि तङि परे कर्तर्यङ् वा स्यात् । अलिपत । अलिप्त । [असिचत् । असिक्त । आह्वत् । आह्वास्त ॥]

**( १६७ ) स्तम्भुजृम्रुच्म्लुचुग्लुच्ग्रुचुग्लुञ्चु( तः ) श्वीरितोऽतङि । [ ४।२।१५।२। ]** एभ्योऽतङ्विषये लुङि कर्तर्यङ् स्याद् वा । अस्तभत् । अजरत् । अम्रुचत् । अम्लुचत् । अग्लुचत् । अग्रुचत् । अग्लुञ्चत् । अश्वत् । इरिद् वा । अच्छिदत् । अभिदत् । सिज् वा । अस्तम्भीत् । [अजारीत् । अम्रोचीत् । अम्लोचीत् । अग्लोचीत् । अग्रोचीत् । अग्लुञ्चीत् ।] अश्वयीत् । अशिश्वियत् । अभैत्सीत् । [अच्छैत्सीत् ।] ग्लुञ्चुर्नालोपार्थम् । अतङि किम् ? अभित्त ॥

**( १६८ ) लृदिद्द्युत्पुषादेः । [ ४।२।१५।३। ]** लृकारेतः द्युतादिपुषादिभ्योऽपि तथाऽङ् नित्यम् । अगमत् । अशकत् । अद्युतत् । अश्वितत् । अपुषत् । अशिषत् । पुषादिर्दिवाद्यन्तर्गणः । अतङि किम् ? व्यद्योतिष्ट ॥

**( १६९ ) अनालिङ्गने च श्लिषः । [ ४।२।१५।४। ]** तथाऽङ् । समाश्लिषत् जतु च काष्ठं च । असत्त्वाश्लेषे किम् ? समाश्लिक्षत् कन्यां ना । नियमार्थं वचनम् ॥

**( १७० ) स्रो न वा । [ ४।२।१५।५। ]** सृऋद्भ्यां तथाऽङ् वा । असरत् । असार्षीत् । आरत् । [आर्षीत् ।] मा सश्चषाताम् । समारत ॥

**( १७१ ) चङ्श्विधेः । [ ४।२।१५।६। ]** श्विधेटः चङ् वा स्यात् कर्तरि लुङि परे । अशिश्वियत् । [अश्वयीत् ।] अदधत् । अधात् । अधासीत् ॥

**( १७२ ) कंश्रिणिद्रुस्रुवः । [ ४।२।१५।७। ]** तथा चङ् नित्यम् । अचकमत । अशिश्रियत् । णीति ण्यन्तात् । अचीकरत् । अचीकमत । अदुद्रुवत् । असुस्रुवत् ॥१५॥

**( १७३ ) तो लुगिण् ते पदः । [ ४।२।१६।१। ]** कर्तृलुङ्तादेशे परे पद्यतेरिण् स्यात्, इणः

परश्च तो- लुक् स्यात् । उदपादि सस्यम् । ते किम् ? उदपत्साताम् ॥

**( १७४ ) दीपपूर्प्यायितायबुध्जनो वा । [ ४।२।१६।२। ]** तत् तथा वाऽतः । [अदीपि ।] अदीपिष्ट । अपूरि । [अपूरिष्ट ।] अप्यायि । [अप्यायिष्ट । अतायि । अतायिष्ट ।] अबोधि । अबुद्ध । अजनि । [अजनिष्ट ॥]

**( १७५ ) अजद्रुहाप्ये । [ ४।२।१६।३। ]** अजन्ताद् धातोर्दुहश्चाप्ये कर्तरि तत् तथा वा । अकारि, अकृत वा कटः स्वयम् । अलावि, अलविष्ट वा केदारः स्वयम् । अदोहि, अदुग्ध [वा] गौः स्वयम् । आप्ये कर्तरि किम् ? अकारि कटः [देवदत्तेन ।] अदोहि गौः त्रा । अज्दुहः किम् ? अभेदि कोष्ठः स्वयम् ॥

**( १७६ ) रुधो नो । [ ४।२।१६।४। ]** तथेण् न । अन्वरुद्ध गौः स्वयम् । आप्ये कर्तरि किम् ? अन्वरोधि गौर्त्रा ॥

**( १७७ ) तपोऽनोश्च । [ ४।२।१६।५। ]** तपतेरनोर्विशेष्याद् आप्ये कर्तरि नेण् । अन्ववातप्त पापेन कर्मणाऽसौ । अतप्त तपः तापसः । अनुतप् पश्चात्तापार्थः ॥

**( १७८ ) भावार्मि । [ ४।२।१६।६। ]** भावाप्ययोस्तत् तथा । आसि । अशायि त्रा । अकारि कटो त्रा ॥

**( १७९ ) वा लि स्ति हन्दृस्त्रहावः । [ ४।२।१६।७। ]** हनादेर्धातोः स्तीति सादौ तादौ लि लकारे तन्निमित्ते परतः भावाप्ययोरिण् वा । घानिष्यते । अघानिष्यत । हनिष्यते । [अहनिष्यत ।] दर्शयिष्यते । [अदर्शयिष्यत ।] द्रक्षते । [अद्दक्षत ।] ग्राहिष्यते । [अग्राहिष्यत ।] ग्रहीष्यते । [अग्रहीष्यत ।] अजन्तात् । शायिष्यते । [अशायिष्यत ।] शयिष्यते । [अशयिष्यत । ] दायिष्यते । [अदायिष्यत ।] दास्यते । [अदास्यत ।] चायिष्यते । [अचायिष्यत ।] चेष्यते । [अचेष्यत ।] अघानिषाताम् । घनिषीष्ट । अवधिषाताम् । अहनिषाताम् । अहासातां च । अदर्शिषाताम् । [अद्दक्षाताम् ।] अग्राहिषाताम् । [अग्रहिषाताम् ।] अदायिषाताम् । अदिषाताम् । दासीष्ट । अचायिषाताम् । अचेषाताम् । [चेषीष्ट ।] अशायिष्याताम् । अशयिषाताम् । तादौ । घानिता । हन्ता । दर्शिता । द्रष्टा । ग्राहिता । दायिता । दाता । चायिता । चेता । कारिता । कर्ता । स्ति किम् ? चीयते । लि किम् ? पिपासते । हनादेः किम् ? पठिष्यते । भावाप्ये किम् ? हनिष्यते । लि स्तीत्यत एव पूर्वान्ताः सादयः ॥

**( १८० ) शलौ यक् । [ ४।२।१६।८। ]** भावाप्ये विहिते शलौ शिति लिट्लिङ्वर्जिते लादेशे च परे यक् स्याद् धातोः । आस्येत सुप्यमानं त्रा । क्रोशं गोदोहं मासं चास्यते त्रा । अविवक्षिताप्यात् । नेह । पच्यते त्रा । सेव्यते । आप्ये । पच्यते ओदनः गम्यते ग्रामो त्रा । पच्यताम् । पच्येत । अपच्यत । शलौ किम् ? पेचे । पक्षीष्ट । इह तु पक्ता । पक्ष्यते । अपक्ष्यत । अपक्तेति व्यवधानान्न स्यात् ॥

**( १८१ ) तङानाः । [ ४।२।१६।९। ]** एव सर्वलादेशे भावाप्ये स्युः । भूयते, स्थीयते त्रा । न भुज्यते । न पच्यते । आप्ये । क्रियते कटो त्रा । एवं चक्रे [कटो त्रा ।] करिष्यते । क्रियताम्,

अक्रियत, अकृत, क्रियेत, कृषीष्ट कटो न्रा । एवं बभूवे, [भविष्यते, भूयताम्, अभूयत्, अभावि, भूयेत, भविषीष्ट] न्रा । नियमार्थमधिकारार्थं वचनम् ॥

**(१८२) ङिदादेः । [४।२।१६।१०।]** ङ इत् यस्य, तदादेर्धातुगणात्, लादेशास्तङाना एव कर्तरि भवन्ति । भिदादौ वृत्तानि नाना दश षट्पदी–

ङिच्छीयते ङान्निविशानुप्रच्छाः परिव्यवक्रीविपराज्यपस्कृ-।
संक्ष्णोरनुक्तव्यतिहारखग्घोऽजाद्यन्तप्रादेर्युजयज्ञपात्रे ॥१॥

साप्योच्चरो र्टा सम उत्क्रमे दाण् ङेऽकूजक्रीडानुपरेररक्षणो-
पालम्भ आशीर्गतिशीलयोर्भुज्शप्नाथहृञ्ज्ञानभृतिव्यये न्यः ॥२॥

उत्क्षेपपूजाविगणोपनीत्यां कर्तृस्थिताऽमूर्तरमः क्रमेरा- ।
रम्भे ट्र्युपप्राच्चरणेन वेष्ट्वा परोपटस्तायनवृत्तिसर्गे ॥३॥

आङो भसूतौ सहने गमोऽमुखे स्पर्धने ह्वो व्युपसंनितो मृङः ।
लुङ्लिङ्शिति स्यात् स्मृद्दशः सनोऽननोर्ज्ञोऽनाङ्प्रते श्रोरथ पूर्ववत् कृञः ॥४॥

आमः कथागन्धनयत्नसाहसावक्षेपसेवासुकृते धृते बले-।
ऽरंशब्दरंवेरवगृसमः प्रतिज्ञाने प्रवेः स्थश्च प्रकाशनिर्णये ॥५॥

उदोऽप्यनूर्ध्वेह उपात्तु मैत्री मन्त्रोक्तिसङ्गाध्वनिदेवतार्च्ये ।
लिप्सारमोर्वोपयमो विवाहे भोज्ञानयत्नेऽप्युपच्छन्दने वद् ॥६॥

विविन्नमोक्त्योरिह वारमोऽनोर्ज्ञो निह्नवे वाऽस्मृतिसम्प्रतिभ्याम् ।
स्वाङ्गार्म आहन्यमव्युत्तपोऽनाप्यात् संश्रुगंसृच्छ्दृशप्रच्छिवित्तेः ॥७॥

क्त्वासूह आप्ये स्मरणेऽप्यणेर्णेः कृञ्श्रुश्नमग्रन्थदुहस्त्विहारम् ।
भूषार्थकृश्रीणि सनो यको वा कुप्रञ्जितो वादि णिञित् तथेडि ॥८॥

स्यादाप्यवत् तस्थ उदुह्पची च श्राद्धः सृजेः स्यात् तु तपस्तपोऽर्मः ।
प्रलम्भने वञ्चगृधिणेर्लियश्चात् पूजाभिभूतौ च प्रयोजकात् स्मेः ॥९॥

षुक् चा भियोऽभ्यास उ मिथ्यया कृञः स्वार्थे विपर्योपरमेऽत्यभिप्रति ।
क्षिप्कृञ्परान्वादिपरिप्रवह्परिमृष्प्राणिकर्त्रण्यरमिञ् प्रजन्नशेङ् ॥१०॥

आहारचालार्थबुधस्रुयुधद्रुवो ञिट्ज्ञापवद्धातुतिङोऽश्रुतो समोत् ।
यञ्चादिधेपापरिमुहृदमायमायश्च नृतौवद्रुचि णेर्ध्वनिर्गतौ ।
स्याद् वा नितश्चोपरमेरकर्मणः सन्स्ये तु वृद्भ्यो लुटि क्लृप् लुङि द्युश्च: ॥११॥

ङितः । महीङ् महीयते । क्यङ् । सेनायते । यङ् । पापच्यते । णिङ् । कामयते । इयङ् । क्रतीयते । शीङ् । शेते । षूङ् । सूते । शीयशदेः शं च तात् । शीयते । तद्वतः धातुपाठे तङानिनः । एधते । वर्धते । ङा । आस्ते । जुगुप्सते । नेर्विशः । निविशते । आङोऽनुप्रच्छिभ्याम् ।

आनुते शृगालः । आपृच्छते गुरुम् । एवं परिक्रीणीते । [विक्रीणीते । अवक्रीणीते । विजयते । [पराजयते ।] अपस्किरतेऽश्वा । संक्षुणुते शस्त्रम् । अनुक्तव्यतिहारे अखग्घ इति समासः । शकन्ध्वाद्यलोपः । अनुक्ते अप्रतिपादिते शब्दान्तरेण, आद्योऽन्यतरेतरपरस्परेत्यादिना क्रियाव्यतिहारेऽद् विनिमयेऽर्थे, अखग्घ इति खिद्गिद्घिद्वर्जिताद् धातोः । व्यतिलुनीते । व्यतिभवते सेना । व्यतिभवेते ग्रामनगरे । व्यतिहारे किम् ? लुनन्ति । अनुक्ते किम् ? अन्योन्यस्य धान्यं वाति, लुनन्ति, [व्यतिलुनन्ति ।] अखग्घः किम् ? गतिहिंसाशब्दार्थात्र । व्यतिगच्छन्ति । व्यतिसर्पन्ति । व्यतिघ्नन्ति । व्यतिहिंसन्ति । व्यतिजल्पन्ति । व्यतिपठन्ति । व्यतिवादयन्ति । मुख्यगतिहिंसार्थादेव । व्यतिनयते । व्यतिभेदयन्ते । संव्यतिवहन्ते गर्गाः । सप्रहरन्ते राजानः । वह णी प्रापणार्थे । हृञ् हरणे । खिद्गितो वा किम् ? घित् तु शब्दार्थोपलक्षणमिति । व्यतिहसन्ति इत्यादि स्यात् । कर्तरि किम् ? व्यतिगम्यते ग्रामः । अजाद्यन्तात् प्रादेः परात् युजः यज्ञपात्राऽप्रयोगे । उद्युङ्क्ते । अनुयुङ्क्ते । अयज्ञपात्रे किम् ? द्वन्द्वं [न्यञ्चि] पात्राणि प्रयुनक्ति धीरः । अजाघन्तात् किम् ? संयुनक्ति ॥१॥

साप्यादुदः पराच्चरः । गेहमुच्चरते । उत्क्रम्य याति [इत्यर्थः ।] साप्यात् किम् ? बाष्पमुच्चरति । टॎ समः । टॆति तृतीयायुक्तात् सञ्चरः । रथेन सञ्चरते । टॎ किम् ? उभौ लोकौ सञ्चरति । उत्क्रमेऽशिष्टव्यवहारेऽर्थे समो दाणः । ङॆ इति टॎ चेत् सम्प्रदानेऽर्थे स्यादताएव । दास्या सम्प्रयच्छते, वृषल्या सम्प्रयच्छते । कामुक [सन्] दास्यै ददातीत्यर्थः । ङॆ किम् ? पाणिना सम्प्रयच्छति । उत्क्रमे किम् ? ब्राह्मण्यै सम्प्रयच्छति ॥ अकूजार्थक्रीडेः समः आङ्-अनुपरेश्च । संक्रीडते । [आक्रीडते । अनुक्रीडते । परिक्रीडते ।] अकूजने किम् ? संक्रीडन्ति शकटानि । अरक्षणेऽपालने, उपालम्भे वाचा शरीरस्पर्शने, प्रोषितस्य भावाभावोपलब्धौ कश्चिदासेवने वा, आशिषि प्रार्थने, गतिशीले गमनानुकरणे । गतौ शीले वा, क्रमेण भुजि-शपि-नाथ-हृञ्भ्यः । ओदनं भुङ्क्ते । तस्मै शपते । सर्पिषो नाथते । पैतृकमश्वा अनुहरन्ते । तद्वद् गच्छन्ति शीलन्ति वा । एषु किम् ? भुनक्ति पृथिवीं राजा । तं शपति, आक्रोशति [इत्यर्थः] । तं नाथति, याचते [इत्यर्थः] । भारं हरति । ज्ञानादावर्थे न्यः नियो धातोः । ज्ञाने नयते । प्रमेयं निश्चिनोति । भृतौ वेतने । कर्मकरानुपनयते । व्यये धर्मादिनियोगे । शतं विनयते ॥२॥

उत्क्षेपणे । तमुदानयते । उत्क्षिपति । पूजायां यथार्थप्रकाशनार्थसन्माने । नयते चार्वी अर्थान् । उपपत्तिभिः स्थापयति । विगणने ऋणादिनिर्यातने । मद्राः कारं विनयन्ते । उपनीत्याम् उपनयने । आत्मानमार्यं कुर्वन् तं समीपीकरोतीत्यर्थः । एषु किम् ? अजां नयति ग्रामम् । कर्तृस्थितामूर्तरमः । कर्तृस्थममूर्तमाप्यं यस्य तस्मान्नियः । क्रोधं मन्युं वा विनयते । कर्तृस्थं किम् ? स तस्य क्रोधं विनयति । अमूर्त [इति] किम् ? गडुं आप्यं किम् ? बुद्ध्या विनयति । उपप्रात् क्रमेरारम्भे । आदिकर्मणि । उपक्रमते भोक्तुम् । [प्रक्रमते भोक्तुम् ।] आरम्भे किम् ? पूर्वेद्युः प्रकामति, [गच्छतीत्यर्थः] । चरणेन पादाभ्यां क्रमणेऽर्थे वेः । साधु विक्रमते । अश्वादिगत्यर्थोऽत्र । क्रमणे किम् ? विक्रामति राजा, उत्सहते [इत्यर्थः] । ट्वा । टित्त्वाद् अप्रादेः क्रमो वा । क्रमते । [क्रामति ।] परोपटः । परोपाभ्यां, टित्त्वादप्रादेश्च तायनाद्यर्थे । तायने सन्ताने पालने वा । पराक्रमन्ते उपक्रमन्ते क्रमन्ते [अस्मिन्] शास्त्राणि । सन्तन्यन्ते पाल्यन्ते वा [इत्यर्थः] । वृत्तावात्मयातनेऽप्रतिघाते वा । ऋक्षवस्य पराक्रमते, [उपक्रमते, क्रमते] बुद्धिः । तदाश्रया साऽऽत्मानं यापयति, तत्र वा न

प्रतिहन्यते । सर्गे उत्साहेऽनुज्ञाने वा । पराक्रमते, [उपक्रमते, क्रमते] छन्दोऽध्ययनाय । तत्रोत्सहतेऽनुज्ञातो वा । परादेः किम् ? संक्रामति । तायनादौ किम् ? पराक्रमति ॥३॥

आङो भसूतौ । आङः क्रमेः ज्योतिरुद्गतावर्थे । आक्रमतेऽर्कः, चन्द्रः [वा] । आक्रमन्ते ज्योतींषि । भसूतौ किम् ? स आक्रमति धूमः । सूतौ किम् ? नभः समाक्रमति । सहने क्षान्तौ आङो गमेः । आगमयस्व तावत् । अक्षान्तौ किम् ? आगमयति । ण्यन्तोऽयम् । अमुखे मुखविषयादव्यादार्थाद् आङो दाङः । वनं प्रज्ञं शाकं वाऽऽदत्ते । आस्यमादत्ते ना । व्याददते पिपीलिका मुखं पतङ्गस्य । अमुखे किम् ? कूलं व्याददाति [नदी] । मुखं [व्याददाति] । एवं भूमिः विपादिकां [व्याददाति] । आङो ह्वयतेः स्पर्धनेऽर्थे । स तमाह्वयते । स्पर्धायां किम् ? मामाह्वयति । व्युपसंनिभ्यो ह्वयते । [विह्वयते । उपह्वयते । संह्वयते । निह्वयते ।] मृङो लुङ्लिङौ शिद् विषये । अमृत । मृषीष्ट । म्रियते । एषु किम् ? ममार । स्मृदृशः सनन्तात् । नष्टं सुस्मूर्षते । नृपं दिदृक्षते । अननोर्ज्ञः सनः । धर्मं जिज्ञासते । अनोः । तन्त्रमनुजिज्ञासति । अनाङ्प्रतेः श्रोः सनः । गुरून् शुश्रूषते । आङ्प्रतेः । आशुश्रूषति [प्रतिशुश्रूषति ।] सनन्तात् पूर्वधातोरेव । शीङ् । शिशयिषते । निविश् । निविविक्षते । प्रतिचिक्षिप्सति । विररंसति । कृञः परार्थः ॥४॥

आमः । आमन्तपूर्वधातोरिव कृञो अनुप्रयोगात् । ईक्षाञ्चक्रे । जागराञ्चकार । बिभराञ्चक्रे । [बिभराञ्चकार ।] स्वार्थेऽपि न तङः । कृञः किम् ? ईक्षांबभूव । विध्यर्थं नियमार्थम् । कथाद्यर्थात् कृञः कथायां प्रस्तावे प्रकर्षोक्तौ वा । गाथाः प्रकुरुते, जनापवादांश्च । गन्धने हिंसात्मके सूचने । स तमुत्कुरुते, उदाकुरुते । प्रयत्ने । एधो दकस्योपस्कुरुते । साहसे । परदारान् प्रकुरुते । अवक्षेपे । दुर्विनीतान् प्रकुरुते । सेवायाम् । महामात्रानुपकुरुते । सुकृते धर्मादिविनियोगे । शतं प्रकुरुते । अधेर्बले । अधेः कृञः बले शक्तावर्थे । तं हाधिचक्रे । तमधिबभूव । न वा तेन पराजितः । एषु किम् ? कटं करोति । अरंशब्दरवेः । वेः कृञोऽरमित्यनाप्याच्छब्दरमिति शब्दाप्याच्च । विकुर्वते सेन्धवाः, साधुदान्ताः । काकस्वरान् विकुरुते । अन्यत्र, पयोऽधिकरोति । अवाद् गृ । अवगिरते । अवात् किम् ? गिरति । समः गृ प्रतिज्ञाने अभ्युपगमे । शतं संगिरते । नित्यं शब्दं वा [संगिरते] । अ[?प्रति]ज्ञाने किम् ? ग्रासं संगिरते । प्रवेः स्थश्च । चान्यत्रयोगात् प्रवेरवसमश्च तिष्ठतेः । प्रतिष्ठते । [वितिष्ठते । अवतिष्ठते । सन्तिष्ठते । प्रकाशननिर्णये चावापि प्रतिज्ञाने चार्थे । छात्रेभ्यस्तिष्ठते कुमारी । आत्मानं प्रकाशयति [इत्यर्थः] । विवादे निर्णेतरि । त्वयि तिष्ठते । त्वया च्छेत्तव्योऽसौ [इत्यर्थः] । नित्यं जीवमातिष्ठते ॥५॥

अनूर्ध्वेहेऽर्थे उदः स्थः । मुक्तावुत्तिष्ठते, गेहे वा । [तदर्थं] घटते [? यतते इत्यर्थः] । अनूर्ध्वे किम् ? आसनादुत्तिष्ठति । ईहायां किम् ? अतो ग्रामाच्छतमुत्तिष्ठति, । उत्पद्यते [इत्यर्थः] । उपात् मैत्र्यादौ । गणकानुपतिष्ठते । आग्नेय्या आग्नीध्रमुपतिष्ठते । यमुना गङ्गामुपतिष्ठते । अयं पन्थाः स्रुघ्नमुपतिष्ठते । आदित्यमुपतिष्ठते । लिप्सारमोर्वा । उपस्थः लिप्सायामवाप्याच्च वा । [भिक्षुको] विप्रकुलमुपतिष्ठते, उपतिष्ठति । अरमभोजनकाले उपतिष्ठते, उपतिष्ठति । उपादयमो विवाहे दारकर्मणि । कन्यामुपयच्छते । स्वीकरोति । [इत्यर्थः] । विवाहे किम् ? सोऽस्य भार्यामुपयच्छति । भादिषु फलेषु सह भूतेषु करणेषु विशेषणे वदः । सा छन्दसि तात्पर्यप्रकाशनाद् भाति । वदि तु । सं व्याकरणे वदते, जानाति । वदितुं जानन् वा वदति । यत्ते क्षेत्रे वदते तत्रोत्सहते । उपच्छन्दने उपसान्त्वने,

रहस्युपमन्त्रणे वा । कर्मकरानुपवदते । कुलभार्यामुपवदते । उपच्छन्दयति [इत्यर्थः] ॥६॥

विविन्नमोक्त्योः । विशिष्टा वित् विवित् नानामतिः तत्र विमत्रौ वदः । गहे विवदन्ते । चित्रं भाषन्ते [इत्यर्थः] । अमोक्तौ च नृणाम् अमा सहोच्चारणे । सम्प्रवदन्ते विप्राः । नृ किम् ? सम्प्रवदन्ति कुक्कुटाः । अमोक्तौ किम् ? संवदन्ति । इह वा । इहेत्यनन्तरोभये विपक्षिते विमतौ विप्रलापे, अमोक्तौ व्यक्तं सहोक्तौ चार्थे वदेर्वा । विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति वा । एवं, सांवत्सराः । युगपदन्योन्यविरुद्धं वदन्ति । विमतौ किम् ? सम्प्रवदन्ते ग्राम्याः । नृ किम् ? विप्रवदन्ति शकुनयः । अमोक्तौ किम् ? एकैकशो विप्रवदन्ति मौहूर्ताः । अरमोऽनोः । अनाप्यादनोर्वदः । अनुवदते कठः कलापस्य । सदृशं ब्रूते [इत्यर्थः] । अरमः किम् ? पूर्वोक्तमनुवदति । अरमटा ज्ञः । सर्पिषो जानीते । तेन प्रवर्तते [इत्यर्थः] । अरमः किम् ? स्वरेण पुत्रं जानाति । रित् सर्ज्ञाप्योऽत्र टार्थम् । निह्नवेऽर्थे ज्ञः । शतमपजानीते । अपलपति [इत्यर्थः] । अस्मृत्यर्थे सम्प्रतेः ज्ञः । शतं संजानीते । [शतं प्रतिजानीते ।] अस्मृतौ किम् ? मातुः संजानाति, [प्रतिजानाति] । स्मरति [इत्यर्थः] । आङ्गो हन्तियमेः, व्युद्भ्यां तपः स्वाङ्गाप्यात् । शिर आहते । पाणिमायच्छते । पृष्ठं वितपते, [उत्तपते] । स्वाङ्गार्मः किम् ? सोऽस्य पृष्ठमाहन्ति, [आयच्छति, उत्तपति, वितपति] । अनाप्यात् तथा । आहते । अनाप्यात् किम् ? आहन्ति तं पादेन । आयच्छति रज्जुं कूपात् । वितपति, [उत्तपति] सुवर्णं ना । अनाप्यात् समः परात् श्रुप्रभृतेः । संशृणुते । संगच्छते । संस्वरते । ऋ ऋच्छ । सा समृत । समृच्छते । संपश्यते । संपृच्छते । संवित्ते ॥७॥

क्त्वासूहः । कित्त्वात् प्रादेः अस् उहो वा । निरस्यते, [निरस्यति] । समूहते, [समूहति] । प्रादेः किम् ? अस्यति [शत्रून् । समूहति पदार्थान् ] । आप्ये स्मरणेऽप्यणेर्णेः । अणेरण्यन्तस्य यदाप्यं तस्मिन्नेव णेर्ण्यन्तस्य कर्तरि विवक्षितेऽस्मरणेऽर्थे तस्यैवानाप्याद् धातोः । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते स तान् । सिञ्चति तम् । स तान् सेचयते । स्वयमेव पश्यन्ति राजानं भृत्याः । दर्शयते स तान् स्वयम् । परिवृण्वन्ति कण्टकाः वृक्षम् । स तान् परिवारयते । णेः किम् ? आरोहन्ति ते । स आरुह्यमाणो हस्ती साध्वारोहति । अणः किम् ? गणयति गणं ना । गणयति गणः स्वयम् । अस्मरणे किम् ? नास्य स्मरति नरम् अयं स्वयम् । आप्ये किम् ? दात्रेण लुनाति । लावयति दात्रं स्वयम् । तस्यैवेति णेरेव । आरोहन्ति तं ते । आरोहयमाणोऽसौ तान् भीतान् मूत्रेण सेचयति । अनाप्यात् किम् ? आरोहन्ति तं ते । आरोहयमाणो हस्ती स्थलमारोहयति तान् । आप्ये कर्तरि किम् ? आरोहन्ति तं ते । तानारोहति महामात्रः । अफलार्थं कर्तृस्थार्थं वचनम् । कृञादेराप्ये कर्तरि तङ एव । ब्रूते, अवोचत् कथा स्वयम् [एव] श्रथ्नीते, अश्रन्थीष्ट, ग्रथ्नीते, अग्रन्थीष्ट, माला स्वयम् [एव] । नमते, अनंशत दण्डः स्वयम् [एव] । दुग्धे, अदुग्ध । प्रस्नुते, प्रास्नौष्ट गौः स्वयम् [एव] । इहारम् । विकुरुते, व्यकृषत कटः स्वयम् [एव] । तथा, भूषयते, अभूषयत, मण्डयते, [अमण्डयत] कन्या स्वयम् [एव] । अवकिरते, अवाकीर्ष्ट च [हस्ती] स्वयम् [एव] । श्रयते दण्डः [स्वयमेव] । कारयते, चिकीर्षते कटः स्वयम् [एव] । कुषिरजेर्विहिताद् यकः । परे आप्ये कर्तरि आप्यवद्भावेन विहितास्तङो वा । कुष्यति, कुष्यते वा पादः स्वयम् [एव] । रज्यते, रज्यति वस्त्रं स्वयम् [एव] । यकः किम् ? चुकुषे, [कोषिषीष्ट] पादः स्वयम् [एव] । अकोषि । [अरञ्जि ।] कर्तरि किम् ? कुष्यते [कोषिष्यते] पादेन स्वयम् [एव] । वादेः । वाप्ये कर्तरि ।

वाद्यति वाद्यते । अवादि । अवीवदत् । वादयाञ्चक्रे । [वादायां]बभूव, [वादया]मास च । णिञित् तथेति । तथैव किन्तु णिलुक् स्यात् इडादौ तङि । वादिष्यते, [अवादिष्यत] शङ्कुः स्वयम् [एव] ॥८॥

आप्यवत् तस्थः । आप्यस्थार्थो यो धातुस्तस्याप्ये कर्तरि यो लोत्रपरो आप्यः कर्ता आप्यवत् स्याद् यगादिभाक् । भिद्यते, अभेदि कुशूलः स्वयम् । लूयते, अलावि केदारः स्वयम् । कारिष्यते, अकारि कटः स्यम् । अनाप्ये किम् ? भिद्यमानोऽसौ पात्रं भिनत्ति । तथाहि—

कर्मस्थक्रियतद्भावौ तयोः कर्ता हि कर्मवत् ।
कर्तृस्थक्रियतद्भावौ [कर्म]योर्न च तद्यथा ॥१२॥

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥१३॥

कर्मस्थया क्रियया तुल्यक्रियकर्ताकर्मवत् । नेह । राध्यत्योदनः स्वय[मेव] । पचत्योदनं ना । मासः आस्यते न्रा । ग्रामो गम्यते न्रा । दुहिपची आप्यकर्तृलकारान्ता वाऽनाप्यौ साप्यौ वा साप्यावेव स्तः । दुग्धे, अदुग्ध: गौः स्वयम् । पच्यते, अपाचि ओदनः स्वयम् । तस्मात् सलोहितं पच्यते उदुम्बरफलम् । अनाप्यानिवृत्त्यर्थं वचनम् । सृजः श्रद्धावान् कर्ताऽऽप्यवत् । सृज्यते माला । साऽसर्जि । श्राद्धः किम् ? सृजति स ताम् । असृष्ट । तप आप्यस्य तपस्तथा । तपते तपः सः । अतप्त वा । तपोऽर्मः किम् ? उत्तपति स तम् । वञ्चिगृधेर्ण्यन्ताद् [वि]संवादने तङ एव । स तं वञ्चयते, [गर्धयते] । प्रलम्भने किम् ? तं [वञ्चयति,] गर्धयति । लियो ण्यन्तात् प्रलम्भने पूजाभिभवे च तङ अन्त आ च । कस्त्वामुल्लापयते ? जटाभिरालापयते । पूजयति [इत्यर्थः] । तमुल्लापयते । न्यक्करोति [इत्यर्थः] । एपु किम् ? बालमुल्लापयति । स्मेर्ण्यन्ताद् आचान्तः प्रयोजकाद् विस्मयेऽर्थे । मुण्डो विस्मापयते । प्रयोजकात् किम् ? कुञ्चिकयैनं विस्मापयति ॥९॥

भियो ण्यन्तात् तङः षुक् च आ च । सः शतं भीषयते । प्रयोक्तुः किम् ? तपोऽसौ भाययति । अभ्यासे द्व्याद्यावृत्तौ [मि]थ्यायोगे कृञो ण्यन्तात् । मिथ्या पदं कारयते । स्वरादिदुष्टमसकृदुच्चारयति [इत्यर्थः] । स्वार्थे कर्तृप्रयोजने क्रियाफले विवक्षिते विपर्योपरमादिवर्जिताद् रिदादेस्तङः । अविपर्योपरमादेः किम् ? एभ्यः फलवति न स्युः । वि-परि-आङ्-उपाद् रमः । विरमति । [परिणमति । आरमति । उपरमति ।] एवम्, अतिक्षिपति । [अभिक्षिपति । प्रतिक्षिपति ।] परानोः कृञः । पराकरोति । [अनुकरोति ।] परिवहति । [प्रवहति ।] परिमृष्यति । तत्तद्विशेष्यात् किम् ? गेहं परिरमते । तं प्रतिक्षिपते । गङ्गामनुकुरुते नृपः । इत्यादि । प्राणिकर्त्रण्यरमिञ् । अणीति अण्यन्तो यः प्राणिकर्तृ चित्तवत्कर्तृकः, अरम् व्याप्यरहितः, तत इञि ति णिञन्तान्न स्वार्थे तङ् ञितः प्राप्तः । आस्ते । स आसयति । तं शेते सा । शाययति तम् । प्राणिकर्तृक इति किम् ? शुष्यन्ति व्रीहयः । शोषयते [ता]नातपः । अण्यन्तः किम् ? आरोहयमाणं प्रयोजयति, आरोहयति । अरम् किम् ? कटं कुर्वाणं कारयति । प्र आदिस्तथा क्वचिदाप्याद् अप्राणिकर्तृकादपि । प्रावयति । प्रवतीत्यर्थः । एवं, जनयति सुखम् । नाशयति रोगम् । इङ् । अध्यापयति नरम् ॥१०॥

आहारार्थात् । भोजयति । आशयति । चालार्थात् । चलयति । कम्पयति । त्यर्थादपि

चालार्थत्वात्. । गमयति ग्रामम् । एवं, बोधयति नरं श्लोकम् । स्रावयति । स्पन्दयतीत्यर्थः । योधयति । तं द्रावयति । कण्डूञ् हृञ् कृञ् णिञ् । कण्डूयते । [हारयते ।] कारयते । टित्त्वाद् अप्रादेर्ज्ञः । गां जानीते । टित् किम् ? स्वर्गं प्रतिजानाति । स्वार्थे किम् ? कण्डूयते । गो जानाति । अपाद् वदः । अपवदते । धातुतिङः धातुपाठे विभाषितात् । तनुते । सनुते । पचते । यजते । धातु किम् ? क्रमते । क्रामतीति फलं विनापि तङ् । स्वार्थे किम् ? पचन्ति कर्मकराः । एवं सर्वत्र । अश्रुतावग्रन्थेऽर्थे सम्-आङ्-उदो यमः । व्रीहिन् संयच्छते । वस्त्रमायच्छते । भारमुद्यच्छते । अदादेण्यन्ताद् अद् वेट आहारार्थादिति निषेधे प्राप्ते नृतेश्चालार्थाद् इत्यन्येभ्यः प्राणिकतृकाद् इति । आदयते । धापयते । पाययते । परिमोहयते । दमयते । आयामयते । आयासयते । नर्तयते । वादयते । रोचयते । ध्वनेर्गतौ वा । शब्दान्तरवत् फलताप्रतीतौ स्वार्थे वा तङ् । स्वं कटं कारयते, कारयति वा । स्वं यज्ञं याजयते, याजयति वा । एवं सर्वत्र । इतोऽस्वार्थे । मितश्च धातोर्वा तङ् । क्लिदिन् परिदेवने । क्लिन्दते । [क्लिन्दति ।] एठहेठन् विबाधायां पठते । व्यवस्थितविभाषया विशेषे तङ् वा । स्फुटिर् विशरणे, मुडि खण्डने, ष्वञ्ज [परि]ष्वङ्गे, लघि शोषणे अतङानिनः । स्फुट विकसने । मुडि मार्जने, शुद्धावित्यर्थः । ष्वञ्ज परिष्वङ्गे । लघि गतौ तङानिनः । उभयार्थं नि । शकन् मर्षे अदा-(दिवा-)दौ । धृषन्, दिवुन्, शठन्, रिपन्, लक्षन् चुरादौ निता इदुदिरितो न वाच्यन्ते । प्राग् आत् धातुपु न विभाषिताः स्वार्थेऽपि विकल्पार्थम् । उपाद् रमोऽकर्मकाद् वा । कश्चित्कालमुपरमते, [उपरमति] । वृदादेः सन्-स्ये परे वा । विवृत्सति । विवर्तिषते । वर्त्स्यते । वर्तिष्यते । चिक्लृप्सति । चिकल्पिषते । कल्प्स्यति । [कल्पिष्यते ।] लुटित् क्लृपो वा कल्पिता । लुटि परे द्युते, द्युतादेर्वा । व्यद्युतत् । व्यद्योतिष्ट । अश्वितत् । अश्वेतिष्ट । डाच्लोहितादेस्तत्रैव [३।४।१।१।४१] तद्वोक्तः ॥११॥

**समाप्तोऽधिकारः** ॥ पञ्चग्रन्थ्यां संस्कृताधिकार इत्यर्थः ॥१०॥१६॥

**[इति श्रीबुद्धिसागराचार्यकृतपञ्चग्रन्थ्यां संस्कृताधिकारे चतुर्थाध्याये द्वितीयः, आदितो वा चतुर्दशः, पादः ।]**

**[॥ ग्रन्थकृत्परिचयः ।]**

आसीन्महावीरजिनोऽस्य शिष्यः
सुधर्मनामाऽस्य च जम्बुनामा ।
तस्यापि शिष्यः प्रभवोऽस्य शिष्यः
शय्यम्भवोऽस्यानु परम्परायाम् ॥१॥

वज्रोऽस्य शाखाम्बरमण्डलेऽस्मिन्
साधूनुवृन्दावृतशान्तकान्तिः ।
भव्यासुमत्सत्कुमुदप्रबोधो
निर्नाशिताज्ञानघनान्धकारः ॥२॥

बालेन्दुवत् सर्वजनाभिवन्द्यः
शुक्लीकृताङ्गीकृतसाधुपक्षः ।

कलाकलापोपचयोत्तमूर्तिः ।
श्रीवर्धमानो नतवर्धमानः ॥३॥
जिनप्रणीतागमतत्त्ववेत्ताऽ-
प्येषां प्रणेतेव मतान्तराणाम् ॥
साहित्यविद्याप्रभवो बभूव
श्वेताम्बरः श्वेतयशा यतीशः ॥४॥
गुरुपदमनुकर्तुं तद्वदेवास्य शिष्यो-
ऽशिवदशिवदकल्पः कल्पशाखोपमेयो-।
ऽनतिकृदतिकृदब्धिं व्याप्य चित्तोऽप्यचित्तो-
ऽभवदिह वदिहाशः श्रीजिनेशो यतीशः ॥५॥
जलनिधिवदगाधो मोक्षरत्नार्थिसेव्यो
यमनियमतपस्याज्ञानरत्नाकरश्च ।
सुरगिरिरिव तैर्वा वावदूकैरकम्प्यो
वचनजलमुगेतां तर्पयन्नुन्नतः त्स्नाम् ॥६॥
सुरपतिरतिवासे जैनमार्गोदयाद्रौ
हतकुमततमिस्रः प्रोदगात् सूरिसूर्यः ।
भवसरसिरुहाणां भव्यपद्माकराणां
विदधदिव सुलक्ष्मीं बोधकोऽहर्निशं तु ॥७॥
श्रीबुद्धिसागराचार्योऽनुग्राह्योऽभवदेतयोः ।
पञ्चग्रन्थीं स चाकार्षीज्जगद्धितविधित्सया ॥८॥
यदि मदिकृतिकल्पोऽनर्थधीर्मत्सरी वा
कथमपि सदुपायैः शक्यते नोपकर्तुम् ।
तदपि भवति पुण्यं स्वाशयस्यानुकूल्ये
पिबति सति यथेष्टं श्रोत्रियादौ प्रपायाम् ॥९॥
अम्भोनिधिं समवगाह्य समाप लक्ष्मीं
चेद् वामनोऽपि पृथिवीं च पदत्रयेण ।
श्रीबुद्धिसागरममुं त्ववगाह्य कोट्यो
व्याप्नोति तेन जगतोऽपि पदद्वयेन ॥१०॥
श्रीविक्रमादित्यनरेन्द्रकालात् साशीतिके याति समासहस्रे ।
सश्रीकजाबालिपुरे तदाद्यं दृब्धं मया सप्तसहस्रकल्पम् ॥११॥

**[ इति श्रीबुद्धिसागराचार्यविरचितं पञ्चग्रन्थी व्याकरणं समाप्तम् ॥ ]**

## I : Index of Metres in the PGBV Main Text Verses

## ॥१॥ मूलस्थपद्यानां छन्दोनुक्रमणिका ॥

अनुष्टुभ्
आर्या
इन्द्रवज्रा
इन्द्रवंशा
उपजाति
उपस्थिता
उपेन्द्रवज्रा
कन्या
कुसुमितमाला
चतुरूर्ध्वम्
तोटकम्
दण्डकः
दोधकम्
द्रुतविलम्बितम्
द्वादशतम्
द्विगम्
पुष्पविचित्रा
भुजङ्गप्रयातम्
मन्दाक्रान्ता
मालिनी
यवमती
विद्युन्माला
वृत्तम्
(वृत्तम्)
शार्दूलविक्रीडितम्
शालिनी

षट्पदीगाथा
षोडशगम्
स्रग्विणी
हरिणी

N. B. 1. This listing is as per the mention of the metres by the author himself. वृत्तम् type seems to include the verses which contain quarters which do not fall into a particular defined metre-type but have admixture of various traits of इन्द्रवज्रा, इन्द्रवंशा, उपजाति or उपेन्द्रवज्रा in the same quarter.

2. In the auto-commentary too, the author has utilized, over and above the above-mentioned metres, the following ones also, viz. अष्टगा, अष्टमाला, आर्यागीति, गाथा, गीति, चतुर्या, छन्दस्, जलदाली, जलधरमाला, दशरेहा, दोधक, पञ्चपदी, पञ्चपात्, भद्रिका, मयूरसारणी, रथोद्धता, रुक्मवती, रूपचतुष्क, वितान, विपुला, वृत्तवितान, वृत्ति, श्लोक, षट्पाद्वितान, समानी, सङ्गता, and हरिणप्लुता, all of them specifically, named by him.

# Appendices : परिशिष्टाणि

## II : Index of Verses in the PGBV Main Text

## ॥२॥ मूलस्थपद्यानामनुक्रमणिका ॥



(★ अत्र क्रमेणाध्यायादीनां संख्यानिर्देशः पूर्ववत् ।) NMK.

कुञ्चजो युक्किनः कुः..।।१।२।१२।।
क्रौड्यादिगोत्रे त्वणिञोः स्त्रियां..।।१।३।५।।
क्षणश्वसो वद्व्रज इट् तङि स्था..।।४।२।३।।
क्षेपे तु पूजा स्वतितष्ट...।।१।४।८।।
खारीकाकिण्याः कप् क्रीतं..।।३।२।७।।
खित्यचादेरचोऽरुन्तुदादे..।।२।१।७।।
खुकष्णवः खित्सुभगाढ्यनग्न...।।४।१।६।।
घिडस्सु नर्टा स्नुडथास्मदः कं..।।१।२।१४।।
घ्राधेशाच्छासोऽतङ्लुक् स्थेदा..।।४।२।२।।
ङः पूरणं षट्चतुरः कतेः थुक्..।।३।३।३।।
ङिः सर्वभूमेः पृथिवीत ईश...।।३।३।८।।
ङेर्योऽर्घपादातिथिदेवतान्तात्..।।३।२।१४।।
ङोपाच्च वैकं द्रद्रिचितुस्तरितः सु..।।२।३।५।।
ङ्रो याजकाद्यैश्च ङसिर्भयाद्यैः ।।१।४।३।।
ङोऽर्थश्च सूत्रात् तत आगातश्च...।।३।१।८।।
ङ्यांङ्यण्ययञ्यो लुगथास्य...।।१।३।६।।
ङ्यांम्यंशतो डौ नरि ना...।।१।२।३।।
चरड्डसो रूप्य च व्याश्रये तु...।।२।३।८।।
चूडास्वर्ग्योत्थापनतोऽण्यच्छ....।।३।२।४।।
चौलादितो लुक कुरुकुन्त्यवन्तेः...।।२।३।१४।।
च्विस्तद्विकारादिह द्व्याद्यचो...।।३।३।१३।।
छो वा महेन्द्राच्छतरुद्रतस्ता...।।२।४।७।।
जन्वसेष्टोऽनाचमिकमिव...।।३।४।१३।।
जल्पाट्टिदाकः त्वरगिण्जिगंसु...।।४।१।१४।।
जातीय मासैकभृतौ कृतात्..।।१।४।१०।।
ज्ञाग्लार्हशक्क्रंसहलभ्रमार्थे..।।४।१।१९।।
ञमन्तस्याग्दीर्घो वा क्रमः..।।४।१।१।।
टान्तेतरेऽसीन्दुकर्त्रादिकाभ्यां..।।१।३।४।।
टा संस्कृतं कूपधतोऽण् कुल..।।३।२।१२।।
(टैंकत्व आर्वार्त ऋणे..)।।१।१।९।।
टेनातो भ्यै द्यः कात् स्सुभ्ये ....।।१।२।१३।।
ठञ् संख्यादेश्चार्हादश..।।३।२।१।।
ठञ् सीरहलाद वोढा स न ..।।३।१।१२।।
ठण् कर्दमाद् वा शकलाच्च..।।२।४।९।।
ठण् हस्त्यनड्धेनुकवच्यचिता..।।२।४।३।।
ठेन्द्व्याद्यचोऽतोऽस्य न वेति...।।३।३।९।।
डतेत्यसौ वा ग्रहणेऽप्यवृद्धेः...।।३।२।११।।
णोऽत्रं च लब्धा ख यथा...।।३।३।६।।
तन्नाम राज्ञः सकलोऽबि राष्ट्रवत्..।।३।१।१०।।
तरुसवेव निर्धार्यतः किन्तिङे..।।२।३।२।।
तातांझथास आथांध्वमिवहिमहिङो..।।४।२।१०।।
तारौरसः श्यादियतो म्विनाज्झ...।।२।२।११।।
तिकादेः फिञाद्यादापौत्रदितोऽर्च्ये...।।२।३।१६।।
ति गासिर्नवामोऽसृपो वेष्टलो.. ।।४।२।१४।।
तिङोऽशे ञ षष्ठाष्टमाट्ट्णीक..।।२।३।११।।
तुर्यस्तुरीयो बहुपूगसङ्घाद्..।।३।३।४।।
तुल्यास्यप्रयत्नः सवर्णः..।।१।१।५।।
तेऽन्वादेशे वा र्सुत उ पद...।।१।२।१७।।
त्वामामा तद्वये वा म्नौ.. ।।१।२।१७।।
दक्षिणाकुतः पुरस्त्यणौत्तराहः..।।३।१।४।।
दामाङ्स्थासागापिब्हाकाम्..।।३।४।२१।।
दार्हो त्रपां देङ् दिगिर्नाम्नि..।।३।४।६।।
दित्यकालेऽहलेऽवत्सगव्या...।।२।१।५।।
दीर्घाच्छ वाज्माड इद्रिर्यमि..।।१।१।१२।।
दीर्घो कि शे पुंस्न चि....।।१।१।८।।
दीर्घोऽसुपो वींग्घलिभूत्...।।१।२।११।।
दृढादितोऽण्यट् च पुरोहितादेः....।।३।३।५।।
द्वन्द्वे च तिकादेस्तेषां स्त्रपरैः..।।१।२।२३।।
द्वित्रेष्ट मूर्धाक्षि च सक्थि..।।१।४।१३।।
द्वैप्योऽन्वय्वि ग्रामात्...।।३।१।३।।

## III : Index of Verses of the Linganuśāsana in the Auto-commentary of the PGBV.

## ।।३।। स्वोपज्ञवृत्तिस्थलिङ्गानुशासनपद्यानमनुक्रमणिका ।।



—— ● ——

★ अत्राधिक्येन सूत्रस्य वृत्तिगतपद्यस्य च संख्यानिर्देशः । NMK.

## IV : Index of Verses of the Gaṇa-pātha in the Auto-commentary of the PGBV.

## ॥४॥ स्वोपज्ञवृत्तिस्थगणपाठपद्यानामनुक्रमणिका ॥



---

★ अत्र क्रमादध्यायपादपदसूत्रवृत्तिगतपदानां संख्यानिर्देशो ज्ञातव्यः । **NMK.**

संवत्सरोपात्तनिमित्तयज्ञाः...॥३।१।३।४।३॥
साद्यार्धकालाच्छरदस्तु...॥३।१।१।१२।१॥
सारिकुक्षश्चतुरस्रः एणी....॥१।४।५।१।३॥
सिध्मोदके फेनहनू च मांस....॥३।३।८।३।५॥
सिन्धुरसौ सङ्कुचितावसानौ...॥३।१।९।६।१॥
सुखप्रतीपौ कृपणास्रसोढा....॥३।३।१०।३।१॥
सुवस्तुकर्कन्धुमतीविकर्णाः....॥२।४।५।११।४॥
सूत्रनडोदकशुद्धौ पुष्कर....॥२।२।८।३।३॥
सूत्रं च मुण्डं लवणं च मिश्रं....
॥३।४।२।१।१३२॥
सौधः सायं प्रतिकः अष्टौ य...॥२।२।२।११।४॥
स्तः पुरुशूरमसौ च कलिङ्गः...॥२।३।१४।३।१॥
स्त्रीभातृहृद्‌भिर्हृदयं च दुःसोः.....॥३।३।५।५।४॥
स्थिरकदुर्गयुगन्धरब्राह्मणाः....॥२।३।१७।३।३॥
स्थूलाणुमाषेषु तिलेषु कृष्णः.....॥२।३।१०।५।१॥
स्थेणि लुङा चरणाऽपनुवादे....॥१।४।४।४।५॥
स्नातकराजानौ स्तः गोजा....॥१।४।१।४।८॥
स्याच्चित्ररथवाह्लीकं....॥१।४।१।४।४॥
स्याच्छर्करा लोमकपालिके स्तः...॥२।३।११।८।१॥
स्यात् प्रातमेकान्तमुवार्डसाद्ये...॥१।४।१।६।४॥
स्यात् स्थूलमूलं शामुशीरबीजं...॥१।४।१।४।६॥
स्यादानुलोम्ये तु सुखप्रियाभ्यां...॥३।३।१३।७।१॥
स्याद्रज्जुभारः पुरुषांस...॥२।४।११।२।२॥
स्याद्रोचना प्राजरुहा मनांसि...॥१।४।२।४।५॥
स्याद्धस्तिकर्षूः करणं सुनामन्...॥३।१।४।७।२॥
स्युर्दामनी कौष्टकिजालमानि...॥२।३।१२।७।१॥
स्वद्‌र्वारपालस्फ्यकृत स्वरश्वस्...॥२।२।६।२।१॥
स्वागतस्वध्वरस्वङ्‌ग्याष्टा.....॥२।२।६।२।२॥
स्वाङ्गेषु सक्तौदरिकोऽलसे च...॥३।३।६।७।२॥
हरीतकी च षट्काण्डी...॥२।४।५।६।३॥
हल्यजवस्त्रीवृद्‌वृकवञ्चिन्...॥२।३।१५।८।१॥
हस्ती दासी कुसूलश्च गणिका...॥१।४।१०।७।१॥
हिमाद्‌गुणात् तथा रूपो...॥३।३।१०।२।१॥
होतृयुवन्यजमानप्रशास्तृ...॥३।३।५।५।३॥
ह्रस्वत्व्वजाद्यत्वसखार्ह...॥१।४।१।४।१॥
ह्रस्वप्रियोरुबहुलं गुरुश्च...॥२।२।२।१।१॥
ह्रस्वाद्‌भ्रुवोऽपि कुंसादौ....॥२।१।४।१२।२॥

---

## V : Index of Verses of the Dhātu-pāṭha in the Auto-commentary of the PGV.

## ॥५॥ स्वोपज्ञवृत्तिस्थधातुपद्यानामनुक्रमणिका ॥

तितङ्मृषोश्छुन्धवदार्चमर्चाः...॥३।४।२।१।९५॥
तिलमिन्दस्निहाः चक्कचुक्क...॥३।४।२।१।१०७॥
तुण कुट चुण चुट त्रुट खुर छुर...
॥३।४।२।१।९०॥
तुणभुजौ तु कौटिल्ये तु मुण...॥३।४।२।१।८८॥
तुद व्यथायां दिश सर्जने कृष...॥३।४।२।१।८३॥
तुफतृन्फशुभोंहतृतौ गुफगुम्फ...॥३।४।२।१।८५॥
तेपृकेपृशलगेपृटुवेपृघटकम्पयः...॥३।४।२।१।३२॥
दाने ददो वृक्ष वृतौ रभस्त्वा...॥३।४।२।१।३८॥
दिवुश्रुवुख्वा षिवु तन्तुसन्ताने...॥३।४।२।१।७०॥
दीधीङ् शिजिजिद्युपृजिपृची...॥३।४।२।१।६७॥
दीप्तौ ज्वलोऽन्ये चलने चलि...॥३।४।२।१।५१॥
देत्रायृत्रैङः तुडितण्डि ताडने...॥३।४।२।१।३४॥
द्युतशुभरुच दीप्तौ ञिष्विदा...॥३।४।२।१।४६॥
द्रमकटहयहर्या अड्डुतुड्डु...॥३।४।२।१।१२॥
धाराधृ हूर्च्छे ज्ञटमक्षपूलशोणृ...॥३।४।२।१।२३॥
धिवितृपौ स्मृ पृ पालनप्रीत्योः...॥३।४।२।१।८२॥
धूञ् कृञ् कम्प गितो चिवृप्रु...॥३।४।२।१।८१॥
नक्क धक्क पसि नाशने कुण्डि...॥३।४।२।१।१०१॥
निष्क तूण परिमाण पूरणे गृय...
॥३।४।२।१।११०॥
पटपुटलुटपुष् स्यात् तुञ्जि...॥३।४।२।१।११६॥
पल्पूल पवनलवने दौर्बल्ये...॥३।४।२।१।१२०॥
पवपयवयरेपृप्लिहि ईजेऽजि...॥३।४।२।१।४४॥
पीवमीवतीवणीव हावने तु...॥३।४।२।१।९॥
पुषपुसी विभागे तसुदसु तु...॥३।४।२।१।७६॥
पुंसोऽभिर्दे बुधि षट्ट घाते...॥३।४।२।१।१०९॥
पूरणे पृ चलनेऽपि पदपषो...॥३।४।२।१।१०२॥
पृचीर्वृजीर्भुजो भञ्जो तुह हिंसि...॥३।४।२।१।९४॥
पैशृकनीपिशृपेसृ च रंहिः...॥३।४।२।१।१३॥
प्यैङ् प्यायी वृहमहि दक्ष स्फाय्येध...
॥३।४।२।३०॥
प्री पीङ् पाने बुधाऽनापुरी तृप्तौ...॥३।४।२।१।७९॥
प्लुष दाहे कुश क्लेशे क्षेपे...॥३।४।२।१।७५॥
प्लेवृषेवृसेवृकेवृखेवृगेवृपेवृमे...॥३।४।२।१।३९॥
फणो गतौ वृत्वतङानि राजृः...॥४।२।१।५३॥
भाम क्रोधे चर पट ग्रन्थे...॥३।४।२।१।११८॥
भूरोणृलुण्ठौ णिदिजीववाच्छिः...॥३।४।२।१।२॥
भेषृ भये श्रिञ् षच सेवने तु...॥३।४।२।१।६२॥
भ्रमुस्त्वतृप्तौ च तमुच् गृधुश्च...॥३।४।२।१।७४॥
मडिन् कुटिः कदिः क्रदि...॥३।४।२।१।४॥
माङ्गल्यशास्त्रे च षिधू गतौ...॥३।४।२।१।२९॥
मा ष्णाः ख्याः प्साऽदिवा या.. ॥३।४।२।६४॥
मी आङ् सदः खित् परितर्कणे...
॥३।४।२।१।१२९॥
मुर्वीचुच्यावभिषवे जषो रोगे...॥३।४।२।१।२४॥
मेटृमेडृलोट्टरोडृ शोष...॥३।४।२।१।८॥
मोक्षस्तषिभूषौ दूषोऽन्धस...॥३।४।२।१।११३॥
म्ना अभ्यासे कटु कार्कश्ये...॥३।४।२।१।२६॥
म्लेच्छमदौ पठजल्पजपाः स्युः...॥३।४।२।१।१८॥
युगिजुगिवुगि वर्जे वक्ष रोषे...॥३।४।२।१।२५॥
युतृजुतृकचिवर्चभ्राजृभेजृ च...॥३।४।२।१।४२॥
युद्धविक्रान्त्यवमोक्षयाञ्चा...॥३।४।२।१।१२३॥
रञ्ज रागे शपाक्रोशे चष भ्लक्ष...॥३।४।२।१।१९॥
रसमिसक्रिक्विदाशुगाः खण...॥३।४।२।१।६०॥
रह त्यागे स्वर क्षेपे मेघ शब्दे...
॥३।४।२।१।११९॥
रुधिर्भिदिर्छिदिविचीर् क्षुदियुजि...॥३।४।२।१।९३॥
रोडृ रौडृशिटतौडृषिटसूक्ष्य..॥३।४।२।१।२७॥
लिष विच्छ ऋष् क्षिश्च द्रुण रिष्..
॥३।४।२।१।८४॥
लिहोऽदि तद् वा हु पृ दानपूर्त्यो....
॥३।४।२।१।६८॥
वचो भुव्वसु रुदिर् स्यात्...॥३।४।२।१।६५॥

—— • ——

## VI : Index of Verses of the Uṇādī-pāṭha in the Auto-commentary of the PGBV.

## ॥६॥ स्वोपज्ञवृत्तिस्थोणादिपद्यानामनुक्रमणिका ॥

## VIII : Index of the Sūtras incorporated in the Verses of the main text of the PGBV.

## ॥८॥ मूलस्थपद्यान्तर्गतसूत्राणामनुक्रमणिका ॥

# IX : GENETIC CONCORDANCE OF PGBV

## (with Cāndra and Śākaṭāyana Varbatim or partial similarity.)

**P = Pāṇini, K = Kāśikā, Var.= Vārtika on Pāṇini**

**C = Cāndra; Vr = Verbertim; Js = Jainendra Mahāvṛtti;**

**Jm = Jainendra Mahāvṛtti; Ś.= Śākaṭāyana.**

## PGBP

### Adhyāya-I Pāda-I

| | |
|---|---|
| 1.1.1. मंगल श्लोक | C has सिद्ध सर्वज्ञ, सर्वीय, गुरु लघु पूर्ण |
| 1.1.2. प्रयोजन | C has लघु and सम्पूर्ण |
| 1.1.3. प्रलाहार | JS. C हयवरलण् |
| 1.1.4.1 | JS: 1.1.4 |
| 1.1.4.2 | – |
| 1.1.4.3 | – |
| 1.1.4.4 | – |
| 1.1.4.5 | – |
| 1.1.4.6 | – |
| 1.1.4.7 | – |
| 1.1.4.8 | – |
| 1.1.4.9 | – |
| 1.1.5.1 | P. 1.1.9. |
| 1.1.5.2 | Ś.1.1.7. also verse. |
| 1.1.5.3 | Kāś. 2.3.48;1.1.20; Ś.1.23,19. |
| 1.1.5.4 | C 1.1.5. |
| 1.1.5.5 | Kaś. 1.3.3. Ś.1.1.54. |
| 1.1.5.6 | Kāś.1.1.66; Ś1.1.57 |
| 1.1.5.7 | Kāś.1.1.49; Ś.1.54,58 |
| 1.1.5.8 | Kāś.1.1.46; Ś1.1.53 |
| 1.1.5.9 | |
| 1.1.5.10 | Kāś. 1.1.66; Ś.1.1.57 |
| 1.1.5.11 | Kāś.1.1.52; 1.1.47 |
| 1.1.5.12 | Kāś.1.1.52; Ś.1.1 |
| 1.1.6.1 | P. 1.1.71 Ś.1.1.1 C1.1.1. |
| 1.1.6.2 | P.1.1.55 |
| 1.1.6.3 | P.1.1.55; C1.1.12 |
| 1.1.6.4 | P1.1.47; Ś.1.1.45 |
| 1.1.6.5 | P.1.1.54; Ś.1.1.48 |
| 1.1.6.6 | P.1.1.54; C.1.10; Ś.1.1.48 |
| 1.1.6.7 | P.1.4.2.; C. 1.1.16 |
| 1.1.6.8 | Ś.2.3.14. |
| 1.1.6.9. | P.1.1.62 |
| 1.1.6.10 | Ś.1.1.52 |
| 1.1.6.11 | P.1.1.60-61 |
| 1.1.6.12 | P.1.4.15; Ś.1.1.63 |
| 1.1.6.13 | P.1.4.16; Ś.1.1.64 |
| 1.1.1.14 | Ś.1.65,66 |
| 1.1.7.1. | Ś.1.1.62,61 |
| 1.1.7.2 | Ś.1.1.68 |
| 1.1.7.3. | Ś.1.1.68 |
| 1.1.7.4. | Ś.1.1.69 |
| 1.1.7.5 | Ś.1.1.70 |
| 1.1.7.6 | Js.4.3.74, Ś.1.1.71 |
| 1.1.7.7 | Ś.1.1.73 |
| 1.1.7.8 | Ś.1.74. |
| 1.1.7.9 | Ś.1.76; Js.4.3.104 |
| 1.1.7.10 | C.5.1.113 |
| 1.1.8.1 | Ś.1.77. |
| 1.1.8.2 | Ś.1.1.78 |
| 1.1.8.3 | Ś.1.1.79 |
| 1.1.8.4 | Ś.1.1.80 |
| 1.1.8.5 | Ś.1.1.80 |
| 1.1.8.6 | Ś.1.1.82 |
| 1.1.8.7 | Ś.1.1.83 |
| 1.1.8.8 | P.6.1.94. Var.4 Quoted by भट्टोजि on 2.4.82(अव्ययादाप्सुपः) वष्टि भागुरिरल्लापम् वाप्योरुपसर्गयोः । C.5.1.98 |
| 1.1.8.9 | P. 6.1.89 Var. 2. Ś. 1.1.84 |
| 1.1.8.10 | P. 6.1.89; Var. Ś.1.1.85 |
| 1.1.8.11 | Ś.1.1.85 |
| 1.1.9.1. | Ś.1.1.89 |
| 1.1.9.2. | Ś.1.1.90 |

